॥ ॐ ॥

# ॥ ऋश्यशृंगसंहिता ॥

॥ श्री गणपतये नमः ॥

॥ श्री साम्बशिवाय नमः ॥

वागीशाद्याः सुमनसस्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

श्री जानकीश पादाब्जदृढभक्तं जितेन्द्रियम् ।
विभण्डक सुतं शान्ताभर्तारं तपसां निधिम् ॥

सिद्धाश्रमे समासीनमृश्यशृङ्गमकल्मषम् ।
उद्दालक उदङ्कश्च मौद्गल्यो गाळवस्तथा ॥

गौतमस्यसुतः साक्षाच्छतानन्दो महातपाः ।
तीर्थयात्राप्रसङ्गेन सिद्धाश्रममुपागताः ॥

तत्र सिद्धाश्रमे पुण्यतीर्थे स्नात्वा तपस्विनः ।
ऋश्यशृङ्गं तपोराशिमपश्यन् वीतकल्मषाः ॥ —५

योगारूढं महात्मानं ज्वलन्तं तपसा मुनिम् ।
दृष्ट्वा प्रणेमुस्साष्टाङ्गं कृताञ्जलिपुटाद्विजाः ॥

तान्दृष्ट्वा योगिवर्योऽसौ शान्ताभर्ता महातपाः ।
पृष्ट्वा कुशलमव्यग्रमासनेषूप(पा) वेशयत् ॥

मौद्गल्योद्दालकोदङ्कशतानन्दा (दा)दयोद्विजाः ।
आसीना आसनेष्वेते विभण्डकसुतं विभुम् ॥

धर्मजिज्ञासया वाक्यमिदं प्रोचुस्तपोधनाः ।

ऋषय ऊचुः —

विभण्डकसुत स्वामिन् सर्वज्ञ तपसांनिधे ॥

अस्माभिर्यत्न यत्तप्तं सर्वं सफलमद्यमे ।
धर्मलोकं गता अद्य पितरो नः पितामहाः ॥ —१०

अद्यास्माभिर्महाभाग्यं लब्धं त्वत्पाददर्शनात् ।
अथधन्याः कृतार्थाः स्म व्रतानि सफलानिनः ॥

त्वत्पदाम्भोरुहद्वन्द्वदर्शनं पुण्यराशिभिः ।
बहुजन्मार्जितैर्लभ्यं नान्यथा तपसां निधे ॥

इत्युक्त्वा मुनयस्तूष्णीमासीनाः शंसितव्रताः ।
तानाह भगवान् योगी विभण्डकसुतोमुनिः ॥

ऋश्यशृङ्ग उवाच —

कच्चिद्वः सफलावेदाः कच्चिद्वः सफलं धनम् ।
कच्चिद्वः सफला नार्यः कच्चिद्वः सफलं श्रुतम् ॥

अग्निहोत्रफला वेदाः दत्तभुक्तफलं धनम् ।
रतिपुत्रफला नारी शीलवृत्तफलं श्रुतम् ॥ —१५

कच्चिद्वो गुरुशुश्रूषा सफला मुनिपुङ्गवाः ।
कच्चिद्वः सफलं तप्तं तपश्चान्द्रायणादिकम् ॥

भवद्भिरपि सर्वज्ञैः किं प्रष्टव्यो ह्यहं द्विजाः ।
यथामति प्रवक्ष्यामि श्रृण्वन्तु मुनिपुङ्गवाः ॥

शतानन्दादयो विप्रा इत्थमुक्तास्तपोधनाः ।
कृताञ्जलिपुटा ऊचुर्नत्वा साष्टाङ्गमादरात् ॥

ऋषय ऊचुः —

भगवन् योगिनां श्रेष्ठ सर्वशास्त्रविशारद ।
कथं ब्रह्म विजिज्ञास्यं कीदृशैर्नियतव्रतैः ॥

कथं स्याद्ब्रह्म तादात्म्यं कालमृत्योश्चवञ्चनम् ।
कथं कालस्वरूपं स्यान्नरेण ज्ञातवेपथु ॥ —२०

संसारतारणोपायः कथमेकेन जन्मना ।
ऋश्यशृङ्ग महाभाग सत्यमेतद्वदस्वनः ॥

इत्युक्तो भगवांस्तत्र शतानन्दादिभिर्द्विजैः ।
विभण्डक सुतः प्राह तानृषीन् शंसितव्रतान् ॥

**ऋश्यश्रृङ्ग उवाच —**

यथामति प्रवक्ष्यामि भवद्भिः पृष्टमादरात् ।
श्रोतव्यं योगिनांश्रेष्ठैः सावधानैः समाहितैः ॥

नराणामक्षिपक्ष्माभ्यामुन्मीलननिमीलनात् ।
निमेषकालइत्युक्तः काष्ठाते त्रिंशदीरिता ॥

त्रिंशत्काष्ठाः कला प्रोक्ता ता षष्टिर्नाडिकाः स्मृताः ।
नाडीद्वयं मुहूर्तं स्याद्यामस्तेषां चतुष्टयम् ॥ —२५

नाड्यास्त्रिंशदहः प्रोक्तं त्रिंशन्नाड्योनिशास्मृता ।
षष्टिनाड्यो दिनं प्रोक्तमहोरात्रं तदेव हि ॥

तैः पञ्चदशभिः पक्षः तद्द्वयं मास उच्यते ।
पक्षे पक्षे पौर्णमासी पुण्यातिथिरमापि वा ॥

मासद्वयमृतुः प्रोक्तमयनं स्यादृतुत्रयम् ।
मासैर्द्वादशभिर्विप्राः संवत्सर इति स्मृतः ॥

मानुषोवत्सरोदिव्यं दिनमेकमुदीरितम् ।
चत्वार्याहुः सहस्राणि वत्सराणां कृतं युगे ॥

तस्यतावच्छती संख्या देवमानेनगण्यते ।
त्रीणि वर्षसहस्राणि त्रेतायुगमिति स्मृतम् ॥ —३०

तस्यतावच्छती संख्या देवमानेन गण्यते ।
सहस्रद्वयमब्दानां द्वापरं युगमीरितम् ॥

तस्यतावच्छती संख्या देवमानेन गण्यते ।
दिव्यं युगं वत्सराणां सहस्रमितिकीर्त्यते ॥

तस्यतावच्छती संख्या देवमानेन गण्यते ।
इत्थं द्वादशसाहस्रमेकं देवयुगं स्मृतम् ॥

मन्वन्तरंतु दिव्यानां युगानामेकसप्ततिः ।
चतुर्युगानां साहस्रं ब्रह्मणोऽहरुदीरितम् ॥

तद्वद्युगानां साहस्रं निशा ब्रह्मण ईरिता ।
चतुर्युगानां साहस्रं द्वयं ब्राह्ममितिस्मृतम् ॥ —३५

पूर्वोक्तविधिना पक्ष मासादीनां प्रकल्पना ।
चतुर्वक्त्रस्य तस्यापि सर्गकृत्परमेष्ठिनः ॥

तस्यापि स्वेनमानेन शतायुः कीर्तितं बुधैः ।
ब्रह्मणः परमायुः स्याद्दिवसं विष्णुरुद्रयोः ॥

ईश्वरस्य प्रभोः साक्षान्नारायणमयस्य तु ।
सैवाहस्तस्य तु निशा नित्यस्य परमात्मनः ॥

कालः सृजति भूतानि कालः पालयति प्रजाः ।
कालः संहरते विश्वं कालाधीनमिदं जगत् ॥

लयं गता असंख्याता ब्रह्मणो हरयोऽपि च ।
लयं गता असंख्याता रुद्रा अपि तपोधनाः ॥ —४०

सङ्ख्यातुं नैव शक्यस्स्याच्छक्रादीनांहि संक्षयः ।
नराणामपितिर्यञ्चां का कथा विप्रपुङ्गवाः ॥

तस्मात् कालं दुराधर्षं सृष्टिसंहारकारकम् ।
भक्षयन्तं जगत्सर्वं सृजन्तमखिलं जगत् ॥

पालयन्तं जगत्सर्वं शक्तो जेतुं न कश्चन ।
ब्रह्मतत्त्वमविज्ञाय प्रजया कर्मणापि वा ॥

न धनेन न दानैर्वा जेतुं कालो हि शक्यते ।
अकृत्वाचार्यशुश्रूषामविज्ञाय चिदात्मकम् ॥

ब्रह्मतत्त्वं महद्गुह्यं कालो जेतुं न शक्यते ।
कालस्यापि पितासाक्षाद्ब्रह्मरूपी श्रियःपतिः ॥ —४५

नारायणो महायोगी सत्यानन्द चिदात्मकः ।
परस्य ब्रह्मणस्तत्त्वं साक्षान्नारायणात्मनः ॥

संसारसागरान्मुक्तिरविज्ञातुर्न विद्यते ।
आचार्यस्य कृपामूर्तेस्साक्षान्नारायणात्मनः ॥

विजिज्ञास्यं ब्रह्मतत्त्वं बहुकालेन सेवया ।
न स्नानै र्न तपोभिर्वा न भस्मस्नानतोऽपि वा ॥

नाहिंसया वा मुक्तिः स्याद्ब्रह्मानंदसुखात्मिका ।
गङ्गादिसर्वतीर्थेषु मत्स्याश्च मकरादयः ॥

मज्जमानाहि तिष्ठन्ति किं मुक्तास्ते तपोधनाः ।
बका मौनेनतिष्ठन्ति मीना उदरयायिनः ॥ —५०

रासभा अपि स्वनन्तो भस्मभूषित विग्रहाः ।
व्रतैरनशनाद्यैस्ते मुक्ताः किन्नुतपोधनाः ॥

सततं मुक्तिभाजः किं श्वाद्यास्ते ब्राह्मणोत्तमाः ।
सञ्चरन्तो मृगानित्यमहिंसाधर्म तत्पराः ॥

मृगाः किं मुक्तिभाजस्स्युर्वदन्तु मुनिपुङ्गवाः ।
तस्मादाचार्यशुश्रूषां कृत्वा नित्यं चिरं द्विजाः ॥

विज्ञाय ब्रह्मणस्तत्वं ब्रह्मानन्दमवाप्नुयात् ।
परस्य ब्रह्मणोभीत्या वातो वाति हि सन्ततम् ॥

उदेति भानुस्तद्भीत्या ज्वलत्यग्निर्भयात्ततः ।
तदाज्ञयैव कालोऽपि विश्वं सृजति हन्ति च ॥ —५५

परस्य ब्रह्मणस्तत्वमाचार्यात्करुणामयात् ।
विज्ञाय वञ्चयित्वासौ कालं सर्वभयंकरम् ॥

ब्रह्मानन्दमयीं मुक्तिं प्राप्नोत्येव तपोधनाः ।
सैषानन्दस्यमीमांसा वक्ष्यते विप्रपुङ्गवाः ॥

योवा सकलविद्यानां पारगो बलसंयुतः ।

योगी सकलविद्यानां पारगो बलसंयुतः ।
अरोगी पक्वभुङ्नित्यं सर्वधर्मपरायणः ॥

साध्वी यस्यानुकूला च पुत्र पौत्र समृद्धिमान् ।
सार्वभौमत्वमासाद्य मानुषानन्दमश्नुते ॥

मानुषानन्दशतकं यत् प्रोक्तं शास्त्रवेदिभिः ।
एको मनुष्यगंधर्वानन्दयुक्तः श्रुतौस्मृतौ ॥ —६०

आचार्य कृपया ब्रह्मविदोऽप्येतत्सुखंद्विजाः ।
शतं मनुष्यगंधर्वानन्दानां सततं द्विजाः ॥

स एको देवगंधर्वानंदो वेदेषु पठ्यते ।
तदानन्दशतं दिव्यं पितृणां मुनिपुङ्गवाः ॥

आनन्द एकोविप्रस्य ब्रह्मतत्त्वविदोऽपिच ।
अनन्दानां शतं प्रोक्तमेक आजानजामरे ॥

आजानजामरानन्दशतं कर्मसुरेष्वपि ।
आनन्द एकः संप्रोक्त स्ततोमुख्यसुरेष्वपि ॥

तदानन्दशतंत्वेक आनन्दः प्रोच्यते बुधैः ।
तदानन्दशतं शक्रस्यैक आनन्द उच्यते ॥ —६५

गुरोस्तदानन्दशतमेक आनन्द ईरितः ।
गुर्वानन्दशतं स्वायंभुवस्यानन्द उच्यते ॥

तदानन्दशतंत्वेक आनन्दः स्यात् प्रजापतेः ।
हिरण्यगर्भानन्दानां शतं विष्णोः शिवस्य च ॥

विराजः पुरुषस्यैक आनन्दः समुदाहृतः ।
तदानन्दशतं साक्षान्नित्यस्य परमात्मनः ॥

ब्रह्मानन्दाभिधं सौख्यं मनोवाचामगोचरम् ।
आचार्यपादशुश्रूषा निरतस्य यतात्मनः ॥

ब्रह्मतत्वविदः साक्षात्कृतनारायणात्मनः ।
जीवन्मुक्तस्य तस्यापि ब्रह्मानन्द उदाहृतः ॥ —७०

ब्रह्मानन्दाभिधं सौख्यं वेदांतेष्वपि कीर्तितम् ।
कोटिजन्मतपोभिर्वा महादानायुतैरपि ॥

अश्वमेधसहस्रैर्वा लभ्यते न तपोधनाः ।
तस्मात् ब्रह्मविजिज्ञासा कार्याचार्यमुखाम्बुजात् ॥

कालमृत्युमपिप्राप्तमसौ जयति सन्ततम् ।
इति कालजयोयोद्य कथितो ब्रह्मवित्तमाः ॥

प्रष्टव्यं किमतोविप्रा वदन्त्वपि सुगोपितम् ।
इति दाशरथीयेऽस्मिन् सर्व वेदार्थसंग्रहे ॥
प्रथमोऽध्याय उक्तोऽयं तन्त्रेनुत्तर नामके ॥ —७४

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये
दाशरथीये वेदार्थसारसंग्रहे
प्रथमोऽध्यायः ॥



## ॥ अथ द्वितीयोऽध्यायः ॥



**ऋषय ऊचुः —**

भगवन् योगिनां श्रेष्ठ शान्ताभर्तर्महामते ।
ब्रह्मतत्त्वं कथं ज्ञेयं श्रोतव्यं कथमादरात् ॥

कथमाचार्य शुश्रूषा कर्तव्या शंसितव्रतैः ।
सर्वमेतत्समासेन वदास्माकं दयानिधे ॥

**ऋश्यश‍ृङ्ग उवाच —**

अस्ति ब्रह्मापरं साक्षादादिमध्यान्तवर्जितम् ।
शाश्वतं शुद्धमव्यक्तं सदानन्दमयं हि तत् ॥

सत्यं परं तपोरूपं जरामरणवर्जितम् ।
चिदानन्दमयं नित्यं मनोवाचामगोचरम् ॥

नारायणाभिधं ज्योतिस्तमः पारे प्रतिष्ठितम् ।
न स्त्री न षण्डो न पुमान् तद्धाम परमं महत् ॥ —५

अनन्तमचलं सूक्ष्मं दुर्ज्ञेयममरैरपि ।
हृद्गुहासु स्थितं सर्वप्राणिनां चित्तपङ्कजे ॥

अन्तर्बहिस्तमोराशि निवारकमनुत्तमम् ॥

"न तत्र सूर्यो नविभाति चन्द्रमा
नासावग्निर्विद्युतो नैव भान्ति ।
तमेव भान्त मनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति" ॥

सन्महा पौरुषं रूपं वेदान्तैरप्यगोचरम् ।
सर्गस्थितिविनाशानां हेतुभूतं सनातनम् ॥

ओंकारवाच्यं विश्वस्य धारणं पारमेश्वरम् ।
तस्मान्नादात्मकः साक्षादकारात्मा सनातनः ॥

अभूद्यं वासुदेवाख्यमाहुर्ब्रह्मर्षयोऽमलाः ।
बिन्दुः समभवत्तस्माज्जीवात्माख्यः सनातनः ॥ —१०

स ईश्वर इति प्रोक्तः शुद्धज्ञानमयः पुमान् ।
तयोर्मध्ये समुद्भूत्कला चिद्रूपिणी परा ॥

यामाहुर्भगवच्छक्तिं तयोरूपां सनातनीम् ।
तत आविरभूत्साक्षात्पञ्चाशद्वर्णमातृका ॥

सैव श्रीः परमाशक्तिश्चित्कला परमेश्वरी ।
साक्षान्नारायणमयी ब्रह्माभिन्ना चिदात्मिका ॥

स्वराः षोडश तत्रस्युः स्पर्शाःस्युः पञ्चविंशतिः ।
अथान्तस्था अथोष्माण इत्येवं मातृकास्मृता ॥

अकाराद्या विसर्गान्ताः स्वराः षोडश कीर्तिताः ।
अच इत्येवमाख्याताः कादयो हल ईरिताः ॥ —१५

चिदात्मिका पराशक्तिः षोडशस्वररूपिणी ।
कादयो हल इत्युक्ता व्यंजनानि विदुर्बुधाः ॥

ककारादिक्षकारान्ता वर्णा नारायणात्मकाः ।
तस्मादियमकरादिक्षकारान्ताक्षरात्मिका ॥

लक्ष्मी नारायणी साक्षान्मातृका समुदीरिता ।
मातृका परमाशक्तिरभिन्ना ब्रह्मणो द्विजाः ॥

नारायणाज्ञया विश्वं सृजत्यवतिहन्ति च ।
अनयैव समुद्भूता वेदाः सांगाः सनातनाः ॥

धर्मशास्त्रपुराणानि सर्वोपनिषदोऽपि च ।
चतुष्षष्टि कला विद्या विद्या अष्टादशापि च ॥
सर्वं मातृकयोत्पन्नं जगदेतच्चराचरम् ॥ –२०

यदा सिसृक्षा भगवद् ब्रह्मणः परमात्मनः ।
तदा विराजं पुरुषं विश्वकारण विग्रहम् ॥

असृजत्तद्ब्रम्हरूपी पुरुषः स महान् द्विजः ।
द्विधा कृत्वात्मनोदेहमर्धेन पुरुषोऽभवत् ॥

अर्धेन नारी तस्यां तु विराजमसृजद्विभुः ।
महाभूत इति ख्यातः सर्वलोकैककारणम् ॥

स एवाद्यः पुमान् नित्यः परमात्मा सनातनः ।
अष्टाक्षरमयो वेदवेदान्तैरप्यगोचरः ॥

न तस्य कार्यं करणं च विद्यते
न तस्य कर्ता न हि तस्य गोप्ता ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥ –२५

योऽसौ द्विधाऽभवत्साक्षादाद्यो नारायणो विभुः ।
सा नारी श्रीर्महालक्ष्मीः ख्याता परकलामयी ॥

तत्पतिः पुरुषो योऽसौ नारायण इतीरितः ।
स्त्रीपुंरूपमिदं तस्य ब्रह्मणः परमात्मनः ॥

नारायणस्य शक्तिं तां लक्ष्मीनारायणाभिधाम् ।
चिद्रूपिणीं श्रियं गुप्तां बिभ्रन्नारायणो विभुः ॥

चिदभिन्नो विभुः सार्वं कालं त्रिजगती पतिः ।
स्तूयते वेदवेदान्तैरपि विग्रह धारिभिः ॥

श्रीमदष्टाक्षरात्मासावेकएव सनातनः ।
सर्गकाले यदा भिन्ना स्त्रियो रूपमकल्मषम् ॥ —३०

द्विधेव दृश्यते निष्ठैः लक्ष्मीनारायणाभिधम् ।
तद्द्वादशार्णमन्त्रेण वाच्यं ब्रह्म परात्परम् ॥

लक्ष्मीनारायणात्मासौ नारायणमयः पुमान् ।
विराजं पुरुषं सर्गादिकालेऽसृजदीश्वरः ॥

प्रपञ्चात्मा कालरूपी सविता सर्वनायकः ।
पुरुषस्य विराडुक्तः सर्वकारणकारणम् ॥

चतुर्विंशति तत्त्वाख्यो गायत्रीरूपधृग्विभुः ।
यमाहुः सर्वजगतां कारणं परमेश्वरम् ॥

सवितारमजं शुद्धं कालात्मानं सनातनम् ।
तस्य वक्त्रादाविरभूत् प्रणवः शाश्वतोऽव्ययः ॥ —३५

समस्तविद्याबीजंयद् ब्रह्मरूपं विदुर्बुधाः ।
भूरिति व्याहृतिः पश्चाद्भुवः स्वरितिद्वयम् ॥

महर्जनस्तपः सत्यं गायत्र्याविरभूत्ततः ।
एतदेव महद्विश्वं वैराजं रूपमुत्तमम् ॥

कालात्मकं भगवतो ब्रह्मणः परमात्मनः ।
सविता विश्वरूपोसौ विराट् पुरुष ईश्वरः ॥

हिरण्यगर्भमाहुर्यं प्रधान पुरुषं विभुम् ।
अयमेव जगत्सर्वं सृजत्यवतिहन्ति च ॥

कालात्मा कालकालोऽसौ साक्षान्नारायणात्मकः ।
अयं सवितृरूपिण्या गायत्र्या कालरूपया ॥ —४०

स्तूयते सविता साक्षात् पुरुषोऽसौ हिरण्यः ।
कालात्मको वेदमयो येनेदं .... .... .... ॥

.... .... भ्यो यागाः साङ्गाः स दक्षिणाः ।
उत्पन्नाः सर्वलोकानामिहामुत्रगतिप्रदाः ॥

योऽसौ विराण्मयः साक्षाद्वासुदेवो जगत्पतिः ।
नारायणमयो नित्यो महापुरुष ईश्वरः ॥

स महापुरुषः सर्गं कर्तुमिच्छन् प्रजापतिः ।
अपएव ससर्जादौ तासु वीर्यमवासृजत् ॥

तदण्डमभवद्धैमं सहस्रांशुशतप्रभम् ।
तस्मिन् जज्ञे विधिर्ब्रह्मा स्वयंभूरिति नः श्रुतिः ॥ —४५

आपोनारा इति प्रोक्ता आपोवै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥

हिरण्यगर्भो विश्वात्मा स्वयंभूर्भगवान्प्रभुः ।
अन्धकारे निमग्नःसन् तताप सुमहत्तपः ॥

तपसा तस्य तुष्टोऽथ परमात्मा सनातनः ।
नारायणोऽथ ब्रह्माणं पुरुषः कृष्णपिङ्गलः ॥

आधिपत्यं प्रपञ्चस्य सर्गकार्ये समादिशत् ।
लज्जयावनतं सर्गकर्माशक्तं स्वयंभुवम् ॥

दृष्ट्वा स प्रददौ वेदान् सावित्री सहितान् विभुः ।
श्रुत्युक्तेन विधानेन सर्गं कुर्विति विश्वसृट् ॥ —५०

उक्तो भगवदाकारसाक्षात्कारस्य सिद्धये ।
भगवत्तेजसः प्राप्त्यै भूयोऽपि सुमहत्तपः ॥

तताप तत्र भगवान् भास्करायुतसन्निभः ।
स महापुरुषो भूत्वा विधूयान्धतमोऽखिलम् ॥

उवाच तं विधातारं प्रजापतिमकल्मषम् ॥

श्रीभगवानुवाच —

भो! भो! ब्रह्मन् महाभाग प्रीतोऽहं पोषकस्तव ।
साक्षात्कृतोऽस्मि भवता संतुष्टस्तपसा विधे ॥

अहमेव परंब्रह्म परमात्मा सनातनः ।
कालात्मकोऽहं कालात्मा कालस्यापि पितास्म्यहम् ॥

वासुदेवोऽस्म्यहं विष्णुः विराड्रूपी हिरण्मयः ।
अन्तर्याम्यस्मि भूतानां जीवात्मा त्रिजगत्पतिः ॥ —५५

चिन्मयोऽहमनन्तोऽहमादिमध्यान्तवर्जितः ।
अहं प्रणववाच्योऽस्मि वेदानामप्यगोचरः ॥
वेदान्तवेद्यो विश्वात्मा विश्वरूपो स्म्यहंप्रभुः ॥

विद्यामयोऽहं लोकानां भोगस्वर्गापवर्गदः ।
योऽसावष्टाक्षरोमन्त्र स्वभावप्रणवादिकः ॥

विद्यानामपि सर्वासां महाराजाऽखिलार्थदः ।
नारायणस्तदात्माहं चिद्रूपिण्या श्रियान्वितः ॥

एक एवाद्वितीयोऽहं श्रीमदष्टाक्षरात्मकः ।
अस्यैवाष्टार्णमन्त्रस्य श्रीमत्त्वं त्रिजगत्पतिः ॥

श्रीमत्त्वं नास्ति सर्वासां विद्यानां च श्रुतेरपि ।
श्रीमदष्टाक्षरी विद्या ख्याता भाति जगत्त्रये ॥ —६०

वेदा मद्वदनोद्भूता लोकानां स्थिति हेतवः ।
वेदेषु सारभूतेयं श्रीमदष्टाक्षरी मम ॥

ऋचोयजूँषि सामानि सा हि श्रीरमृता सताम् ।
इति मद्वदनोद्भूत श्रुतिभिः समुदीरिता ॥

प्रसिद्धामृतलक्ष्मीः श्रीर्ममशक्तिश्चिदात्मिका ।
नारायणेति मन्नाम परं ब्रह्मन् श्रियान्वितः ॥

ममैवाष्टार्णविद्यायाः श्रिमत्त्वं हि स्वभावतः ।
अन्यास्तु सकला विद्याः प्रक्षिप्तश्रीसमन्विताः ॥

शिद्रूपिणीं श्रियं गुप्तां त्रयीबीजात्मिकां पराम् ।
परतेजोमयीं संविन्महासाम्राज्य नायिकाम् ॥ —६५

गुप्तां बिभ्रन्नभेदेन नाम्ना नारायणोऽस्म्यहम् ।
ददाम्येतां महाविद्यां मत्तेजःप्राप्तये तव ॥

गायत्रं च्छन्दसांश्रेष्ठं सर्वत्रापि निगद्यते ।
छन्दः स्यादस्य गायत्रं नान्यदुक्तं प्रजापते ॥

चतुर्विंशाक्षरीतस्माद् गायत्री वेदमातृका ।
मदष्टार्णमयीज्ञेया मम तेजः कलान्विता ॥

योऽहं पुरुषनार्यात्मा विराजो हेतुरस्मि हि ।
मदर्धतेजसा युक्ता नारी लक्ष्मीरितीरिता ॥

नारायणोऽहं पुरुषो विराड्रूपी सनातनः ।
द्वादशार्णं महाविद्या रूपो ब्रह्ममयोऽस्म्यहम् ॥ —७०

ब्रह्मविद्येति यामाहुर्ममैव द्वादशाक्षरीम् ।
अहं जगन्मयत्वेन छन्दसां जगतां परम् ॥

जगती द्वादशार्णेति ख्याता विद्येयमुत्तमा ।
ब्रह्मविद्येति विख्याता प्रदानाददितस्तव ॥

ब्राह्मे मुहूर्ते दानेन ब्रह्मविद्येत्यपिस्मृता ।
इमामपि महाविद्यां लक्ष्मीनारायणाभिधाम् ॥

गृहाण मम तेजोंश प्राप्त्यर्थं ते महामते ।
योऽसौ विराड्रूपः साक्षात् पुरुषोऽहं पुरातनः ॥

सर्ववेदमयः सर्व प्रपंचात्मा सनातनः ।
स एव वेदपुरुषो वेद नारायणोऽस्म्यम् ॥ —७५

किञ्च मद्रश्मयः सर्व लोकानाहृत्य सन्ततम् ।
सहायं ते करिष्यन्ति स्वर्गकार्ये प्रजापते ॥

येयं मद्रूपिणी साक्षात् गायत्री वेदमातृका ।
तज्जातः सविता ब्रह्मन् देवो नारायणोऽस्म्यहम् ॥

कालात्मा सर्वभूतात्मा वेदाह्वः सर्वतोमुखः ।
जन्ममृत्युजराव्याधि संसारभयनाशनः ॥

सर्वविद्यामयीशुद्ध पंचाशद्वर्णरूपिणी ।
मातृका या समाख्याता सा मद्रूपैव वाक्पते ॥

स्त्रीरूपमखिलं यद्यत् पुंरूपमखिलं तथा ।
लक्ष्मीरूपं च मद्रूपं तत्तत्सारं न संशयः ॥ —८०

द्वादशार्णा ब्रह्मविद्या तस्माद्विश्वमयी स्मृता ।
ब्रह्मविद्योपासको मे विराट्पुरुष रूपधृक् ॥

ज्योतिर्मयी महाविद्या वस्वक्षरमयी मम ।
मामुपास्य नरः साक्षान्मम सायुज्य मश्नुते ॥

शब्दब्रह्मणि निष्णातः परं ब्रह्माधि गच्छति ।
मदात्मकं मन्त्रजालं त्रयी तस्मान्मदात्मिका ॥

ब्रह्मविद्यामुपास्यादौ ब्राह्मे काले प्रजापते ।
गायत्रीं समुपास्याथ हुत्वा मां जातवेदसि ॥

नारायणीं तदानाम्ना मातृकां मत्स्वरूपिणीम् ।
यावच्छुभमुपास्याथ श्रीमदष्टाक्षरीं मम ॥ —८५

मम तदात्म्यसिद्ध्यर्थं चतुर्वर्गफलाप्तये ।
उपास्य मत्कलायुक्तो भूत्वा सृष्टिकरो भव ॥

पुत्रो हि रुद्र इत्याख्यां गतोऽहं ते प्रजापते ।
त्वया सृष्टमिदं विश्वं कालेकाले हराम्यहम् ॥

नरास्त्वदादयो जीवास्तेषामयनमाश्रयः ।
नारायणोऽस्म्यहं तेन सर्वलोकेश्वरेश्वरः ॥

प्रकृत्याख्यां गृहाणेमां मायां त्रैलोक्यमातृकाम् ।
गृहाण तत्सहायेन सृजत्यवतिहन्ति च ॥

इदमेव महत्तत्त्वं परब्रह्ममयस्य मे ।
एतदाचार्यवदनाद्विज्ञाय परमार्थतः ॥ —९०

अवश्यं मम तादात्म्यं प्राप्नोत्येकेन जन्मना ।
अहिंसा सत्यमस्तेयं शौचमिन्द्रिय निग्रहः ॥

आचार्यपादशुश्रूषा सर्वधर्मरतिस्सदा ।
मम तादात्म्यसंसिद्धिं प्रत्येते सप्तहेतवः ॥

एतदन्यच्च भगवान् उपदिश्य प्रजापतेः ।
अन्तर्धानं जगन्नाथ नित्यमुक्तैरभिष्टुतः ॥

ब्रह्मापि भगवद्वक्त्राज्ज्ञात्वा तत्त्वे परंमहत् ।
सृष्ट्वादौ सनकादिभ्यो वसिष्ठादिभ्यश्च उक्तवान् ॥

तेऽपि विज्ञाय परमं तत्त्वं ब्रह्मैकच्च कारणम् ।
ब्रह्मभूतास्तपोनिष्ठा अद्यापि सुखिनोऽभवन् ॥ —९५

वर्णात्मकाः शब्दमया मन्त्राः सर्वे सनातनाः ।
अचिन्त्य शक्तिता सर्व मन्त्राणां द्विजपुङ्गवाः ॥

सत्संप्रदायमार्गेण सदाचार्य प्रसादतः ।
श्रद्धयाचार्य वाक्येषु सर्वसिद्धिस्तपोधनाः ॥

स्वच्छन्दमरणं जातिस्मरणं ब्रह्मदर्शनम् ।
कालस्य वञ्चनोपाय कारणं नान्यदिष्यते ॥

श्रीमदष्टाक्षरीं विद्यां साङ्गाञ्च सरहस्यकाम् ।
ज्ञात्वाचार्य मुखांभोजात् संसेव्याचार्यमन्वहम् ॥

जित्वा कालं दुराधर्षं ब्रह्माप्नोति तपोधनाः ।
परस्य ब्रह्मणस्तत्व स्वरूपं किञ्चिदीरितम् ॥ –१००

सुगुप्तमपि विप्रेन्द्राः किं पुनः श्रोतुमिच्छथ ।
इति दाशरथीयेऽस्मिन् तन्त्रे वेदार्थसंग्रहे ॥

॥ इति द्वितीयोऽध्यायः ॥



## ॥ अथ तृतीयोऽध्यायः ॥



**ऋषय ऊचुः —**

ऋश्यशृङ्ग महाभाग सर्वज्ञान तपो निधे ।
सुगुप्तमपि तत्तत्त्वं ब्रह्मणः परमात्मनः ॥

श्रुतमाचार्य शुश्रूषा कर्तव्यादाविति त्वया ।
आचार्यः कीदृशोलोके शिष्यो वापि कथंमुने ॥

कथं शुश्रूषणं कार्यं शिष्येणाचार्य पादयोः ।
त्वत्पादपद्म भक्तानामस्माकं तद्वदाश्रुतम् ॥

ऋश्यश्रृङ्ग उवाच —

शृणुध्वमृष्यो यूयं सर्वज्ञा अपिसत्तमाः ।
आचार्य चरणाम्भोज शुश्रूषण विधिं पराम् ॥

वेदवेदान्तसारार्थ तत्त्वविच्छ्रुति पारगः ।
सततं वैदिकाचार निरतः शास्त्र पारगः ॥ —५

शान्तो दान्तो जितक्रोधो जितामित्रोजितेन्द्रियः ।
वेदाध्ययन कृन्नित्यं वेदार्थस्य विचारकृत् ॥

स्वशिष्य पुत्रवात्सल्य सहितो ब्रह्मवित्तमः ।
अहर्निशं श्रुतेर्जापी श्रौताचार रतस्सदा ॥

अहिंसा सहितोनित्यं ब्रह्मतत्त्वार्थ चिन्तकः ।
शिवविष्णवोरभेदेन नित्योपास्तिरतोद्विजाः ॥

महाकुलप्रसूतश्च गुरुरित्युच्यते बुधैः ।
सहस्रकृत्वो गायत्री जपकर्ता दिनेदिने ॥

अनसूयो जितक्रोधो वेदाध्ययनकृत्सदा ।
सर्वागमरहस्यज्ञो गुरुरुक्तो महानयम् ॥ —१०

बहुशो हि जपेद्यस्तु गायत्रीं वेदमातरम् ।
तत्सान्निध्येन विद्यानां कर्तव्यं ग्रहणंभुवि ॥

मन्त्रमात्र परिज्ञानाद्गुरुत्वं विद्यते नहि ।
न्यासानामपरिज्ञाता पूजायन्त्रादिकस्य च ॥

नाचार्यः प्रोच्यतेसद्भिः किञ्चिज्ज्ञात्वा तपोधनाः ।
सर्वागम रहस्यार्थ पारगं श्रुतितत्परम् ॥

योजनानां सहस्रंवा गत्वा तं गुरुमाश्रयेत् ।
असूयासहितो नित्यं दम्भतोभादि संयुतः ॥

पिशुनो निष्ठुरो मूर्खो मिथ्यावादी च सन्ततम् ।
तमोगुणप्रधानश्च परनारी रतःसदा ॥ —१५

स्वर्णस्तेयरतोवापि गुरुनिन्दाश्रुतौरतः ।
जिह्मः कठिनचित्तोऽसौ सततं क्रोधतत्परः ॥

असूयामत्सरग्रस्तो वैदिकाचार निन्दकः ।
वेदबाह्यो दुरालापी दुष्प्रतिग्रह कारकः ॥

शिष्यत्वे वर्जयेदेतान् कुलीनानपि सन्ततम् ।
वेदाध्ययनकृन्नित्यं दम्भलोभ विवर्जितः ॥

असूयाक्रोधरहितो मात्सर्यरहितःसदा ।
सततं वैदिकाचारतत्परः श्रुतिपारगः ॥

महाकुलप्रसूतश्च सत्कर्मफलनिस्पृहः ।
पितुर्मातुश्च शुश्रूषुरहंकारविवर्जितः ॥ --२०

अर्थप्राणशरीराणामपि दाता गुरोर्द्विजः ।
अन्वहं गुरुपादाब्ज शुश्रूषुर्वीतमत्सरः ॥

एतादृशान् परीक्ष्यैव विद्यादेया प्रयत्नतः ।
सकृद्वा गुरुनिन्दायां समासक्तमनायदि ॥

तादृशाय नो दातव्या प्राणैः कण्ठगतैरपि ।
आक्रुष्टस्ताडितोवापि कशाभिः पादताडनैः ॥

महाप्रसाद इत्याज्ञां नोलङ्घयति यः सदा ।
अवश्यं तस्य दातव्या विद्या स्वर्गापवर्गदा ॥

पिता माता तथा भ्राता साङ्गवेदोपदेशकृत् ।
चत्वारो गुरवः प्रोक्ता पूज्याः प्रत्यहमादरात् ॥ —२५

गुरुत्वं नाम पूज्यत्वं नमस्कार्यत्वमन्वहम् ।
सेव्यत्वमन्वहं भक्त्या पादशुश्रूषणादिभिः ॥

उपाय इति यः प्रोक्तः शास्त्राणामुपदेशकृत् ।
अक्षपादकृतं शास्त्रं मीमांसाद्वितयं तथा ॥

कापिलं पाणिनीयं च योगशास्त्रमतःपरम् ।
शास्त्रषट्कमितिप्रोक्तमपवर्गादिकारणम् ॥

मन्वादि धर्मशास्त्राणामुपदेशकरोऽपि च ।
उपाध्याय इति प्रोक्तः पूज्यो गुरुवदन्वहम् ॥

द्वादशार्णां ब्रह्मविद्यामुपदेष्टा श्रियःपतेः ।
साङ्गन्यासादिसहितां यन्त्रपूजादि संयुताम् ॥ —३०

श्रीमदष्टाक्षरीं विद्यां दत्वा श्रुतिभिरीरिताम् ।
आचारं शिक्षयेन्नित्यं रहस्यमपि बोधयन् ॥

आचार्य उच्यते लोके गुरूणां परमोगुरुः ।
साक्षान्नारायणात्मासौ विज्ञेयः पुरुषोत्तमः ॥

अधीत्यैकत्र सद्विद्यां ज्ञात्वाविधिमथान्यतः ।
यन्त्रन्यासविधिं वापि तद्रहस्यमथापिवा ॥

तयोरपि गुरुत्वं स्यात्पूज्यत्वमपि चान्वहम् ।
यन्त्रपूजारहस्यादि विधानं साङ्गमादरात् ॥

यो जानाति तमेवेष्ट्वा प्राणैरर्थैर्धियापि च ।
गृह्णीयात्सकलान्मन्त्रानेकं वा मन्त्रमादरात् ॥ —३५

अज्ञात्वा यो महाविद्याविधानं सरहस्यकम् ।
विद्यां ददाति शिष्याय तं विद्यालोकवंचकम् ॥

अज्ञात्वायो महाविद्याविधानं सरहस्यकम् ।
गृहीत्वा प्रजपेद्विद्यां स ज्ञेयो नरगर्दभः ॥

सरहस्यकलापस्याप्यज्ञातुः सन्निधौ द्विजाः ।
विद्यामात्रमधीत्यान्यं सरहस्यज्ञमुत्तमम् ॥

श्रोत्रियं ब्रह्मतत्त्वज्ञमाचार्यं वरयेत्पुनः ।
बहुयोजनसाहस्रदूरं गत्वापि वा द्विजाः ॥

साङ्गविद्योपदेशार्थमन्यमाचार्यमाश्रयेत् ।
एकेन जन्मनाचार्यं ईरितः परमात्मना ॥ —४०

भगवद्रश्मिविद्याभिः सहितां सरहस्यकाम् ।
श्रीमदष्टाक्षरीं विद्यां यो ददाति द्विजोत्तमः ॥

आचार्यरूपिणंविद्यात्तमेव श्रीपतिं विभुम् ।
यज्ञोत्सवे विवाहादौ सर्वेष्वाचार्यमग्रतः ॥

कृत्वा विभूषणैर्वस्त्रालङ्काराद्यैर्धनैरपि
अभ्यर्च्य सर्वधर्माणां सिद्धिं प्राप्नोतिशाश्वतीम् ॥

ब्रह्मविष्णुमहेशादिपुरोप्याचार्यमन्ततः ।
संपूज्यैव महासिद्धिं लभते नान्यथाद्विजाः ॥

सर्वस्वमपि दत्वाऽत्र प्राणानपि कलेबरम् ।
अचार्यतुष्टिं जनयेद्यदीच्छेत्सिद्धिमुत्तमाम् ॥ —४५

अप्येकाक्षरदातारं गुरुं धिक्कृत्य वा सकृत् ।
त्वं कृत्वाप्यथ हुंकृत्य षष्टिवर्षसहस्रकम् ॥

श्वानजन्म समासाद्य चण्डाळेष्वभिजायते ।
व्याधियुक्तो दरिद्रो वा क्रोधी वाप्यजितेन्द्रियः ॥

आचार्यो नावमन्तव्यः प्राणैः कण्ठगतैरपि ।
आचार्य निन्दाश्रवणं सकृद्वा यस्यजायते ॥

महापातकिनं विद्यात्तमेव नरकालयम् ।
ब्रह्मविद्यादि विद्यानामेक एव गुरुर्यदि ॥

न हि धन्यतरस्तस्मादधिको विद्यते भुवि ।
एकैव श्रीगुरूपास्तिर्ब्रह्मतादात्म्यसिद्धिदा ॥

श्रीमदष्टाक्षरीविद्या ब्रह्मविद्या तथैव च ।
विद्याद्वयमिदंसर्ववेदवेदान्तसंग्रहम् ॥

तृतीयं रश्मिमालाख्यसूक्तमत्यन्तपावनम् ।
विद्यात्रयमिदं पुंसामेकस्यैव गुरोर्मुखात् ॥

लभ्यते यदि धन्योऽसौ ब्रह्मानन्दयुतोभवेत् ।
पाषाणलोहकाष्ठाभिर्निर्मितप्रतिमासु च ॥

सेवां कुर्वन्ति भगवद्बुद्ध्या प्रासादाम्बरभूषणैः ।
लोके मन्दधियो नित्यं भवबंधयुता हि ते ॥

मूलं सकलधर्माणां हेतुं स्वर्गापवर्गयोः ।
साक्षान्नारायणात्मानमाचार्यं ब्रह्मरूपिणम् ॥ —५५

नार्चयन्ति विमूढास्ते प्रतिमासु यथा तथा ।
तस्मादाचार्यतत्त्वं तु गुप्तं सर्वस्मृतिष्वपि ॥

आचार्य एव भगवान् साक्षान्नारायणो विभुः ।
विज्ञेयः परमात्मासौ सत्यंसत्यं तपोधनाः ॥

नराकृतिरसौ साक्षाद्भगवानिन्दिरापतिः ।
तमभ्यर्च्यैव सततं विद्यां सकृदपिस्मरन् ॥

संसारसागरं तीर्त्वा याति ब्रह्मपदं महत् ।
अनभ्यर्च्य सदाचार्यं भगवन्मयमादरात् ॥

महादानायुतैर्वापि वाजिमेधायुतैरपि ।
न परं पदमाप्नोति तीर्थयात्रायुतेन वा ॥ —६०

धिक्कृत्य वापि हुंकृत्य निन्दां कृत्वापि वाऽसकृत् ।
पुत्रमित्रकलत्रादि सम्पद्भ्यः प्रच्यवन्ति ते ॥

मज्जन्तिनरकौघेषु त्यक्त्वादेहमतःपरम् ।
आचार्यपत्नीपुत्राणामपि निन्दां तपोधनाः ॥

श्रुत्वा पातकमासाद्य निमज्जन्त्यपि रौरवे ।
आचार्य एव संपूज्यः प्राणैरर्थैर्धिया च हि ॥

आचार्य एव स्तोतव्यो राजविद्वत्सभासु च ।
आचार्य एव वन्द्यःस्यात् त्रिसन्ध्यासु दिने दिने ॥

आचार्य एव पोष्यो हि धनवासोऽन्नभूषणैः ।
आचार्य एव संमान्यः सततं सर्वसिद्धये ॥ —६५

आचार्य सद्गुणा एव श्रोतव्याः प्रत्यहं बुधैः ।
द्रष्टव्यं सर्वदाचार्यपादाब्जद्वयमेव हि ॥

आचार्यायैव दातव्यमपि सर्वस्वमादरात् ।
आचार्यसन्निधावेव स्थातव्यं प्रत्यहं बुधैः ॥

इत्थमाचार्यशुश्रूषां कुर्वन्नप्येकवत्सरम् ।
महेन्द्रार्धासनारूढो भविष्यति न संशयः ॥

इत्थमाचार्यशुश्रूषां कृत्वा वर्षत्रयंभुवि ।
अवश्यं ब्रह्मणोलोकमाप्नोत्यत्र न संशयः ॥

कुर्वन्नाचार्यशुश्रूषां यावज्जीवमतन्द्रितः ।
इहैव ब्रह्मभूतोऽसौ जीवन्मुक्तो न संशयः ॥ —७०

इत्थमाचार्यशुश्रूषां कुर्वन् प्रत्यहमादरात् ।
श्रुत्युक्ताचारसम्पन्नो वेदाध्ययन तत्परः ॥

ब्रह्मविद्यानुसंधाता रश्मिमालानुचिन्तकः ।
साङ्गन्यासादिसहित श्रीमदष्टाक्षरीरतः ॥

कलेबरान्ते सायुज्यं प्राप्नोत्येव श्रियःपतेः ।
भगवद्वदनोद्भूता श्रुतिःसाङ्गा सनातनी ॥

विध्यर्थवादमन्त्रात्मरूपिणी सर्वसिद्धिदा ।
स्वायंभुवादयः पश्चादृषयः क्षीणकल्मषाः ॥

धर्मं शास्त्राणि दिव्यानि कृतवन्तस्तपोधनाः ।
अक्षपादादयोविप्रा महेशसमतेजसः ॥ —७५

कृतवन्तो दर्शनानि षडेते परमर्षयः ।
एतेषामुपदेष्टापि समहान् गुरुरुच्यते ॥

उपनीयतु यश्शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यं विदुर्बुधाः ॥

द्वितीयो ब्रह्मविद्याया प्रदाताचार्य उच्यते ।
तृतीय उक्त आचार्यो भगवद्रश्मि मन्त्रदः ॥

न्यासयन्त्ररहस्यादि सहितामिन्दिरापतेः ।
क्रमादष्टाक्षरीं विद्यां दद्याद्यो विप्रपुङ्गवः ॥

तमेव भगवद्रूपं प्राहुराचार्यमुत्तमम् ।
अनेन सदृशोनान्य आचार्यो विद्यते भुवि ॥ —८०

नारायणो जगत्स्वामी भगवानिन्दिरापतिः ।
त्रेतायुगे दशरथात्कौसल्या गर्भसंभवः ॥

श्रीराम इति लोकेऽस्मिन् ख्यातो दाशरथिर्विभुः ।
हत्वा दुष्टं दुराधर्षं रावणं रजनीचरम् ॥

गुप्तं राक्षसकोटीभिः भिन्नाञ्जनचयोपमम् ।
राज्याभिषिक्तस्सहितो भ्रातृभिर्लक्ष्मणादिभिः ॥

वसिष्ठादिमहर्षीणां सन्निधावपि वाक्पतेः ।
वेदार्थ संग्रहं नाम्ना तन्त्रं सकलकामदम् ॥

समस्तविद्यारत्नानां रहस्यप्रतिपादकम् ।
अनुत्तरब्रह्मतत्त्वरहस्यं श्रुतिसम्मितम् ॥
कथयामास रुद्राय पृच्छते मुनिपुङ्गवाः ॥ —८५

॥ इति ब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे तृतीयोऽध्यायः ॥



## ॥ अथ चतुर्थोऽध्यायः ॥



**ऋषय ऊचुः —**

ऋश्यशृङ्गमहाभाग विभण्डकसुत प्रभो ।
जानकीपतिना साकं रामेण परमात्मना ॥

कथं सामगमो गौरीपतेरासीन्महात्मनः ।
किमर्थमुक्तवानेतत्तन्त्रं वेदार्थसंग्रहम् ॥

रुद्राय गौरीपतये वदास्माकं महामते ।

**ऋश्यशृङ्ग उवाच —**

शृणुध्वमृषयस्सर्वे रहस्यमपि वक्ष्यते ॥

यत्तद्दाशरथिप्रोक्तं ब्रह्मतत्त्वं पुरातनम् ।
पुलस्त्यवंशसंभूतं दुरात्मानं महाबलम् ॥

सर्वरक्षोगणाधीशं रावणं रजनीचरम् ।
साक्षात्परब्रह्ममयः श्रीरामो जगतीपतिः ॥

सेतुना सागरं तीर्त्वा वायुपुत्रादिभिर्वृतः ।
रणेहत्वा दुराधर्षं वीरं त्रैलोक्य रावणम् ॥

राज्येऽभिषिक्तः श्रीरामः साक्षान्नारायणो विभुः ।
भ्रातृभिः सहितोरामो वसिष्ठाद्यैर्महर्षिभिः ॥

जानक्या सहितो देव्या तिष्ठन् सिंहासने शुभे ।
अयोध्यानगरेरम्ये पालयामास मेदिनीम् ॥

तं द्रष्टुमागता अष्टौ शक्राद्या लोकपालकाः ।
सर्वदेवगणैर्युक्तस्सिद्धविद्याधरान्विताः ॥

हिताय सर्वलोकानां धर्मसंस्थापनाय च ।
सारभूतमिदं वेद वेदान्तार्थरहस्यकम् ॥

मुक्तिरत्नं महद्वाक्यमुक्तवान् जानकीपतिः ।
यत्रैव ब्रह्मणस्तत्त्वरहस्यं श्रुतिसंग्रहम् ॥

ब्रह्मविद्याष्टवर्णादि विधानं साङ्गमुत्तमम् ।
रहस्यमपि यत्रोक्तं भोगस्वर्गापवर्गदम् ॥

तन्त्रं दाशरथीयाख्यमिदं तस्माद्द्विजोत्तमाः ।
भगवद्वदनाम्भोजादाविर्भूतमिदं शुभम् ॥

शास्त्रं सकलवेदानां सारभूतार्थसंग्रहम् ।
आचार्यवदनाम्भोजाद्विज्ञेयं नान्यथा द्विजाः ॥

व्याख्यातुरस्य तन्त्रस्य प्राणानपि समर्पयेत् ।
श्लोकमेकमथात्रापि जप्त्वा जीवन् विमुच्यते ॥ —१५

जानकीशमुखांभोजादेतच्छास्त्रमनुत्तमम् ।
श्रुत्वा चतुर्मुखः पश्चात्सनकादिभ्य उक्तवान् ॥

अस्मत्पितामहःपूर्वं ब्रह्मणो वदानाम्बुजात् ।
श्रुत्वा विभंडकायाथ स्वसुतायोक्तवानिदम् ॥

इदं समस्तवेदानां सारभूतार्थसंग्रहम् ।
अधीतवान् पितुर्वक्त्राद्विभंडकमुनेर्द्विजः ॥

वर्ष एकोऽपि शास्त्रेऽत्र वेदवेदान्तसम्मितः ।
ब्रह्मदर्शनसिध्यर्थमोक्षलक्ष्मीसमृद्धये ॥

अध्येतव्यमिदंशास्त्रं जानकीपतिनिर्मितम् ।
इदं दाशरथीयाख्यं तन्त्रंदृष्टवामहर्षयः ॥ —२०

संहितापञ्चकं चक्रुर्वेदवेदान्तसंग्रहम् ।
सनत्कुमारोभगवान् दत्तात्रेयो जगत्पतिः ॥

ब्रह्मर्षीणामग्रगण्यो वसिष्ठोऽरुन्धतीपतिः ।
भार्गवो जामदग्न्योऽपि योऽसौ भगवदंशजः ॥

द्वैपायनसुतः साक्षाद्ब्रह्मवियोगिनां वरः ।
पञ्चैते सहिताश्चक्रुर्वेदवेदान्तसम्मिताः ॥

उक्तं दाशरथीयेऽस्मिन् यद्यद्भगवता पुरा ।
तत्सदाचार्यवदनाज्ज्ञातव्यं तत्त्वमुत्तमम् ॥

तस्मादाचार्यपादाब्जद्वंद्वमेव दिनेदिने ।
सेवितव्यं भगवतः साक्षात्कारस्य सिद्धये ॥ —२५

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्तेचास्यकर्माणि तस्मिन् दृष्टे परमात्मनि ॥

कलेबरमिदं भौमं रक्तमांसास्थिसंकुलम् ।
जरामरणसंयुक्तं मलमूत्रौघसङ्कुलम् ॥

विचार्यसततं ब्रह्मतत्त्वदर्शनसिद्धये ।
सेवितव्यं सदाचार्यपादाम्बुजयुगंनराः ॥

पुनर्जन्म पुनर्मृत्युर्भूयोऽपि च कलेबरम् ।
पुनर्जरा पुनर्बाल्यमाधयो व्याधयः पुनः ॥

तस्मादवश्यं भगवत्तादात्म्यप्राप्तये द्विजाः ।
आचार्यचरणाम्भोजद्वयमेव दिनेदिने ॥
स्तोतव्यमर्चनीयश्च सेवितव्यं द्विजोत्तमाः ॥ –३०

इति दाशरथीयेऽस्मिन् तन्त्रे वेदार्थसङ्ग्रहे ।
अनुत्तर ब्रह्मतत्त्वरहस्येऽध्याय ईरितः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे चतुर्थोऽध्यायः ॥



## ॥ अथ पंचमोऽध्यायः ॥



ऋषय ऊचुः —

ऋश्यशृंग महाभाग विभंडकसुत प्रभो ।
जानकीपतिना साकं रामेण परमात्मना ॥

कथं समागमो गौरीपतेरासीन्महात्मनः ।
किमर्थमुक्तवानेतत्तन्त्रं वेदार्थसङ्ग्रहम् ॥

रुद्राय गौरीपतये वदास्माकं महामते ।

**श्री ऋश्यश्रृङ्ग उवाच —**

श्रृणुध्वमृषयस्सर्वे रहस्यमपिवक्ष्यते ॥

यत्तद्दाशरथिप्रोक्तं ब्रह्मतत्त्वं पुरातनम् ।
पुलस्त्यवंशसंभूतं दुरात्मानं महाबलम् ॥

सर्वरक्षोगणाधीशं रावणं रजनीचरम् ।
साक्षात्परब्रह्ममयः श्रीरामो जगतीपतिः ॥ —५

सेतुना सागरं तीर्त्वा वायुपुत्रादिभिर्वृतः ।
रणे हत्वा दुराधर्षं वीरं त्रैलोक्यरावणम् ॥

राज्येऽभिषिक्तः श्रीरामः साक्षान्नरायणो विभुः ।
भ्रातृभिः सहितो रामो वसिष्ठाद्यैर्महर्षिभिः ॥

जानकयासहितो देव्या तिष्ठन् सिंहासने शुभे ।
अयोध्यां नगरेरम्ये पालयामास मेदिनीम् ॥

तंद्रष्टुमागता अष्टौ शक्राद्या लोकपालकाः ।
सर्वदेव गणैर्युक्ताः सिद्धविद्याधारान्विताः ॥

साष्टाङ्गं दण्डवन्नत्वा रामं त्रिजगतीपतिम् ।
तदाज्ञया समासीनाः सुशुभेष्वासनेषु ते ॥ —१०

मूर्तिमद्भिश्चतुर्वेदैः सेवितः सनकादिभिः ।
नराकृतिधरं साक्षान्नारायणमजं विभुम् ॥

कौसल्यागर्भसंभूतं रामं दाशरथिं विभुम् ।
द्रष्टुंतमाययौ देवं ब्रह्मापि चतुराननः ॥

जैगीषव्यो महायोगी शतानन्दोऽथ गौतमः ।
दत्तात्रेयोऽपि भगवानगस्त्यः कण्व एव च ॥

मेधातिथिर्भरद्वाजो विश्वामित्रो महातपाः ।
एकतश्चद्वितश्चैव यवक्रीतोऽथ गालवः ॥

महर्षिःकपिलाचार्यः सुतीक्ष्णो मुनिसत्तमः ।
जामदग्न्यस्ततोरामो देवरातो महातपाः ॥ —१५

नारदः पर्वतोऽत्रिश्च मार्कण्डेयो महातपाः ।
योगाचार्योऽथ वाल्मीकिरुपमन्युस्तपोनिधिः ॥

एतेचान्ये च बहवो नराकृतिधरंहरिम् ।
श्रीरामं परमात्मानं नारायणमजं विभुम् ॥

राजीवायतनेत्रान्तं प्रसन्नमुखपङ्कजम् ।
अभ्याययुस्तपोनिष्ठा ऋषयो दीप्ततेजसः ॥

अभ्याययौ महादेवः कैलासाद् गिरिजापतिः ।
तण्डुनन्दीशभृंगीशवीरभद्रगणेश्वरैः ॥

सहितः प्रमथाधीशैः कोटिशो मातृभिर्वृतः ।
द्रष्टुमिन्दीवरश्यामं प्रसन्नं जानकीपतिम् ॥ —२०

तेषामर्घ्यं च पाद्यञ्च विवेद्य रघुनन्दनः ।
शिवस्य ब्रह्मणोऽन्येषामासनानि समादिशत् ॥

विधिरुद्रादयो देवा आसीना आसनेषुते ।
इदमूचुर्वचोऽत्यन्तं रामं राजीवलोचनम् ॥

अहो भाग्यमहोभाग्यमद्यास्माकं जगत्पते ।
यत्तदव्यक्तमक्षय्यमद्यास्माकं जगत्पते ॥

तपः फलितमस्माकं बहुजन्मार्जितं विभो ।
अद्यनः सफला यज्ञा बहुशो दक्षिणान्विताः ॥

देवं नारायणं साक्षात्पश्यामस्त्वां नराकृतिम् ।
वेदा अपि च वेदांतास्त्वामेव ब्रह्मरूपिणम् ॥ —२५

संस्तुवन्ति यथानित्यं वन्दिनः परमेश्वरम् ।
यतोवाचो निवर्तन्ते अप्राप्य मनसा सह ॥

सत्यानन्दचिदाकारं त्वमेव भगवान् विभो ।
त्रैलोक्यकण्टकं वीरं दुर्धर्षममरैरपि ॥

त्रिजगद्रावणं हत्वा जगन्निष्कण्टकं कृतम् ।
पालयित्वा जगदिदं पुनरागच्छ तत्परम् ॥

इति स्तुत्वा सुरास्तूष्णीमासीना आसनेषु ते ।
राजीवलोचनं रामं पश्यन्तः समुपासते ॥

सत्यानन्दचिदाकारं दृष्ट्वा श्रीराममच्युतम् ।
सुप्रसन्नमुखं शान्तं गौरीसहित आदरात् ॥ —३०

दृष्ट्वाहर्षसमायुक्तः कृतांजलि पुटोविभुः ।
उवाच परमात्मानं रघुनन्दमनीश्वरम् ॥

ईश्वर उवाच —

भगवन् देवदेवेश नारायण जगत्पते ।
रामचन्द्र कृपासिंधो शरणागतवत्सल ॥

किञ्चिद्विज्ञप्तुकामोऽहमागतस्त्वं दिदृक्षया ।
इमे ब्रह्मादयो देवाश्शक्राद्याश्च दिगीश्वराः ॥

ब्रह्मर्षयो वसिष्ठाद्याः सनकाद्याश्च योगिनः ।
कपिलाद्या महासिद्धा दत्तात्रेयादयोऽपि च ॥

एतेषां सन्निधौ देव त्वामहं जगतीपते ।
किञ्चिद्विज्ञप्तुमिच्छामि देह्यनुज्ञां ममप्रभो ॥ —३५

इत्युक्तो भगवान् रामस्तथेति करुणानिधिः ।
आज्ञापयामास तथा ब्रूहीति गिरिजापतिम् ॥

ईश्वर उवाच —

भगवन् देवदेवेश लोकनाथ जगत्पते ।
हिताय सर्वलोकानां महर्षीणां च नित्यशः ॥

ब्रह्मतत्त्वविजिज्ञासुर्द्रष्टुमिच्छामि सांप्रतम् ।
नारायणात्मनः साक्षात्परब्रह्ममयस्य ते ॥

विज्ञातव्यं परं तत्त्वं कथं विप्रैः समाहितैः ।
संसारसागरे मग्नाः कथं त्वां ब्रह्मरूपिणम् ॥

प्राप्नुवन्ति द्विजास्तीर्त्वा कथं त्वद्दर्शनं भवेत् ।
सत्यानन्दचिदाकारस्त्वमेव ब्रह्मरूपभृत् ॥ —४०

कथं तुष्टः परं धाम प्रयच्छसि जगत्पते ।
त्वद्रहस्यं समाचक्ष्व येन मुक्तिं प्रयान्त्यमी ॥

दानंवाथ व्रतोवाथ मन्त्रस्तोत्रं जपोऽथवा ।
ऋतुस्तपो वा भगवन् तव प्रीतिकरं वद ॥

वेदा अपि च वेदांतास्तवरूपं परं महत् ।
नारायणात्मकं तत्त्वं न जानन्ति हि तत्त्वतः ॥

मां प्रेरयन्ति ब्रह्माद्या अमी च परमर्षयः ।
विज्ञप्तुं तव पादब्जयुगळे जगतीपतिः ॥

इत्युक्तो भगवांस्तत्र श्रीरामो जगतीपतिः ।
चतुर्मुखादिदेवानां महर्षीणां च सन्निधौ ॥ —४५

प्रसन्नवदनः प्राह शङ्करं लोकशङ्करम् ।

**श्रीभगवानुवाच —**

गौरीपते प्रवक्ष्यामि तत्त्वं भगवतो मम ॥

रहस्यमपि वेदान्तसारभूतार्थसंग्रहम् ।
सत्यं विज्ञानमानन्दरूपमक्षरमच्युतम् ॥

गुहायांनिहितं ज्योतिरचलं शाश्वतं ध्रुवम् ।
तदेव मे परब्रह्मरूपं नारायणाभिधम् ॥

वेदान्त वेद्योऽस्मि तथैव वेदैः
स्तुतोऽस्मि नित्यं परिपूर्णकामः ।
ध्येयोऽस्मि योगीश्वरसिद्धसङ्घैः
पूज्योऽस्मि नित्यं भुवनेषु सर्वैः ॥

वेदान्त रूपोऽस्म्यहमेव वेद
रूपोऽस्मि कालोऽस्मि चतुर्मुखात्मा ।
नारायणोऽहं नररूपधारी
रूद्रोऽस्मि लोकाधिपतिश्च शक्रः ॥ —५०

यत्तद्ब्रह्ममयं धाम परंज्योतिः सनातनम् ।
सत्यानन्दचिदाकारं नित्यं शाश्वतमक्षयम् ॥

अक्षयं परमं दिव्यं शुद्धं सदसदात्मकम् ।
नारायणाभिधं साक्षात्तमःपारे प्रतीष्ठितम् ॥

तदेव मे परंरूपं मनोवाचामगोचरम् ।
न व्रतैर्नमहादानैर्नयागैर्बहुदक्षिणैः ॥

नतीर्थयात्रासाहस्रै र्नैवपूर्तशतैरपि ।
अशक्यं मम तद्रूपं प्राप्यं गौरीपते विभो ॥

आचार्यपादुकासेवा निरतैः शंसितव्रतैः ।
"श्रीमदष्टाक्षरी" विद्या जपहोमादितत्परैः ॥ —५५

वेदपारायणरतैर्ब्रह्मविद्यानुचिन्तकैः ।
"रश्मिमालां जापकैस्तद्रूपं प्राप्तुं हि शक्यते ॥

मम शक्तिरभिन्नेयं जानकी श्रीश्चिदात्मिका ।
भिन्नेव भाति लोकेऽस्मिन्ममायादुरत्यया ॥

अस्या एवांशसंभूता यया विश्वं विमोहितम् ।
सा श्रुतिर्मन्मुखादेवाविर्भूता सनातनी ॥

अयं मे दक्षिणोबाहुः सृष्टिकर्ता पितामहः ।
वामबाहुर्मदीयस्त्वं विष्णुः स्यादयमेव मे ॥

दहरंविपापं परमेश्मभूतं यत्पुण्डरीकं परमध्यसंस्थम् ।
तत्रापि दहरं गगनंविशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् ॥ —६०

यो वेदादौ स्वरः प्रोक्तो वेदान्तेच प्रतिष्ठितः ।
तेन वाच्योऽस्मि सत्यात्मा परमब्रह्मशब्दभाक् ॥

श्रीनारायण नामाहमस्मि त्रैलोक्यनायकः ।
नारायणाभिधं ब्रह्मरूपं यत्सच्चिदात्मकम् ॥

तदेव मे परंतत्वं त्रिगुणातीतमक्षयम् ।
विश्वतः परमं नित्यं विश्वं नारायणात्मकम् ॥

सहस्रशीर्षं विश्वस्य सर्गस्थित्यन्तकारणम् ।
अक्षयं शाश्वतं दिव्यं वेदान्तैरप्यगोचरम् ॥

आदिमध्यावसानेषु यत्तत्सदिति कीर्त्यते ।
तदेव मे महद्गुप्तं रूपं ज्योतिरथाक्षयम् ॥ —६

विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।
नारायणाभिधं ज्ञेयं महद्विश्वात्मकं शिवम् ॥

नारायणाभिधं ज्योतिस्तत्वं नारायणात्मकम् ॥

ममैव तन्महद्रूपं नित्यं नारायणाभिधम् ।
नारायणः परं ब्रह्म तत्त्वं नारायणः परः ॥

नारायणपरं ज्योतिरात्मानारायणः परः ।
यच्चकिञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
नारायणोपनिषदा यदेतत्प्रतिपाद्यते ॥ —७०

नारायणाभिधं रूपं तदेव परमं मम ।
नारायणेतिमन्नाम ये स्मरन्त्यपि सन्ततम् ॥

चतुर्वर्गफलावाप्तिस्तेषां सिद्धिः पदेपदे ।
मत्स्वरूपपरिज्ञाने यदि वाञ्छा प्रजायते ॥

आचार्यपादुकायुग्ममर्चयित्वा दिने दिने ।
शुश्रूषणपरोभूत्वा प्राणैरर्थैर्धियापि च ॥

आचार्यपादकमलमाश्रित्यान्वहमादरात् ।
ब्रह्मविद्यानुसंधानं कृत्वा मम दिने दिने ॥

श्रीमदष्टाक्षरीं विद्यां मम गुप्तश्रियान्विताम् ।
मद्रश्मिविद्यासहितां समस्तन्यास संयुताम् ॥ —७५

आचार्यानुग्रहात् प्राप्य तस्य शुश्रूषणेरतः ।
प्रजप्त्वा सततं भक्त्या मम तादात्म्यमश्नुते ॥

न व्रतैर्नतपोभिर्वा न वेदैर्नागमैरपि ।
मम विद्यानुसंधेया स्वाचार्यानुग्रहं विना ॥

बहुजन्मार्जितैः पुण्यैर्मयिभक्तिः प्रजायते ।
मद्विद्याजपहोमादि कर्मानुष्ठानमुत्तमम् ॥

लभ्यते यदिगौरीश प्रत्यहं विप्रपुङ्गवैः ।
एकेन जन्मनैवासौ मद्रूपं सोश्नुते ध्रुवम् ॥

इति शङ्कर सर्वज्ञ किञ्चिदुक्तं मया तव ।
मत्स्वरूपपरिज्ञाने किं पुनः श्रोतुमिच्छसि ॥ —८०

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे पञ्चमोऽध्यायः ॥

## ॥ अथ षष्ठोऽध्यायः ॥



**ऋश्यशृङ्ग उवाच —**

इति श्रियःपतेर्वक्त्राच्छ्रुत्वा गौरीपतिः शिवः ।
भूयोऽपि जानकीनाथं प्राह लोकहितं वचः ॥

**ईश्वर उवाच —**

भगवन् जानकीनाथ नारायण दयानिधे ।
एते ब्रह्मर्षयः सिद्धास्त्वत्प्रसादाप्तवैभवाः ॥

मामेव चोदयन्तीह प्रष्टुं ब्रह्मरहस्यकम् ।
मन्वादिमुनिभिःप्रोक्तमप्याचारं श्रुतीरितम् ॥

कौतूहलयुताः श्रोतुं भवद्वदनपङ्कजात् ।
लक्षणं गुरुभक्तस्य रश्मिसूक्तं श्रियःपतेः ॥

श्रीमदष्टार्णमाहात्म्यं सरहस्यं विशेषतः ।
माहात्म्यं ब्रह्मविद्यायाः श्रोतुं कौतूहलान्विताः ॥ —५

ब्रह्मापरोक्षविज्ञानं कथमेकेन जन्मना ।
भवतीह द्विजातीनां सर्वमेतद्वदस्व नः ॥

**श्रीभगवानुवाच —**

शृणु रुद्र महाभाग चतुर्वक्त्र पितामह ।
ब्रह्मर्षयोऽपिशृण्वन्तु सिद्धा ये च तपोधनाः ॥

अत्रार्थे संप्रवक्ष्यामि चेतिहासं पुरातनम् ।
यच्छ्रुत्वाचार्यवदनाद्ब्रह्मभूतो भवेदिह ॥

मथित्वाज्ञानमन्थेन वेदागममहार्णवम् ।
सारज्ञेन मयागुह्यं ब्रह्मदर्शनमुत्तमम् ॥

श्वशुरो जनकोऽस्माकं सर्वधर्मपरायणः ।
मेदिनीं पालयामास वेदाध्ययनतत्परः ॥ —१०

अश्वमेधादिभिर्यागैरिष्ट्वा विपुलदक्षिणैः ।
तुला हिरण्यगर्भाद्यैर्यजन् देवं श्रियः पतिम् ॥

ब्रह्मापरोक्षविज्ञानसिद्ध्यर्थं गिरिजापते ।
आराधयामास मुनिं गौतमं ब्रह्मतत्परम् ॥

पद्मरागसमायुक्ततप्तस्वर्णविनिर्मितम् ।
कुण्डलद्वितयं नित्यं ददात्याचार्य कर्णयोः ॥

नवरत्नसमायुक्तसुवर्णेन विनिर्मितम् ।
पादुकाद्वितयं कृत्वा मुक्ताजालविभूषितम् ॥

गुरुपादाम्बुजद्वन्द्वारूढं तत्पादुकाद्वयम् ।
आचार्यपादुकाविद्यामुच्चरन् प्रत्यहं शुचिः ॥ —१५

गन्धाक्षतैश्च कुसुमैश्छत्रव्यजनचामरैः ।
पादुकाद्वितयस्याथ कृत्वाशुश्रूषणं नृप ॥

एकैककर्षमानेन सुवर्णेन विनिर्मितैः ।
आचार्यपादुकायुग्ममर्चयित्वान्वहं शुचिः ॥

आचार्यचरणाम्भोज युग्मेऽर्पयतिचान्वहम् ।
इत्थं द्वादशवर्षाणि पादुकाद्वयपूजनम् ॥

पादुकाविद्यया कृत्वा ब्रह्मदर्शनसिद्धये ।
ब्रह्मविद्यामवाप्यादौ भगवद्रश्मिसंयुताम् ॥

समस्तन्याससहितां यन्त्रपूजापुरस्सराम् ।
श्रीमदष्टाक्षरीं विद्यां प्राप्तवान् गौतमाद्गुरोः ॥ —२०

शरीरमर्थं प्राणांश्च निवेद्य गुरुपादयोः ।
कृतवान्नियमं घोरं ब्रह्मदर्शनसिद्धये ॥

आचार्यपादुकायुग्ममर्चयित्वैवसन्ततम् ।
सौवर्णपुष्पसाहस्रैर्भोक्ष्येऽन्वहमतःपरम् ॥

स इत्थं नियमं कृत्वा स्वगुरोः पादुकाद्वयम् ।
प्रातः प्रातः समुत्थाय समभ्यर्च्योपचारकैः ॥

ब्राह्मणैः सहभुङ्क्तेऽन्नमित्थं द्वादशवत्सरम् ।
जातिस्मरत्वं प्राप्तोसौ पादुकाद्वितयार्चनात् ॥

एकदा पादुकायुग्मं तिरोभूतं स्वमन्दिरे ।
अनश्नन्नेव भूयोऽसौ जपन्नाचार्य पादुकाम् ॥ —२५

ब्रह्मविद्यां रश्मिमालां श्रीमदष्टाक्षरीं जपन् ।
प्रार्थितः पितृमातृभ्यामपि ब्रह्मर्षिपुङ्गवैः ॥

प्रार्थितो गौतमेनापि स्वाचार्येण महामतिः ।
अनश्नन्नेव भूपालो भगवत्यर्पिताशयः ॥

तुष्टोऽस्य गौतमस्तस्मै जनकाय महात्मने ।
प्रादादष्टाक्षरीं सिद्धिं ब्रह्मदर्शनसिद्धिदाम् ॥

तथापि न हि भुङ्क्तेऽसौ पादुकाभावतो नृपः ।
अथाजगाम तं भूपं द्रष्टुमुन्मत्तवेषभृत् ॥

जटाकलापसहितो वल्कलाम्बर संवृतः ।
कृष्णाजिनोत्तरीयश्च शिष्येणैकेन संयुतः ॥ —३०

योऽसौ बदरिकावासी त्रिजगत्परिपालकः ।
भूत्वा परमहंसोऽयं साक्षन्नारायणो विभुः ॥

ज्ञात्वा परमहंसं तमागतं स्वस्य मन्दिरम् ।
पादुकाद्वितयारूढं शिष्येणैकेन संयुतम् ॥

प्रत्युद्गम्याभिवाद्याथ जनको मिथिलापतिः ।
ददर्श पादुकायुग्मं तेनारूढं महात्मना ॥

ब्रह्मानन्दयुतो भूत्वा दृष्ट्वा तत्पादुकाद्वयम् ।
भूयोभूयो नमस्कृत्य स्वर्णपुष्पैरपूजयत् ॥

पुष्पजालं हेममयं पादुकाद्वितयेऽर्पितम् ।
तन्मस्तकेऽथ दृष्ट्वासौ विस्मयं प्राप सादरम् ॥ —३५

आचार्यं गौतमं पश्चात्तदाकृतिसमन्वितम् ।
दृष्ट्वा ननाम साष्टाङ्गं धन्योऽस्मीति मुहुर्वदन् ॥

आचार्यरूपिणस्तस्य तेजः कोट्यर्कसन्निभम् ।
दृष्ट्वा निमीलिताक्षोसौ पादयुग्मे पपात ह ॥

तमुत्थाप्य ददौ दिव्यञ्चक्षुरस्मै जगत्पतिः ।
अथापश्यच्छरीरेऽस्य सर्वमेतच्चराचरम् ॥

ब्रह्माणं भास्करं शेषं त्वाञ्चगौरीसमन्वितम् ।
शक्रादीनष्टदिक्पालान् साध्यांश्च समरुद्गणान् ॥

मित्रादीन् द्वादशादित्यान् रुद्रानेकादशाप्यथ ।
विश्वमेतदशेषेण दृष्ट्वा मच्छ्वशुरो नृपः ॥ —४०

आचार्यपादयोर्दत्तद्रव्यजालमथाक्षयम् ।
दृष्ट्वा विस्मयमापन्नः पुनस्तत्पादुकाद्वयम् ॥

निक्षिप्य मस्तके स्वस्य तत्पादाम्भोरुहद्वयम् ।
साष्टाङ्गं दण्डवन्नत्वा श्रुतिसूक्तैरनेकशः ॥

स्तुत्वा कृताञ्जलिपुटो हंसवेषधरं विभुम् ।
अपश्यत्पूर्ववद्विप्रं जटावल्कलसंयुतम् ॥

एकीभूतं स्वगुरुणा भूयोऽप्याश्चर्यमाप्तवान् ।
आचार्यपादुकायुग्मपूजनाद्गुरुतोषणात् ॥

जन्म मे सफलं जातं जातं मे ब्रह्मदर्शनम् ।
साक्षान्नारायणस्येदं दर्शनं परमात्मनः ॥ –४५

गोतमानुग्रहाज्जातमिति मत्वा स भूपतिः ।
आसनं कल्पयामास योगिवेषधरस्य ह ॥

शिष्येण सहितो योगी समुपाविशदासने ।
अर्घ्यपाद्यादिभिर्दिव्यगन्धैश्च कुसुमैः शुभैः ॥

अर्चयामासतत्पादौ स शिष्यस्य महामतिः ।
आचार्यपादुकायुग्ममग्रेऽभ्यर्च्यैव शङ्कर ॥

तस्य तुष्टस्ततस्सिद्धो देवो नारायणोविभुः ।
उवाच वचनं भूपं कृताञ्जलिपुटं च तम् ॥

**श्री भगवानुवाच –**

प्रीतोऽहं ते महीपाल यद्यदिष्टतमं तव ।
तत्तद्दास्यामि भूयोऽपि प्रार्थितादधिकं फलम् ॥ –५०

**राजोवाच –**

त्वत्पाददर्शनं जातं त्वद्रूपं दृष्टमद्भुतम् ।
किमन्यद्वरयेऽभीष्टं सकलं प्राप्तमद्य मे ॥

आचार्यचरणाम्भोजे नित्यं भक्तिर्दृढास्तु मे ।
आचार्यपादुकायुग्मपूजाप्रत्यहमस्तु मे ॥

रतिर्मे वैदिकाचारे भक्तिराचार्यपादयोः ।
त्वद्विद्याभजने मेऽस्तु दृढभक्तिस्सदा मम ॥

इत्युक्तो भगवान् तत्र मिथिलाधिपतिं नृपम् ।
प्राह नारायणो योगी नरेण सहितो विभुः ॥

तुष्टोऽहं मिथिलाधीश यद्यत्ते फलमीशितम् ।
तत्तदस्तु महीपाल नित्यमाचार्यसेवया ॥ —५५

आचार्यतोषणान्नित्यं यथातुष्टोभवाम्यहम् ।
त्वत्तपः फलतः सर्वे त्वदन्वयसमुद्भवाः ॥

सर्वेऽपि मम सायुज्यं प्राप्स्यन्त्यत्र न संशयः ।
अहं दाशरथिर्भूत्वा लक्ष्मणानुचरोभुवि ॥

जामाता ते भविष्यामि राम इत्यभिविश्रुतः ।
श्रीर्याचिद्रूपिणीशक्तिर्मम वेदेषु संस्तुता ॥

भविष्यतीयं ते पुत्री मत्प्रसादान्महीपते ।
अवाप्तसर्वभाग्यस्त्वं भूत्वा विगतकल्मषः ॥

मत्प्रसादात्परंधाम प्राप्स्यसे पितृभिस्सह ।
इत्युक्त्वा भगवांस्तूष्णीमासीनः सम्यगासने ॥ —६०

प्रसादाभिमुखस्तस्य जनकस्य गृहेऽभवत् ।
प्रसादाभिमुखं वीक्ष्य भगवन्तं सनातनम् ॥

नारायणं नरसखं महायोगीश्वरं विभुम् ।
उवाच जनकोराजा कृताञ्जलिरिदं वचः ॥

राजोवाच –

भगवन् देवदेवेश नारायण जगत्पते ।
हिताय सर्वलोकानां किञ्चिद्विज्ञप्तुमुद्यतः ॥

ब्रह्मापरोक्षविज्ञानं कथमेकेन जन्मना ।
गुरुपादाब्जशुश्रूषा कर्तव्या कथमादरात् ॥

कथं वै वैदिकाचारः कर्तव्यो गृहवासिभिः ।
विधिना केन कर्तव्यं त्वद्विद्याभजनं विभो ॥ –६५

एतदन्यच्च सकलं ब्रूहि मे भगवन् विभो ।

श्री भगवानुवाच –

पृष्टमेतत्रिजगतामुपकारकमादरात् ॥

तुभ्यं जनक वक्ष्यामि गुरुभक्ताय धीमते ।
यत्तत्सत्यचिदानन्दमखण्डं ब्रह्म निर्गुणम् ॥

अचलं शाश्वतं दिव्यं वेदवेद्यं परात्परम् ।
सगुणं निर्गुणञ्चेति रूपद्वितयमुत्तमम् ॥

विद्यते ब्रह्मणस्तस्य तेजोरूपं हि निर्गुणम् ।
सच्चिदानन्दमद्वैतं ज्योतीरूपं परात्परम् ॥

निर्गुणं ब्रह्मणोरूपं विश्वातीतं ममैव तत् ।
सगुणं सृष्टिसंहारस्थितिकारणमद्भुतम् ॥ —७०

ब्रह्मविष्णुमहेशानां कारणं त्रिगुणान्वितम् ।
सयुग्मस्य ममोद्भूता वदनाच्छ्रुतिराशयः ॥

नारायणाज्ञा लोकानां श्रुतिरेव सनातनी ।
आज्ञाछेदी मम द्रोही देहान्ते नरकालयः ॥

वेदाध्ययनकृन्नित्यं वैदिकाचारसंयुतः ।
नारायणपदं नित्यं देहान्ते प्रविशत्यसौ ॥

स्वकर्मनिष्ठः शतजन्मभिर्द्विजो
विरिंचितामेति ततः परं शिवम् ।
आचार्यपादाम्बुजसेवयाथ
नारायणानुग्रहभागसौ भवेत् ॥

नारायणमुखोद्भूता वेदाः साङ्गाः सनातनाः ।
तेषुनिष्ठस्सदाचारयुतोमद्भजनेरतः ॥ —७५

प्राप्नोतिपरमं धाम यत्तन्नारायणाभिधम् ।
आचार्यपादुकासेवा पुरस्सरमथादरात् ॥

कुर्वन्वैदिकमाचारं ब्रह्मविद्यां जपन् सदा ।
समस्तन्याससहित श्रीमदष्टाक्षरीं जपन् ॥

प्राप्नोत्यवश्यं कैवल्यमेकेनैव हि जन्मना ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽपिसन्ततम् ॥

कृत्वैव वेदाध्ययनं ब्राह्मणो भवति ध्रुवम् ।
देवतामन्त्ररूपिण्यो मन्त्वा वेदेषु संस्थिताः ॥

तस्माद्वेदमयाविप्रा वेदाध्ययनसंयुताः ।
सर्वदेवमया विप्राः सर्वदेवमयोहरिः ॥
देवो नारायणः साक्षात् परमात्मा सनातनः ॥ ८०

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

**श्री रामचन्द्र उवाच –**

शृणु रुद्र महाभाग जनकेन महात्मना ।
पृष्टो बदरिकावासी प्राह नारायणो विभुः ॥

**श्री भगवानुवाच –**

शृणु राजन् महीपाल वेदेषु समुदीरितम् ।
सदाचारं परब्रह्मापरोक्षज्ञानसिद्धिदम् ॥

सदाचारवता भाव्यं द्विजेन जगतीपते ।
आचारात्प्राप्यते सौख्यमाचारात्प्राप्यतेयशः ॥

आचारात्प्राप्यते लक्ष्मीराचारात्प्राप्यते गतिः ।
अधीत्य वेदान् वेदौ वा वेदं वा शक्तितोद्विजः ॥

तदुक्ताचारसम्पन्नो ब्रह्म पश्यति तत्परम् ।
रजनी प्रांतयामस्य पूर्वार्धे ब्राह्मनामकः ॥ —५

समयः प्रोच्यतेसद्भिर्ब्रह्मदर्शनसिद्धिदः ।
सन्ध्यापरार्धकालः स्याच्चतुर्नाडीमहीयते ॥

ब्राह्मे समय उत्थाय शयनास्थित एव हि ।
जननीचरणौ स्मृत्वा सर्वतीर्थोत्तमोत्तमौ ॥

त्रिधा पितुः पादयुगं नत्वाचार्यस्य भूपते ।
चरणौ पञ्चधा स्मृत्वा श्रियःपतिमथाच्युतम् ॥

स्मृत्वा दशार्णमनुना द्वादशावृत्तिमादरात् ।
गजास्यमथ संस्मृत्य विश्वेशं पार्वतीविभुम् ॥

वाणीपतिं विधातारं महेन्द्रादिदिगीश्वरान् ।
अरुन्धत्यादिसाध्वीश्च देवर्षीन्नारदादिकान् ॥ —१०

कपिलादिमहासिद्धान् दत्तात्रेयादियोगिनः ।
कवीन् वाल्मीकिमुख्यांश्च त्वदादीन् भूपतीनपि ॥

कौस्तुभादीन् मणिगणान् द्रुमान् कल्पद्रुमादिकान् ।
किङ्करान्वायुपुत्रादीन् प्रह्लादादिदृढव्रतान् ॥

ब्रह्मर्षींश्च वसिष्ठादीन् नन्दीशादिगणानपि ।
वसुन्धरां नमस्कृत्य दक्षं पादं महीतले ॥

निक्षिप्य पुरतो वामं पादं पश्चाद्विनिक्षिपेत् ।
प्राञ्जलिः स्वगुरून् सर्वान् नत्वा ब्रह्मविले ततः ॥

आचार्यचरणाम्भोजद्वयं ब्रह्मबिलेशुभे ।
ध्यात्वा तत्पादकमले गळत्पीयूषबिन्दुभिः ॥ –१५

संप्लावितमथात्मानं ध्यात्वा शुद्धो भवत्यसौ ।
मूलं विंशतिधा जपेत् जवाद्वा दशधा वापि....
...........नत्वाचार्य पदाम्बुजम् ॥

अथवा प्रत्यहं भक्त्या प्रातरुत्थाय वाग्यतः ।
आचार्यचरणाम्भोजारूढं श्रीपादुकाद्वयम् ॥

स्वर्णरत्नमयं वापि राजतं लोहजं तु वा ।
दारुणा निर्मितं वापि शुभलग्ने शुभे दिने ॥

आचार्यचरणाम्भोजारूढं कृत्वा तदादितः ।
प्रातः प्रातः स संस्मृत्य श्रेय इच्छन्ननुत्तमम् ॥

अनन्यदर्शनं दृष्ट्वा पादुकाद्वितयं गुरोः ।
आचार्यपादुकाविद्यामुच्चरन् प्रणमेन्नृप ॥ –२०

तुलसीं जाह्नवीं गोदानदीं सुमहतीमपि ।
पावकं भूपतिं विप्रवर्यं वेदान्तपारगम् ॥

प्रातरुत्थाय यः पश्येत्स आपद्भ्यः प्रमुच्यते ।
प्रातरुत्थाय यो नित्यं पादुकाद्वितयं गुरोः ॥

पूर्वं पश्यति चक्षुर्भ्यां स परं ब्रह्म पश्यति ।
जाह्नव्यादीनि तीर्थानि सप्तकोट्यृषयोऽपि च ॥

तेन दृष्टा न सन्देहो ब्रह्माद्या अपि देवताः ।
आचार्यपादुकाभावेऽप्याचार्यचरणद्वयम् ॥

ब्रह्मरन्ध्रे सहस्रारे ध्यात्वा चिरमनन्यधीः ।
उपचारैः समभ्यर्च्य मनसा कल्पितैः शुभैः ॥ —२५

पश्यन्नारायणं देवं संस्मरेदिन्दिरापतिम् ।
ब्रह्मविद्याप्रदाता यस्स एवाचार्य उच्यते ॥

समस्तन्याससहितां यन्त्रपूजापुरस्सराम् ।
भगवद्रश्मिविद्याभिः सहितां सर्वसिद्धिदाम् ॥

श्रीमदष्टाक्षरीं विद्यां शिष्याय प्रददाति यः ।
स एव भगवद्रूपी महानाचार्य उच्यते ॥

धर्मार्थकाममोक्षाणां स एवादिमकारणम् ।
तमेव ब्रह्मतादात्म्य सिद्धिमूलां विदुर्बुधाः ॥

बहुना किमिहोक्तेन साक्षान्नारायणोहरिः ।
आचार्याकृतिमान्नित्यं पूज्यो वन्द्यो दिने दिने ॥ –३०

आचार्यपादुकाविद्यां ब्रह्मविद्यां प्रजप्य च ।
भगवद्रश्मिविद्यानां क्रमसूक्तमथोजपेत् ॥

पञ्चधा वा त्रिधा द्वेधा चतुर्धा सकृदप्यथ ।
संस्मृत्य भगवत्सूक्तं जपेन्नारायणं सकृत् ॥

पश्चाद्बहिस्समागत्य त्यजेन्मूत्रमलादिकम् ।
वाससा शिर आवृत्य ष्ठीवनोच्छ्वासवर्जितः ॥

तृणैरास्तीर्यवसुधां मलं मूत्रमथत्यजेत् ।
उदङ्मुखोमलं मूत्रमहर्भागे परित्यजेत् ॥

ददिणाभिमुखोरात्रौ त्यजेन्मूत्रमलादिकम् ।
शुद्धां मृदं समादाय दद्यात्लिङ्गे मृदं सकृत् ॥ –३५

तिस्रो वामकरे दद्यात्पश्चापाने मृदः स्मृताः ।
दश वामकरे दद्यादुभयोः सप्तमृत्तिकाः ॥

पादपृष्ठे पादतले तिस्रस्तिस्रश्च मृत्तिकाः ।
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ॥

वनिनस्त्रिगुणं प्रोक्तं यतीनां तु चतुर्गुणम् ।
शौचाचारविहीनस्य निष्फलाः सकलाः क्रियाः ॥

शौचमित्थं द्विजः कृत्वा दन्तधावनमाचरेत् ।
प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे ॥

दन्तकाष्ठसमायोगो दहत्यासप्तमं कुलम् ।
तृणपर्णैस्सदाकुर्यादमामेकादशीं विना ॥ —४०

तयोरपि च कुर्वीत चूतपर्णैर्महीपते ।
जिह्वायाकर्षणंप्रोक्तं यतीनान्तुचतुर्गुणम् ॥

शौचाचारविहीनस्य निष्फलाः सकलाः क्रियाः ।
कृत्वा मुखे शुद्धिमतः परं ब्रह्म विचिन्तयेत् ॥

कृत्वाचार्यपदांभोजद्वयं मनसि संस्मरन् ।
स्नानं कुर्यान्महानद्यां तटाके वा ह्रदेऽपि च ॥

शरीरस्य च रन्ध्रेभ्यः स्रवत्येव मलं सदा ।
तस्मात्स्नानं प्रकर्तव्यं बाह्यान्तर्मलनाशनम् ॥

प्रातः प्रातस्तु यत्स्नानं सञ्जाते चारुणोदये ।
प्राजापत्यसमं प्राहुस्तन्महाघविघातनम् ॥ —४५

आचार्यचरणाम्भोज तीर्थमेव नदीजलम् ।
ध्यात्वा स्नानं प्रकुर्वीत सर्वपाप विशुद्धये ॥

प्राणानायम्य सङ्कल्प्य स्नानं कुर्याद्दिने दिने ।
केशवादि चतुर्विंशन्नामानि मनसा स्मरन् ॥

यः स्नात्यहरहो विप्रश्चतुर्विंशतिधा नृप ।
एकस्मिन् दिवसे वापि स्नानं कृत्वेत्थमादरात् ॥

महापातककोटिभ्यस्सद्य एव विमुच्यते ।
स्नात्वाथ वाससी शुद्धे परिधाय समाहितः ॥

सन्ध्याकर्म ततः कुर्यात्प्राङ्मुखोदङ्मुखोऽपिवा ।
उदयात्प्राक्तनी सन्ध्या घटिका त्रितयं विदुः ॥ –५०

अस्तगाद्भास्करादूर्ध्वं तथैव घटिकात्रयम् ।
सन्ध्याकर्मपरित्यागी सर्वकर्मबहिष्कृतः ॥

यद्यत्तु कुरुते कर्म न तस्य फलभाग्भवेत् ।
त्यक्त्वा सन्ध्याभिधं कर्म योऽन्यत्रकुरुते रतिम् ॥

स शूद्रवद्बहिष्कार्यस्सर्वस्माद्विप्रकर्मणः ।
प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि ॥

सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्कराम् ।
अर्धसंजातनक्षत्रमन्तरिक्षं यदाभवेत् ॥

सन्ध्याकालास्स विज्ञेयो दिवसस्य मुखं नृप ।
प्राणानायम्य सङ्कल्प्य सन्ध्याकर्म समारभेत् ॥ –५५

विधिनापि कृता संध्या कालातीताफलास्मृता ।
अयमेवहि दृष्टान्तो वन्ध्यास्त्रीसङ्गमो यथा ॥

मन्देहदेहनाशार्थमुदयास्तमयौ रवेः ।
गायत्रीमन्त्रतश्चार्घ्यं दत्तं येनाञ्जलित्रयम् ॥

काले पवित्रे किं न स्यात्तेन दत्तं जगत्त्रयम् ।
तेन वज्रोदकेनाशु मन्देहा नाम राक्षसाः ॥

सूर्यारयः प्रलीयन्ते शैला वज्रहता इव ।
सन्ध्याकर्म परित्यागी मन्देहो रक्षसो भवेत् ॥

असावित्यादिमन्त्रेण ततः कुर्यात् प्रदक्षिणम् ।
प्रदक्षिणीकृतानेन सप्तद्वीपवती मही ॥ —६०

तावत्प्रातर्जपंस्तिष्ठेद्यावदर्धोदयं रवेः ।
आसनस्थो जपेन्मौनात्प्रत्यगातारकोदयात् ॥

अधीत्य मध्यमां सन्ध्यां कुर्यादादित्यसन्मुखः ।
सविता भगवान् साक्षाद्ब्रह्मरूपी श्रियः पतिः ॥

आदित्यमण्डलान्तस्थो मूर्तित्रितयरूपभृत् ।
तन्मंडलगतं ध्यात्वा देवं नारायणं विभुम् ॥

यथा शक्त्या जपेन्नित्यं गायत्रीं वेदमातरम् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥

गायत्रीं प्रजपेन्नित्यं पातकौघैर्विमुच्यते ।
सहस्रशो जपेद्यस्तु गायत्रीं वेदमातरम् ॥ —६५

तं वसिष्ठांशसंभूतं प्राहुर्ब्रह्मर्षयोऽमलाः ।
जपेत्पञ्चशतं वापि चतुश्शतमथापिवा ॥

त्रिशतंवा जपन्नित्यमुत्तमो द्विज उच्यते ।
अष्टोत्तरशतं जप्त्वा ब्राह्मणः स्याद्दिने दिने ॥

अष्टाविंशतिधा जप्त्वा ब्राह्मण्यं नान्यथाभवेत् ।
अशक्तः प्रजपेन्नित्यं तिष्ठन्नासीन एव वा ॥

त्रिसन्ध्यमपि शुद्धात्मा सावित्रीं वेदमातरम् ।
उदिते तु सहस्रांशौ तन्मण्डलगतं विभुम् ॥

वेदाश्वरथमारूढं त्रयीमूर्तिं हिरण्मयम् ।
ध्यात्वा नारायणं देवं श्रिया सहितमच्युतम् ॥ —७०

कृताञ्जलिरुपासीत मैत्रसूक्तेन नित्यशः ।
दिशामपि नमस्कुर्याद्दिग्देवेभ्योप्यतःपरम् ॥

आत्मपादौ ततः स्पृष्ट्वा स्वात्मानं प्रणमेद्बुधः ।
पुनराचामशुद्धात्मा रविमण्डलमध्यगम् ॥

ध्यात्वा नारायणं देवं श्रिया सहितमेव च ।
श्रीमदष्टाक्षरीं विद्यां कृत्वा सिध्यर्थमादरात् ॥

वैष्णवीमथ गायत्रीं यथा शक्त्या प्रजप्य च ।
श्रीमदाष्टाक्षरीं विद्यां न्यासादिरहितामपि ॥

आदित्याभिमुखो नित्यमष्टोत्तरशतंजपेत् ।
अष्टाविंशतिधा वापि नोचेत्सिद्धिर्न जायते ॥ —७५

सूक्तेन पौरुषेणाथ स्तुत्वा नारायणं विभुम् ।
कृताञ्जलिपुटो भूत्वा सूक्तं नारायणं जपेत् ॥

प्राणानायम्य सङ्कल्प्य होमकर्म समारभेत् ।
गायत्र्यावाह्य तन्मध्ये यज्ञेशं श्रीपतिं विभुम् ॥

उपचारैस्समभ्यर्च्य हुत्वाद्वादशधा घृतम् ।
श्रीमदष्टाक्षरेणाथ गव्यमाज्यं महीपते ॥

अष्टाविंशतिधा हुत्वा श्रीमन्त्रेणाप्यतः परम् ।
हुत्वा द्वादशधा वह्नौ षड्वापि श्रीपतेरथ ॥

मनुना च यथाशक्त्या हुत्वा गव्याज्यमादरात् ।
ऋक्सामयजुषां पाठं ब्रह्मयज्ञार्थमाचरेत् ॥ —८०

देवानृषीनपि पितॄन् तर्पयेदुदकैः शुभैः ।
रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशि संध्ययोः ॥

श्रेयोर्थी स्वगृहे जातु न कुर्यात्तिलतर्पणम् ।
काम्यव्रतेषु जुहुयाद्रश्मिविद्याभिरेकधा ॥

वेदपारायणं कुर्याद्यथाशक्त्या दिने दिने ।
आचार्यचरणाम्भोजद्वयं ब्रह्मबिले शुभे ॥

कृत्वाञ्जलिपुटो नत्वा सम्यगासीन आसने ।
प्राणानायम्य सङ्कल्प्य समस्तन्यास संयुताम् ॥

श्रीमदष्टाक्षरीं विद्यां सहस्रं प्रजपेच्छुचिः ।
जपेत्पञ्चशतं वापि चतुःशतमथापि वा ॥ —८५

त्रिशतं वा जपेन्नित्यमष्टाधिकशतं तु वा ।
नारायणेन सूक्तेन स्तुत्वा देवं श्रियःपतिम् ॥

सहस्रार्णं महाविद्यां संस्मरेत्सकृदप्यथ ।
उपेयादथराजानं योगक्षेमार्थसिद्धये ॥

मध्याह्नकाले संप्राप्ते स्नात्वाचम्य ततः परम् ।
सन्ध्यां माध्याह्निकीं कुर्यादादित्याभिमुखः शुचिः ॥

जलेनोष्णेन वा स्नायादशक्तो रोगसंयुतः ।
प्रातर्मध्याह्नवेलायां स्नानाशक्तोऽपिसन्ततम् ॥

आर्द्रेण वाससादेहं परिमृज्यशुचिर्भवेत् ।
मध्याह्नेऽपि यथाशक्त्या गायत्रीं समुपास्य च ॥ —९०

शालग्रामशिलाचक्रे पूजयेदिन्दिरापतिम् ।
आचार्यपादुकायुग्मं यदि तिष्ठति मन्दिरे ॥

सर्वोपचारैः सम्पूज्य पश्चाच्छ्रीपतिमर्चयेत् ॥
पादुका सन्निधौ नित्यं किञ्चिदाचार्यदक्षिणाम् ॥

दत्वा सङ्कल्प्य वा चित्ते मासि मासि समर्पयेत् ।
वत्सरत्रितयेनैव पादुकार्चनतो गुरोः ॥

पश्यत्यवश्यं चक्षुर्भ्यां साक्षादेव श्रियःपतिम् ।
प्राप्नोति महतीं सिद्धिं मन्त्राणां नात्र संशयः ॥

सालग्रामशिलाचक्रे लक्ष्मीनारायणौ यजेत् ।
लिङ्गे वा पूजयेन्नित्यं पार्वतीपरमेश्वरौ ॥ —९५

वैश्वदेवं ततः कृत्वा मनुना च रमापतेः ।
हुत्वा द्वादशधा वह्नावन्नं गव्यघृतप्लुतम् ॥

दत्वा भूतबलिं पश्चादन्नं सूपादिसंयुतम् ।
आचार्यं भोजयेत्तस्य पत्नीमपि सुतामपि ॥

आमं सूपादिसहितमाचार्यायाथवार्पयेत् ।
यद्वा वर्षाशनमितं धनमाचार्यपायोः ॥

अर्पयेत्पर्वकालेषु यदीच्छेत्सिद्धिमात्मनः ।
तथाप्यहरहः किञ्चिद्देयमाचार्यपादयोः ॥

संकल्प्यमनसावापि मासिमासि समर्पयेत् ।
रुद्रेण भुक्तं निर्माल्यमभोज्यमितिकथ्यते ॥ —१००

विष्णु भुक्तं निवेद्यं स्यादभोज्यं यद्यपि स्मृतम् ।
आचार्यभुक्त शिष्टं स्यादमृतं पापनाशनम् ॥

निर्माल्यं च निवेद्यं च हविश्शेषेण संयुतम् ।
पवित्रं कथ्यते वेदे नोचेदशुचि तत्स्मृतम् ॥

अस्नाताशी मलंभुङ्क्तेऽजपीपूयशशोणितम् ।
अहुताशी कृमीन् भुङ्क्तेऽदत्वा विषभुग्भवेत् ॥

दूराध्वानं पथिश्रान्तं वैश्वदेव्यन्त आगतम् ।
अतिथिं तं विजानीयाद्भोजयेत्तं प्रयत्नतः ॥

आचार्यः स्वपिता माता पत्नी पुत्रोऽतिथिस्तथा ।
षडेतेऽहरहर्भोज्या अन्नैर्बहुविधैरपि ॥ —१०५

अवश्यं नित्यमाचार्यं भोजनाच्छादनादिभिः ।
अपरामृश्य योभुङ्क्ते स भुङ्क्ते नरकं ध्रुवम् ॥

शाकं सूपं घृतं वापि स्वाचार्याय दिने दिने ।
अपरामृश्य योभुङ्क्ते स भुङ्क्ते किल्बिषं ध्रुवम् ॥

पितरं मातरं पत्नीं तथा पुत्रातिथीनपि ।
भोजयेदशनाद्यैश्च चोष्यलेह्यादिभिस्तथा ॥

पंचार्द्रभोजनं कुर्यान्मनसाश्रीपतिं स्मरन् ।
भुक्त्वा यथेष्टं हस्तौ च प्रक्षाळ्य चरणौ मुखम् ॥

देवतास्मरणं कुर्याद्भोजनान्ते समाहितः ।
संसारयोगक्षेमायाथ गच्छेद्बहिः पुमान् ॥ —११०

अथसायन्तनीं सध्यां सायंकाले समारभेत् ।
कृत्वा सायन्तनं होमं सार्धाङ्गं श्रीपतेर्मनुम् ॥

अष्टादशार्णं प्रजपेच्छतमष्टोत्तरं बुधः ।
चतुर्व्यूहात्मकस्याथ मन्त्रमानुष्टुभं परम् ॥

यथा शक्त्या प्रजप्तत्वाथ भुञ्जीयाद्बन्धुभिस्सह ।
ताम्बूलामोदिवदनो गुरुपादाम्बुजद्वयम् ॥

कृताञ्जलि पुटो नत्वा नर्मदां मनसास्मरन् ।
स्मृत्वा श्रियःपतिं देवमाञ्जनेयं ततः परम् ॥

शयीत शुभशय्यायां ततोयामद्वयं स्वपेत् ।
कुर्वन्नित्यमहोरात्रं कर्म वैदिकमादरात् ॥

देहान्ते समवाप्नोति परंतद्ब्रह्मणः पदम् ॥ –११५

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये
वेदार्थसंग्रहे सप्तमोऽध्यायः ॥



## ॥ अथाष्टमोऽध्यायः ॥



श्री भगवानुवाच –

भूयोऽपिसंप्रवक्ष्यामि श्रौताचारं यशस्करम् ।
यत्कृत्वा मनुजो लोके श्रेयोमहदवाप्नुयात् ॥

निषेकादिश्मशानान्त द्विजानां वैदिकी क्रिया ।
वैदिकाचारहीनो यो जीवन्नेव सपञ्चमः ॥

जाते पुत्रे द्विजस्यादौ सचेलं स्नानमुच्यते ।
हिरण्याभ्युदयश्राद्धं कुर्यादाचम्ययत्नतः ॥

गोदानानि हिरण्यञ्च दद्यात्पक्वफलानि च ।
ताम्बूलगन्धमाल्यानि भूषणान्यपि सुव्रतः ॥

अपवित्रो दशाहं स्यात्त्यजेत्कर्माथ वैदिकम् ।
जातके मृतकेच्चापि सन्ध्याकर्म न सन्त्यजेत् ॥ —५

मनसोच्चारयेम्मन्त्रान् प्राणायाममृतेद्विजः ।
एकादशाह्निकुर्वीत नामकर्म ततः परम् ॥

तृतीयेऽब्दे ततश्चौळं कुर्याद्ब्राह्मणभोजनम् ।
गर्भाष्टमेऽष्टमाब्दे वा ब्राह्मणस्योपनायनम् ॥

एकादशाब्दे राज्ञां स्याद्विशां द्वादशवत्सरे ।
ब्रह्मचारी तदारभ्य वेदाध्ययनसिद्धये ॥

गत्वा गुरुकुलं नित्यं वेदाध्ययनमाचरेत् ।
आज्ञां नोलङ्घयेत्तस्य समित्पुष्पकुशादिकान् ॥

आहरेत्सततं भिक्षाचर्यां कुर्यान्महामतिः ।
कृत्वा भिक्षाटनं नित्यं गुरवे विनिवेदयेत् ॥ —१०

तस्याज्ञयैव भुञ्जीयात्तच्छिष्टान्नं समाहितः ।
तत्पशून् पालयेन्नित्यं तद्गृहं मार्जयेत्सदा ॥

वस्त्र प्रक्षाळनं कुर्यात्पादसंवाहनादिकम्
वेदानधीत्यवेदौ वा वेदं वा शक्तितोद्विजः ॥

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां सुप्तां निष्कान्तां रुदतीमपि ॥

वाचा दत्तामथान्यस्मै मुण्डां रोगिकुलोद्भवाम् ।
रक्तकेशश्मश्रुमुखीं पिङ्गाक्षीं विकृतस्तनीम् ॥

लम्बोदरीं दीर्घगलां व्याधि वन्ध्यात्वसंयुताम् ।
वर्जयेद्वरणेकन्या एता राजन् महामते ॥ —१५

अरोगिणीं भ्रातृमतीं सुन्दरीं लक्षणान्विताम् ।
श्रोत्रियान्वयसंभूतां गृहार्चनरतां सदा ॥

नित्यं गृही सुखं भुङ्क्ते स्त्रीलक्षणवती यदि ।
गृहसौख्यसमृद्ध्यर्थं लक्षण्यां स्त्रियमुद्वहेत् ॥

अनुकूलं कलत्रं चेत्त्रिदिवे किं सुखं नृप ।
प्रतिकूलं कलत्रं चेत्किं दुःखं नरके भवेत् ॥

वश्याः सुता वृत्तकरी च विद्या
भार्यानुकूला च पतिव्रता च ॥
धर्मेरतिस्सज्जनसङ्गतिश्च
दुःखस्यमूलोद्धरणानि पञ्च ॥

षोडशर्तु निशाःस्त्रीणां तस्मिन् युग्मासु संविशेत् ।
चतस्रो रात्रयस्त्याज्या विषमासु न संविशेत् ॥ –२०

एकादशगतेचन्द्रे शुभताराबलान्विते ।
एकादशी पर्ववर्जं स्त्रीषु सङ्गममाचरेत् ॥

न दिवासङ्गमं कुर्यात्तद्योनिं न निरीक्षयेत् ।
अन्नृतं मध्यगन्धश्च दिवामैथुनमेव च ॥

पुनाति वृषलस्यान्नं सायं सन्ध्या बहिष्कृता ।
देवाश्च पितरो नित्यं गृहस्थमृष्टयोऽपि च ॥
हव्यार्थमाश्रयन्तीह कृमि कीटादयोऽपि च ॥

सर्वाश्रमवरिष्ठोऽयं गृहस्थाश्रमउच्यते ।
न्यायार्जितधनस्तत्वज्ञाननिष्ठोऽतिथिप्रियः ॥

श्राद्धकृत् सत्यवादीच गृहस्थो मुक्त उच्यते ।
वेदपारायणं कुर्वन् वेदस्यार्थं विचारयन् ॥ –२५

विप्रजन्मशतेनासौ ब्रह्मलोके महीयते ।
प्रतिजन्मशरीरान्ते भुङ्क्तेऽक्षयसुखं दिवि ॥

कल्पान्तं सत्यलोकेऽपि भुक्त्वाभोगान् मनोहरान् ।
भूतलं पुनरागत्य श्रोत्रियान्वयसंभवः ॥

सदाचाररतो नित्यं वेदपारायणे रतः ।
कलेबरान्ते कैलासं प्राप्यरुद्रसमो भवेत् ॥

भुक्त्वाऽक्षयं महत्सौख्यं कल्पसाहस्रमादरात् ।
पुनर्भूतलमासाद्य वेदवित्कुलसंभवः ॥
आचार्यचरणाम्भोजशुश्रूषणरतःशुचिः ॥

ब्रह्मविद्यां च भगवद्रश्मिविद्यासमन्विताम् ।
श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ॥ —३०

उपास्ते तच्छरीरांते क्रतुभिः पूर्णदक्षिणैः ।
महेन्द्रलोकेमोदन्ते कल्पान्तं दिव्यभोगिनः ॥

पुनर्भूतलमासाद्य मानुषीं योनिमागताः ।
कृत्वा सुकृतकर्माणि पुनःस्वर्गसुखान्विताः ॥

भूयोऽपि मानुषीं योनिं प्राप्नुवन्ति महीपते ।
पुनर्जन्म पुनर्मृत्युः पुनर्दुःखं पुनःसुखम् ॥

कलेबरेऽस्मिन् मर्त्यानां सुखमण्वपि नास्ति हि ।
पापेन नरकेदुःखं पुण्येन त्रिदिवे सुखम् ॥

क्षीणे पुण्ये स्वर्गलोके पातयन्त्यपि देवताः ।
स्वर्गेऽपि दुःखसंमिश्रं विषयुक्तान्नवत्सुखम् ॥ —३५

यत्सौख्यं परमे धाम्नि तदनन्तं हि शाश्वतम् ।
ब्रह्मानन्दाभिधं प्राहुर्ब्रह्मतत्त्वविदोऽमलाः ॥

दिने दिने सदाचार्यपादाब्जद्वयसेवया ।
ब्रह्मविद्यानुसन्धानाच्छ्रीमदष्टाक्षरीजपात् ॥

ब्रह्मानन्दसुखं प्राप्य मोदते परमे पदे ।
आचार्य चरणाम्भोजदक्षिणारहितं दिनम् ॥

वन्ध्यं दिनमितिप्राहुर्ब्रह्मतत्त्वविदोऽमलाः ।
यद्येकजन्मना ब्रह्मतादात्म्यपदमिच्छति ॥

कृत्वाचार्यस्य शुश्रूषां प्राणैरर्थैर्धियापि च ।
ब्रह्मविद्यासमायुक्तां रश्मिविद्यासमन्विताम् ॥ —४०

श्रीमदष्टाक्षर्युपास्तिं सरहस्यां समाचरेत् ।
गृहस्थ एव सर्वेषामाश्रमाणां वरःस्मृतः ॥

नान्यमाश्रममासाद्य ब्रह्मानन्दसुखीभवेत् ।
गृहस्थाश्रममासाद्य सदाचारेण सन्ततम् ॥

देवतानामृषीणाञ्च पितॄणां तृप्तिमाचरन् ।
देवर्षिपितृसन्तोषात्तत्प्रसादाप्तवैभवः ॥

आचार्यतोषणात्साक्षान्नारायणकृपान्वितः ।
मोदते परमे धाम्नि दशापूर्वैर्दशापरैः ॥

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतञ्जलंपिबेत् ।
सत्यपूतं वदेद्वाक्यं न्यायपूतंधनं वहेत् ॥ —४५

आपत्काले चतुर्वर्णभिक्षाभावे तु साधकः ।
अन्त्यजानपिभिक्षित्वा दद्यादाचार्यदक्षिणाम् ॥

अश्वमेधादियागेषु कोटीशतसहस्रके ।
सुवर्णदक्षिणां दत्वा यागस्य फलमश्नुते ॥

अत्यल्पदक्षिणो यागो यजमानं विनाशयेत् ।
ब्रह्मणे दक्षिणा देया तस्माद्यागसमृद्धये ॥

वर्षाशनमितं द्रव्यमथवाचार्यपादयोः ।
दत्वाश्वमेधसाहस्र दक्षिणाफलमश्नुते ॥

सत्येन वायुरावाति सत्येन दिवि भास्करः ।
रोचन्ते चन्द्रभौमाद्या ग्रहा अपि दिविस्थिताः ॥ —५०

सत्येनैव महेन्द्रोऽपि त्रैलोक्यैश्वर्यवानभूत् ।
सत्येन लोकाञ्जयति मुक्तिः सत्येप्रतिष्ठिता ॥

श्रुतिः सनातनी सत्यं भगवद्वदनोद्भवा ।
योगिनः सनकाद्याश्च वसिष्ठाद्यामहर्षयः ॥

देवर्षयो नारदाद्याः सिद्धाश्च कपिलादयः ।
महेन्द्राद्याश्च दिक्पाला पूर्वभूपतयोऽपि च ॥

सत्येन परमामृद्धिं गताः परमधार्मिकाः ।
भगवद्वचनं सत्यं सत्यं वेदोदितं तथा ॥

ब्रह्मर्षीणां वचःसत्यं सत्यं देववचोऽपि च ।
ब्रह्मतत्त्वविदो नित्यं वेदवेदान्तपारगाः ॥ —५५

गृहवासिभिरभ्यर्च्या ब्रह्मदर्शनसिद्धये ।
एवं नारायणीयाख्यं सत्यमेवोच्यते मया ॥

वेदार्थसङ्ग्रहं तन्त्रं वेदवेदान्तसम्मितम् ।
अहं दाशरथिर्भूत्वा रुद्राय परिपृच्छते ॥

वक्तास्म्येतन्महच्छास्त्रं ब्रह्मर्षीणाञ्चसन्निधौ ।
तन्त्रं दाशरथीयाख्यं तदारभ्य महर्षयः ॥

वेदार्थसङ्ग्रहं नाम्ना प्राहुरेतन्महीपते ।
अस्मिन् दाशरथीयाख्ये तन्त्रे यद्यदुदीरितम् ॥

तत्सर्वं वेदवद्ग्राह्यमाचार्यवदनाम्बुजात् ।
तस्माद्गृहस्थः सततं देवानां तृप्तिमाचरन् ॥ —६०

वैदिकाचारसहितो वेदाध्ययनतत्परः ।
ब्रह्मविद्यानुसंधाता श्रीमदष्टाक्षरीरतः ॥

ब्रह्मापरोक्षं चक्षुर्भ्यां दृष्ट्वा नारायणाभिधम् ।
नारायणमयो भूत्वा मोदते परमेपदे ॥

रविसङ्क्रमणे पुण्ये रवीन्दुग्रहणादिषु ।
प्राप्तेष्वलभ्य योगेषु नवरात्रव्रतेऽपि च ॥

आचार्यचरणाम्भोजद्वितये बहुळंधनम् ।
दातव्यं च महीदानं गोदानञ्च विशेषतः ॥

सालग्रामशिलादानं ब्रह्मदर्शनसिद्धये ।
आचार्यकर्णयोर्देयमवश्यं कुण्डलद्वयम् ॥ —६५

वित्तशाठ्यं परित्यज्य नवरात्रव्रतं शुभम् ।
वासरे भार्गवेऽवश्यं कर्तव्यं श्रीसमृद्धये ॥

सुवासिन्यस्समभ्यर्च्या भूषणाच्छादनाशनैः ।
आचार्यपत्नीं सततं बहुलङ्करणादिभिः ॥

विशेषेण समभ्यर्च्याः समस्तेषु व्रतेष्वपि ।
महालक्ष्मीधियाशिष्यैश्चतुर्वर्गफलाप्तये ॥

पर्वकालेषु दातव्यं पात्रेभ्योऽपिधनादिकम् ।
आचार्य एव पात्राणामुत्तमं पात्रमुच्यते ॥

वेदाध्ययनवान्नित्यं सदाचारसमन्वितः ।
पात्रमित्युच्यते वेदे शास्त्रेषु च महीपते ॥ —७०

अपात्रमुच्यते वेदबाह्य एव द्विजाधमाः ।
षण्मासे वत्सरे वापि देहसंशुद्धिसिद्धये ॥

आचार्यमन्दिरे भुक्तशिष्टं भोज्यं महीपते ।
आचार्यदक्षिणाद्रव्यं याचयेन्नापि तत्कुले ॥

आचार्यचरणाम्भोजं यस्तु संपाद्य यत्नतः ।
दत्वा यागधनं साक्षात्तद्रूपं ब्रह्म पश्यति ॥

कुलानामपि साहस्रं तारयेन्नरकस्थितम् ।
पठनं धर्मशास्त्राणामितिहास पुराणयोः ॥

आचार्यवदनेनैव श्रोतव्यं प्रत्यहं नृभिः ।
आचार्यदक्षिणाहीनं वन्ध्यमित्युच्यते दिनम् ॥ —७५

यत्किञ्चिदपि वा देयं नित्यमाचार्यपादयोः ॥
समस्तविद्यासिद्ध्यर्थं ब्रह्मज्ञानफलाप्तये ॥

पुस्तकं धर्मशास्त्राणामितिहासस्य पुस्तकम् ।
पुराणपुस्तकं वापि दद्यान्मुक्तिफलाप्तये ॥

दानमावश्यकं देयं धनं सम्पाद्य यत्नतः ।
अवियोगवतीमृद्धिं पत्नी पुत्रादिभिस्सदा ॥

भार्गवे वासरे कार्यं व्रतं साधकपुङ्गवैः ॥
पञ्चयज्ञाः सदाकार्या ब्राह्मणैः शंसितव्रतैः ॥

देवयज्ञः पितृयज्ञो भूतयज्ञस्ततः परम् ।
ततोमनुष्ययज्ञः स्याद्ब्रह्मयज्ञस्ततःपरम् ॥ —८०

समिद्भिरपिहोमोऽयं सायं प्रातर्दिने दिने ।
देवयज्ञ इति प्रोक्तस्स्वर्गसाधनईरितः ॥

तर्पयेद्यस्तिलैर्नित्यं पितॄनथ पितामहान् ।
पितृयज्ञ इति प्रोक्तः कालबाधानिवारकः ॥

भूतेभ्यो यो बलिर्दत्तो भूतयज्ञ इहोच्यते ।
यद्विजेभ्योन्नदानंस्यान्नर यज्ञस्स उच्यते ॥

ऋचमेकां यजुर्वापि सामैकमथवा नृप ।
योधीते ब्रह्मयज्ञोऽयं स उक्तो ब्रह्मवित्तमैः ॥

श्रीमदष्टाक्षरीविद्या जपहोमसमृद्धये ।
आचार्यदक्षिणां किंचिद्यथाशक्त्या समर्पयेत् ॥ —८५

यागोऽयं वैष्णवो नाम प्रत्यहं कार्य आदरात् ।
सद्गुणैश्वर्यसम्पत्तिष्षड्भिर्यागैः प्रजायते ॥

षड्यागकर्ता सततं भगवन्मयतां व्रजेत् ।
देवर्षिपितृप्रीत्यर्थं पञ्च यज्ञाः प्रकीर्तिताः ॥

कर्तव्यो वैष्णवो यागो मोक्षलक्ष्मीसमृद्धये ।
मध्याह्नकाले सम्प्राप्ते दत्वा भूतबलिं भुवि ॥

ततो गोदोहमात्रं वै कालं तिष्ठेद्गृहाङ्गणे ।
अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना ॥

तदासनप्रदानेन पादप्रक्षाळनेन च ।
श्रद्धयान्नप्रदानेन प्रियप्रश्नोत्तरेण च ॥ —१०

गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही ।
अज्ञातकुलनामा च दूरदेशादुपागतः ॥

अतिथिर्नामविज्ञेयो नैकग्रामस्थितोद्विजः ।
स्वाध्यायं गोत्रचरणं पृष्ट्वा च तत्कुलं तथा ॥

हिरण्यगर्भबुद्ध्या तं मन्येतातिथि मागतम् ।
अतिथीनां सहस्राणि यस्य भुक्तानि मन्दिरे ॥

आचार्यं भोजयेत्त्वेकमवश्यं तत्फलं भवेत् ।
आचार्यचरणाम्भोजद्वयप्रक्षालितं जलम् ॥

पीत्वान्तः शुद्धिमाप्नोति बहिः शिरसि धारणात् ।
समस्ततीर्थस्नानस्य फलमिच्छन् महीपते ॥ —१५

आचार्यचरणाम्भोज प्रक्षालितजलंपिबेत् ।
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥

तयोरन्नमदत्वात्वभुक्त्वा चान्द्रायणं चरेत् ।
यतिहस्ते जलंदद्यात् भैक्षं दद्यादनिर्जलम् ॥

तद्भैक्षं मेरुणातुल्यं तज्जलं सागरोपमम् ।
आचार्यो विमुखोऽगृहं स्तद्गृहात्प्रति निवर्तते ॥

तेनैव यान्ति त्वरितं देवताः पितृभिः सह ।
आचार्यपत्निपुत्राणामतिथीनां च पोषणम् ॥

प्राप्तःप्रातस्समुत्थाय चिन्तनीयं विचक्षणैः ।
प्रतिज्ञातं मनोवाग्भ्यां दरिद्रायकुटुम्बिने ॥ —१००

ऋणादप्यधिकं तत्स्यात्परलोकभयङ्करम् ।
शीघ्रमेव प्रदातव्यं तद्दणं स्वर्गसौख्यदम् ॥

सङ्कल्पिता सदाचार्यदक्षिणा निष्कसम्मिता ।
अपिमेरु समाज्ञेया मासादूर्ध्वं ऋणंमहत् ॥

सङ्कल्पदिनमारभ्य तद्द्रव्यं वृद्धिसंयुतम् ।
मासाभ्यन्तरे तद्देयं द्विमासाभ्यन्तरेऽपि वा ॥

श्रोत्रियाणां सहस्रेभ्यो दत्वा कोटिशतं धनम् ।
यत्फलं समवाप्नोति सदाचार्यस्य पादयोः ॥

निष्कमेकं प्रदत्वापि ततोऽधिकफलं लभेत् ।
त्रीण्याहुश्चापि दानानि कन्या पृथ्वी सरस्वती ॥ —१०५

कन्यां सालङ्कृतां दत्वा दरिद्राय महीपते ।
ब्रह्मलोकं व्रजत्यन्ते पितरस्स्वर्गभागिनः ॥

कन्याद्रव्यं द्विजातीनां परत्र भरण प्रदम् ।
विप्रं विवाहयित्वैकं दरिद्रं वेदपारगम् ॥

अवश्यमेतद्देहान्ते नरकस्थान् पितॄनपि ।
उद्धृत्य पुष्पकं दिव्यमारुह्य पितृभिःसह ॥

अवश्यं भगवद्धाम प्राप्नोत्यत्र न संशयः ।
गण्यन्ते पांसवो भूमेर्गण्यन्ते दिवि तारकाः ॥

न गण्यते विधात्रापि ब्रह्मसंस्थापने फलम् ।
विप्राय वेदविदुषे दरिद्राय महीपते ॥ —११०

विवाहाय धनं दत्वा वंशवृद्धिमिहाक्षयाम् ।
आचन्द्रतारकं प्राप्य ब्रह्मलोके वसत्यसौ ॥

महीं सस्यसमायुक्तां बहुदक्षिणयान्विताम् ।
श्रोत्रियाय दरिद्राय चतुर्वृषयुतां ददत् ॥

भगवत्सन्निधावन्ते पितृभिस्सह मोदते ।
पक्वसस्ययुतां पृथ्वीं चतुःपुंगवसंयुताम् ॥

आचार्यचरणाम्भोजद्वये दत्वा सदक्षिणाम् ।
पितॄणामपि साहस्रं निमग्नं नरकार्णवे ॥

उद्धृत्य पुष्पकं दिव्यमारुह्य पितृभिस्सह ।
भगवत्सदृशाकारो मोदते भगवत्पदे ॥ —११५

ब्राह्मणेभ्यो वेदविद्यां प्रदत्वा सरहस्यकाम् ।
ब्रह्मणः पूज्यतां प्राप्य ब्रह्मणासह मोदते ॥

इतिहासपुराणानामथ रामायणस्य वा ।
प्रदत्वा पुस्तकं सर्वविद्यानां पारगोभवेत् ॥

एतच्छरीरपातान्ते सत्यलोकमवाप्नुयात् ।
सालग्राम शिलादानमतीव च महत्तरम् ।

शुद्धचक्र समायुक्तां वज्रकीटां विनिर्मिताम् ।
सालग्रामशिलामेकामपि दक्षिणयान्विताम् ॥

अलङ्कृत्य प्रदत्वान्ते भगवत्सन्निधि व्रजेत् ।
ब्रह्माण्डकोटिदानेन यत्फलं लभते नरः ॥ —१२०

सालग्रामशिलादानात्तत्फलं समवाप्नुयात् ।
अन्नं नित्यं प्रदातव्यं ब्राह्मणेभ्यो विशेषतः ॥

अन्नाद्द्विगुणमामंस्याद्वैश्वदेवादिकं यतः ।
पयस्विनीं सवत्सां गां कांस्यदोहसमन्विताम् ॥

सुवर्णखुरशृङ्गाग्रां माल्यस्वर्णयुता तु वा ।
अलङ्कृत्य दरिद्राय यो ददाति कुटुम्बिने ॥

गोलोकं समवाप्नोति दिव्यभोगसमन्वितम् ।
यत्क्षीरवहानद्यो येऽत्र पायसकर्दमाः ॥

भूरुहाः पारिजाताद्या यत्र यत्र वसत्यसौ ।
आचार्याय विशेषेण सवत्सां गां पयस्विनीम् ॥ —१२५

एकधा वा द्विधा त्रेधा बहुदक्षिणयान्विताम् ।
समर्प्य भगवद्धाम्नि पितृभिस्सह मोदते ॥

यस्याः क्षीरं दधि घृतं पिबेदाचार्य आदरात् ।
तद्दाता पितृसाहस्र सहितो भगवत्पदे ॥

मोदते दिव्यभोगाढ्यो भगवत्सदृशाकृतिः ।
गवां विक्रयकृद्विप्रो गृहीतानां महीपतेः ॥

पितृभिस्सह कल्पान्तं नरकेषु निमज्जति ।
अलङ्कारेषु सर्वेषु पद्मरागसमन्वितम् ॥

सन्तप्तहेमरचितं कुण्डलद्वितयं शुभम् ।
दिव्यालङ्करणं प्रोक्तं तद्दत्वाचार्यकर्णयोः ॥ —१३०

तुलापुरुषदानादि महादानफलंलभेत् ।
भगवत्सदृशाकारो वैकुण्ठे वसति ध्रुवम् ॥

मोदतेशक्रनगरे सूक्ष्मवस्त्र प्रदायकः ।
अश्वदाता कुबेरेण साम्यं प्राप्नोति तत्पदे ॥

कैलासे गजदो दिव्यभोगभाग्भवतिध्रुवम् ।
आन्दोलिकां प्रदद्याद्य आचार्याय विशेषतः ॥

तज्जीवनधनोपेतामथक्षेत्रयुतां तु वा ।
गरुडध्वजमारुह्य विमानं दिव्यभोगयुक् ॥

भगवत्सन्निधावन्ते भृत्यानामग्रगण्यताम् ।
प्राप्नोति पितृभिः साकं नारायणसमाकृतिः ॥ —१३५

आचार्याय विशेषेण यो दद्याच्छिबिकां शुभाम् ।
नित्यं सम्पूजितो ब्रह्मपदे स रमते ध्रुवम् ॥

शुद्धं सुवर्णरत्नानि वासोऽलङ्करणादिकम् ।
ब्राह्मणेभ्यः समर्प्याथ स्वाचार्यायविशेषतः ॥

पितृभिस्सह देहान्ते सत्यलोके वसत्यसौ ।
शाकसूपघृतादीनि यो दद्याद्गुरवेऽन्वहम् ॥

पिबन्नमृतमाप्नोति देहान्ते स्वर्गमक्षयम् ।
अन्नं निवेदितं विष्णोर्हविश्शेषेण संयुतम् ॥

आचार्यभुक्तशेषान्नसहितं मासिमास्यपि ।
भुक्त्वा मासकृतैः पापैस्तत्क्षणादेवमुच्यते ॥ —१४०

अनिन्द्यं भक्षयेदन्नं वाग्यतोऽन्नमकुत्सयन् ।
पञ्चग्रासं महामौनं प्राणाद्याप्यायनं यतः ॥

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं दिवाकरम् ।
नोपरक्तं न वारिस्थं न नग्नां च परस्त्रियम् ॥

कदाचिदपि नोतिष्ठेदाचार्येणसहासने ।
नोच्चासने च निवसेन्न शय्यायां गुरोः स्वपेत् ॥

नाचार्यपादुकायुग्ममारोहेदपिचक्वचित् ।
दिवा पादुकामारुह्य न चरेद् ग्राममध्यमे ॥

पर्वस्वभिगमः स्त्रीषु महा नरकदुःखदः ।
दिवापापप्रदः पुंसां तद्योनिं न निरीक्षयेत् ॥ —१४५

दिनान्तसन्ध्यां सूर्येण पूर्वामृक्षैः समन्विताम् ।
उपतिष्ठेद्यथान्यायं सम्यगाचम्य पार्थिव ॥

सर्वकालमुपस्थानं सन्ध्ययोः पृथिवीपते ।
अन्यत्र सूतकाशौचविभ्रामातुरभीतितः ॥

सूर्येणाभ्युदितो यस्तु त्यक्तः सूर्येण च स्वपन् ।
प्रायश्चित्तीभवेद्भूमावपि विप्रोत्तमो नृप ॥

तस्मादनुदिते सूर्ये समुत्थाय महीपते ।
उपतिष्ठेन्नरः सन्ध्यामस्वपंश्च दिनान्त्यजाम् ॥

उपतिष्ठन्ति ये सन्ध्यां न पूर्वां न च पश्चिमाम् ।
भजन्तिते दुरात्मानस्तामिस्रं नरकं ध्रुवम् ॥ —१५०

इत्थं गृहाश्रमीभूत्वैकेनैव हि जन्मना ।
अवश्यं मुक्तिमाप्नोति दशपूर्वैर्दशापरैः ॥

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ॥

अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः ।
अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि क्वचित् ॥

ब्रह्मचारी गृहस्थोऽपि वानप्रस्थोऽथभिक्षुकः ।
चत्वार आश्रमा एते द्विजानामवनीपते ॥

वानप्रस्थाश्रमेबुद्धिर्जाताचेद्गृहमेधिनः ।
पुत्रेषु भारं निक्षिप्य कलत्रसहितोऽपि वा ॥ —१५५

तत्राप्याचार्य शुश्रूषां कुर्वन्नेव जितेन्द्रियः ।
हुत्वा सायं तथा प्रातः कृत्वा चान्द्रायणादिकम् ॥

जीर्णपर्णाशनोवापि फलमूलाशनोऽपि वा ।
देवतानामृषीणाञ्च पितॄणां तृप्तिमाचरन् ॥

वेदपारायणं कुर्वञ्छ्रीमदष्टाक्षरीं जपन् ।
स्मरन्नारायणं देवं पदं विष्णोरवाप्नुयात् ॥

जायते यदिवैराग्यं प्रव्रजेदथ पण्डितः ।
विशेषेण सदाचार्य शुश्रूषामेवसन्ततम् ॥

कुर्वन्नैकान्नमश्नीयात् प्रणवाभ्यासतत्परः ।
विधूमेसन्नमुसले व्यङ्गारभुक्तवर्जिते ॥ —१६०

पञ्चागारं चरेद्भैक्ष्यं सप्तागारमथापि वा ।
सदा नारायणे चित्तं कृत्वाचार्यस्यवन्दनम् ॥

अहोरात्रं सदाचार्यशुश्रूषानिरतो यतिः ।
श्रीमदष्टाक्षरीं विद्यामवश्यं प्रजपञ्छुचिः ॥

नित्यं त्रिषवणस्नायी निःस्पृहो विजितेन्द्रियः ।
एकवस्त्रधरो दंडकमण्डलुधरस्तथा ॥

काञ्चनं रजतं लोहमपि नेक्षेतकुत्रचित् ।
अधोमुखस्सदास्त्रीषु वेदान्तश्रवणेरतः ॥

सदोपनिषदावृत्तिं कुर्वन्सिद्धिमथाप्नुयात् ।
आचार्य एव सर्वेषां गतिर्नान्यो विधीयते ॥ —१६५

धाता विधाता ब्रह्मापि भगवाञ्छङ्करोऽपि च ।
रविःसोमो महेन्द्रश्च पितामातागुरुःसखा ॥

आचार्य एव संसारे तरिस्तुमिहेच्छताम् ।
आचार्य चरणांम्भोज द्वयमेव सतां गतिः ॥

इदमुक्तं मया वेदोदितं कर्म शुभप्रदम् ।
अतः परं महीपाल किं भूयः श्रोतुमिच्छसि ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये
वेदार्थसंग्रहे अष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः ॥

**राजोवाच** –

भगवन् देवदेवेश नारायण जगत्पते ।
वेदोदितः सदाचारः श्रुतस्त्वमुखाम्बुजात् ॥

ब्रह्मापरोक्षविज्ञान सिध्द्यर्थं सततं नृभिः ॥
ब्राह्मं समयमारभ्य किं वा कर्तव्यमादरात् ॥

एकेन जन्मनैवेह कथं मुक्तिर्नृणांभवेत् ।
रश्मिमाला प्रजप्येति त्वयोक्तं भगवन्मम ॥

भगवद्रश्मिसूक्तं मे वद देवकृपानिधे ।

**श्री भगवानुवाच** –

शृणु राजन् प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥

श्रवणादपि यस्याशु पातकौघो विनश्यति ।
उत्थाय समये ब्राह्मे सावधानमना द्विजः ॥ —५

आचार्यपादुकाविद्यां जपेदादौ दिने दिने ।
प्रणवं चित्कलाबीजमुच्चार्यादौ समाहितः ॥

बिन्दुहीनं श्रियोबीजं भगवच्छब्दमप्यथ ।
रूपाचार्यपदं पश्चाच्छ्रीपूर्वाचार्यनाम च ॥

"श्रीपादुकां पूजयामी" त्यष्टाक्षरमतः परम् ।
आचार्यपादुकाविद्या गुप्तागुप्ततमा शुभा ॥

मयेरिता महाराज महासिद्धिप्रदायिनी ।
महापातकसंहर्त्री विद्यानां सिद्धिदायिनी ॥

आचार्यपादुकाविद्या मुनिरस्म्यहमेव हि ।
छन्दो गायत्रमित्युक्तमाचार्यो भगवन्मयः ॥ —१०

देवता सद्गुरुः स्वामी सर्वज्ञः करुणानिधिः ।
आचार्यकरुणासिध्द्यै विनियोग उदाहृतः ॥

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं सकलदेवतारूपिणम् ।
समस्तमनुसिद्धिदं सकलतेजसामालयं
भजे शिरसि हंसकं तदभिधानपूर्वं गुरुम् ॥

ब्रह्मरन्ध्रे सहस्रारे पूर्णचन्द्रायुतप्रभम् ।
करुणापूर्णनेत्रान्तं प्रसन्नमुखपङ्कजम् ॥

वराभयकरं शुक्लगन्धमाल्यादिभूषितम् ।
मुक्तावस्त्रपरीधानं दिव्यभूषणभूषितम् ॥

स्वशक्तिसहितं वीरासनासीनं कृपानिधिम् ।
दातारं सर्वविद्यानां शरणागतवत्सलम् ॥ —१५

भजे सर्वज्ञमाचार्यं साक्षाद्भगवदाकृतिम् ।
ध्यात्वेत्थं समये ब्राह्मे जपेदाचार्यपादुकाम् ॥

अष्टाविंशतिधा नित्यं जपेद्द्वादशधापिवा ।
जपहोमार्हता सर्वविद्यानामस्य जायते ॥

अनेनाचार्यमन्त्रेण पादुकाद्वयमादरात् ।
पञ्चोपचारैरभ्यर्च्य पुष्पैर्द्वादशधार्चयन् ॥

आचार्यपादुकायुग्मे यत्किञ्चिद्दक्षिणामथ ।
समर्प्याचार्य पादाब्जे प्रदायाथ दिनेदिने ॥

मासि मासि च दत्वा वा वर्षे वर्षेऽपिवा नृप ।
अपि शाकघृतादीनि समर्प्य प्रत्यहं भुवि ॥

विदितानामपि नव्यविद्यानामपि सन्ततम् ।
जपादावधिकारीस्यादुपदेशं विनापि च ॥

आचार्यपादुकायुग्मं पुष्पैः स्वर्णविनिर्मितैः ।
अर्चयित्वा पुनश्चर्यां विनासिद्धो भवत्यसौ ॥

आचार्यपादुकायुग्मं संप्राप्ते शुभ पर्वणि ।
अभ्यर्च्य गन्धपुष्पाद्यैर्वर्षाशनमितं धनम् ॥

पादुकोपरिनिक्षिप्य समर्प्याचार्यपादयोः ।
प्रदत्वा तदभावेतु तस्य पुत्राय वार्पयेत् ॥

समर्प्य तस्य पत्न्यै वा मेरुं नियुत योजनम् ।
दत्वा यत्फलमाप्नोति ततोऽधिकफलं लभेत् ॥ —२५

विद्यानामपि सर्वासां त्रिदशैरपि दुर्लभाम् ।
महतीं सिद्धिमाप्नोति तस्मिन्वर्षे न संशयः ॥

आचार्यपादुकाविद्यां प्रातः प्रातरथापिवा ।
जप्त्वादौ महतीं सिद्धिं विद्यानां लभते नृप ॥

समस्तविद्यासंसिद्धिं कल्याणानि दिने दिने ।
इच्छतां महतीं लक्ष्मीं जप्तव्याचार्यपादुका ॥

आचार्यपादुकाविद्यामजप्त्वा प्रत्यहं नृप ।
कोटीसहस्रं जप्त्वापि विद्या सिद्धिं न विन्दति ॥

रश्मिमालाक्रमं वक्ष्ये शृणु राजन् महामते ।
यस्य स्मरणमात्रेण नित्यं पापैर्विमुच्यते ॥ —३०

गायत्र्यादौ महाविद्या वेदमाता फलप्रदा ।
सावित्र्यष्टाक्षरीविद्या सर्वाधिव्याधिनाशिनी ॥

दत्तात्रेयद्वादशार्णमहाविद्याद्वयं ततः ।
चतुर्दशाक्षरीविद्या द्वैपायनमहामुनेः ॥

सर्वविद्यामयी साक्षाच्छ्री श्रीश द्वादशाक्षरी ।
ब्रह्मविद्या त्रिजगतां स्मर्तव्या सर्वसिद्धिदा ॥

पञ्चाशदक्षरमयी मातृका च ततःपरम् ।
श्रीमदष्टाक्षरी विद्या स्मरणीया ततःपरम् ॥

अष्टाक्षरी महाविद्या द्वादशार्णं ततः श्रियः
समस्तसंपत्सम्राज्य महासिंहासनेश्वरी ॥ –३५

सप्तविंशाक्षरी विद्या भोगमोक्षप्रदा ततः ।
ततो वसुन्धराविद्या साक्षात्कल्पलताभिधा ॥

अष्टादशाक्षरी पश्चादथो श्रीपतेरपि ।
द्वादशार्णा महाविद्या ततो नारायणी शुभा ॥

आद्यन्तप्रणवोपेता ब्रह्म नारायणी ततः ।
हंसनारायणीविद्या स्मरणीया ततः परम् ॥

श्रीषडर्णेनसहिता विद्या नारायणी पुनः ।
अष्टाक्षरमहालक्ष्मीसहितापि ततः परम् ॥

आवहन्तीसमायुक्ता विद्या नारायणी शुभा ।
आनुष्टुभाख्यविद्याथ हयग्रीवस्य भूपते ॥ –४०

ततो मत्स्यस्वरूपस्य विद्या भगवतः शुभा ।
ततःकूर्ममहाविद्या वराहस्य ततः परम् ॥

नृसिंहानुष्टुभाख्याच वामनस्य ततो नृप ।
ततो भार्गवरामस्य विद्या दाशरथेस्ततः ॥

ततः श्रीकृष्णविद्या च बुद्धविद्या ततः परम् ।
विद्याथकल्कि रूपस्य श्रीपतेः परमात्मनः ॥

नामत्रयमहाविद्या ततः सर्वफलप्रदा ।
सुदर्शन महाविद्या समस्तभयनाशिनी ॥

ततो गरुडविद्या च ततो हनुमतः शुभा ।
भगवद्रश्मि मालेयं प्रोक्ता सकलसिद्धिदा ॥ —४५

सर्वाधिव्याधिसंहर्त्री पातकौघविभेदिनी ।
आदौ मयैव कथिता ब्रह्मणे परमेष्ठिने ॥

रुद्राय गौरीपतये पुनश्च ममरूपिणे ।
वक्ष्यते सर्वदेवानां महर्षीणां च सन्निधौ ॥

इयं प्रजयप्ते कैश्चिदावहन्ती मनोः परम् ।
अर्धाङ्गश्रीपतेःपूर्वादाषोडशार्णो तपोनिधे ॥

विनैव जप्यते कैश्चिदाञ्जनेयगरुत्मतोः ।
विना वसुन्धराविद्यां जप्यते कैश्चिदप्यथ ॥

मयैव ग्रथिता माला रश्मिनाम्नी धरापते ।
विद्यामेतां विजानीहि संपूर्णां रश्मिमालिकाम् ॥ —५०

एकैकापि महाविद्या रश्मिमालांतरस्थिता ।
एकैकस्याश्च विद्याया वर्णितुं फलमुत्तमम् ॥

न शक्तः परमेष्ठी च किमु रश्मिसृजो नृप ।
रश्मिसृजमिमां विद्यां सहस्रफलसिद्धिदाम् ॥

जानीह्याथर्वणीं साक्षाद्ब्रह्मदर्शनसिद्धिदाम् ।
आचार्यकरुणापूर्णा यस्य विप्रस्य जायते ॥

तस्यैव महतीं सिद्धिं रश्मिमाला ददाति हि ।
बहु संवत्सरं वापि स्वाचार्यं करुणानिधिन् ॥

प्राणैरथैश्च संसेव्य प्राप्तव्या रश्मिमालिका ।
रश्मिमालाप्रदःस्वामी रश्मिमालाप्रदः पिता ॥ —५५

रश्मिमालाप्रदा माता रश्मिमालाप्रदो गुरुः ।
अयमेवसदाचार्यो विज्ञेयः शास्त्रवित्तमैः ॥

ऋग्वेदेऽपि यजुर्वेदे सामवेदेऽपि भूपते ।
अथर्वणमहावेदे सारभूतामनूत्तमा ॥

भगवद्रश्मिमालांतर्गता एते न चापरे ।
इमामाथर्वणीं विद्यामाचार्यं बहुवार्षिकम् ॥

अपिसंसेव्यसकलैःरथैं प्राणैर्धियापि च ।
सम्प्राप्य सततं ब्राह्मे समये संशितव्रतः ॥

एकधा वा द्विधा त्रेधा चतुर्धा पञ्चधापिवा ।
प्रजप्त्वा सर्वविद्यानां पुरश्चर्याफलं लभेत् ॥ —६०

समस्तश्रेयसां प्राप्तिमिच्छन् सकलसम्पदः ।
आचार्यकरुणापूर्णः प्रजपेद्रश्मिमालिकाम् ॥

सर्वविद्यामयः सर्वदेतात्मा श्रियःपतिः ।
सर्वदेवमयस्तस्माद्भगवद्रश्मिमालिका ॥

जप्त्वा नित्यं विशुद्धात्मा मालां साङ्गां दिने दिने ।
समस्तदेवता अस्य वरदाःस्युर्नसंशयः ॥

ब्रह्मानन्दाभिधं सौख्यं देहान्तेऽवश्यमिच्छता ।
रश्मिमाला प्रजप्तव्या पञ्चधा वा त्रिधा पि वा ॥

अदत्वा भगवद्रश्मिमालामेतां शुभप्रदाम् ।
श्रीमदष्टाक्षरी विद्यामपिन्यास समन्विताम् ॥ —६५

दत्वात्मनश्च शिष्यस्य वंचकोऽसौ गुरुर्भवेत् ।
एकस्या अपिविद्यायाः सप्तद्वीपवती मही ॥

आचार्यदक्षिणादेया किमु रश्मिस्रजो नृप ।
तस्मादवश्यमाचार्यं गत्वापि बहुयोजनम् ॥

सर्वज्ञमाश्रयेद्धीमान् तोषयन् सर्ववस्तुभिः ।
संसारसागरं ततुं मिच्छनेन्केन जन्मना ॥

आचार्यवदनाम्भोजात्प्राप्येमां रश्मिमालिकाम् ।
ब्रह्मविद्याजपान्तेवा तत्पूर्वमथवा सदा ॥

प्रजप्त्वा समये ब्रह्मसरहस्यामतः परम् ।
श्रीमदष्टाक्षरीं जप्त्वा ब्रह्मानन्दसुखीभवेत् ॥ —७०

संशयं मा कुरुष्वात्र राजन् जनकभूपते ।
इदं दाशरथीयाख्यं तन्त्रं वेदार्थसम्मितम् ॥

सरहस्यं विजानाति य आचार्यं कृपान्वितः ।
संप्राप्य बहुदूरं वा तमेवाचार्यमाश्रयेत् ॥

आचार्यं भगवद्बुध्या येऽर्चयन्ति दिने दिने ।
त एव महतींसिद्धिं व्रजन्तीह परत्र च ॥

किमत्र बहुनोक्तेन सारमेकं वदाम्यहम् ।
आचार्यचरणाम्भोज द्वयमेव दिने दिने ॥

प्रपन्नाः शरणं ये वै त एव भगवन्मयाः ।
इहापि महतीं सिद्धिं प्राप्यान्ते मुक्तिमाप्नुयुः ॥ —७५

इति ते रश्मिमालाया माहात्म्यं किञ्चिदीरितम् ।
इतः परं महाराज किं पुनश्श्रोतुमिच्छसि ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे नवमोऽध्यायः ॥



# ॥ अथ दशमोऽध्यायः ॥



भगवन् भाषिताशेषविशेषकरुणानिधे ।
भगवद्रश्मिमालेयं श्रुता तवमुखाम्बुजात् ॥

समस्तवेदशास्त्रौघसारभूतार्थसंग्रहा ।
एकैकस्याश्च विद्याया माहात्म्यं क्रमशो वद ॥

**श्री भगवानुवाच –**

शृणु राजन् प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण महतीं सिद्धिमश्नुते ॥

ब्राह्मे काले समुत्थाय संस्मृत्वाचार्यपादुकाम् ।
श्रियःपतेर्भगवतोरश्मिमालां ततःपरम् ॥
स्मर्तव्या सर्वसिद्धीनां हेतुभूता सनातनी ॥

तत्रादौ संप्रवक्ष्यामि गायत्रीं वेदमातरम् ।
यस्या विज्ञानमात्रेण साक्षाद्ब्रह्ममयोभवेत् ॥ —५

प्रणवो भूर्भुवःपश्चात् सुवरित्यक्षरद्वयम् ।
तत्पदं सवितुः पश्चाद्वरेणियमतःपरम् ॥

भर्गोदेवस्येति ततो धीमहीति ततःपरम् ।
धियोयोनः प्रचोदयादिति चाथ समुच्चरन् ॥

व्याहृतित्रयसंयुक्ता गायत्री त्रिंशदक्षरा ।
माता समस्तवेदानां ब्रह्मतादात्म्य सिद्धिदा ॥

महापापोपपापौघसंहर्त्री सिद्धिदायिनी ।
एकत्र सकला वेदा गायत्री त्रिंशदक्षरा ॥

तुलिता ब्रह्मणापूर्वमधिका सर्वकामदा ।
न वेदानां पुराणानां स्मृतीनां पठनेन च ॥

ब्राह्मण्यं जायते राजन् साविन्त्र्यध्ययनं विना ।
तद्ब्रह्म परमं तत्त्वं सवितुः परमात्मनः ॥

श्रियःपतेर्भगवतो देवस्य जगतांपतेः ।
वरेणियं परं श्रेष्ठं भर्गो विश्वंभरत्वतः ॥

वयंधीमहिं हृत्पद्मे सोऽहमेवेति संततम् ।
योऽसौ श्रियःपतिः साक्षात्सविता देवईरितः ॥

अस्माकं यो धियो नित्यमन्तर्यामितया स्थितः ।
प्रचोदयात् प्रेरयति सर्वधर्मेषु सन्ततम् ॥

वेदमातुरयं प्रोक्तः श्रुत्युक्तोऽर्थो महामते ।
वाच्योऽसौ सविता साक्षाद्भानुमण्डलमध्यगः ॥

नारायणो वेदमयो महापुरुष ईश्वरः ।
तद्वाचिकेयं सावित्री वेदमाता फलप्रदा ॥

न गायत्रीसमो मन्त्रो नायोध्या सदृशी पुरी ।
न जाह्नवी समं तीर्थं न दैवं श्रीपतेः समम् ॥

नाचार्यचरणाम्भोजद्वयेन सदृशी गतिः ।
नात्मलाभात् परं सौख्यं न वेदसदृशं श्रुतम् ॥

सावित्रीमनुपास्यादौ योऽन्यत्र कुरुते मतिम् ।
तमन्त्यजं विजानीयात्सर्वधर्मबहिष्कृतम् ॥

अनुपास्यान्वहं वेदमातरं बहुशो नृप ।
कोटिशोऽपिमनून् जप्त्वा न सिद्धिं किञ्चिदश्नुते ॥ —२०

तस्मादवश्यं गायत्रीं जप्त्वा च बहुशोऽन्वहम् ।
सकृत्स्मरणतोवापि विद्यासिद्धिं परां व्रजेत् ॥

सहस्रशोपि सावित्रीमन्वहं प्रजपन् शुचिः ।
ब्रह्मर्षिं तं विजानीहि साक्षाद्भगवदाकृतिम् ॥

बहुयोजनसहस्रमधिसंप्राप्य तं द्विजम् ।
आचार्यं वृणुयाच्छ्रीमदष्टार्णमनुसिद्धये ॥

एकतः सकला वेदा यज्ञतीर्थव्रतादयः ।
एकतो वेदमातेयमधिकं तुलिता भवेत् ॥

सहस्रकृत्वो गायत्रीमष्टार्णं ध्यानसिद्धये ।
एकतः सकलावेदा यागास्तीर्थव्रतादयः ॥ –२५

एकतो वेदमातेयमधिकं तुलिताभवेत् ।
सहस्रकृत्वो गायत्री त्रिसन्ध्यं प्रत्यहं जपेत् ॥

जपेत् पञ्चशतंवापि चतुश्शतमथापिवा ।
गायत्रीं प्रजपेच्छ्रीमदष्टार्णमनुसिद्धये ॥

त्रिशतं द्विशतंवापि जपेदष्टोत्तरं शतम् ।
अष्टाविंशति वापत्सु जपेद्रोगादिपीडितः ॥

गायत्र्येव परंब्रह्म गायत्र्येव परोहरिः ।
गायत्र्येव परंब्रह्म गायत्र्येव परःशिवः ॥ (परोब्रह्म)

गायत्र्येव त्रयी साक्षाच्छब्द ब्रह्मस्वरूपिणी ।
प्रभावेणैव गायत्र्याः क्षत्रियः कौशिको व्रती ॥ –३०

राजर्षित्वं परित्यज्य ब्रह्मर्षिपदमाप्तवान् ।
विश्वामित्रो मुनिस्तस्माद्गायत्र्याः कविरुच्यते ॥

छन्दो गायत्रमेतस्याः सविता परमेश्वरः ।
हिरण्यगर्भोमहायोनिर्देवोनारायणःस्मृतः ॥

श्रियः पतिर्महायोगी देवो नारायणः स्मृतः ।
मुखमग्निः शिरोब्रह्मा शिखा रुद्रोऽम्बिकापतिः ॥

हृदयं विष्णुरेवास्याः पृथिवी योनिरुच्यते ।
विनियोगश्चतुर्वर्गफलसिद्ध्यर्थमीरितः ॥

दशप्रणवसंयुक्ता सप्तव्याहृतिपूर्विका ।
प्राणायामे प्रजप्तव्या कुम्भकेन त्रिधान्वहम् ॥ —३५

जपेत्तु त्रिपदा प्रोक्ता व्याहृतित्रितयान्विता ।
गायत्रीवाच्यमाद्यन्तरहितं सर्वकारणम् ॥

सर्वतेजोमयं नित्यं ब्रह्मनारायणाभिधम् ।
ध्यात्वा समस्तवेदानां मातरं प्रजपेत् पराम् ॥

अविच्छिन्नोपासनस्य त्रिसन्ध्यं प्रत्यहं नृप ।
पुरुषस्यास्य कथिता भगवद्रूपसिद्धिदा ॥

अष्टोत्तरसहस्रं यः सावित्रीं प्रत्यहं जपेत् ।
महापापोपपापौघैरपि मासेन मुच्यते ॥

सहस्रकृत्वो गायत्रीं वर्षत्रितयमादरात् ।
प्रजप्यभगवद्रूपी सिद्धानामधिपोभवेत् ॥ —४०

चतुर्विंशति लक्षाणि प्रजप्य वेदमातरम् ।
ब्रह्मघ्नश्च सुरापश्च स्वर्णस्तेयी च मुच्यते ॥

गायत्रीं कोटिशो जप्त्वा यत्फलं लभ्यते नरैः ।
सहस्रं ग्रहणे हुत्वा तिलैस्तत्फलमश्नुते ॥

दत्वासहस्रं सवितुः संक्रान्तिषु तिलैर्नृप ।
भानुमण्डलमध्यस्थं भगवन्तं प्रपश्यति ॥

ब्रह्मतादात्म्य सिध्यर्थं पावनत्वाय सन्ततम् ।
मातरं सर्ववेदानामन्वहं बहुशो जपेत् ॥

मातरं लक्षसङ्ख्यांतु ध्यात्वा च बहुशोऽन्वहम् ।
पुरश्चरणहोमादि विना मन्त्रसिद्धिं न विन्दति ॥ —४५

अष्टाविंशतिधा नित्यमपि द्वादशधा घृतम् ।
हुत्वादौ सर्वविद्यानां होमस्य फलमश्नुते ॥

योऽयं सर्वस्य जगतस्तेजसा संप्रकाशकः ।
सर्वेषां महसां राशि कालात्मा कालनायकः ॥

तदन्तर्याम्यसौ साक्षात्तस्यापि प्रेरकोऽन्वहम् ।
भगवान् सवितेत्युक्तः श्रीशो नारायणोऽच्युतः ॥

अयमेवपरो विष्णुरयमेव परःशिवः ।
अयमेव परो रुद्रस्त्रयी रूपोऽयमच्युतः ॥

वेदाश्वरथमारूढो योऽसौ नारायणो विभुः ।
तं विजानीहि हृत्पद्म मध्यगं सर्वदेहिनाम् ॥ —५०

ऋचस्त्वेनं परात्मानं पूर्वाह्णे ब्रह्मरूपिणम् ।
नारायणं जगन्नाथं स्तुवन्ति सततं विभुम् ॥

मध्याह्ने संस्तुवन्त्येनं रुद्ररूपं श्रियःपतिम् ।
यजूँषि त्रिजगद्वन्द्यं विश्वरूपं परात्परम् ॥

सायङ्काले सामगणाः साक्षाद्विष्णुमयं विभुम् ।
सामानि संस्तुवन्त्येनं श्रियःपतिमनश्वरम् ॥

बहिरन्तस्तमोराशीन् हर्तासाविन्दिरापतिः ।
सविता भगवान् साक्षात् त्रिगुणो त्रिजगत्पतिः ॥

तस्मादवश्यं सावित्रीमुपास्य बहुशोऽनिशम् ।
त्रयाणामपि वेदानां फलमध्ययनाद्भवेत् ॥ —५५

यष्टासावश्वमेधादि यागानां भवति ध्रुवम् ।
जापकः सर्वविद्यानामपि नित्यमसौ भवेत् ॥

सावित्र्यष्टाक्षरं वक्ष्ये शृणुष्वावहितो भव ।
यद्ध्यात्वा साधको धीमान् लभते सिद्धिमक्षयाम् ॥

प्रणवं घृणिरित्युक्त्वा सूर्य इत्यक्षरद्वयम् ।
आदित्योमितिविद्यैषा सावित्र्यष्टाक्षरी शुभा ॥

सर्वाधिव्याधिसंहर्त्री सर्वरोगनिबर्हिणी ।
तेजोबलयशोवर्चः प्रजासंपत्करी शुभा ॥

देवभागोस्य संप्रोक्तो मुनिर्ब्रह्मविदांवरः ।
गायत्रं छन्दइत्युक्तं सविता देव ईरितः ॥ —६०

भगवत्प्रीतये प्रोक्तो विनियोगो महर्षिभिः ।
तेजो ज्वालामणिपदं हुं फट् प्रियामथ ॥

सर्वाधिव्याधिशमनं च्छायाश्लिष्टतनुं भजे ।
ध्यात्वेत्थं प्रजपेद्यस्तु सवित्रष्टाक्षरींशुभाम् ॥

सर्वाधिव्याधिरहितस्तेजस्वी ब्रह्म पश्यति ।
प्रत्येकं सर्वरश्मीनां जपहोमादिकर्मसु ॥

प्रत्येकमार्षं छन्दश्च विज्ञायैव जपेन्मनून् ।
भगवद्रश्मिविद्यानां मालिकाध्ययनेऽन्वहम् ॥

छन्द आर्षादिकं स्मृत्वा जप्तव्या प्रत्यहं नृप ।
भगवद्रश्मिविद्यानां समुदायस्य भूपते ॥ —६५

अहमेवमुनिः प्रोक्तो द्वैपायनसुतोऽपि च ।
गायत्र्यादीनि छन्दाँसि विश्वामित्रादयो द्विजाः ॥

वेदमात्रादिविद्यानामृषयः कथिता नृप ।
तत्रापि नाना छन्दांसि सर्वतेजोमयोविभुः ॥

सर्वेश्वरो विराड्रूपी श्रीपतिर्जगतांपतिः ।
हरिर्नारायणः स्वामी देवतासमुदीरितः ॥

लक्ष्मीनारायणप्रीत्यै विनियोग उदाहृतः ।
असंख्यातमहःपुञ्जपिञ्जरीकृतदिङ्मुखम् ॥

रश्मिमालात्मकं वन्दे देवं नारायणं विभुम् ।
रश्मिमाला जपेत्वेवमार्षच्छन्दादिकं न्यसेत् ॥ —७०

प्रत्येकं रश्मिविद्यानां जपशक्तिर्भवेच्च वा ।
प्रत्येकमार्षं च्छन्दश्च विन्यस्याथ षडङ्गकम् ॥

प्रजपेत् सकलान् मन्त्रान् जुहुयादपि साधकः ।
सावित्राष्टाक्षरी विद्या महासिद्धिप्रदायिनी ॥

रोगशोकहरी नित्यं सहिते रविपर्वणि ।
स्पर्शकालं समारभ्य मोक्षकालान्तमादरात् ॥

तिलैर्गव्याज्यसहितैर्हुत्वाग्नौ संस्कृते शुभे ।
आचार्यकर्णयोर्दत्वा कुण्डलद्वितयं शुभम् ॥

बहुसस्ययुतां पृथ्वीं दत्वा दक्षिणयान्विताम् ।
सावित्र्यष्टाक्षरीविद्या सिद्धिमाप्नोत्यनुत्तमाम् ॥ —७५

जप्त्वा द्वादशलक्षाणि तर्पयित्वा गवां पयः ।
हुत्वा द्वादशसाहस्रं तिलैर्गव्यघृतप्लुतैः ॥

कुष्ठरोगात् प्रमुच्येत दुर्विचित्रादनेकशः ।
जप्त्वालक्षत्रयं मन्त्रं दशांशं .... .... ॥

.... .... .... .... त्रिमधुस्नुतम् ।
पायसान्नमथोहुत्वा वातरोगाद्विमुच्यते ॥

आज्येन जुहुयान्नित्यं मासमेकं सहस्रकम् ।
भगन्धरान्महारोगादाग्निमान्द्याच्च मुच्यते ॥

त्रिशतं जुहुयान्नित्यं पङ्कजैर्गोघृतस्नुतैः ।
मण्डलान्महतीं लक्ष्मीमचलां प्राप्नुयाद्ध्रुवम् ॥ —७०

नीलोत्पलैर्हुनेन्नित्यं मधुत्रितयसंस्नुतैः ।
अजीर्णरोगान्मुच्येत नेत्ररोगाच्च दारुणात् ॥

अशोककुसुमैर्हुत्वा नित्यमष्टोत्तरं शतम् ।
शिरोरोगाद्विमुच्येत मूलरोगाच्चदुःसहात् ॥

त्रिशतं जुहुयान्नित्यं दध्यन्नं त्रिमधुप्लुतम् ।
नानाविधञ्च मूलरोगान्मण्डलेन विमुच्यते ॥

अभिमन्त्र्य जलं मन्त्री नित्यमष्टोत्तरंशतम् ।
प्रक्षाळ्य मुखरोगेभ्यो विमुक्तो भवति ध्रुवम् ॥

जप्त्वा षोडशलक्षाणि लक्षं हुत्वा घृतं गवाम् ।
असाध्यैरपि मुक्तोऽसौ रोगजालैस्सुदुस्सहैः ॥ —७५

निरामयश्चतेजस्वी दीर्घायुरिह साधकः ।
सम्प्राप्य महतीं लक्ष्मीमणिमादिगुणान्विताम् ॥

तद्विष्णोःपरमं धाम भजत्यन्ते न संशयः ।
अष्टोत्तरसहस्रं यः प्रातः स्नात्वान्वहंजपेत् ॥

श्रीसुतारोग्यतेजांसि वर्धन्ते चास्यसम्पदः ।
देहान्ते समवाप्नोति तद्विष्णोः परमंपदम् ॥

वेदमातुश्चमाहात्म्यं सावित्राष्टाक्षरस्य च ।
इदमुक्तमथात्रेयव्यासयोरपि वक्ष्यते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे दशमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

श्री भगवानुवाच –

दत्तात्रेयमनोर्वक्ष्ये कृष्णद्वैपायनस्य च ।
माहात्म्यं यस्यविज्ञानान्महतीं सिद्धिमश्नुते ॥

प्रणवं पाशबीजं च मायामङ्कुशमप्यथ ।
ऐन्द्रस्वरं व्योमबीजं तृतीयस्वरसंयुतम् ॥

दत्तात्रेयपदं पश्चाद्वह्निपत्नीमथोच्चरेत् ।
इत्येकोक्ता महाविद्या दत्तात्रेयस्य योगिनः ॥

प्रणवं हृदयं पश्चात्ततोभगवतःपदम् ।
दत्तात्रेयपदं पश्चाच्चतुर्थ्यन्तसमन्वितम् ॥

अत्रिनन्दनविद्येयं द्वितीया समुदीरिता ।
प्रत्येकं वा जपेद्विद्यां मिलितं वा द्वयं जपेत् ॥ –५

ममैव मूर्तिर्दत्ताख्या योगसिद्धिकरी शुभा ।
समस्तविद्यासाम्राज्यसिद्धिदा मुक्तिदायिनी ॥

ये मुक्तिपदमिच्छन्तो योगिनः साङ्ख्यकापिलाः ।
दत्तात्रेयमहाविद्या जप्तव्यान्तर्महीपते ॥

अचलं महदैश्वर्यं वागैश्वर्यमथाक्षयम् ।
अष्टाङ्गसहितं योगं ब्रह्मज्ञानं सनातनम् ॥

जातिस्मरणमन्विच्छेद्दत्तात्रेयमनुं जपेत् ।
पादुकां पूजयित्वाथ सिध्यष्टकमभीप्सता ॥

दत्तात्रेयमहाविद्या प्रजप्तव्या महीपते ।
चोरारिदुष्टसङ्घेभ्यो महाभयनिवारणम् ॥

अनष्टद्रव्यसंरक्षां नष्टस्य पुनरागमम् ।
इच्छता दत्तविद्येयं प्रजप्तव्या महीपते ॥

ऋषिरत्रमहातेजा दत्तात्रेयस्यविद्ययोः ।
जागतं च्छन्द इत्युक्तं ब्रह्मविष्णुशिवात्मकः ॥

दत्तात्रेयो हरिः स्वामी भगवान् देव ईरितः ।
शक्तिर्मायापाशबीजमङ्कुशं कीलकं स्मृतम् ॥

दत्तात्रेयाद्यविद्यायाः प्रणवो बीजमप्यथ ।
नतिं शक्तिमितिप्राहुर्ब्रह्मतादात्म्यसिद्धये ॥

दत्तात्रेयस्य तुष्ट्यर्थं विनियोग उदाहृतः ।
षड्दीर्घयुतमार्याणां कुशार्णाभ्यां षडङ्गकम् ॥ —१५

विन्यस्य हृदये साक्षाद्दत्तात्रेयं हरिं स्मरेत् ।
नीलजीमूतसङ्काशं जटामण्डलशोभितम् ॥

भूतिभूषित सर्वाङ्गं वीरासनसमन्वितम् ।
पारिजाततरोर्मूले दिव्यसिंहासनाश्रितम् ॥

सनकादिमहायोगिसेवितं भक्तवत्सलम् ।
मुद्रां ज्ञानमयीं दक्षहस्ते वामेऽभयं तथा ॥

पद्मरागसमायुक्तहेमकुण्डलशोभितम् ।
प्रसन्नवदनं शान्तं सुस्मितानन पङ्कजम् ॥

अनसूयात्रिसहितं ब्रह्मर्षिभिरभिष्टुतम् ।
सिद्धविद्याधरगणैः सेवितं च महर्षिभिः ॥ —२०

दिव्याभरणसंयुक्तं वामभागस्थया श्रिया ।
सहितं नारदाद्यैश्च सेवितं त्रिजगत्पतिम् ॥

दत्तात्रेयमहं नित्यं भजामि परमेश्वरम् ।
दत्तात्रेयमहाविद्यामितिध्यात्वा जपञ्छुचिः ॥

सर्वासामपिविद्यानां तत्त्वज्ञो भवति ध्रुवम् ।
लक्षत्रयं पुरश्चर्यैकैकस्य मनो नृप ॥

दशांशं जुहुयादग्नौ पायसं त्रिमधुप्लुतम् ।
गुरवे दक्षिणां दत्वा सर्वस्वमपि साधकः ॥

दत्तात्रेयमहाविद्या सिद्धिमाप्नोत्यनुत्तमाम् ।
उपोषणपरो यद्वा व्यतीपाते महीपते ॥

जप्त्वा सहस्रत्रितयं कापिलाज्यमथो हुनेत् ।
दशांशं ज्वलिते वह्नौ गुरवे कुण्डलद्वयम् ॥

दत्वा तत्कर्णयुगले कर्षहेमविनिर्मितम् ।
यज्ञोपवीतत्रितयं दत्वा वासो युगान्वितम् ॥

दत्तात्रेयमहाविद्या सिद्धिं प्राप्नोति शाश्वतीम् ।
एकामपि महाविद्यां दत्तात्रेयस्य योगिनः ॥

त्रिशताधिकसाहस्रं जप्त्वा प्रत्यहमादरात् ।
षण्मासादणिमाद्यष्टगुणैश्वर्ययुतो भवेत् ॥

समुद्रतीरे गोष्ठे वा लक्षं जप्त्वा पयोव्रतः ।
पायसेनाज्ययुक्तेन हुत्वा विद्यानिधिर्भवेत् ॥

ब्राह्मे समय उत्थाय ध्यात्वा त्रिसुतमादरात् ।
जप्त्वा सहस्रमेकां वा विद्यां विद्याद्वयं तु वा ॥

मिलितं वाथ षण्मासाद्दत्तात्रेयं जगत्पतिम् ।
साक्षादेवस्वचक्षुर्भ्यां पश्यत्यखिलसिद्धिदाम् ॥

चो रैर्यदाहृतं पश्येत्पश्चादिधनमात्मनः ।
त्रिसहस्रं जपेद्रात्रौ नित्यं पश्चिमदिङ्मुखः ॥

सप्तरात्रेणलभते नष्टद्रव्यं न संशयः ।
शम्याः समीपे जप्त्वेमां विद्यामष्टोत्तरंशतम् ॥

नचोरादिभयं पश्येत्कदाचिदपि भूतले ।
अष्टोत्तरशतं जप्त्वा मार्गं गच्छति यः पुमान् ॥ —३५

न दुष्टचोरव्याघ्राद्यैर्भयं स्यात्परिपन्थिभिः ।
सर्वरोगादिपीडासु जपन् पञ्चसहस्रकम् ॥

असाध्यैरपि मुक्तः स्याद्रोगजालैर्दिनत्रयम् ।
अष्टाङ्गयोगमन्विच्छन् फलाशी नियतव्रतः ॥

सहस्रत्रितयं जप्त्वा नित्यं मासमतन्द्रितः ।
अष्टाङ्गयोगमासाद्य खेचरो जायते ध्रुवम् ॥

समासीनोऽथवामूले वने गव्यपयोव्रतः ।
सहस्रत्रितयं नित्यं प्रजप्त्वा शंसितव्रतः ॥

धनधान्यकुलां लक्ष्मीमचलां मण्डलाल्लभेत् ।
अत्रिसूनोरिमां विद्यामेकैकामन्वहं शुचिः ॥ —४०

विष्ण्वालये वा रुद्रस्य गृहे वा शंसितव्रतः ।
जप्त्वा संवत्सरं मन्त्री सहस्रं विजितेन्द्रियः ॥

संवत्सरादवाप्नोति श्रियमष्टगुणान्विताम् ।
अष्टाङ्गसहितं योगं वाक्सिद्धिमतुलां शुभाम् ॥

पुत्रपौत्रवतीमृद्धिं दीर्घमायुरनुत्तमाम् ।
भोगां नष्टविधांश्चापि लब्ध्वान्ते मुक्तिमाप्नुयात् ॥

षट्कोणमष्टकोणं च वस्वारं चतुरश्रकम् ।
अत्रिसूनोरिदं यन्त्रं महाभाग्यसमृद्धिदम् ॥

षट्कोणमध्ये सम्पूज्य दत्तात्रेयं श्रियान्वितम् ।
षट्कोणेषु षडङ्गानि पितरं चानुसूयया ॥ —४५

सनत्कुमारं सनकं सनन्दनमतःपरम् ।
सनत्सुजातं प्रह्लादं कार्तवीर्यमतःपरम् ॥

अष्टकोणे समभ्यर्च्य शक्रादीनष्टपत्रके ।
इत्थमत्रिसुतं साक्षाद्भगवन्तं श्रियान्वितम् ॥

अभ्यर्च्य गन्धपुष्पाद्यैर्नित्यं कल्याणमश्नुते ।
अतःपरं प्रवक्ष्यामि द्वैपायनमनोर्नृपा ॥

साधनं सर्वभक्तानां समस्तेप्सितसिद्धिदम् ।
प्रणवं नमसायुक्तं पदं भगवते ततः ॥

हलाढ्यं दक्षनासाद्यं द्वितीयोष्माणमप्यथ ।
एकत्रिंशार्णसहितं द्वैपायनपदं ततः ॥ —५०

चतुर्थ्यन्तसमायुक्तं विद्यैषासमुदीरिता ।
पराशरसुतस्येयं विद्यामन्वक्षरी शुभा ॥

वेदवेदान्ततत्त्वार्थसारभूता यशस्करी ।
ममैवमूर्तिरपरा कृष्णद्वैपायनाभिधा ॥

सत्यवत्यां समुद्भूता शक्तिपुत्रात् पराशरात् ।
विभागकर्त्री वेदानां जगतां हितकारिणी ॥

आचार्यः सर्वजगतां पराशरसुतो विभुः ।
द्वैपायनाभिधः साक्षाद्भगवान् हरिरच्युतः ॥

शिष्येभ्यः सर्वविद्यानामुपदेष्टा बभूव ह ।
ब्राह्मे समय उत्थाय संस्मृत्याचार्यपादुकाम् ॥ —५५

द्वैपायनमहाविद्यां त्रिशतं शतमेव वा ।
अष्टाविंशतिधा वापि प्रजप्त्वादौ समाहितः ॥

ब्रह्मविद्यां जपेत्पश्चाद्रश्मिमालापुरस्सराम् ।
आचार्यं भावयेन्नित्यं वेदव्यासस्वरूपिणम् ॥

द्वैपायनस्याचार्यस्य भेदलेशो हि नास्ति हि ।
आचार्यं परमात्मानं साक्षाद्द्वैपायनाकृतिम् ॥

ध्यात्वा नित्यं समभ्यर्च्य ब्रह्मानन्दसुखं लभेत् ।
बादरायणिरस्योक्तो मुनिर्ब्रह्मविदांवरः ॥

जागतं च्छन्द इत्युक्तं साक्षान्नारायणात्मकः ।
वेदव्यासो महायोगी देव उक्तो महीपते ॥ —६०

वेदव्यासप्रसादार्थं विनियोग उदाहृतः ।
एकेनाक्षरयुग्मेन चतुर्भिरथ रश्मिभिः ॥

पुनस्त्रिभिश्च तद्वर्णैः षडङ्गन्यास ईरितः ।
दिव्यसिंहासनासीनं कालनीलाम्बुदप्रभम् ॥

व्याघ्रचर्माम्बरधरं जटामण्डलधारिणम् ।
बिभ्राणं चिन्मयीं मुद्रां वीरासनसमाश्रितम् ॥

भूतिभूषितसर्वाङ्गं प्रसन्नमुखपङ्कजम् ।
कुण्डलद्वयसंशोभि मुखाम्भोजं जगद्गुरुम् ॥

मूर्तिमद्भिश्चतुर्वेदैश्शुकाद्यैर्योगिनां वरैः ।
सेवितं सिद्धसङ्घैश्च ब्रह्मविद्भिः समावृतम् ॥ —६५

वक्तारं सर्वविद्यानां करुणापूर्णलोचनम् ।
द्वैपायनमुनिं साक्षाद्भगवन्तमहं भजे ॥

इत्थं नारायणात्मानं ध्यात्वा द्वैपायनं गुरुम् ।
अर्चयेत्षडरे यन्त्रे पञ्चकोणसमन्विते ॥

अष्टपत्रसमायुक्ते चतुरश्रविभूषिते ।
षट्कोणमध्ये संपूज्य वेदव्यासं जगद्गुरुम् ॥

पराशरं शुकं पैलं वैशम्पायनमप्यथ ।
जैमिनिं च सुमन्तुं च षट्कोणेषु प्रपूजयेत् ॥

ऋग्वेदं च यजुर्वेदं सामवेद मतःपरम् ॥
अथर्वणं ततो वेदमितिहासमतःपरम् ॥

पञ्चकोणे समभ्यर्च्य वसुपत्रेऽथ पङ्कजे ।
रोमहर्षणनामानं याज्ञवल्क्यं महामुनिम् ॥

कण्वं कात्यायनमुनिमुदङ्कोद्दालकौतथा ।
बोधायनापस्तम्बौ च चतुरश्रैर्दिगीश्वरात् ॥

इत्यमभ्यर्चयेद्यस्तु नित्यं द्वैपायनं गुरुम् ।
आकरस्सर्वविद्यानामाश्रयस्सर्वसम्पदाम् ॥

ब्रह्मविद्भवति क्षिप्रं जीवन्मुक्तो भवत्यसौ ।
लक्षत्रयं जपेच्छुद्धो वेदव्यासमहामनुम् ॥

दशांशं जुहुयात्कृष्णतिलैर्गव्यघृतप्लुतैः ।
आचार्यपादयोर्दत्वा निष्कद्वादशकं नृप ॥

वेदव्यासमहाविद्या सिद्धिमाप्नोत्यनुत्तमाम् ।
अथवैकादशीविद्या कार्तिके माघमासि वा ॥

निराहारो जपेन्नित्यमयुतं शंसितव्रतः ।
सहस्रं जुहुयादग्नौ द्वादश्यां कापिलं घृतम् ॥

आचार्यं कर्णयोर्दत्वा कुण्डलद्वितयं शुभम् ।
समस्तपर्वसहितं भारताख्यान पुस्तकम् ॥

सभाष्यं धर्मशास्त्रंवा पुराणमथवा नृप ।
त्रिनिष्कदक्षिणायुक्तमाचार्याय समर्प्य च ॥

ब्राह्मणान् भोजयित्वाथ सिद्धिं प्राप्नोत्यनुत्तमाम् ।
अश्वत्थमूलमाश्रित्य नित्यं नियमतः शुचिः ॥ –८०

त्रिशताधिकसाहस्रं वेदव्यासमनुं जपन् ।
त्रिभिर्मासैर्न सन्देहो विद्यानां पारगोभवेत् ॥

शुक्लाम्बरधरोनित्यमासीनो व्याघ्रचर्मणि ।
वेदव्यासमहाविद्यां जप्त्वा लक्षं यतव्रतः ॥

दशांशं बादरैर्हुत्वा फलैर्गव्यघृतप्लुतैः ।
समस्तवेदशास्त्राणां रहस्यज्ञोभवत्यसौ ॥

तुलसीवनमध्यस्थो वनमालावृतःशुचिः ।
जप्त्वा लक्षमिमं मन्त्रं गुरुमाराध्य यत्नतः ॥

धनैर्धान्यैश्च वासोभिस्सर्वविद्यानिधिर्भवेत् ।
श्रियं चाप्नोति विपुलां ब्रह्मविद्भवतिध्रुवम् ॥ –८५

जडबुद्धेरियं विद्या बुद्धिजाड्यनिवारिणी ।
मूकस्याप्यपरैर्जप्त्वा महावाक्सिद्धिदायिनी ॥

आचार्यसन्निधौ नित्यं वेदव्यासमहामनुम् ।
जप्त्वा सहस्रं शुद्धात्मा वर्षमेकं जितेन्द्रियः ॥

आयुरारोग्यमैश्वर्यं वाचां सिद्धिमनुत्तमाम् ।
सम्प्राप्य परमंब्रह्म साक्षादेव प्रपश्यति ॥

दत्तात्रेयधिया नित्यं वेदव्यासधियापि वा ।
आचार्यमर्चयेद्धीमान् वस्तुभिस्सकलैरपि ॥

अम्बरीषादयोभूपाः कचाद्याश्च महर्षयः ।
वृषपर्वादयो दैत्या उतंकाद्या द्विजोत्तमाः ॥ —९०

गालवाद्याश्च विप्राग्र्याः प्रत्यहं शंसितव्रताः ।
शरीरं नश्वरं मत्वा संसारं दुःखसङ्कुलम् ॥

धनधान्याद्यलङ्कारैस्सर्ववस्तुभिरादरात् ।
आचार्यचरणावेव समभ्यर्च्यान्वहं नृप ॥

निरहङ्कारिणश्शान्ताः संसेव्याचार्यमन्वहम् ।
एकेन जन्मनावैते सिद्धिं सम्प्राप्य दुर्लभाम् ॥

भगवत्कलया युक्ता जीवन्मुक्तास्ततोऽभवन् ।
तस्माद्भौमं समासाद्य शरीरं दुःखसङ्कुलम् ॥

जन्ममृत्युजराक्रान्तमाचार्यं यो नपूजयेत् ।
आचार्यानुग्रहः पूर्णो यस्य नास्ति महीतले ॥ —९५

संसारसागरे मग्नो भूयोभूयोऽभि जायते ।
संसारसागरं ततुं य इच्छेदेकजन्मना ॥

नित्यमाचार्यशुश्रूषां कृत्वैवादौ यतव्रतः ।
आचार्यपादुकाविद्यापूर्विकां रश्मिमालिकाम् ॥

ब्रह्मविद्यां प्रजप्याथ श्रीपतिद्वादशाक्षरीम् ।
समस्तन्याससहितां श्रीमदष्टाक्षरीं जपेत् ॥

ब्रह्मानन्दसुखं प्राप्य भगवत्कलयान्वितः ।
भगवत्सदृशाकारो भगवत्किङ्करोभवेत् ॥

दत्तात्रेयस्यविद्येद्वे द्वैपायानमुनेरपि ।
उक्तातुभ्यं महाराज किंपुनः श्रोतुमिच्छसि ॥ —१००

इति दाशरथीयाख्ये तन्त्रे वेदार्थ संग्रहे ।
दशमोऽध्याय उक्तोऽयं ब्रह्मज्ञानिभिरावृतः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे दशमोऽध्यायः ॥



## ॥ अथैकादशोऽध्यायः ॥



**राजोवाच –**

भगवन् देवदेवेश नारायण जगत्पते ।
श्रुता भवन्मुखाम्भोजाद्भगवद्रश्मिमालिका ॥

माहात्म्यमपि साविञ्या सावित्राष्टाक्षरस्य च ।
दत्तात्रेयस्य माहात्म्यं श्रुतं द्वैपायनस्य च ॥

माहात्म्यं ब्रह्मविद्यायाः श्रोतुमिच्छामि साम्प्रतम् ।

**ऋश्यश्रृङ्ग उवाच –**

इति दाशरथिः पृष्टो भगवान् जानकीपतिः ॥

रुद्राय कथयामास पुरा नारायणेरितम् ।

**श्री भगवानुवाच –**

शृणु राजन् प्रवक्ष्यामि श्रीपतेः परमात्मनः ॥

माहात्म्यं ब्रह्मविद्याया यज्ज्ञात्वा मुक्तिभाग्भवेत् ।
वेदेषु सर्ववेदान्तेष्वपि सारार्थसङ्ग्रहम् ॥ –५

श्री श्रीशद्वादशाक्षर्या माहात्म्यमघनाशनम् ।
यदक्षरं परंब्रह्म मनोवाचामगोचरम् ॥

आदिमध्यान्तरहितं स्वेच्छया पुरुषोभवेत् ।
तच्छक्तिश्चित्कला नाम श्रीस्सर्व जगदम्बिका ॥

स महापुरुषो नाम्ना नारायण इतीरितः ।
चिद्रूपिण्या तया शक्त्या सहितः परमः पुमान् ॥

सोऽहं स्वनाभिकमले सृष्ट्वा धातारमीश्वरम् ।
अजयं स्वयंभुवं नाम्ना विश्वसृष्टिविधायकम् ॥

अशक्तं जगतस्सर्गे दृष्ट्वाहं तं प्रजापतिम् ।
परब्रह्ममयः साक्षादहं नारायणो विभुः ॥ –१०

ब्रह्मतादात्म्यसिद्ध्यर्थं श्री श्रीशद्वादशाक्षरीम् ।
दत्तवानस्मि मद्विद्यां यया मत्कलयान्वितः ॥

ब्रह्मत्वमगमद्धाता द्वादशार्णोपदेशतः ।
यस्मिन्काले महाविद्यां श्रीश्रीशद्वादशाक्षरीम् ॥

दत्तवानस्मि समहान् कालो ब्रह्म इति स्मृतः ।
विद्याया ब्रह्मरूपत्वाद्ब्रह्मविद्येति तां जगुः ॥

ब्राह्मे काले प्रधानेन ब्रह्मविद्येति शब्दिता ।
यस्मात्तद्ब्राह्मसमये दत्तेयं ब्रह्मणो मया ॥

ब्राह्मकाले प्रजप्तव्या तस्मादिष्टफलप्रदा ।
ब्रह्मतादात्म्यहेतुत्वात् ब्रह्मविद्येयमीरिता ॥ –१५

ब्रह्मतत्त्वसिद्धिहेतुत्वाद्विधातुरपि भूपते ।
ब्रह्मविद्यामिमां प्राहुः श्री श्रीशद्वादशाक्षरीम् ॥

अस्या ग्रहणमात्रेण स्वयंभूश्चतुराननः ।
परब्रह्ममयो भूत्वा ससर्ज निखिलं जगत् ॥

ब्रह्मविद्याजपान्नित्यं भगवच्छक्तिरक्षया ।
शरीरे संप्रविष्टाभूद्ब्रह्मणः परमेष्ठिनः ॥

मत्तेजसा वृतो ब्रह्मा त्रिजगत्स्वपि पूज्यताम् ।
कर्तृत्वं सर्वजगतामणिमादिगुणानपि ॥

प्राप्तवान् महतीं सिद्धिं ब्रह्मतादात्म्यरूपिणीम् ।
श्री श्रीशद्वादशार्णेयं ब्रह्मविद्या ततः स्मृता ॥ –२०

अवश्यं समये ब्राह्मे जप्त्वा सर्वशुभप्रदा ।
ब्राह्मे समय उत्थाय संस्मृत्याचार्यपादुकाम् ॥

ब्रह्मविद्यां जपन्नित्यं श्री श्रीशद्वादशाक्षरीम् ।
लभते नित्यकल्याणं अक्षयाः सम्पदोऽपि च ॥

अनेनैव प्रमाणेन श्री श्रीशद्वादशाक्षरी ।
राज्ञी सकलविद्यानामधिकाभूच्छ्रुतिष्वपि ॥

यद्विद्या जपहोमाद्यैः कल्याणानि दिने दिने ।
सिद्धानि सैव सर्वासां विद्यानामधिका स्मृता ॥

यद्वक्त्राल्लभते विद्या यस्मिन् सुदिवसे नृप ।
आरभ्य तद्दिनं नित्यं यतः श्रेयः परम्परा ॥ —२५

सर्वारिष्टनिवृत्तिश्च स एव भगवन्मयः ।
विज्ञेयः परमाचार्यस्तमेव सततं विभुम् ॥

अर्चयेद्धनधान्याद्यैः पादसंवाहनादिभिः ।
नाचरेन्मनसा द्रोहमपि तस्य गुरोः क्वचित् ॥

न निन्दामपिकुर्वीत मनसा कुत्रचित्क्वचित् ।
न तस्य निन्दाश्रवणं यत्रकुत्रापि वा चरेत् ॥

ब्रह्मविद्याप्रदाचार्यचित्तक्षोभो भवेद्यदि ।
पुत्रमित्रकलत्रादि सम्पद्भ्यः प्रच्यवन्तिते ॥

ब्रह्मविद्याप्रदाचार्यनिन्दां श्रुत्वापि वा सकृत् ।
ग्रामसूकरतां प्राप्य चण्डालेष्वपि गीयते ॥ —३०

पुण्येषु देशकालेषु ब्रह्मविद्याप्रदं गुरुम् ।
त्यक्त्वान्यस्मै धनं धान्यमलङ्कारादिकं शुभम् ॥

अपि ब्रह्मविदे दत्वा भगवद्विमुखो भवेत् ।
श्रुत्युक्तं विहितं कर्म त्यक्त्वान्यत्र रतो द्विजः ॥

आचन्द्रार्कं महाघोरनरकेषु निमज्जति ।
आचार्यपत्नीपुत्रादि पोषणं नित्यमादरात् ॥

वेदैरपि च वेदान्तैर्ब्रह्मविद्भिश्च चोदितम् ।
तस्मादवश्यमाचार्यचरणाम्बुरुहद्वयम् ॥

पूजयित्वैव रत्नौघैर्धनैर्वासोभिरादरात् ।
अपि ब्रह्मविदेऽन्यस्मै ददातु न ददातु वा ॥ —३५

आचार्यपूजनं साक्षाद्भगवत्पूजनं विदुः ।
तत्पत्नीपूजनं साक्षान्महालक्ष्म्यर्चनं विदुः ॥

आचार्यसन्निधौ तस्य पुत्रमाचार्यवद्यजेत् ।
आचार्यपत्नीपुत्राणामसान्निध्ये श्रियःपतेः ॥

सन्निधौ सकलं वस्तु देशे काले समर्पयेत् ।
तत्सर्वमर्पितं वस्तु गत्वापि बहुयोजनम् ॥

आचार्यायार्पयेत्तस्य पत्न्यै पुत्राय वार्पयेत् ॥
पौत्राय वाथ तद्भ्रात्रे गुरुद्रव्यं समर्पयेत् ॥

निषिद्धाचारकरणादनिषिद्धस्यवर्जनात् ।
अन्धंतमः प्रविशति यावदाभूतसंप्लवम् ॥ —४०

तस्मादवश्यमाचार्यपत्नीपुत्रादिपोषणम् ।
कर्तव्यमन्वहं नित्यं प्रयत्नेनापि साधकैः ॥

पुण्येषु देशकालेषु जपहोमादिकर्मसु ।
आचार्यदक्षिणा देया साङ्गकैवल्यसिद्धये ॥

अज्ञाते स्वगुरोर्वंशे यत्र कुत्रापि भूमिप ।
वस्तु बृह्मविदे देयं श्रोत्रियाय कुटुम्बिने ॥

यदा देवालयं कुर्यादाचार्यार्पितवस्तुना ।
आचार्यपत्नीपुत्रादि पोषणं कार्यमन्वहम् ॥

पितृसम्पोषणं पश्चात्पत्नीपुत्रादिपोषणम् ।
आचार्यं मां विजानीयात्तत्पत्नीमपि च श्रियम् ॥ —४५

तत्पुत्रं च विधातारं तत्पौत्रमपि शङ्करम् ।
तद्वंशसम्भवान्विद्धि सनकादीन्महामते ॥

स्वर्गभोगोऽक्षयस्तस्य पितुर्मातुश्च पोषणात् ।
पत्न्यादिपोषणेनेह सौख्यमक्षय्यमश्नुते ॥

आचार्यपत्नीपुत्रादिपोषणादन्वहं नृप ।
एतत्कळेवरान्तेऽस्य मत्स्वरूपं ददाम्यहम् ॥

त्यजेत् स्वमातापितरौ त्यजेदन्यान् गुरूनपि ।
त्यजेच्च पत्नीपुत्रादीन् त्यजेद्भ्रातॄंश्च बान्धवान् ॥

रश्मिमालाप्रदाचार्यं प्रलयेऽपि न सन्त्यजेत् ।
मातरं पितरं वापि भ्रातरं बान्धवं तु वा ॥ —५०

पुत्रं कळत्रमथवा वेदविद्यागुरुं तु वा ।
आचार्यनिन्दाकर्तारं हन्याद्वाथ परित्यजेत् ॥

निन्दन्तु बान्धवास्सर्वे त्यजन्तु स्त्रीसुतादयः ।
जना हसन्तु मां दृष्ट्वा राजानो दण्डयन्तु वा ॥

आचार्यचरणाम्भोजद्वयमेव गतिर्मम ।
एवमापद्गतस्यापि मतिर्यस्य भवेत् दृढा ॥

सन्तरति संसारं भुक्तिं मुक्तिञ्च विन्दति ।
जनाः स्तुवन्तु कुत्सन्तु लक्ष्मीस्तिष्ठतु गच्छतु वा ॥

मृतिरद्य युगान्ते वा स्वाचार्यं न परित्यजेत् ।
ब्रह्मविद्याप्रदः स्वामी ब्रह्मविद्याप्रदः पिता ॥ —५५

ब्रह्मविद्याप्रदो माता ब्रह्मविद्याप्रदो गुरुः ।
ब्रह्मविद्याप्रदः साक्षादाचार्यो नान्य उच्यते ॥

दशसंवत्सरं वापि शतसंवत्सरन्तुवा ।
संसेव्य भगवद्रूपमाचार्यं करुणानिधिम् ॥

ब्रह्मविद्यामधीयीत श्री श्रीशद्वादशाक्षरीम् ।
प्रणवं प्रथमोष्माणं वामनेत्रविभूषितम् ॥

जातवेदसमारूढं बिन्दुयुक्तं समुद्धरेत् ।
तदेव बिन्दुरहितं तृतीयान्तस्थमप्यथ ॥

क्षेत्रेशं सचतुर्थञ्च स्पर्शान्त्यारूढमप्यथ ।
सदीर्घं वामपादाग्रबीजं वह्निमतःपरम् ॥ —६०

मुखवृत्तसमायुक्तं वायुबीजमतःपरम् ।
एकत्रिंशाक्षरं पश्चाद्दीर्घस्वरविभूषितम् ॥

चत्वारिंशाक्षरं वायुदीर्घविन्दुबिभूषितम् ।
हृदयेन समायुक्तं श्री श्रीशद्वादशाक्षरी ॥

उक्तेयं बृम्हविद्याख्या वेदतत्त्वार्थसङ्ग्रहा ।
सर्वयोगमयी सर्वयागतीर्थस्वरूपिणी ॥

सर्वविद्यामयी सर्ववाञ्छितार्थफलप्रदा ।
सर्वपातकसंहर्त्री सर्वव्याधिविनाशिनी ॥

हर्त्रीसमस्तविपदां कर्त्री सकलसम्पदाम् ।
आयुरारोग्यपुत्रार्थराज्यलक्ष्मीसमृद्धिदा ॥ —६५

ब्रम्हतादात्म्यसंसिद्धिहेतुभूता सनातनी ।
मयापि वर्णितुं नैव शक्येयं द्वादशाक्षरी ॥

य इच्छेन्नित्यकल्याणमक्षयाः सर्वसम्पदः ।
एकेन जन्मनैवान्ते भगवत्पदमक्षयम् ॥

अवश्यं तेन जप्तव्या श्री श्रीशद्वादशाक्षरी ।
ब्रम्हतादात्म्यमन्विच्छन् राज्यलक्ष्मीमथाक्षयाम् ॥

ब्राम्हे काले जपेन्नित्यं ब्रम्हविद्यां महामते ।
चिन्तामण्यादिरत्नानि गावः कामदुघादयः ॥

पारिजातादयो वृक्षाः ब्रम्हविद्याप्रजापिनः ।
मन्दिरे निवसन्त्येव यावदाचन्द्रतारकम् ॥ –७०

देवत्वममरत्वं वा ब्रम्हर्षित्वमथाक्षयम् ।
ब्रम्हविद्यानुसन्धानमहिम्नात्तैवलभ्यते ॥

बहुजन्मसहस्रेषु यागाः सम्पूर्णदक्षिणाः ।
कृताश्चेदथ वै तेन लभ्यते द्वादशाक्षरी ॥

ब्रम्हविद्यानुसंधानं रश्मिमालानुचिन्तनम् ।
नाल्पेन तपसालभ्यमिहलोके महीयते ॥

ब्रम्हविद्यामिमां नित्यं श्री श्रीशद्वादशाक्षरीम् ।
आचार्यानुग्रहाद्ब्राम्हे काले जप्त्वान्वहं नृप ॥

सहस्रं वा पञ्चशतं चतुश्शतमथापि वा ।
त्रिशतं वा शुचिर्धीमान् स्मृत्वाचार्यस्य पादुकाम् ॥ –७५

रश्मिमालामनुस्मृत्य पञ्चधा वा त्रिधापि वा ।
अनेन जन्मनैवासौ मत्कलासहितोभवेत् ॥

नासाध्यं विद्यते भूमौ त्रिदशैरपि दुर्लभम् ।
अथापि ब्रम्हरुद्राद्यास्सनकाद्याश्च योगिनः ॥

ब्रम्हविद्याजपादेव संप्राप्ताः सिद्धिमक्षयाम् ।
आयुरारोग्यमैश्वर्यं पशवश्च वसूनिच ॥

भोगा अष्टविधाश्चापि प्रजप्तुर्नास्यदुर्लभाः ।
आचार्यपादुकायुग्मपूजकस्य दिने दिने ॥

ब्रम्हविद्यानुसन्धानकर्तुर्ब्राम्हे मुहूर्तके ।
ब्रम्हविद्यानुसन्धानानन्तरं रश्मिजापिनः ॥ —८०

दासीव सततं तस्य गृहे लक्ष्मीरचञ्चला ।
धनधान्यकुलावाजि मुक्तारत्नौघसङ्कुला ॥

किञ्च वागीश्वरी साक्षात्किङ्करीव त्तदानने ।
आविर्भवति विद्याभिस्सङ्कुला सततं नृप ॥

साङ्गेषु सर्ववेदेषु सप्तकोटिमनुष्वपि ।
न दृश्यते महाविद्या द्विदैवत्या महामते ॥

सर्वेष्वपि च वेदेषु विद्यासु निखिलास्वपि ।
चूडामण्यात्मिकैकैव ब्रह्मविद्या परा नहि ॥

लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ ।
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहावह्नी प्रभारवी ॥ —८५

अग्नीषोमौ बिन्दुनादौ तथा प्रकृतिपूरुषौ ।
स्त्रीपुंरूपाणि सर्वाणि श्री श्रीपत्यंशजानि हि ॥

श्री श्रीशद्वादशार्णेयं तस्मात्सर्वमयी भवेत् ।
सर्वविद्यामयीं तस्माच्छ्री श्रीशद्वादशाक्षरीम् ॥

जपन्विराण्मयः साक्षादसौ नारायणो भवेत् ।
चराचरसमेतानि भुवनानि चतुर्दश ॥

ब्रह्मविद्यानुसंधातृदेहे तिष्ठति सन्ततम् ।
असौ विश्वंभरस्साक्षाद्ब्रह्मविद्याप्रजापकः ॥

असावेव हरिर्ब्रह्मा शङ्करोऽसौ महीपते ।
आचार्यपादुकायुग्ममभ्यर्च्यान्वहमादरात् ॥ –९०

ब्रह्मविद्यानुसन्धानं ये कुर्वन्ति दिने दिने ।
गृहे स्वर्गसुखं तेषामक्षयं स्याद्दिने दिने ॥

गर्विताः प्रणमन्त्येषां भूपाः किङ्करतां गताः ।
शत्रवो मित्रतां यान्ति पापञ्च सुकृतायते ॥

भोगो योगायते तेषां वैद्यः स्याद्धर्मराडपि ।
धनेशशक्रमुख्याश्च सुराः कैङ्कर्यमन्वहम् ॥

कुर्वन्त्यपि महेशाद्याः सुहृत्त्वं प्राप्नुवन्ति हि ।
योगिनः सनकाद्याश्च वसिष्ठाद्या महर्षयः ॥

अपि सम्पूजयन्त्येनं ब्रह्मविद्याप्रजापिनम् ।
आचार्यचरणाम्भोजद्वयार्चनरतोऽन्वहम् ॥ –९५

ब्रह्मविद्यानुसंधाता यत्र तिष्ठति भूपते ।
सिद्धक्षेत्रं तदेवोक्तं समन्ताद्योजनायुतम् ॥

तत्रैव सर्वतीर्थानि निवसन्ति पदे पदे ।
असाध्यं यद्धि देवानामपि द्वीपान्तरस्थितम् ॥

सततं तस्य साध्यं स्याद्ब्रह्मविद्याप्रजापिनः ।
ब्रह्मविद्यानुसंधानादसुरान्वयसंभवाः ॥

ब्रह्मतादात्म्यसं सिद्धिं सर्वेगच्छन्तिभूपते ।
तेन वेदा अधीताः स्युश्चत्वारस्सरहस्यकाः ॥

तद्गृहद्वारि तिष्ठन्ति सिद्धयोष्टाणिमादयः ।
चण्डिकाद्या मातृगणाः रक्षन्त्येनंस्वपुत्रवत् ॥ —१००

तस्मादियं महाविद्या श्री श्रीशद्वादशाक्षरी ।
आचार्यचरणांभोजद्वयाराधनपूर्विका ॥

उपासितव्या यत्नेन प्रत्यहं नियतव्रतैः ।
अनुत्तरब्रह्मशतरहस्ये मुक्तिसाधने ॥

इतिदाशरथीयेऽस्मिंस्तन्त्रे वेदार्थसंग्रहे
उक्त एकादशाध्यायो ब्रह्मविद्यार्थसाधनः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे

वेदार्थसंग्रहे एकादशोऽध्यायः ॥

—oo:o:oo—

## ॥ अथ द्वादशोऽध्यायः ॥



**श्री भगवानुवाच –**

साधनं ब्रह्मविद्यायाः शृणुराजन् प्रवक्ष्यते ।
यस्य विज्ञानमात्रेण ब्रह्मविद्याशु सिध्यति ॥

वेदवेदान्तशास्त्रौघसारभूता सनातनी ।
ब्रह्मविद्या द्विदैवत्या श्री श्रीशद्वादशाक्षरी ॥

अनया सदृशी विद्या न च दृष्टा न च श्रुता ।
साधनं ब्रह्मविद्यायाः शृणु वक्ष्यामि भूपते ॥

आचार्यपादुकाविद्यां ब्राह्मे समय उत्थितः ।
शिरस्यञ्जलिमाधाय दश द्वादशधापि वा ॥

प्रजप्त्वाचार्यपादाब्जारूढं श्रीपादुकाद्वयम् ।
अनन्यदर्शनो दृष्ट्वा सम्पूज्यापि स्वशक्तितः ॥ —५

यत्किञ्चिद्दक्षिणां नित्यं समर्प्य नियतव्रतः ।
ब्रह्मविद्यां जपेत्पश्चाच्छ्री श्रीशद्वादशाक्षरीम् ॥

अथवा प्रातरुत्थाय प्रजप्त्वाचार्यपादुकाम् ।
आचार्यपादुकाविद्याभावेऽपि स्वस्य मूर्धनि ॥

आचार्यचरणांभोजद्वयं ध्यात्वा प्रसन्नधीः ।
मानसैः स्वर्णपुष्पाद्यैस्समभ्यर्च्योपचारकैः ॥

ब्रह्मविद्यां जपेन्नित्यं श्री श्रीशद्वादशाक्षरीम् ।
"ऋषि"रस्य महायोगी साध्यो नारायणो विभुः ॥

ऋषिर्ब्रह्माथवोद्दिष्टश्छन्दो जागतमुच्यते :
लक्ष्मीनारायणौ सर्वजगतः पितरौ विभू ॥

द्विदेवतात्वाद्विद्याया देवतेत्युच्यते नृप ।
स्वामिनौ सर्वजगतां युवानावतिसुन्दरौ ॥

चित्कलापरमात्मानौ देवता प्रोच्यते नृप ।
त्रयीजंत्विति तद्बीजं बीजमत्र नृपोत्तम ॥

शक्ती रतिस्समुद्दिष्टा लक्ष्मी लक्ष्मीशयोरथ ।
प्रीत्यर्थं विनियोगोऽत्र समुदाहृतइष्टदः ॥

षड्दीर्घप्रणवाद्येन चिद्बीजेन षडङ्गकम् ।
विन्यस्य परमात्मानं ध्यायेच्चित्कलयान्वितम् ॥

अयोध्यानगरेऽनन्तकोटियोजनविस्तृते ।
कल्पवाटीसमायुक्ते सन्तानारामशोभिते ॥

हरिचन्दनवृक्षौघारामसाहस्रशोभिते ।
मन्दारवाटीसहिते पारिजातवनावृते ॥

पुष्परागमहारत्नप्राकारेणबिराजिते ।
पद्मरागाख्यमाणिक्यप्राकारेणाथ शोभिते ॥

गोमेदरत्नप्राकारवज्रप्राकारशोभिते ।
वैडूर्यरत्नप्राकारशोभितेऽमरसेविते ॥

इन्द्रनीलमहारत्नप्राकारेण च शोभिते ।
मुक्ताफलमहारत्नप्राकारेणाथ वेष्टिते ॥

तथा मरतकाभिख्यमणिप्रकारसंवृते ।
रम्यविद्रुमरत्नौघप्राकारेण च वेष्टिते ॥ —२०

नवरत्नमये तत्र मण्टपे सुमनोहरे ।
तस्मिन् मणिमयस्तम्भसहस्रायुतशोभिते ॥

तत्र चाधारशक्त्यादिधृते हीरहिरण्मये ।
नानारत्नमये दिव्ये नानामन्त्रमये शुभे ॥

तस्मिन्नष्टदले पद्मे मन्त्राक्षरमये शुभे ।
कर्णिकायां सुरम्यायां लक्ष्मीबीजे शुभाक्षरे ॥

तस्मिन् बालार्कसाहस्रकोटितुल्यप्रभान्विते ।
देवो नारायणः श्रीमानासीनः पङ्कजासने ॥

ईश्वर्यासह विश्वेशो वासुदेवः सनातनः ।
मन्दारकेतकीजातीकबरीकृतवेषवान् ॥ —२५

स्निग्धबिम्बफलाभौष्ठः सुस्मितावनपङ्कजः ।
अनर्घ्यमौक्तिकाभासदन्तावलिविराजितः ॥

हरिचन्दनलिप्ताङ्गः कस्तूरीतिलकाञ्चितः ।
पीन्नतांसभुजैर्दोर्भिश्चतुर्भिरुपशोभितः ॥

जपाकुसुमसङ्काश करपल्लवशोभितः ।
स्फुरत्केयूरकटकैरङ्गुलीयैश्च शोभितः ॥

श्रीवत्सकौस्तुभाभ्याञ्च शोभितः पृथुवक्षसा ।
मुक्ताहारैस्सुशोभाद्यै र्दिव्यमाल्यैरलङ्कृतः ॥

बालार्कसहस्रज्योत्स्नापीताम्बरयुगावृतः ।
माणिक्यनूपुरोपेतपदयुग्मविराजितः ॥ —३०

अकलङ्कितचन्द्राभनखपङ्क्तिविराजितः ।
रक्तोत्पलदलश्लक्ष्णशुभाङ्घ्रियुगगपङ्कजः ॥

पाञ्चजन्यरथाङ्गाभ्यां विराजितकरद्वयः ।
इतराभ्यां श्रियं गाढमाश्लिष्य जगदम्बिकाम् ॥

स्फुरद्दिव्यलताकान्तासिताभ्रइव राजते ।
तप्तजाम्बूनदश्लक्ष्णकान्त्या लक्ष्म्या निरन्तरम् ॥

पदेऽत्र परमे क्रीडत्यत्र साक्षाज्जगत्पतिः ।
तप्तकाञ्चनसंकाशा सर्वाभरणभूषिता ॥

दिव्यचन्दनलिप्ताङ्गी कनकाम्बरभूषणा ।
सुस्निग्धनीलकुटिलकचभारविराजिता ॥ —३५

मन्दारपारिजातादिदिव्यपुष्पस्रगन्विता ।
मणिरत्नसुसीमन्ता कस्तूरीतिलकाञ्चिता ॥

रत्नावतंसशोभाढ्या चिकुरान्तेऽळिसन्निभा ।
पीनोत्तुङ्गस्तनाभ्याञ्च सुखयन्ती हरेरुरः ॥

केयूराङ्गदहाराद्यैर्भूषणैरतिशोभिता ।
आरूढयौवनानित्यं सर्वलोकैकरक्षिणी ॥

अन्योन्यश्लिष्टहृद्बाहुदिव्याभरणशोभितौ ।
दिव्यस्रग्वस्त्रसंच्छन्नौ युवानावतिसुन्दरौ ॥

शरण्यौ सर्वलोकानां शरणागतवत्सलौ ।
पितरौ सर्वजगतां नित्यानन्दसमन्वितौ ॥ —४०

कर्तारौ सर्वजगतां विश्वरक्षणतत्परौ ।
सर्वसम्पत्प्रदातारौ सर्वविद्याधिनायकौ ॥

नीलादेव्याचभूदेव्या वामदक्षिणशोभितौ ।
नवभिर्विमलाद्याभिः शक्तिभिः परिवेष्टितौ ॥

ब्रह्मरुद्रमहेन्द्रादिशिरोमाणिक्यकान्तिभिः ।
विराजितपदद्वन्द्वौ भक्तत्राणपरायणौ ॥

रत्नसिंहासनासीनौ राजिताखिलभूषणौ ।
परस्परतपोराशिफलभूतौ जगत्पती ॥

योगिहृत्पद्मसम्पूज्यौ नित्यदैवतसेवितौ ।
सिद्धैःसाध्यैस्सदाध्येयौ भक्तानामिष्टसिद्धिदौ ॥ –४५

लक्ष्मीनारायणौ नित्यं भजामि प्रत्यहं विभू ।
लक्ष्मीनारायणावित्थं ध्यात्वा हृत्पद्ममध्यगौ ॥

प्रजपेत् समये ब्रूम्हे श्री श्रीशाद्वादशाक्षरीम ।
ब्रूम्हविद्याप्रदाचार्यमथवाहृदयाम्बुजे ॥

ध्यात्वा नारायणं साक्षात्सर्वभूषणभूषितम् ।
तस्यपत्नीं श्रियं ध्यात्वा सर्वालङ्कारशोभिताम् ॥

आचार्यपत्नीमाचार्यं लक्ष्मीनारायणौ विभू ।
अभेदेनैव सततं ध्यात्वा विद्यामिमां जपेत् ॥

आचार्यं मां विजानीहि तत्पत्नीमपि च श्रियम् ।
भेदो नास्त्येव नास्त्येव स्वाचार्यस्य श्रियः पतेः ॥ –५०

अथवा सच्चिदानन्दस्वस्वरूपस्थमव्ययम् ।
रवीन्दुकोटिसदृशं मनोवाचामगोचरम् ॥

निष्कलङ्कं निरुपमं तेजोरूपं परात्परम् ।
ध्यात्वा जप्त्वा ब्रूम्हविद्यां साक्षाद्ब्रूम्हमयो भवेत् ॥

एकैवेयं द्विदैवत्या लक्ष्मीनारायणी शुभा ।
अनया सदृशीविद्या नास्तिनास्त्यधिकापिवा ॥

यां विद्यां जपतो नित्यं कल्याणं सकलं भवेत् ।
अमुत्रापि जपादस्य जायेत शुभमक्षयम् ॥

शुभे मासि शुभे लग्ने दिवसे च शुभे नृप ।
ब्रह्मविद्यादि विद्यानां कुर्यादध्ययनं नृप ॥ —५५

सद्गुरुः शुभदः प्रोक्तः सन्मासः शुभदः स्मृतः ।
सद्विद्या शुभदा ज्ञेया सल्लग्नं शुभदायकम् ॥

मधुमासे महद्दुःखं साधकस्य प्रजायते ।
माधवे मासि लभते रत्नसम्पदमक्षयाम् ॥

ज्येष्ठे मरणमाप्नोति वियोगमपि बन्धुभिः ।
आषाढे पुत्रमित्रादिवियोगं प्राप्नुयाद्ध्रुवम् ॥

श्रावणे महतीं लक्ष्मीं सम्प्राप्नोत्यचलां शुभाम् ।
मासि भाद्रपदे देहपीडां प्राप्नोति दारुणाम् ॥

मुक्तामाणिक्यसम्पूर्णामाश्विने लभते श्रियम् ।
वागैश्वर्यं कार्तिके स्यादवार्यकरुणावतः ॥ —६०

मार्गशीर्षे भवेल्लक्ष्मीर्धनधान्यादिसङ्कुला ।
ज्ञानक्षयो भवेत्पुष्ये पूषसङ्क्रमणं विना ॥

साक्षाद्भगवतो लक्ष्म्या अपि संदर्शनं नृप ।
जायते माघमासेऽस्य किञ्चित्सिध्यन्ति सिद्धयः ॥

फाल्गुने मासि सिद्धिःस्यात्रिदशैरपि दुर्लभा ।
द्वितीया च तृतीया च पञ्चमी सप्तमी शुभा ॥

दशम्येकादशी शुक्ला द्वादशी च त्रयोदशी ।
पौर्णमास्यपि विद्यानां सिद्धिदास्तिथयः शुभाः ॥

सिद्धिदां केचिदप्याहुश्शुक्लपक्षाष्टमीं शुभाम् ।
आदित्यसोमसौम्यानां जीवभार्गवयोस्तथा ॥ —६५

वाराश्शुभप्रदा ज्ञेया हानिदौ भौमभानुजौ ।
एतेषु शुभकालेषु ब्राह्मस्समय उत्तमः ॥

शुभग्रहाणां दृष्ट्यान्ये मुहूर्ता अपि सिद्धिदाः ।
तस्मादवश्यं सर्वज्ञं श्रोत्रियं वेदपारगम् ॥

सर्वागमरहस्यज्ञमाचार्यं वृणुयाद्विभुम् ।
देशकालावविज्ञाय यन्त्रपूजादिकानपि ॥

रहस्यमपि विद्यानामविज्ञाय महीपते ।
यः प्रयच्छति सद्विद्यां यो गृह्णाति महीपते ॥

तावुभावपि दुःखौघैरिहापिसहितौ नृप ।
गच्छतोंधंतमः पश्चाद्यावदाचन्द्रतारकम् ॥ —७०

भूयोऽप्यवश्यं वेदेषु धर्मशास्त्रेषु पारगम् ।
सर्वागमरहस्यज्ञं वैदिकाचारतत्परम् ॥

बहुयोजनसाहस्रमपिगत्वा महीतले ।
आचार्यमाश्रयेद्धीमानपि प्राणधनादिकम् ॥

दत्वा रहस्यं विद्यानां साङ्गमाचार्यवक्त्रतः ।
विज्ञायाथ महाविद्यां गृहीत्वा तन्मुखाम्बुजात् ॥

तमेव तोषयेन्नित्यमाचार्यं भगवन्मयम् ।
गुरून् पूर्वोपदेष्टॄंश्च काले स्वगृहमागतान् ॥

यथाशक्त्यार्चयेत्तत्र नियतो नास्ति भूपते ।
भगवद्रश्मिसहितां ब्रह्मविद्यापुरस्सराम् ॥ —७५

श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ।
यो ददाति स आचार्यस्साक्षान्नारायणात्मकः ॥

सप्तद्वीपवतीं पृथ्वीं धनधान्यौघमङ्कुलाम् ।
आचार्याय समर्प्यापि ऋणवानेव सन्ततम् ॥

तस्माद्योगं च कालं च सरहस्यान् मनूनपि ।
विज्ञायैव प्रदातव्या विद्याः सकलसिद्धिदाः ॥

सर्वज्ञस्यैव सान्निध्ये गृह्णीयात्सकलान्मनून् ।
गृहीत्वाज्ञस्य सान्निध्ये मनूनप्यबलान्नृप ॥

अवश्यमपिगृह्णीयाद्भूयः सर्वज्ञसन्निधौ ।
नियमेन तथाचार्यपादाब्जयुगळे शुभे ॥ —८०

अर्पयेद्दक्षिणां साङ्गां जपहोमादिकर्मसु ।
अश्वमेधादियागानां नित्यं सुकृतमिच्छताम् ॥

आचार्य दक्षिणा देया यत्किञ्चिदपि भूपते ।
अश्वमेधादियागेषु धनं कोटिसहस्रशः ॥

दत्वा यत्फलमुद्दिष्टं धर्मशास्त्रश्रुतिष्वपि ।
आचार्यदक्षिणादानात्तत्फलं प्रत्यहं स्मृतम् ॥

अश्वमेधादियागेषु दत्वा कोटिसहस्रशः ।
शक्रलोकेऽक्षयाँल्लोकान् प्राप्नुवन्ति बुधोत्तमाः ॥

नष्टे पुण्ये मर्त्यलोकं भूयोऽपि प्राप्नुवन्ति हि ।
आचार्यदक्षिणादानाज्जपहोमादिकर्मसु ॥ —८५

पुनरावृत्तिरहितं शाश्वतं पदमश्नुते ।
आचार्यचरणाम्भोजद्वयार्चनरतास्सदा ॥

ब्रह्मविद्याजपासक्ता रश्मिमालानुचिन्तकाः ।
समस्तन्याससहितश्रीमदष्टार्णचिन्तकाः ॥

समानरूपाः श्रीविष्णोर्दिव्यालङ्कारभूषिताः ।
दिव्यस्रग्वस्त्रसंछन्ना दिव्यचन्दन चर्चिताः ॥

अयोध्यानगरे साक्षात्पदे भगवतः शुभे ।
ब्रह्मतादात्म्यमापन्ना मोदन्ते तस्य सन्निधौ ॥

गत्वात्र न निवर्तन्ते विष्णुना सहसंस्थिताः ।
अविच्छिन्ना सदा तेषां विष्णुना सङ्गतिः शुभा ॥

तत्समानसुखं नित्यं प्राप्नुवन्ति मनीषिणः ।
यत्र यत्र हरेर्लोकमाविशन्ति मनीषिणः ॥

नाप्नुवन्ति पुनः सर्गं सर्गस्थाइव जन्तवः ।
यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः ॥

तथा तेनैव जायन्ते मर्त्यलोके यथेच्छया ।
पुनस्ते नैव यान्तिस्म तत्पदं शाश्वतं परम् ॥

न कर्मबन्धनं जन्म ब्रह्मविद्यारतात्मनाम् ।
भगवत्किङ्करत्वं वै मोक्षमाहुः पुरातनाः ॥

न दास्यं वै परेशस्य बन्धनं परिकीर्तितम् ।
सर्वबन्ध विनिर्मुक्ता हरिदासा निरामयाः ॥

आब्रह्मभुवनाल्लोकाः पुनरावृत्तिलक्षणाः ।
कर्मबन्धमयादुःखमिश्रसौख्यभयप्रदाः ॥

बह्वायासफला दुःखजन्मकारणहेतवः ।
स्वर्गोपभोगसंस्थाये विषमिश्राशना इव ॥

स्वर्गसंस्थान्नरान् दृष्ट्वा क्षीणे कर्मणि देवताः ।
कुपिताः पातयन्त्येव संवृते कर्मबन्धने ॥

तस्मात्स्वर्गसुखं भूप बहुयत्नैकसाधनम् ।
अनित्यं कुटिलं दुःखमिश्रं योगी परित्यजेत् ॥

यज्ञदानतपोरूपं कर्मवेदेषु चोदितम् ।
ब्रह्मार्पणधिया कुर्वन् कर्मबन्धैर्नलिप्यते ॥ —१००

आचार्यपत्नीपुत्रादीनभ्यर्च्य प्रत्यहं ततः ।
वेदमार्गरतो नित्यं ब्रह्मविद्याजपेरतः ॥

रश्मिमालासहितश्री श्रीमदष्टाक्षरीं जपन् ।
इहापि ब्रह्मभूतोऽसौ शाश्वतं पदमाप्नुयात् ॥

आचार्यचरणांभोजद्वयमेत्र सदा स्मरेत् ।
शुचिना संप्रजप्तव्या श्रीश्रीशद्वादशाक्षरी ॥

आद्यं बीजद्वयं त्यक्त्वा श्री श्रीपति दशाक्षरीम् ।
सततंसंस्मरेध्दीमान् यदीच्छेच्छ्रेय आत्मनः ॥

अरण्येऽनरण्येवा स्वगृहेवा नदीतटे ।
चण्डाल वाटिकायां वा राजविद्वत्सभासु वा ॥ —१०५

आसीनो वा शयानोवा तिष्ठन् गच्छन्नथापिवा ।
शुचिरप्यशुचिर्वेमां श्री श्रीपतिदशाक्षरीम् ॥

आचार्यानुग्रहं प्राप्य सततं संस्मरन्नृप ।
महापापौघपापौघैरविमुक्तः सुदारुणैः ॥

व्रतकोटितपस्तीर्थमहायागफलान्वितः ।
व्रजत्यन्ते भगवतः पदं शाश्वतमक्षयम् ॥

दशार्णविद्यामात्रं वा सदाचार्यकृपान्वितः ।
संस्मृत्य प्रत्यहं भूमाविहापि श्रियमक्षयाम् ॥

संप्राप्य सर्वविद्यानामाधिपत्यञ्च दुर्लभम् ।
पुत्रपौत्रवतीमृद्धिं प्राप्य भोगाननेकशः । —११०

देहान्ते तत्पदं धाम व्रजत्येव श्रियःपतेः ।
वेदेषु विहितं कर्म यज्ञदानतपोमयम् ॥

तन्निष्ठस्सततं भूत्वा भगवन्तमनुस्मरेत् ।
श्रुतिस्मृतीरिता तेन लोकानां हितकारिणी ॥

श्रीशाङ्गोल्लङ्घकः सर्वजप्रद्द्रोही महीपते ।
अध्येतव्यास्सदा वेदाः कार्या यागाः सदक्षिणाः ॥

दातव्यान्यपि दानानि सत्पात्रेभ्यो विशेषतः ।
न विद्यया केवलया तपसावापि पात्रता ॥

यत्र वृत्तमिमे चोभे तत्पात्रं संप्रचक्षते ।
वेदानधीत्यसततं वेदस्यार्थं विचारयन् ॥ —११५

कुर्वन् वैदिकमाचारं पात्रभूतो भवेद्द्विजः ।
वेदाध्ययनहीनश्च वेदाचारविवर्जितः ॥

जीवन्नेव स शूद्रः स्यात्तन्मुखं नावलोकयेत् ।
वेदहीनस्य विप्रस्य न वाक्यं श्राव्यमादरात् ॥

अपात्रादानान्नरकं पात्रदानात्परं पदम् ।
सत्पात्राणां सहस्रेभ्यो दत्वा कोटिसहस्रशः ॥

धनं यत्फलमुद्दिष्टं तदाचार्यस्य पादयोः ।
निष्कमात्रसुवर्णं वा दत्वा तत्फलमश्नुते ॥

रहस्यमन्यद्वक्ष्यामि शृणु राजन् महीपते ।
न वाच्यं यत्रकुत्रापि पुत्राय प्राणदाय वा ॥ —१२०

भगवद्रश्मिमालाख्य विद्या येयं मयेरिता ।
आचार्यनुग्रहादेनामनुस्मृत्यान्वहं शुचिः ॥

ब्रह्मविद्याजपाशक्तो वेदोक्ताचारतत्परः ।
सरहस्यां महाविद्यां श्रीमदष्टाक्षरीं जपन् ॥

पात्राणामुत्तमंपात्रमयमेवोच्यते बुधैः ।
वेदविद्याविहीनोऽपि यागहीनोऽपि वा सदा ॥

उक्ताचाररतोनित्यमाचार्यचरणार्चकः ।
चतुर्णामपि वेदानां नित्यमध्ययनात्फलम् ॥

अवाप्य सर्वयागानां फलं प्रत्यहमश्नुते ।
ब्रह्मार्पणधिया नित्यं कृत्वा कर्मश्रुतीरितम् ॥ —१२५

ब्रह्मणः पदमासाद्य मोदते कालमक्षयम् ।
आचार्यपत्नीमाचार्यं श्री श्रीपतिधियार्चयन् ॥

ब्रह्मविद्यां जपेद्यस्तु श्री श्रीशद्वादशाक्षरीम् ।
तं पालयति देव्येनं महालक्ष्मीः स्वपुत्रवत् ॥

भगवानपि तं नित्यं पितृवद्रक्षति ध्रुवम् ।
यस्याचार्यपदम्भोजारूढं श्रीपादुकाद्वयम् ॥

समर्चयति हस्ताभ्यां तद्धस्तं शङ्खचक्रवत् ।
यस्य नेत्रद्वयं नित्यं पादुकाद्वितयं शुभम् ॥

अनन्यदर्शनः प्रातः प्रातरुत्थाय पश्यति ।
तन्नेत्रयुगळं साक्षात्परब्रह्मेह पश्यति ॥ —१३०

आचार्यपादुकायुग्मं न मेद्यस्य शिरो नृप ।
सधारी मुकुटं तेन शिरसा रत्ननिर्मितम् ॥

आचार्य कर्णयोर्येन निर्मितं कुण्डलद्वयम् ।
ध्रियते तस्यवदनं भगवत्कलयान्वितम् ॥

वसिष्ठाद्या महाभागा जपहोमपरायणाः ।
ब्रह्मविद्यानुसन्धानाद्ब्रह्मर्षित्वमुपागताः ॥

रुद्रकोपाग्निना दग्धो दक्षः पूर्वं प्रजापतिः ।
पुनः प्राचेतसो भूत्वा ब्रह्मविद्यानुचिन्तनात् ॥

ब्रह्मत्वमाप्तवान् सर्वजगत्कर्तृत्वमप्यथ ।
पुलस्त्याद्या महाभागा ब्रह्मपुत्रा महीपते ॥ —१३५

ब्रह्मविद्याजपादेव ब्रह्मत्वं समुपागताः ।
ब्रह्मविद्यानुसन्धानमाचार्यचरणार्चनम् ॥

दुर्लभं त्रिषु लोकेषु मुनीनामपि योगिनाम् ।
तस्माच्छुभेषु कालेषु मासेषु सुशुभेष्वपि ॥

संप्राप्तव्या महाविद्या नान्यथा सिद्धिरुच्यते ।
न वार मास दोषः स्याद्ग्रहणे चन्द्रसूर्ययोः ॥

जपहोमादिकं तत्र स्वल्पमप्यवनीपते ।
अक्षयं जपहोमादि फलं स्यात्तत्र सन्ततम् ॥

रवीन्दुग्रहणे दत्तं यत्किञ्चिदपि काञ्चनम् ।
मेरुशैलसमं विद्धि तत्स्वर्णं नात्र संशयः ॥ —१४०

समस्तान्यपि दानानि रवीन्दुग्रहणे नृप ।
दातव्यानि प्रयत्नेन वित्तलोभविवर्जितैः ॥

ग्रहणेषु पुरश्चर्यां साङ्गदक्षिणयान्विताम् ।
आचार्यसन्निधौ कृत्वा महालक्ष्मीसमन्वितम् ॥

नारायणं जगन्नाथं साक्षादेव प्रपश्यति ।
पूर्वोपदिष्टा विद्याश्च रवीन्दुग्रहणे शुभे ॥

अध्येतव्याः पुनरपि स्वाचार्यवदनाम्बुजात् ।
साक्षादयं पर्वकालो महानुक्तो महर्षिभिः ॥

परोक्षकाला अन्येस्युरलभ्या अपि भूपते ।
ग्रहणे सर्वविद्यानामुक्तमासेषु सन्ततम् ॥ —१४५

माघमासो महानुक्तो माघ्यादिसहितो यदि ।
सर्वासामपि विद्यानामाचार्यवदनाम्बुजात् ॥

कार्यमध्ययनं तत्र देवतादर्शनप्रदम् ।
माघमासे प्रदेयानि सर्वदानानि भूपते ॥

ब्रह्मतादात्म्यसंसिद्धिप्रदातॄणि न संशयः ।
यत्स्यादुपनयनार्थं माघमासि प्रयच्छति ॥

ब्रह्मर्षित्वमवाप्नोति सोऽन्यस्मिञ्जन्मनि ध्रुवम् ।
माघमासे दरिद्राय विवाहधनमुत्तमम् ॥

दत्त्वा विवाहयित्वाथ पितॄनथ सहस्रशः ।
नरकस्थान् समुद्धृत्य ब्रह्मलोके महीयते ॥ —१५०

क्षीयन्ते सलिलान्यब्धेर्भौमाश्च त्रसरेणवः ।
क्षयो न तस्य पुण्यस्य तद्विष्णोश्च परेपदे ॥

यावद्भूमण्डलमिदं सशैलवनकाननम् ।
तावद्वंशाभिवृद्धिः स्यादिहलोके महीयते ॥

एकैकदिवसं माघे मासि पर्वसमंस्मृतम् ।
मखानक्षत्रसंयुक्ता पूर्णिमा तत्र या स्मृता ॥

महामाघीति सा प्रोक्ता पौर्णमासीफलप्रदा ।
वैशाखश्रावणादीनि माघमाससमानि हि ॥

चैत्रपुष्यादिमासाः स्युः पूर्वोक्ता अशुभाः स्मृताः ।
अशुभेष्वपि मासेषु रवीन्दुग्रहणं नृप ॥ —१५५

सर्वसिद्धिप्रदं ज्ञेयं सर्वदोषविवर्जितम् ।
अलभ्या अपि योगाः स्युः शुभा अशुभमास्यपि ॥

तस्माद्देशं च कालं च परीक्ष्याचार्य आदरात् ।
विद्योपदेशं कुर्वीत नान्यथा सिद्धिरुच्यते ॥

अज्ञात्वा शुभमासादि रहस्यं साङ्गमप्यथ ।
न दद्यान्नहि गृह्णीयाद्विद्याजातं महीपते ॥

बहुनात्र किमुक्तेन सारभूतं वचः शृणु ।
आचार्यचरणद्वन्द्वं भजनीयं दिने दिने ॥

ब्रह्मविद्यानुसंधानं रश्मिमाला पुरस्सरम् ।
आदौ कृत्वा प्रयत्नेन समस्तन्यास संयुता ॥ —१६०

श्रीमदष्टाक्षरीं विद्यां जपेद्ब्रह्मत्वसिद्धये ।
एतदेव परं तत्त्वं वेदान्तेषु श्रुतिष्वपि ॥

नैतस्मादपरं वेदरहस्यं तत्त्व मीरितम् ।
इति दाशरथीयेऽस्मिन् तन्त्रे वेदार्थसङ्ग्रहे ॥
उक्तोऽयं द्वादशोऽध्यायो ब्रह्मतत्त्वार्थसाधनः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे द्वादशोऽध्यायः ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

**श्री ऋश्यश्रृङ्ग उवाच —**

भूयोऽपि भगवन् साक्षाज्जानकी रमणोहरिः ।
साधनं ब्रह्मविद्यायाः कथयामास सम्भवे ॥

पुरा राजर्षिवर्याय जनकाय महात्मने ।
नारायणो महायोगी कथयामास यत्परम् ॥

**श्री भगवानुवाच –**

शृणु राजन् महीपाल निमिवंशसमुद्भव ।
साधनं ब्रह्मविद्याया न वाच्यमपि कुत्रचित् ॥

नास्त्यस्या न्यासजालं वा न पुरश्चरणादिकम् ।
न होमस्तर्पणं वापि सिद्धं विद्येयमिष्टदा ॥

गुह्याद्गुह्यतरा विद्या सारात् सारतराशुभा ।
परस्य ब्रह्मणः साक्षादाशु दर्शनसिद्धिदा ॥ –५

ब्रह्मानन्दरसावाप्तिकरी सर्वफलप्रदा ।
अवश्यं समये ब्राह्मे जप्तव्या सिद्धिमिच्छता ॥

श्रेयः परम्परामिच्छन् कल्याणानि दिने दिने ।
पूजयेत्समये ब्राह्मे ब्रह्मविद्यामिमां शुचिः ॥

सहस्रं प्रजपेन्नित्यमथ पञ्चशतं तु वा ।
शतुश्शतं जपेद्वा त्रिशतं शतमेव वा ॥

पञ्चधा वा त्रिधा स्मृत्वा भगवद्रश्मिमालिकाम् ।
संसिद्धिं महतीमिष्टां प्राप्नोत्याशु न संशयः ॥

सवितुर्ग्रहणे प्राप्ते चन्द्रस्य ग्रहणेऽथवा ।
एकभुक्ताशनो नित्यं तत्पूर्वदिवसत्रयम् ॥ –१०

स्पर्शकाले ततः प्राप्ते स्नात्वा तीर्थजले शुभे ।
सङ्कल्प्य केशवादीनि नामानि मनसोच्चरन् ॥

चतुर्विंशति सङ्ख्यानि स्नात्वा मौनेन साधकः ।
महापातककोटिभ्यः सद्य एव विमुच्यते ॥

आचार्यचरणाम्भोज युग्मप्रक्षाळनोदकम् ।
पीत्वान्तरपि शुद्धः स्यात्सद्यो निष्कल्मषो भवेत् ॥

स्नात्वाचम्य परीधाय शुभ्रं वासोयुगं ततः ।
स्निराचम्य सदाचार्यसंनिधौ शंसितव्रतः ॥

स्पर्शमारभ्य मोक्षान्तं ब्रह्मविद्यामिमां जपेत् ।
आचार्यपत्नीमाचार्यं ध्यात्वा श्रीश्रीशरूपिणौ ॥

जपान्ते भूषणैर्वस्त्रैरलङ्कृत्य समाहितः ।
पद्मरागसमायुक्तं तप्तहेमविनिर्मितम् ॥

आचार्यकर्णयोर्दत्वा कुण्डलद्वितयं शुभम् ।
मुक्तारत्नमयं वापि तत्पत्न्या अपि भूषणम् ॥

दत्वाचार्यपदाम्भोजे बहुसस्यसमन्विताम् ।
महीं दक्षिणया युक्तां गोद्वयं च समर्पयेत् ॥

अथवा भास्करस्येन्दोः प्राप्ते पर्वणि भूपते ।
सर्वाभरणसंयुक्तौ लक्ष्मीनारायणौ विभू ॥

बैल्वैर्वा तुलसीपत्रैः कमलैरुत्पलैस्तुवा ।
स्पर्शकालंसमारभ्य मोक्षकालान्त मादरात् ॥

अर्चयेत्प्रयतोविद्वान् श्रीश्रीशब्रह्मविद्यया ।
सुवर्णपुष्पलक्षेण वर्षकोटचर्चनात् फलम् ॥

अवाप्य लक्ष्मीलक्ष्मीशौ साक्षादेव प्रपश्यति ।
आचार्यदक्षिणां दद्यात् पूर्वमुक्तां ततःपरम् ॥

सालग्रामशिलामेकामपि दक्षिणयान्विताम् ।
तस्मिन्काले गुरोर्दत्वा मासात्प्रागेवसाधकः ॥

लक्ष्मी नारायणौ साक्षाच्चक्षुर्भ्यामेवपश्यति ।
प्राप्नोति सर्वश्रेयांसि प्रसादादिन्दिरापतेः ॥

सिद्धायां बृह्मविद्यायां नास्त्यसाध्यं जगत्रये ।
साधनं बृह्मविद्यायाः पुनरन्यच्चवक्ष्यते ॥ –२५

यस्यश्रवणमात्रेण जायते गतिरुत्तमा ।
"चापराशिं गतेभानौ" बृाह्मे समय उत्थितः ॥

बृम्हविद्यां प्रजप्त्वादौ भगवद्रत्निमालिकाम् ।
प्रातः स्नात्वा यथाशक्त्या गायत्रीं समुपास्य च ॥

बैल्वैर्वा तुलसीपत्रैः कुसुमैर्वा सुगन्धिभिः ।
सहस्रं पूजयेन्नित्यं श्री श्रीशौ बृम्हविद्यया ॥

दिने दिने स्वर्णपुष्पकोट्यर्चनफलं लभेत् ।
लक्ष्मीलक्ष्मीशयोर्दद्यान्नैवेद्यं कृसरं शुभम् ॥

नित्यमैकैकमिथुनं मुद्गान्नं भोजयेद्व्रती ।
वृषसङ्क्रमपर्यन्तं पूजयित्वेत्थमादरात् ॥ –३०

वृषराशिस्थिते भानौ सहस्रं त्रिशताधिकम् ।
पुष्पैर्वा तुलासीपत्रैर्बिल्वैर्वा बृम्हविद्यया ॥

अभ्यर्च्याचार्यपादाब्जं नत्वा साष्टाङ्गमादरात् ।
शतनिष्कसुवर्णं वा तदर्धं वा तदर्धकम् ॥

निष्कद्वादशकं वापि निष्कषट्कमथापि वा ।
आचार्यपादयोर्दत्वा वासोऽलङ्करणादिकम् ॥

तत्पत्न्या अपि वासांसि भूषणानि समर्पयेत् ।
विंशाढकमितान् मुद्गानथवा द्वादशाढकम् ॥

आढकार्धं तथा तत्र शर्करां वा गुडं तु वा ।
प्रस्थं वाथ तदर्धं वा घृतं धेनुसमुद्भवम् ॥

पञ्चविंशाढकान् यद्वा तण्डुलान् द्वादशाढकान् ।
पत्नीपुत्रसमेताय त्वाचार्याय समर्पयेत् ॥

ब्राह्मणान् भोजयेत्पश्चाद्द्वादशाथ सुवासिनीः ।
द्वादशार्णा महाविद्या सद्यः सिध्यति भूपते ॥

भगवद्रश्मिविद्याश्च सद्यः सिध्यन्ति तस्यहि ।
श्री श्रीशयोः प्रसादेव तस्मिन् वर्षे महीपते ॥

प्राप्नोति महतीं लक्ष्मीमचलां रत्नसङ्कुलाम् ।
धनधान्यसमायुक्तां सन्ततिव्यापिनीं ध्रुवम् ॥

प्राप्नोति महतीं वाचां सिद्धिमप्यतुलप्रभाम् ।
महदारोग्यमासाद्य दीर्घमायुरनुत्तमम् ॥

भुक्त्वेह सकलान् भोगानन्ते ब्रह्मणि लीयते ।
शुक्लतृतीया वैशाखे भृगुवासरसंयुता ॥

रोहिणीतारसहिता सन्तताक्षयसिद्धिदा ।
त्रेताद्या सा तिथिर्जन्मतिथिर्वात्र महात्मनः ॥

श्री गौरीयोगनामायं लक्ष्मीनारायणाभिधः ।
उमाशङ्करयोगश्च कथ्यते तद्दिने बुधैः ॥

एतत्पंचकयोगोऽयं दुर्लभास्त्रिदशैरपि ।
अत्र दत्तं हुतं जप्तं नित्याक्षयफलप्रदम् ॥

अक्षयायां तृतीयायामक्षयैश्वर्यवर्धनम् ।
आचार्याज्ञां समासाद्य प्रातः स्नात्वा विशुद्धधीः ॥

नित्यकर्म समाप्याथ मल्लिकापुष्पमिश्रितैः ।
विल्वपत्रसमायुक्तैः कोमलैस्तुलसीदलैः ॥

अभ्यर्च्य कुसुमैर्यावत्फलं प्राप्नोति भूतले ।
तावदेकैकतुलसीदलमात्रेण साधकः ॥

प्राप्य पुण्यं विशुद्धात्मा मुच्यते पापराशिभिः ।
त्रिशताधिकसाहस्रमर्चयेद्ब्रह्म विद्यया ॥

तुलसीदलमेकैकं मल्लिकाबिल्वमिश्रितम् ।
दत्वा श्री श्रीशयोस्तत्र शतकोटिसुवर्णजैः ॥

तत आचार्यपादाब्जयुगलं दण्डवन्नमेत् ।
फलत्रितयमादाय पनसं सुमनोहरम् ॥

अर्कनिष्कसुवर्णेन तदर्धार्धेन वा पुनः ।
निष्कद्वययुतं वापि दद्यादाचार्यपादयोः ॥

कुण्डलद्वितयं रम्यमर्पयेत्तस्य कर्णयोः ।
दद्यादाचार्यपत्न्यै च बह्वलङ्करणादिकम् ॥

एकं वासोऽपि दद्याच्च दरिद्रश्चेन्महीपते ।
गव्यं दध्यर्पयेत्पश्चादाढकं वा तदर्धकम् ॥

दद्याद्बहूनि चान्यानि फलान्याचार्यपादयोः ।
"अक्षयायां तृतीयाया" मित्थं कृत्वा द्विजोत्तमः ॥

अक्षयं सुमहत्पुण्यं त्रिदशैरपि दुर्लभम् ।
असाध्यमन्त्रसंसिद्धिमक्षयां प्राप्य भूतले ॥ —५५

लक्ष्मीनारायणौ साक्षाद्वर्षमध्ये प्रपश्यति ।
मन्दभाग्योऽपि संप्राप्य श्रियमष्टगुणान्विताम् ॥

श्रिया धनदसङ्काशो विद्यया जीवसन्निभः ।
साक्षात्कश्यपवत्पुत्रपौत्रसम्पत्तिसंयुतः ॥

भुक्त्वेह सकलान् भोगान् त्रिदशैरपिदुर्लभान् ।
अन्ते वैकुण्ठमाप्नोति दशपूर्वैर्दशावरैः ॥

"अक्षयायां तृतीयायां" दद्यादाचार्य पादयोः ।
चस्त्वर्पयति शुद्धात्मा त्रसरेणुमितं तु वा ॥

तत्तदक्षयमेवास्मै भगवानिन्दिरापतिः ।
प्रददाति न सन्देहस्तस्मिन्नेव हि वत्सरे ॥ —६०

इच्छन्नक्षयसंसिद्धिमक्षयब्रह्मदर्शनम् ।
अक्षयायां तृतीयायामित्थं कुर्यान्महीपते ॥

"अश्विने मासि संप्राप्ते वर्षमध्यमणौ नृप" ।
नवरात्राभिधं पर्वरत्नं सकलसिद्धिदम् ॥

जयावहं जयेत्सेनां दरिद्राणां धनावहम् ।
भाग्यावहमभाग्यानां साक्षाद्ब्रह्मत्व हेतुकम् ॥

तस्मिन्नेकैकदिवसं रविग्रहणसन्निभम् ।
या महानवमी तत्र समस्तफलसिद्धिदा ॥

रविपर्वशतप्रख्या विजयश्रीफलप्रदा ।
महानवम्या सदृशी न पुण्यतिथिरुच्यते ॥ —६५

महानवम्यासदृशं पर्वास्ति न हि भूतले ।
यद्यत्करोति कर्मेष्टं तन्महानवमी दिने ॥

तत्तन्मेरुसमं विद्याज्जपहोमार्चनादिकम् ।
नक्षत्रमुत्तराषाढा भार्गवो वासरो यदि ॥

परेद्युर्वैष्णवं तारं सातिथिस्सर्वदुर्लभा ।
स्वायंभुवाख्यमन्वादिसहिता सा महातिथिः ॥

साम्राज्यलक्ष्मीयोगोऽयं तत्तिथौ दुर्लभो नृप ।
अलभ्यो नामयोगोऽयं दुर्लभस्त्रिदशैरपि ॥

मन्दभाग्यो दरिद्रो वा स्खलद्वागतिबुद्धिमान् ।
नवरात्रव्रतं कुर्यादवश्यंसर्वसिद्धिदम् ॥ –७०

नवरात्रिव्रते चीर्णे यत्फलं जायतेनृणाम् ।
कोटिशोऽपिव्रतैरन्यैः कृतैर्नाप्नोति तत्फलम् ॥

साम्राज्यलक्ष्मीयोगोऽत्र प्राप्ते तन्नवमीतिथौ ।
दत्तमिष्टं हुतं जप्तमनन्तफलसिद्धिदम् ॥

साम्राज्यलक्ष्मीयोगेन समो योगोऽस्ति नापरः ।
कृतं कर्मात्रसाम्राज्यश्रियमेव ददात्यलम् ॥

प्रतिपत्तिथिमारभ्य नवम्यन्तमयादरात् ।
लक्ष्मीनारायणौ नित्यमर्चयेद्ब्रह्मविद्यया ॥

सालग्रामशिलायांवा श्रीमदष्टार्णयन्त्रके ।
एकभुक्ताशनस्तत्र ............... ॥ –७५

सहस्रं वार्चयेद्धीमान् पत्रैःपुष्पविमिश्रितैः ।
महानवम्यां प्राप्तायां सहस्रं त्रिशताधिकम् ॥

अर्चयेत्तुलसीपत्रैबिल्वैःपुष्पविमिश्रितैः ।
तत आचार्यपादाब्जं नत्वा साष्टाङ्गमादरात् ॥

सन्तप्तहाटककृतं पद्मरागसमन्वितम् ।
कुण्डलद्वितयं रम्यं प्रदत्वाचार्यकर्णयोः ॥

बहुसस्यसमायुक्तां साङ्गदक्षिणायान्विताम् ।
दत्वाचार्यपादाब्जचरणाय वसुन्धराम् ॥

सालग्रामशिलामेकां गामेकां च पयस्विनीम् ।
अलङ्कारान् बहूनन्यानपि तस्मै समर्पयेत् ॥ –८०

सुसूक्ष्माण्यपि वासांसि तत्पत्न्या अपिभूषणम् ।
दद्याद्वासोयुगं क्षौमं कार्पासं वा सुसूक्ष्मकम् ॥

सुवासिनीनामन्यासामपि वस्त्राण्यथार्पयेत् ।
महानवम्थां वसुधामाचार्यायसमर्पयेत् ॥

सप्तद्वीपवतीं पृथ्वीं धनधान्यादिसङ्कुलाम् ।
दत्वा सहस्रशः पुण्यं लभते नात्र संशयः ॥

सालग्रागशिलां शुद्धां दत्वा दक्षिणयान्विताम् ।
ब्रह्माण्डकोटिदानस्य फलमत्यन्तमश्नुते ॥

आचार्यकर्णयोर्दत्वा कुण्डलद्वितयं शुभम् ।
पितृणामपिसाहस्रं तारयेन्निरयस्थितम ॥ –८५

किञ्चास्य वंशसंभूतास्सर्वेऽपि भगवत्प्रियाः ।
दिव्यभोगसमायुक्ता जीवन्मुक्ता भवन्त्यपि ॥

दत्वा गोमिथुनं तत्र गामेकां वा पयस्विनीम् ।
साङ्गदक्षिणयायुक्तगोसहस्रप्रदानजम् ॥

फलं प्राप्य विशुद्धात्मा ब्रह्म साक्षात्प्रपश्यति ।
कर्णालंकरणं हेम ताटङ्कद्वितयं शुभम् ॥

कर्षस्वर्णमितं त्रिंशच्चिह्नितं स्वर्णमेव वा ।
मुक्ताजालसमायुक्तवालीयुगळमेव वा ॥

गुरुपत्न्यै समर्प्याथ नासिकाभरणं तु वा ।
साक्षाल्लक्ष्मीनिवासोऽस्मै भवत्यत्र न संशयः ॥ —९०

आचार्यायाथ तत्पत्न्यै दत्वा वासोयुगं शुभम् ।
दिव्याम्बरधरो दिव्यरत्नाभरणभूषितः ॥

दिव्यकन्याशतयुतं विमानमधिरोहति ।
भूदानदक्षिणा प्रोक्ता सर्वस्वं मन्दिरस्थितौ ॥

वर्षाशनमितं द्रव्यमथवोत्तमदक्षिणा ।
चतुर्विंशतिनिष्कं वा तदभावे तदर्धकम् ॥

तदलाभेतदर्धं वा वित्तलोभं विवर्जयेत् ।
महीप्रतिनिधिद्रव्यमथवा दक्षिणान्वितम् ॥

आचार्यपादयोर्देयं भूदानफलकाङ्क्षिणा ।
चत्वारोऽनड्वाहो देया भूदाने राजवल्लभ ॥ —९५

निष्कं निष्कार्धमेकंस्यान्मौल्यंचानडुहो नृप ।
चतुर्णामप्यमडुहां चतुर्निष्कमथापि वा ॥

इत्थमाचरतः पुंसः एकवारमपि प्रभुः ।
प्रसीदति हरिः साक्षान्महालक्ष्मीसमन्वितः ॥

किमसाध्यं भवेत्तस्य प्रसन्ने कमलापतौ ।
"शुक्लातृतीया वैशाखी या प्रोक्ताक्षय" संज्ञिता ॥

"आश्वयुकशुक्लनवमी" तिथिद्वयमिदंशुभम् ।
अस्मिन् दिनद्वये नित्यं सर्वमक्षय सिद्धिदम् ॥

अस्यां नवम्यां साम्राज्यलक्ष्मीयोगः सुदुर्लभः ।
लभ्यते बहुभिर्वर्षैर्दुर्लभं त्रिदशैरपि ॥ —१००

अनेन सदृशो योगो नास्त्यलभ्यो जगत्त्रये ।
परेद्युर्विजयानामदशमी श्रवणान्विता ॥

तत्रापि पुष्पैः पत्रैश्च श्री श्रीशद्वादशार्णया ।
श्री श्रीशमर्चयेद्धीमान् सहस्रं साधको नृपः ॥

तत्राप्याचार्यपादाब्जे गोयुग्मं दक्षिणान्वितम् ।
निष्कद्वयसुवर्णं वा निष्कमेकमथापिवा ॥

जयश्रियं समन्विच्छन् प्रदद्यादादरान्नृप ।
सभासु राजसान्निध्ये निवादेऽपि महद्रणे ॥

अरण्ये गिरिदुर्गे वा सततं विजयी भवेत् ।
इत्थमाचारतः पुंसो भाग्यराशिः पदे पदे ॥ —१०५

भवत्यत्र न सन्देहः सत्यं सत्यं वदाम्यहम् ।
अत ऊर्ध्वं प्रवक्ष्यामि पत्रपुष्पार्चनात्फलम् ॥

यत्कृत्वा मनुजो लोके साक्षाद्ब्रह्ममयो भवेत् ।
बिल्पत्रैः समभ्यर्च्य मासं नित्यं सहस्रकम् ॥

महापातककोटिभ्यो मासमात्रेण मुच्यते ।
अचलां महतीं लक्ष्मीं सन्ततिव्यापिनीं लभेत् ॥

मल्लिकाकुसुमैर्लक्ष्मीलक्ष्मीशौ नित्यमर्चयन् ।
सहस्रं मासमात्रेण शतजन्मसमुद्भवैः ॥

विमुक्तः पापसङ्घैश्च धनदेन समः श्रिया ।
महाकविर्महावाग्मी भवत्येव न संशयः ॥ —११०

नीलोत्पलैः समभ्यर्च्य नित्यं साहस्रमादरात् ।
महापापोपपापौघैरपिमासाद्विमुच्यते ॥

मदनेन समः कान्त्या वशीकुर्याज्जगत्त्रयम् ।
केतकीकुसुमैर्नित्यमभ्यर्च्य ब्रह्मविद्यया ॥

सहस्रं मासमात्रेण विमुक्तस्सर्वपातकैः ।
महदायुष्यमारोग्यमैश्वर्यमचलं लभेत् ॥

नन्द्यावर्तैस्समभ्यर्च्य नित्यं साहस्रमादरात् ।
महापातककोट्यापि मासमात्रेण मुच्यते ॥

विद्यया जीवसदृशो भूत्वा लक्ष्मीमचञ्चलाम् ।
सम्प्राप्य पुत्रपौत्रादिसमृद्धिं महतीं लभेत् ॥ –११५

तमालीकुसुमैर्नित्यं सहस्रं पूजयन् शुचिः ।
स्तम्भयत्यरिसंधातानचलां च श्रियं लभेत् ॥

चम्पकैर्बकुलैर्वापि पुन्नागैर्वा सहस्रकम् ।
अभ्यर्च्य लक्ष्मीलक्ष्मीशौ मासमात्रेणपातकैः ॥

विमुक्तोऽष्टांगसहितं योगमाप्नोति साधकः ।
जम्बूतरुसमुद्भूतैः कोमलैः पल्लवैः शुभैः ॥

लक्ष्मीनारायणाविष्ट्वा सहस्रं ब्रह्मविद्यया ।
अनेककोटिजन्मोत्थैरपि पापैर्विमुच्यते ॥

आश्रयःसर्वभाग्यानामाधारः सर्वसम्पदाम् ।
आलयः सर्वभोगानां भवत्येव न संशयः ॥ –१२०

कोमलैस्तुलसीपत्रैः सहस्रं ब्रह्मविद्यया ।
अभ्यर्च्य मासमात्रेण महापापैश्च दारुणैः ॥

विमुक्तो महदारोग्यमायुष्यं चाचलांश्रियम् ।
पुत्रपौत्रादिसम्पत्तिमप्यसौ लभते नृप ॥

विकसत्कमलैर्नित्यं सहस्रं ब्रह्मविद्यया ।
अभ्यर्च्य मासमात्रेण विमुक्तः पापराशिभिः ॥

अधिपः सर्वविद्यानामाधारस्सर्वसम्पदाम् ।
दिव्यभोगयुतो भूत्वा पुत्रपौत्रवतीं श्रियम् ॥

अवाप्य चिरमायुष्यं महदारोग्यमक्षयम् ।
व्रजत्यन्ते न सन्देहो भगवत्सन्निधिं नृप ॥ —१२५

हैमं कुसुमसाहस्रं कुसुमानां शतं तु वा ।
सौवर्णं पुष्पमेकं वा दत्वा भगवते नृप ॥

श्रियं मासत्रयेणासौ माहेन्द्रीश्च तृणायते ।
एकं सुवर्णपुष्पं वा दश चिह्नक निर्मितम् ॥

नवीनं प्रत्यहं कृत्वा तद्दत्वा गुरवेऽन्वहम् ।
महेन्द्रसदृशो लक्ष्म्या विद्ययाधिषणप्रभः ॥

आधारः सर्वभाग्यानां भूत्वान्ते मुक्तिमाप्नुयात् ।
सौवर्णं पुष्पमेकं वा पुष्पमन्यत्सुगन्धि वा ॥

एकं बिल्वदलं वापि तथैकं तुलसीदलम् ।
लक्ष्मीलक्ष्मीशयोर्दत्वा प्रत्यहं द्वादशार्णया ॥ —१३०

प्राप्नोति महतीं सिद्धिं सर्वपापैः प्रमुच्यते ।
घृतं हविः फलं वापि मधुरत्रितयं तु वा ॥

हुत्वा द्वादशधा वह्नौ श्री श्रीशब्रह्मविद्यया ।
अग्निष्टोमफलं नित्यं प्राप्नोत्यत्र न संशयः ॥

ब्राह्मे समय उत्थाय ब्रह्मविद्यामनुस्मरन् ।
रश्मिमालामनुस्मृत्य कल्याणानि दिने दिने ॥

प्राप्नोति दृढभक्तश्चेदाचार्य चरणाम्बुजे ।
अनेनैव प्रमाणेन सप्तकोटिमनुष्वपि ॥

ब्रह्मविद्यासमा विद्या नास्ति नास्ति महीतले ।
अनेनैव प्रमाणेन ब्रह्मविद्याप्रदं गुरुम् ॥ —१३५

गुरूणामपि सर्वेषामधिकं विद्धिभूपते ।
ब्रह्मविद्याप्रदाचार्यसदृशं नो जगत्त्रये ॥

विद्यते दैवतमपि मानुषेषु तु का कथा ।
तस्मादवश्यमाचार्यपदुकायुग्ममादरात् ॥

अनन्यदर्शनो दृष्ट्वा ब्राह्मे समय उत्थितः ।
नमस्कृत्यापि सम्पूज्य श्रेयसां राशिमश्नुते ॥

आचार्यपादुकाभावे तुलसीं बिल्वमेव वा ।
महानदीं श्रोत्रियं वा मणिरत्नमथापि वा ॥

अनन्यदर्शनो दृष्ट्वा ब्राह्मे समय उत्थितः ।
सर्वापद्भ्यो विनिर्मुक्तः श्रेयांसि नित्यमाप्नुयात् ॥ —१४०

ब्रह्मविद्यां प्रजप्त्वैव नित्यकर्मान्वहं शुचिः ।
समाप्य श्रीमदष्टार्णजपादिकमथारभेत् ॥

इतिते ब्रह्मविद्यायाः माहात्म्यमघनाशनम् ।
किञ्चिदुक्तं मया भूप पुनः किं श्रोतुमिच्छसि ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे त्रयोदशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः ॥

ऋषय ऊचुः —

ऋश्यशृङ्ग महाभाग सर्वज्ञानवतां वर ।
माहात्म्यं ब्रह्मविद्यायाः श्रुतमस्माभिरादरात् ॥

अजपाख्यां महाविद्यां मातृकां नो वद प्रभो ।

ऋश्यशृङ्ग उवाच —

वसिष्ठादिमहर्षीणां सन्निधौ जानकीपतिः ॥

यथा दाशरथिः पूर्वं प्राहरुद्राय पृच्छते ।
यथा नारायणेनादौ जनकायोक्तमादरात् ॥

तदहं संप्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।
अनन्तबिन्दुसहितं शक्तिर्बिन्दुद्वयान्विता ॥

पुनस्त्रयोदशयुता शक्तिर्व्योम सबिन्दुकम् ।
हंसविद्येयमाख्याता चतुर्वर्गफलप्रदा ॥

देहान्तर्वर्ति जीवात्मा परब्रह्मांशसम्भवः ।
निश्वासोच्छ्वासरूपेण जपत्यनुदिनं मनुम् ॥

"ऋषिर्ब्रह्मा" स्यमन्त्रस्य गायत्रं च्छन्द उच्यते ।
हंसरूपी हरिः साक्षात् परमात्मैव देवता ॥

आद्यं बीजमिति प्रोक्तं शक्तिः शक्तिरुदीरिता ।
परमात्मानुसंधाने विनियोग उदाहृतः ॥

हंसः सोऽहमिति प्रोच्य करशुद्धिं समाचरेत् ।
हंसमित्यादिषड्वीर्यवर्णैरङ्गुलिषु न्यसेत् ॥

हंसः सोऽहमिति प्रोच्य सर्वत्वादौ समाहितः ।
सूर्यात्मने हृदि न्यस्य पूर्वदीर्घादिमं तथा ॥

हंसी सोमात्मने मूर्ध्नि न्यस्य हंसूमथोच्चरेत् ।
निष्कलात्मा शिखाया स्यान्निरञ्जनात्मने तथा ॥

कवचं न्यस्य हंसैंच पदं ब्रह्मात्मने नमः ।
नेत्रेष्वतनुसूक्ष्माद्या प्रबोधात्मा स्त्रमित्यपि ॥

अग्नीषा च गुरुद्वयं प्रणवकं बिन्दुत्रिकोणोज्ज्वलम् ।
भास्वद्रुद्रमुखं शिवांघ्रिमतुलं पार्श्वस्थसोमानलम् ॥

विद्युद्भास्करकोटिकोटिसदृशं हंसं जगद्व्यापिनं ।
शब्दब्रह्मतनुं हृदम्बुजकुटीनीडे सदा संस्मरेत् ॥

श्रिया चित्कलया युक्तं ब्रह्म नारायणाभिधम् ।
माहेश्वरं परंधाम स्मरामि मनसाहृदि ॥ —१५

प्राणानायम्य गायत्र्या पूर्वस्मिन् दिवसे प्लुतम् ।
देवताभ्योऽजपाविद्या जपं नित्यं समर्पयेत् ॥

न विद्यते जपो यस्याः साजपा परिकीर्तिता ।
व्योमबीजेन जीवात्मा सोमेन परमेश्वरः ॥

नारायणपरंब्रह्म सोऽहमस्मीति सन्ततम् ।
जीवो जपत्यनुदिनं परब्रह्मैक्यासिद्धये ॥

नासापुटाद्य उच्छ्वासो वायुर्गच्छति वै बहिः ।
जपत्यनुदिनं हंसहंसेतिद्विजपुङ्गवाः ॥

पुनर्देहं प्रविशति यो निश्वासः स्वरूपभृत् ।
जपत्यनुक्षणं सोऽहं सोऽहमित्येव सन्ततम् ॥ —२०

हकारेण परब्रह्मरूपी नारायणः पुमान् ।
अनन्तत्वाद्धकारस्य सकारेण चिदीरिता ॥

परशक्तिस्तयोरूपा शक्तिबीजतयैवहि ।
लक्ष्मीनारायणीमेतां विद्यां तस्मान्महर्षयः ॥

प्राहुः सकलवेदान्तसारभूतां विमुक्तिदाम् ।
विनिवेदनविधिं वक्ष्ये जपस्यैतन्मनो द्विजाः ॥

सुधाबीजादिकान् वर्णान् पूर्वमुच्चार्ययत्नतः ।
मूलाधारपदं मण्डपे चतुर्दलशब्दतः ॥

पद्मे स्थिताय रक्तादिवर्णाय पदमुच्चरेत् ।
गणेशाय मया पश्चात् कृतमित्यजपापदम् ॥ –२५

गायत्र्याः षट्शतंपश्चात् ........... ।
वादिलान्तं बीजषट्कं समुच्चार्य ततः परम् ॥

स्वाधिष्ठानपदं पश्चान्मण्डपे षड्दळं पदम् ।
पद्मे स्थिताय हेमाब्जवर्णाय ब्रह्मणे पदम् ॥

मयेत्यादि समुच्चार्यं षट्सहस्रं निवेदयेत् ।
गादिफान्तान् समुच्चार्य मणिपूरकमण्टपे ॥

ततो दशदले पद्मे स्थिताय श्रीमहापदम् ।
विभवेऽथ मयेत्यादि षट्सहस्रं निवेदयेत् ॥

ककारादिठकारान्तं वर्णद्वादशकं ततः ।
अनाहतपदं मण्टपे द्वादशदले ततः ॥ –३०

पद्मे स्थिताय शुद्धेति स्फटिकादिपदं ततः ।
वर्णायाऽथ सदापूर्वशिवायेतिपदात् परम् ॥

मयेत्यादि समुच्चार्य षट्सहस्रं निवेदयेत् ।
स्वरषोडशकं प्रोच्य विशुद्धाभिधमण्टपे ॥

षोडशाद्यदले पद्मे स्थितायेन्द्रपदात् परम् ।
गोपकेत्यथवर्णाय ततो जीवात्मनेपदम् ॥

मयेत्याद्येकसाहस्रं जपं च विनिवेदयेत् ।
हंक्षं भ्रूमध्य इत्युक्त्वा आज्ञामण्टप इत्यथ ॥

पदं द्विदलपद्मे च स्थितायेति पदं ततः ।
विचित्रवर्णाय पदं परमात्मन इत्यथ ॥ —३५

मयेत्याद्येकसाहस्रं जपं तस्मै निवेदयेत् ।
अकारादिक्षकारान्तान् वर्णानुच्चार्य यत्नतः ॥

हंसः सोऽहं ब्रह्मरंध्रमण्डपे पदमुच्चरेत् ।
सहस्रदलपद्मश्च ततः पद्मे स्थिताय च ॥

नानावर्णाय शब्दं च ततः श्रीगुरवेपदम् ।
मयेत्याद्येकसाहस्रं जपं तस्मै निवेदयेत् ॥

एवं समर्प्य भूयोऽपि प्राणानायम्य वाग्यतः ।
तिथिवारादि सङ्कल्प्यार्कोदयमप्यथ ॥

श्वः सूर्योदय पर्यन्तमुक्त्वाहोरात्रयोः पदम् ।
षट् शताधिकमुक्त्वैकविंशतिं प्रोच्चरेत् पदम् ॥ —४०

सहस्रसङ्ख्याकपदं नासापुट पदं ततः ।
उच्छ्वासनिश्वासाभ्यामेवाथ जाग्रत्स्वप्नपदंततः ॥

सुषुप्त्यवस्थास्वपि च ज्ञानतोऽज्ञानतस्तथा ।
अजपादिमगायत्रीमन्त्रवाक्यमतः परम् ॥

जपं करिष्य इत्येवं सङ्कल्पं प्रोच्चरेत्सदा ।
एव मुच्छ्वासनिश्वासजपं श्रीपरमात्मने ॥

समर्प्य कृतकृत्यः स्यात्सिद्धो भवति साधकः ।
न विद्यते जपोयस्या विद्यायाः परमात्मनः ॥

साऽजपाप्रोच्यते विद्या सद्यः सिद्धिप्रदायिनी ।
अहो ! मन्दधियो विप्राः ! काममोहवशंगताः ॥ —४५

वृथैवोच्छ्वासनिःश्वासैर्दिवसानि नयन्ति हि ।
अजपामन्त्रसारज्ञो यत्किञ्चिदपि वा मनुम् ॥

जप्त्वा दिने दिने सिद्धिमाप्नोत्यत्र न संशयः ।
हंसविद्यामविज्ञाय यो मन्त्रान्यपरो भवेत् ॥

न तस्य जायते सिद्धिः कल्पकोटिशतैरपि ।
वेदा अपि पुराणानि धर्मशास्त्राणि संमतम् ॥

हंसविद्यापरिज्ञानाद्यर्थान्यत्र न संशयः ।
जप्त्वा द्वादशसाहस्रं चतुर्वर्णमिमं मनुम् ॥

षण्मासाभ्यन्तरे साक्षाद्ब्रह्म पश्यति तत्पदम् ।
नियमोऽयं यतीनां स्यान्नान्येषां समुदाहृतः ॥ —५०

अष्टोत्तरशतं नित्यमष्टाविंशतिधापि वा ।
अजपामनुमुच्चार्य गृहस्थस्सफलो भवेत् ॥

अनाचारोऽशुचिर्वापि नित्यं सङ्कल्प्य यत्नतः ।
चतुर्णमिमं मन्त्रं संस्मृत्य सततं शुचिः ॥

वत्सराभ्यन्तरे साक्षादात्मानं ब्रह्मरूपिणम् ।
पश्यत्येव स्वचक्षुर्भ्यां जरामरणवर्जितम् ॥

अतः परं प्रवक्ष्यामि मातृकां सर्वसिद्धिदाम् ।
यस्यामनुपलब्धायां मन्त्रास्सर्वे वृथैव हि ॥

अक्लीबह्रस्वदीर्घान्तर्गतैस्सर्वे वृथैव हि ।
ऋषिर्ब्रह्मास्य मन्त्रस्य च्छन्दो गायत्रमीरितम् ॥ —५५

श्रीमातृका समाख्याता देवता षड्वर्गकैः क्रमात् ।
षड्वर्गान्यभिधेयानि ह्यङ्गुलीष्वपि सन्ततम् ॥

दशधा मातृकान्यासं कुर्याच्छक्तो भवेद्यदि ।
षडङ्गमात्रमपि वा कृत्वावश्यं जपेदिमाम् ॥

पञ्चाशल्लिपिभिर्विभक्तमुखदोः परामध्यवक्षस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।

मुद्रामक्षमयीं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
बिभ्राणां विशदप्रभां त्रिणयनां वाग्देवतामाश्रये ॥

स्वराष्षोडशपूर्वेस्युः स्पर्शाः पञ्चाथ विंशतिः ।
यादि क्षान्ताः दशोक्ताश्च एकपञ्चाशदक्षराः ॥

श्रीरेव मातृका प्रोक्ता बिन्दुयुक्ता सरस्वती ।
जप्तव्या बिन्दुरहिता बिन्दुयुक्तापि वा नृप ॥ —६०

वेदाश्शास्त्राणि विज्ञानं सांख्ययोगादयस्तथा ।
सप्तकोटि महामन्त्रा धर्मशास्त्राण्यथापि च ॥

श्रीमातृकासमुद्भूता विद्यास्सर्वास्सनातनाः ।
अजप्त्वा मातृकाविद्यां यो मनूनपरान् जपेत् ॥

जपहोमादिकं तस्य कोटिशोऽपि वृथा भवेत् ।
क्षकारान्तेऽजपामन्त्रं हंस इत्युच्चरन् सदा ॥

सोऽहं क्षमिति वैलोम्यान्मातृकार्णान् समुच्चरेत् ।
जप्त्वाऽनुदिनं मन्त्रान् पुरश्चरणपुण्यभाक् ॥

अकारादिक्षकारान्तमातृकां बिन्दुसंयुताम् ।
यो जपेन्नित्यमेकाग्रस्स एव परमेश्वरः ॥ —६५

मातृत्वात्सर्वविद्यानां मातृका श्रीरुदाहृता ।
हंसरूपी हरिस्साक्षात्परमात्मा श्रियः पतिः ॥

श्रीर्मातृका समुदिता चित्कला परदेवता ।
समर्प्य पूर्वमजपां सङ्कल्प्यापि ततः परम् ॥

श्रीमातृकामहाविद्यामष्टोत्तरशतं जपेत् ॥

फलं सकलविद्यानां पारगो जीववद्भवेत् ।
सकृच्छ्रवणमात्रेण प्रसेद्वेदचतुष्टयम् ॥

अश्रुतानां च शास्त्राणां व्याख्याता वत्सराद्भवेत् ।
इतिहासपुराणानां सारज्ञो भवति ध्रुवम् ॥ —७०

सप्तकोटिमहामन्त्रा अपि मूर्तिधरास्सदा ।
दृश्यन्ते वत्सरादूर्ध्वं प्रसन्ना वरदा अपि ॥

अचला महती लक्ष्मीर्जायते तस्य मन्दिरे ।
तस्य हस्ततलस्पर्शात् साक्षान्मूकोऽपि वत्सरात् ॥

पारगस्सर्वविद्यानां भवत्यत्र न संशयः ।
तद्दृष्टिकृष्टो भवति निधिस्सकलसम्पदाम् ॥

स्वान्वयं नरकस्थं च समुद्धृत्य ततःपरम् ।
दिव्यं विमानमारुह्य वैकुण्ठे निवसत्यसौ ॥

त्रिशतं यो जपेन्नित्यं पञ्चाशद्वर्णमातृकाम् ।
सर्वज्ञत्वं मनोज्ञत्वं ब्रह्मर्षित्वमनुत्तमम् ॥ —७५

सिद्धत्वं वामरत्वं वा कामरूपत्वमक्षयम् ।
वर्षाद्वर्षद्वयाद्वापि लभते नात्र संशयः ॥

अकारादिक्षकारान्तैर्बिन्दुमन्मातृकाक्षरैः ।
अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया ॥

प्रत्येकवर्णं युग्मार्णा जपात्स्युस्सर्वसिद्धिदाः ।
वैरिमन्त्रा अपि नृणामन्ये मन्त्राश्च किं पुनः ॥

समस्तन्याससहितश्रीमदष्टार्णजापकः ।
अष्टाविंशतिधानित्यं दश द्वादशधापि वा ॥

पञ्चधा वा त्रिधावापि मातृकामन्वहं जपेत् ।
अवश्यं महतीं सिद्धिं प्राप्नोत्यत्र न संशयः ॥ —८०

द्वादशार्णानुसन्धानं गायत्र्या बहुशो जपः ।
न्यासजालसमायुक्तश्रीमदष्टार्णचिन्तनम् ॥

आचार्यचरणाम्भोजशुश्रूषा च दिने दिने ।
श्रीमातृकानुसन्धानं नाल्पस्य तपसः फलम् ॥

त्यजेत्सकलवेदांश्च त्यजेदपि महामनून् ।
त्यजेत्सकलधर्मांश्च न त्यजेन्मातृकां पराम् ॥

अजपाख्यानुसन्धानं विद्या श्रीमातृका परा ।
लभ्यते यस्य वक्त्राब्जात्प्राणान्तेऽपि न तं त्यजेत् ॥

वेदेष्वन्तर्गता मान्त्राः पौराणास्तान्त्रिका अपि ।
आचार्यवदनाम्भोजाल्लब्धास्ते सफलाः स्मृताः ॥ —८५

असाधारणसामर्थ्यं मन्त्राणां भुवनत्रये ।
गुरुर्यदि तपस्सिद्धस्तस्य विद्याशु सिध्यति ॥

श्रीरामरामेति मनुं सर्वे जानन्ति भूतले ।
देहत्यागवतां काश्यां गुरोरीशस्य वक्त्रतः ॥

सम्प्राप्तोऽसौ परां मुक्तिं कीटस्यापि प्रयच्छति ।
वाल्मीकिर्विप्रमात्तोऽसौ किरातस्त्रीसमागमात् ॥

स्वर्णस्तेयादिभिरपि पतितोऽभून्महीतले ।
अनुग्रहान्महर्षीणां व्यत्यस्तं रामनाम च ॥

अधीत्य जपतः पश्चाद्ब्रह्मर्षीणां च योगिनाम् ।
प्राप्तवानग्रगण्यत्वं ब्रह्माद्यैरपि पूज्यताम् ॥ —९०

तस्माद्यदि तपस्सिद्ध आचार्यो जायते द्विजाः ।
सद्यस्सिद्धो भवेच्छिष्यः साक्षाद्ब्रह्मापि पश्यति ॥

वेदाध्ययनवान्नित्यं त्वय्यन्ताध्ययने रतः ।
सहस्रकृत्वो गायत्रीजपकर्ता दिने दिने ॥

वेदसारमहाविद्याजपवानपि सन्ततम् ।
ईदृशस्सद्गुरुर्येषां भवत्यत्र द्विजन्मनाम् ॥

भाषारचितमन्त्रोऽपि तेषां सिद्धिं प्रयच्छति ।
निन्दन्तु बान्धवास्सर्वे त्यजन्तु स्त्रीसुतादयः ॥

अनागसं तु मां दृष्ट्वा राजानो दण्डयन्तु वा ।
आचार्यचरणाम्भोजद्वयमेव गतिर्मम ॥ –९५

आचार्यमेव सततं व्रजामि शरणं विभुम् ।
आचार्यचरणाम्भोज द्वयान्नान्या गतिर्मम ॥

इत्याचार्यपदाम्भोजे यस्य भक्तिः सुनिश्चला ।
स सन्तरति संसारं भुक्तिं मुक्तिं च विन्दति ॥

जनाः स्तुवन्तु कुत्सन्तु लक्ष्मीस्तिष्ठतु गच्छतु ।
मृतिरद्य युगान्ते स्यादाचार्यं न परित्यजेत् ॥

त्यजेत्स्वपितरं नित्यं मातरं वापि सुव्रताम् ।
पुत्रान् कलत्रं भ्रातॄंश्च वेदांतांश्च श्रुतीस्तथा ॥

एतच्छरीरपातान्तेऽप्याचार्यं न त्यजेद्बुधः ।
मातृकां यो न गृह्णाति मातृकां न ददाति यः ॥ –१००

तावुभौ देवताशापभागिनौ नात्र संशयः ।
मातृकाजपतः पुंसः प्रत्यहं नियतात्मनः ॥

साङ्गाश्च चतुरो वेदा अनधीता अपि स्फुटम् ।
तस्य वक्त्राम्बुजाद्भान्ति सकल्पास्सरहस्यकाः ॥

अनधीतानि शास्त्राणि पुराणान्यपि भान्ति च ।
तस्मादाचार्यकारुण्यान्मातृकां प्राप्य साधकः ॥

दशधा पञ्चधा वापि प्रजप्त्वान्यान् मनूञ्जपेत् ।
अनायासेन संसिद्धिं लभते महतीं पराम् ॥

अजपामातृकाविद्याविधानं पातकापहम् ।
जानकीपतिना प्रोक्तं मयापि समुदीरितम् ॥ —१०५

अनुत्तरब्रह्मतत्वरहस्ये श्रुतिसङ्ग्रहे ।
इति दाशरथीयेऽस्मिंस्तन्त्रेऽध्यायश्चतुर्दशः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे चतुर्दशोऽध्यायः ॥



## ॥ अथ पंचदशोऽध्यायः ॥



ऋषय ऊचुः —

ऋष्यशृङ्ग महाभाग सर्वज्ञ मुनिसत्तम ।
अस्माभिर्ब्रह्मविद्याया माहात्म्यं त्वन्मुखाच्छ्रुतम् ॥

सावित्राद्याक्षरादीनां श्रुतं माहात्म्यमप्यथ ।
वेदवेदान्तशास्त्रौघसारभूतार्थसङ्ग्रहात् ॥

श्रीमदष्टाक्षरीत्युक्ता समस्तफलसिद्धिदा ।
श्रीमदष्टाक्षरीविद्यामाहात्म्यं साङ्गमादरात् ॥

भगवन् करुणाम्भोधे ब्रूह्यस्माकं महामते ।

**श्री ऋष्यश्रृङ्ग उवाच —**

शृणुध्वं ब्राह्मणश्रेष्ठास्सर्वज्ञा दीर्घदर्शिनः ॥

यत्तद्दाशरथिः प्राह रुद्राय परिपृच्छते ।

**श्री महेश्वर उवाच —**

भगवन् देवदेवेश जानकीवल्लभ प्रभो ॥ —५

चतुर्णामपि वेदानां त्रयाणां जगतामपि ।
श्रीमदष्टाक्षरीविद्या मूलहेतुरितीरिता ॥

किञ्चैकजन्मन्येवात्र नराणामल्पचेतसाम् ।
संसाराम्भोधितरणं ब्रह्मज्ञानमथाक्षयम् ॥

ब्रह्मानन्दाभिधामुक्तिर्दर्शनं स्याच्छ्रियः पतेः ।
श्रीमदष्टाक्षरीं वान्यां विद्यां कथय मे प्रभो ॥

इति रुद्रेण सम्पृष्टो भगवान् जानकीपतिः ।
श्रीमदष्टाक्षरीं विद्यां कथयामास तत्वतः ॥

**श्रीराम उवाच —**

श्रृणु शङ्कर वक्ष्यामि यन्मां त्वं परिपृच्छसि ।
पुरा वैदेहनगरे जनकाय महात्मने ॥ −१०

अनुग्रहाय लोकानां मया नारायणात्मवा ।
श्रीमदष्टार्णमाहात्म्यं यदुक्तं तच्छृणु प्रभो ॥

**श्री भगवानुवाच –**

समस्तवेदवेदान्तसारभूतं सनातनम् ।
श्रीमदष्टार्णमाहात्म्यं त्वया पृष्टं प्रवक्ष्यते ॥

श्रृणु राजन् महीपाल सर्वभाग्यसमृद्धिदाम् ।
श्रीमदष्टाक्षरीं विद्यां ब्रह्मदर्शनसिद्धिदाम् ॥

यत्तदव्यक्तमाद्यन्तरहितं ब्रह्म निर्मलम् ।
निर्गुणं निर्विकांरच तमःपारे प्रतिष्ठितम् ॥

सत्यानन्दमयं शुद्धं ज्योतिरेकं परात्परम् ।
तदेव पुरुषाकारमभून्नारायणात्मकम् ॥ −१५

स महापुरुषो भूत्वा देवो नारायणाभिधः ।
स्वाभिन्नचित्समायुक्तो जगत्सर्गे मनो दधे ॥

सृष्ट्वा पुरादौ ब्रह्माणमिमं वाचाम्पतिं प्रभुम् ।
अनन्तरं महारुद्रं सृष्टवान् परमेश्वरम् ॥

अनन्तकोटिसवितृतेजसं तं जगत्पतिम् ।
अशक्तौ तौ विभुं द्रष्टुं ब्रह्मरुद्रावथोचतुः ॥

सर्वज्ञ करुणापूर्ण परमात्मन् जगत्पते ।
भवान् द्रष्टुं कथं शक्य आवाभ्यां जगतीपते ॥

कथं भवन्मयत्वं नौ भवेद्ब्रह्मरसात्मकम् ।
करुणापूर्णनेत्रस्त्वं वदावाभ्यां महेश्वर ॥ –२०

**श्री भगवानुवाच –**

अहो नारायणो नाम्ना महापुरुष ईश्वरः ।
परमात्मा परब्रह्म सच्चिदानन्दलक्षणः ॥

वेदजालमिदं गुह्यं मम वक्त्राद्विनिस्सृतम् ।
एतद्गृहीत्वा सततं कुरुतां सर्गमुत्तमम् ॥

वर्णात्मकोऽहं वेदात्मा मन्त्रमूर्तिस्सनातनः ।
अच्युतोऽहमनन्तोऽहं शिवोहं शङ्करोऽस्म्यहम् ॥

किं चान्यत्सम्प्रवक्ष्यामि सारभूतं श्रुतिष्वपि ।
रहस्यं परमं गुप्तं न वाच्यमपि कुत्रचित् ॥

श्रीमदष्टाक्षरीनाम विद्या मम सुगोपिता ।
कृत्वा तदनुसन्धानं सदात्मानौ भविष्यतः ॥ –२५

असाधारण सामर्थ्यं श्रीरष्टगुणसंयुता ।
जरामृत्युविहीनत्वं युवयोस्सिध्यति ध्रुवम् ॥

एतदन्यच्च सकलमुपदिश्य जगत्पतिः ।
नारायणो महायोगी बभूवान्तर्हितो नृप ॥

तस्मादष्टाक्षरात्मायं श्रीपतिर्भगवानहम् ।
भूतानामन्तरात्माहं परमात्मा सनातनः ॥

मामेव परमं ब्रह्म विद्धि नित्यं सनातनम् ।
अणोरणीयान् महतो महीयानस्म्यहं नृप ॥

संसारतारकश्चाहमाचार्योऽहं पुरातनः ।
यदादित्यगतं ज्योतिस्सर्वलोकप्रकाशकम् ॥ —३०

जातवेदसि चन्द्रे च तत्तेजो विद्धि मामकम् ।
अहं वैश्वानरो भूत्वा शरीरे प्राणिनां स्थितः ॥

प्राणापानयुतो नित्यं पचाम्यन्नं चतुर्विधम् ।
प्रजापतीनां ब्रह्माहं रुद्राणां शङ्करोऽस्म्यहम् ॥

आदित्यानामहं विष्णुर्वसूनां पावकोऽस्म्यहम् ।
अमराणां महेन्द्रोऽस्मि वित्तेशो यक्षरक्षसाम् ॥

फलदः पुण्यपापानां कालात्माहं सनातनः ।
सृजामि निखिलं विश्वं संहरामि पुनःपुनः ॥

पालयाम्यखिलं विश्वमष्टार्णात्माहमव्ययः ।
यज्ञेशो यज्ञभोक्तास्मि वेदनारायणोऽस्म्यहम् ॥ —३५

साध्यनारायणश्चाहं बदरीवनमध्यगः ।
यज्ञनारायणश्चास्मि सर्वयज्ञफलप्रदः ॥

चतुर्णामपि वेदानां सारभूतां सनातनीम् ।
समस्तन्याससहितामष्टार्णां विद्धि मां नृप ॥

प्रणवात्मास्मि वेदादिर्यतीनां मुक्तिसिद्धिदः ।
अक्षराणामकारात्मा वरुणोऽपांपतिस्तथा ॥

आदित्यानामहं मित्रस्सवितास्मि जगत्पतिः ।
जीवात्मा सर्वभूतानामहमेव महीपते ॥

ज्ञानेन्द्रियाणां चित्तात्मा चक्षुरात्मा च कर्मसु ।
दिगीशो लोकपालात्मा श्रीमदष्टाक्षरोऽस्म्यहम् ॥ —४०

समस्तवेदसारार्थमन्त्रोऽहं त्रिजगत्पतिः ।
वेदसारमहामन्त्रः श्रीमानष्टाक्षरः स्मृतः ॥

श्रुतिसारमहाविद्यां श्रीमदष्टाक्षरीं शुभाम् ।
आचार्यवदनाल्लब्ध्वा ये जपन्ति दिने दिने ॥

ते धन्याः कृतकृत्याश्च त एव भगवत्प्रियाः ।
आचार्यं मां विजानीहि मन्त्रमूर्तिधरं विभुम् ॥

समस्तन्याससहितां श्रीमदष्टाक्षरीं शुभाम् ।
भगवद्रश्मिविद्याभिस्सहितां सरहस्यकाम् ॥

यो ददाति तमाचार्यं विद्धि मामेव भूपते ।
वेदसारमहाविद्यात्रयमेव महीपते ॥ —४५

प्रणवो वेदमाता च श्रीमदष्टाक्षरी परा ।
अन्ये सम्पुटितामन्त्रा नेत्थं सर्वफलप्रदाः ॥

बीजैर्मन्त्रान्तरैर्वापि मन्त्राः सम्पुटिताः परे ।
इष्टसिद्धिप्रदाः प्रोक्ता न चान्ये सम्पुटीकृताः ॥

एकमेव महद्बीजं प्रणवाख्यं सनातनम् ।
असम्पुटितमेवेदं यतीनां मुक्तिसिद्धिदम् ॥

व्याहृतित्रयसंयुक्ता चतुर्विंशाक्षरी शुभा ।
गायत्री सर्ववेदानां माता सकलसिद्धिदा ॥

श्रीमदष्टाक्षरी वेदसारभूता सनातनी ।
स्वभावप्रणवाद्यैव महासिद्धिप्रदास्मृता ॥ —५०

अष्टाक्षरी सम्पुटिता बीजैर्मन्त्रान्तरैर्यदि ।
तावन्मात्रफलं दातुं शक्नोति न महत् फलम् ॥

मिश्रितं माक्षिकं यद्वत् स्वरसं न ददाति हि ।
मिश्रिताष्टाक्षरी विद्या स्वसामर्थ्यं न यच्छति ॥

शुद्धैवाष्टाक्षरी जप्या श्रेयस्कामेन सन्ततम् ।
शुद्धैवाष्टाक्षरी विद्या स्वाचार्यवदनाम्बुजात् ॥

इच्छता महतीं सिद्धिं श्रेयः परममक्षयम् ।
सर्ववेदमयी सर्ववेदान्तार्थस्वरूपिणी ॥

सर्वधर्ममयी सर्वधर्मशास्त्रस्वरूपिणी ।
सर्वयोगमयी सर्वसांख्यवेदान्तरूपिणी ॥ —५५

सर्वतीर्थमयी सर्वज्ञानरूपा यशस्करी ।
श्रीमदष्टाक्षरीविद्या नान्या विद्येदृशि मम ॥

समस्तसम्पत्साम्राज्यहेतुभूता सनातनि ।
समस्तभोगदा सर्वविद्यासिद्धिप्रदायिनी ॥

सर्वसम्पत्करी सर्वमहालक्ष्मीसमृद्धिदा ।
समस्तमुक्तारत्नौघवर्षिणी भक्तमन्दिरे ॥

ब्रह्मानन्दरसाकारमुक्तिसाम्राज्यहेतुकी ।
जप्तॄणां रूपसौभाग्यसमस्तैश्वर्यसिद्धिदा ॥

सर्वपातकसंहर्त्री सर्वतीर्थफलप्रदा ।
समस्तरोगसंहर्त्री सर्वदुःखप्रभञ्जनी ॥ —६०

जन्ममृत्युजरारोगहारिणी शोकहारिणी ।
सर्वोपद्रवसंहर्त्री महादारिद्र्यभञ्जनी ॥

एतया सदृशी विद्या विद्यते नाधिकापि च ।
समस्तश्रेयसांराशिर्महालक्ष्मीरचञ्चला ॥

सिध्यन्ति सिद्धयस्सर्वाः श्रीमदष्टाक्षरीजपात् ।
अश्वमेधादियागानां फलमिच्छन् दिने दिने ॥

श्रीमदष्टाक्षरीं विद्यां जपेद्यागफलाप्तये ।
तुलापुरुषदानादि फलमिच्छन् दिने दिने ॥

यथाशक्ति धनं दद्यादाचार्यचरणाम्बुजे ।
चतुर्णामपि वेदानां पारायणफलेप्सुना ॥ —६५

श्रीमदष्टाक्षरीविद्याजप्तव्या न्याससंयुता ।
श्रीमदष्टाक्षरीविद्याजपकर्तुरथान्वहम् ॥

चराचरमिदं विश्वं दृश्यते देहसंस्थितम् ।
समस्तन्याससहितश्रीमदष्टाक्षरीजपात् ॥
वशे तिष्ठन्ति शक्राद्या दिक्पालाः किङ्करा इव ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे पंचदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः ॥

**श्री भगवानुवाच –**

पुरा सांख्यायनो योगी महर्षिस्तपसां निधिः ।
सञ्चरन् सकलान् लोकान् भास्करायुतसन्निभः ॥

ज्वलन्तं दिव्यवपुषं ब्रह्मर्षिभिरभिष्टुतम् ।
मूर्तिमद्भिश्चतुर्वेदैश्चतुर्दिक्षु समन्वितम् ॥

स्वाहाकारस्वधाकारवषट्कारैस्समूर्तिभिः ।
मूर्तिमत्प्रणवेनापि दीप्यमानं स्वतेजसा ॥

ददर्श यज्ञपुरुषं मन्त्रमूर्तिधरं विभुम् ।
वामाङ्गस्थितया देव्या चिद्रूपिण्या श्रियान्वितम् ॥

सत्यलोके दिव्यरत्नमहासिंहासने स्थितम् ।
दृष्ट्वासौ विस्मितो भूत्वा साष्टाङ्गं प्रणनाम ह ॥ —५

प्रणम्य पुनरुत्थाय दृष्ट्वा तस्य स्मितानने ।
श्रीमदष्टाक्षरीं विद्यां जिह्वाग्रे प्रददर्श ह ॥

ततः केशवकीर्त्यादिन्यासानपि चतुर्दश ।
आपादमस्तके तस्य दृष्ट्वासौ विस्मितोऽभवत् ॥

श्रीमदष्टार्णमाहात्म्यप्रतिपादनतत्परान् ।
ददर्श चतुरो वेदान् दीप्यमानान् स्वतेजसा ॥

निमील्य नेत्रे सहसा पुनर्नत्वा कृताञ्जलिः ।
उवाच यज्ञपुरुषं नारायणमनामयम् ॥

**सांख्यायन उवाच —**

परात्पर जगन्नाथ भगवन् परमेश्वर ।
त्वां मन्ये सर्वलोकानां कर्तारं स्थितिकारकम् ॥ —१०

अथान्तकाले संहारकर्तारं जगतः प्रभुम् ।
तथापीयं महामाया मां मोहयति सन्ततम् ॥

कस्त्वं वर्णमयोमन्त्रमूर्तिस्तेजोमयः पुमान् ।
केऽमी स्वतेजसा दीप्ता विद्या माहात्म्यसूचकाः ॥

भवतस्सन्निधौ नित्यं कथं स्थास्याम्यहं विभो ।
कस्योपासनया नित्यं त्वां पश्याम्यग्रतः स्थितम् ॥

एतन्मे वद तत्त्वेन भगवन् परमेश्वर ।

श्री यज्ञपुरुष उवाच —

सांख्यायन महाभाग यत्त्वं मां पृष्टवानसि ॥

तदहं सम्प्रवक्ष्यामि समाहितमना भव ।
श्रीमदष्टार्णमन्त्रात्मा लोकानामीश्वरोऽस्म्यहम् ॥ — १५

समस्तवेदैरीड्योऽहमस्मि यज्ञपुमान् मुने
नारायणः परं ब्रह्म परमात्माहमीश्वरः ॥

इमे केशवकीर्त्यादिन्यासा अवयवा मम ।
मम वाच इमेवेदा जगत्सर्गादि हेतवः ॥

इमे ब्रह्मर्षयस्सिद्धाः श्रीमदष्टार्णचिन्तकाः ।
आचार्यचरणाम्भोजद्वन्द्वार्चनरतास्सदा ॥

इमे दिव्यगृहाः पूर्णा धनैर्माणिक्यराशिभिः ।
दिव्यकन्यासहस्रैश्च कामधेनुभिरन्विताः ॥

श्रीमदष्टार्णजप्तॄणामेते दिव्यगृहा मुने ।
चिन्तामणिः कल्पतरुः कामधेनुस्सुधारसः ॥ –२०

श्रीमदष्टार्णजप्तॄणां भूतलेऽपि न दुर्लभाः ।
श्रीमदष्टाक्षरीविद्या न्यासपूर्वा दिने दिने ॥

प्रजप्तव्या यथाजप्ता तावन्मात्रफलप्रदा ।
न्यासहीनामिमां विद्यां यो ददाति विमूढधीः ॥

यो गृह्णात्यपि मन्दात्मा तावेतौ नरकाश्रयौ ।
पूर्वं न्यासैर्विरहितां गृहीत्वापि महामते ॥

न्यासैस्सहोपदेशार्थमन्यमाचार्यमाश्रयेत् ।
भगवद्रश्मिविद्यानां पारङ्गतमकल्मषम् ॥

श्रीमदष्टार्णविद्याया रहस्यज्ञं जितेन्द्रियम् ।
बहुयोजनसाहस्रमपि गत्वाश्रयेद्गुरुम् ॥ –२५

आज्ञां नोल्लंघयेत्तस्य प्राणैः कण्ठगतैरपि ।
पिता माता तथाभ्राता चतुर्वेदप्रदोऽपि वा ॥

भगवद्रश्मिविद्यानामुपदेष्टृसमा न हि ।
यत्तद्ब्रह्मपरं ज्योतिः श्रीमदष्टाक्षरात्मकम् ॥

अखण्डानन्दमद्वन्द्वं प्रकृतेः परतः स्थितम् ।
तदेव सूक्ष्मं परमं स्थूलं चापि सनातनः ॥

तदात्मा यज्ञपुरुष आद्यो नारायणोऽस्म्यहम् ।
आद्यं त्रयीमयीबीजं प्रणवाख्यं सनातनम् ॥

तदेव मोक्षश्रीबीजं श्रीबीजं च तदुच्यते ।
ऋचो यजूंषि सामानि सा हि श्रीरमृतासताम् ॥ –३०

इति मद्वदनोद्भूता वेदा अपि वदन्ति हि ।
अक्षराणामकारोऽसौ प्रथमः परिकीर्तितः ॥

आद्यत्वात्सर्ववर्णानामकारात्मा श्रियःपति ।
आद्यो नारायणस्साक्षादकारेणोच्यते मुने ॥

उकाररूपिणी लक्ष्मीश्चिच्छक्तिः श्रीरुदाहृता ।
इयं त्रयीमयी नित्या मम वामाङ्कसंस्थिता ॥

मकारेणावयोर्दासो जीवोऽयं कथ्यते बुधैः ।
तस्मात्प्रणववाच्यं यल्लक्ष्मीनारायणाभिधम् ॥

मत्स्वरूपप्रदं विद्धि जीवस्येह शरीरिणः ।
प्रणवाख्यमिदं बीजं श्रीबीजमिति कथ्यते ॥ –३५

प्रणवेन परब्रह्मरूपी नारायणो विभुः ।
अविप्रैरपि जप्याः स्युर्मन्त्राः प्रणववर्जिताः ॥

किञ्चित्फलप्रदा एव मन्त्राः प्रणववर्जिताः ।
अवश्यं ब्राह्मणैर्जप्या निक्षिप्तप्रणवा अपि ॥

स्वभाववेदबीजाद्या विद्या कुत्रापि न श्रुता ।
इयमष्टाक्षरी विद्या स्वभावप्रणवादिका ॥

तस्मादेतत्समाविद्या नाधिकापि च विद्यते ।
मुक्तिलक्ष्मीर्बीजभूता ज्ञानलक्ष्मीःफलप्रदा ॥

सर्वविद्याबीजभूता श्रीमदष्टाक्षरी परा ।
अन्ते नारायणपदं चतुर्थ्यन्तसमन्वितम् ॥

चिदात्मकं परं ब्रह्म तदेव प्रणवात्मकम् ।
प्रणवेन परं ब्रह्म श्रीरप्युक्ता महामुने ॥

लक्ष्मीनारायणीनाम्ना सारभूता श्रुतिष्वपि ।
इयं समस्तविद्यानां बीजभूता परा स्मृता ॥

नमस्कारेण जीवस्य दासत्वं पतिपद्यते ।
नारायणैक्यं जीवस्य कथ्यते नमसा मुने ॥

नारायणपरा वेदा नारायणपरा मखाः ।
नारायणपरं दानं नारायणपरं तपः ॥

नारायणःपरं ब्रह्म तत्वं नारायणः परः ।
नारायणःपरंज्योतिरात्मा नारायणः परः ॥

नारायणेति मन्त्रामस्मरणं वा दिने दिने ।
जप्तॄणां ब्रह्महत्यादिमहापातकनाशनम् ॥

किमुताखिलवेदान्तसारभूता सनातनी ।
विद्या नारायणीवर्णा वर्णितुं नैव शक्यते ॥

एकेन जन्मना पूर्वजातिस्मरणमुत्तमम् ।
अणिमादिगुणैश्वर्यं ब्रह्मज्ञानमकल्मषम् ॥

इच्छता सम्प्रजप्तव्या श्रीमदष्टाक्षरी शुभा ।
एते साध्यास्तथासिद्धा आचार्यचरणार्चकाः ॥

श्रीमदष्टाक्षरीं विद्यां जप्त्वा मत्पदमाश्रिताः ।
एते मद्वदनोद्भूता वेदास्साङ्गास्सनातनाः ॥ —५०

परिपृच्छस्व चतुरो वेदानेतान् महामते ।
अथ ते च चतुर्वेदा मूर्तिमन्तं महामतिम् ॥

ऊचुस्सांख्यायनं ब्रह्मतनयं वीतमत्सरम् ।

वेदा ऊचुः —

सांख्यायन महाभाग वाक्यमस्माकमादरात् ॥

शृणुष्व येन भगवत्पदं परमवाप्स्यसि ।
अयं समस्तजगतामाद्यो नारायणोऽच्युतः ॥

एतस्य भासा सकलं विभातीदं जगन्मुने ।
अणोरणीयान्महतो महीयानहमीश्वरः ॥

सगुणो निर्गुणश्चायमनन्तो जगदन्तकः ।
मन्त्रमूर्तिरयं साक्षात्परमात्मा सनातनः ॥ —५५

अष्टाक्षरात्मा भगवान् न्यासावयवसंयुतः ।
हिताय सर्वजगतां स्वस्वरूपोपलब्धये ॥

सृष्टा वयमनेनादौ यैरक्ष्यं निखिलं जगत् ।
अस्माभिः कथ्यते यद्यत्तत्कर्तव्यं द्विजोत्तमैः ॥

नित्यं नैमित्तिकं काम्यं कर्म त्रिविधमुच्यते ।
त्रिविधं कर्म कर्तव्यं ब्राह्मणैः प्रत्यहं मुने ॥

कर्तव्यास्सकला यागास्समग्रवरदक्षिणाः ।
दातव्यं सकलं दानमिहामुत्र फलाप्तये ॥

जप्तव्यास्सकलाविद्याः महतीं सिद्धिमीप्सुभिः ।
अस्माभिरपि यद्गुप्तं तद्वक्ष्यामो हि साम्प्रतम् ॥ —६०

येयमष्टाक्षरी विद्या श्रीमन्नारायणी परा ।
सर्वविद्यामयीं विद्धि तामेव परमां मुने ॥

अमी च रश्मयो देवा भगवत्तेजसः कलाः ।
तद्रश्मिविद्यासहिता येयमष्टाक्षरी शुभा ॥

आचार्यकरुणालब्धा जप्ताः सर्वफलप्रदाः ।
अपि प्राणैःकण्ठगतैर्न वक्तव्या दुरात्मने ॥

आचार्यचरणाम्भोजाच्छास्त्रतोऽपि दिने दिने ।
विद्यारहस्यं विज्ञेयं जप्तव्याष्टाक्षरी शुभा ॥

दिने दिने मृत्युलोकं यान्ति भूतानि भूतले ।
भूयोऽपि जन्म सम्प्राप्य मज्जन्ति नरकार्णवे ॥ —६५

जन्ममृत्युजरारोगनिवृत्तिर्नास्त्यपि क्वचित् ।
संसारसागरं ततु जन्ममृत्युजरा अपि ॥

सरहस्या प्रजप्तव्या श्रीमदष्टाक्षरी शुभा ।
श्रीमदष्टाक्षरीविद्या येन नित्यं प्रजप्यते ॥

जनकः कृतकृत्योऽस्य जननी भाग्यसंयुता ।
मुक्ता अस्य न सन्देहः पितरोऽपि पितामहाः ॥

तद्वंश्या अपि सर्वेस्युर्महासुकृतसंयुताः ।
पावना अपि तन्मित्रबान्धवा ज्ञातयस्तथा ॥

श्रीमदष्टार्णमाहात्म्यं सांख्यायन महामते ।
भगवानेव जानाति नान्यो जानाति तत्वतः ॥ —७०

इहापि कामधुक्कल्पतरुश्चिन्तामणिर्गृहे ।
शक्राद्या अष्टदिक्पालाः कैङ्कर्यं प्राप्नुवन्त्यपि ॥

तिष्ठन्ति सन्निधौ तस्य निधयस्सम्पदालयाः ।
श्रीमदष्टाक्षरीविद्या जपहोमादिभिर्मुने ॥

असाध्यमपि देवानामपि द्वीपान्तरस्थितम् ।
वाञ्छितं समवाप्नोति योगिनामपि दुर्लभम् ॥

शरीरं सततं जन्मजरामृत्युसमन्वितम् ।
मलमूत्रालयं मांसमज्जामेदोऽस्थिसंयुतम् ॥

नेत्रयोः कर्णयोर्जिह्वादन्तनासापुटेषु च ।
स्रवत्येव दिवारात्रं दुर्गन्धि मलमेव हि ॥ —७५

अपानसंस्थितो वायुरपि दुर्गन्धिसंयुतः ।
यद्वस्तु जिह्वया भुक्तं तत्सर्वं देहमध्यगम् ॥

जठरे वह्निना पक्वं मलमेव महामते ।
सद्योभुक्तं वस्तुजातमप्युद्गीर्णं पुनर्मुखात् ॥

मलादप्यधिकं हेयं सद्यो भवति भूतले ।
उपस्थेन्द्रियतो मूत्रं स्रवत्येव दिवानिशम् ॥

कक्षप्रदेशात्स्वेदोऽपि दुर्गन्धः सम्प्रजायते ।
सन्तानकारणं बीजमपि दुर्गन्धि सन्ततम् ॥

पार्थिवं नश्वरं हेयमशुचीदं कलेबरम् ।
अत्र क्रोधश्च कामश्च रागद्वेषादयो गुणाः ॥ —८०

तैस्संवृतोऽसौ दुष्टात्मा रतोऽपि परयोनिषु ।
स्वस्त्रीयोनिषुचासक्तः कामी पर्वदिनेष्वपि ॥

मासत्रयं मातृगर्भे मलमूत्रादिसङ्कुले ।
अनुभूय महद्दुःखं मातृयोनेर्विनिर्गतः ॥

मत्कुणैर्मशकाद्यैश्च पीड्यतेऽहरहो मुने ।
सततं मलमूत्राद्यैः पीडितः क्षुधयान्वितः ॥

उपनीतं गुरोर्गेहे तच्छिक्षासहितोवसन् ।
यौवने विषयासक्तो धनार्जनरतस्सदा ॥

वार्धक्ये कफवाताद्यैः पीडितः क्षुधयान्वितः ।
भवतीत्थं महाराजः प्राकृतोऽपि नरस्सदा ॥

बाल्येनायुर्गतं किञ्चिद्विषयैरपि निर्गतम् ।
निद्रयापहृतं किञ्चिदायुर्व्याधिभिरप्यथ ॥

किञ्चिदायुर्भोजनाद्यैः किञ्चिदर्थार्जनादिभिः ।
आलस्येन च वृद्धत्वे किञ्चिदायुर्गतं मुने ॥

ततो मृत्युस्समायाति बध्द्वा नेतुमिमं जनम् ।
बद्धोऽसौ कालपाशेन धर्मराजस्य किङ्करैः ॥

भुङ्क्ते चिरं महद्दुःखं नग्नोऽसौ नरकार्णवे ।
अथ पातकशेषेण पुनर्भूतलमागतः ॥

विष्ठासु कृमिजन्मादि सम्प्राप्य मशकादिषु ।
सम्प्राप्य श्वानजन्मादि ततश्चण्डालयोनिषु ॥

शूद्रयोनिं ततःप्राप्य क्रमात् क्षत्रियवैश्ययोः ।
पुण्यशेषेण विप्राणां कुले जातो भवेन्मुने ॥

यदि तत्र महत्पुण्यं करोति श्रुतिचोदितम् ।
तदा स्वर्गसुखं भुङ्क्ते पुनर्भूमौ च जायते ॥

जन्ममृत्युसमायोगाद्विषमिश्रान्नवत् सदा ।
स्वर्गसौख्यं दुःखमिश्रं दुःखमेव समीरितम् ॥

तस्मादवश्यमाचार्यं सर्वज्ञं वेदपारगम् ।
पित्रार्जितमपि द्रव्यमथवा प्रपितामहैः ॥

स्वकरार्जितवित्तं च सर्वमाचार्यपादयोः ।
स्वप्राणानपि दत्त्वासौ चिरं शुश्रूषणे रतः ॥ —९५

बहुयोजनसाहस्रमपि गत्वा महामते ।
आचार्यचरणाम्भोजयुगलं कल्मषापहम् ॥

संसेव्य बहुवर्षं वा देहप्राणधनैरपि ।
श्रीमदष्टाक्षरीं विद्यां भगवद्रश्मिपूर्विकाम् ॥

गृहीत्वा न्याससहितां कृतार्थः स्यान्महीतले ।
आचार्यपादयुगले शुश्रूषणरतस्सदा ॥

श्रीमदष्टाक्षरीं विद्यां जप्त्वैकेनैव जन्मना ।
अवश्यं परमं धाम पुनरावृत्तिवर्जितम् ॥

एतच्छरीरपातान्ते सम्प्राप्नोति न संशयः ।
न विद्यामात्रदानेन महानाचार्य उच्यते ॥ —१००

न्यासमात्रप्रदानाद्वा न पूजामन्त्रदानतः ।
अन्यत्र विद्यान्यासादीन् गृहीत्वापि महामते ॥

सर्वज्ञं वेदविद्वांसमपि शास्त्रार्थपारगम् ।
बहुयोजनसाहस्त्रमपि गत्वा महामुने ॥

आचार्यं वरयेदन्यं साङ्गविद्यार्थमादरात् ।
शुभेदिने शुभेलग्ने चन्द्रताराबलान्विते ॥

माघफाल्गुनवैशाख श्रावणाश्विनकेषु च ।
कार्तिके मार्गशीर्षे वा देहप्राणधनैरपि ॥

सन्तोष्य तस्य पत्नीं च पुत्रपौत्रादिकानपि ।
गृह्णीयात्पूर्वमाचार्यवक्त्राब्जाद्रश्मिमालिकाम् ॥ —१०५

न्यासपूर्वं ततः श्रीमदष्टार्णां सर्वसिद्धिदाम् ।
गृहित्वाचार्यपादाब्जद्वये सर्वस्वमप्यथ ॥

समर्प्य तदधीनः स्याद्यावज्जीवं महामते ।
प्रातःप्रातस्समुत्थाय नित्यमाचार्यतोषणे ॥

अवश्यं यत्नवान् भूत्वा भगवद्रश्मिपूर्विकाम् ।
समस्तन्यास सहितां श्रीमदष्टाक्षरीं जपेत् ॥

इत्थं प्रजप्तुराचार्यपादभक्तस्य सन्ततम् ।
अणिमादिगुणैश्वर्यं वाक्सिद्धिश्चातुलाशुभा ॥

पुत्रपौत्रादिसहिता समृद्धिश्च पदे पदे ।
सर्वज्ञत्वं मनोज्ञत्वं कामरूपत्वमक्षयम् ॥ —११०

परकायप्रवेशादि सामर्थ्यं चान्यदुर्लभम् ।
ब्रह्मत्वमपि रुद्रत्वं विष्णुत्वं च न दुर्लभम् ॥

इत्थमाचार्यभक्तस्य श्रीमदष्टार्णचिन्तनात् ।
पादुकाञ्जनखड्गाद्या अपि सिध्यन्ति सिद्धयः ॥

अनेनैव शरीरेण ज्योतिर्मयतनुः पुमान् ।
अष्टाङ्गसहितं योगं प्राप्य खेचरतामपि ॥

जरामृत्युविहीनत्वं प्राप्यायुरपि दुर्लभम् ।
श्वेतद्वीपादिभगवत्पदेषु विहरत्यसौ ॥

आचार्यो भगवानेवेत्यवश्यं दृढभक्तिमान् ।
आचार्यचरणाम्भोजदृढभक्तो दिने दिने ॥ —११५

श्रीमदष्टाक्षरीविद्याजपहोमादितत्परः ।
जातिस्मरणमासाद्य लक्ष्मीनारायणात्मकम् ॥

अवश्यं परमं ब्रह्म स्वचक्षुर्भ्यां प्रपश्यति ।
एतदेव परं श्रेय इदमेव तपः परम् ॥

इयमेव परादीक्षा इदमेव महद्धनम् ।
अयमेष परो योग इदमेव परं फलम् ॥

अयमेव सदाचारो ह्ययमेव महामखः ।
इदमेव त्रयो वेदास्सशास्त्राण्यागमानि च ॥

इति मत्वाजपेन्नित्यं श्रीमदष्टाक्षरीं पराम् ।
पितामाता सुहृद्भ्राता प्राणबन्धुस्सुहृत्सखा ॥ –१२०

आचार्य एवेति सदा श्रीमदष्टाक्षरीं जपेत् ।
आचार्य एव भगवान् ब्रह्माविष्णुर्महेश्वरः ॥

साक्षान्नारायणः स्वामी परं ब्रह्मापि केवलम् ।
इति मत्वा सदाचार्यं विद्यामष्टाक्षरीं जपेत् ॥

अश्वमेधसहस्रस्य फलमिच्छन् दिने दिने ।
सरहस्यां महाविद्यां श्रीमदष्टाक्षरीं जपेत् ॥

श्रीमदष्टाक्षरीविद्यामाहात्म्यं वक्तुमन्वहम् ।
सरहस्यावयं सृष्टा इन्दिरापतिना मुने ॥

चिच्छक्तिः श्रीर्भगवतश्शक्तिर्या जगदम्बिका ।
श्रीमदष्टार्णमाहात्म्यं सरस्वत्यै वदत्यपि ॥ –१२५

धर्मपुत्रो महायोगी भूत्वा नारायणो भुवि ।
श्रीमदष्टार्णमाहात्म्यं महर्षिभ्यः प्रयच्छति ॥

मिथिलापतये पश्चाज्जनकाय प्रवक्ष्यति ।
अयोध्यानगरे पश्चाद्भूत्वा दशरथात्मजः ॥

श्रीराम इति च ख्यातिं गतो लोके महायशाः ।
वसिष्ठादिमहर्षीणां सन्निधौ जानकीपतिः ॥

श्रीमदष्टार्णमाहात्म्यं शङ्कराय प्रवक्ष्यति ।
तन्त्रं दाशरथीयाख्यं वेदसारं महोदयम् ॥

कृत्वा श्रेयस्करं लोके कथयिष्यन्ति शम्भवे ।
श्रुत्वा समस्तवेदानां सारभूतं यशस्करम् ॥ —१३०

तन्त्रं दाशरथीयाख्यं ब्रह्मपुत्रो महामतिः ।
सनत्कुमारस्सर्वज्ञो वसिष्ठश्च महायशाः ॥

जमदग्निसुतो रामो द्वैपायनसुतश्शुकः ।
दत्तात्रेयो महायोगी योऽसौ भगवदंशजः ॥

संहितापञ्चकं चक्रुः श्रुतिसारार्थसङ्ग्रहम् ।
श्रीमदष्टार्णमाहात्म्यं तेऽपि वक्ष्यन्ति सादरम् ॥

आञ्जनेयादयो भक्ता अपि नारायणे हरौ ।
श्रीमदष्टार्णमाहात्म्यं तेऽपि वक्ष्यन्ति सादरम् ॥

श्रीमदष्टार्णविद्यायाः प्रभावेणैव सन्ततम् ।
ब्रह्मर्षयो वसिष्ठाद्या नारदाद्याः सुरर्षयः ॥ —१३५

शक्रादयश्च दिक्पाला योगिनः सनकादयः ।
वसुरुद्रार्कचन्द्राद्याः सिद्धास्साध्याश्च सन्ततम् ॥

अवाप्य महतीं सिद्धिमद्यापि प्रजपन्त्यमी ।
श्रीमदष्टार्णतत्वज्ञो यत्र तिष्ठति भूतले ॥

दिव्यक्षेत्रं तदुद्दिष्टं समन्ताद्योजनायतम् ।
यत्राचार्यपदाम्भोजदृढभक्तो विपत्स्वपि ॥

श्रीमदष्टाक्षरीं विद्यां सरहस्यां जपन् वसेत् ।
तत्र गङ्गा गया काशी कुरुक्षेत्रं ससागरम् ॥

सरस्वती च यमुना तिष्ठत्येव न संशयः ।
श्रीमदष्टाक्षरीविद्या जपहोमार्चनादिभिः ॥ –१४०

अयं नारायणस्साक्षाद्यज्ञेशो जगतां मतिः ।
तुष्टो भवति भक्तस्य प्रसीदत्यपि सन्ततम् ॥

श्रियःपतौ प्रसन्ने ऽस्य प्रसन्नं स्याज्जगत्त्रयम् ।
मूर्तित्रितयमग्नीनां त्रितयं च जगत्त्रयम् ॥

शक्तित्रयं भगवतः पदत्रितयमप्यथ ।
श्रीमदष्टार्णविद्यायाः पदत्रयसमुद्भवम् ॥

वसवोऽष्टौ महेन्द्राद्या अष्टदिक्पालका अपि ।
ब्राह्मयाद्या मातरोऽप्यष्टौ भैरवा असितादयः ॥

वैकुण्ठाद्याश्चलोकाश्च सिद्धयोऽष्टाणिमादयः ।
श्रीमदष्टार्णविद्याया अष्टवर्णसमुद्भवाः ॥ –१४५

सर्वदेवमयी तस्मादियमष्टाक्षरी शुभा ।
श्रीमदष्टाक्षरीं विद्यां भवानेतां सदा जपन् ॥

नारायणकलायुक्तो जीवन्मुक्तो भविष्यति ।
इति सांख्यायनं ब्रह्मसुतं योगिवरं प्रभुम् ॥

श्रीमदष्टार्णमाहात्म्यं भगवत्सन्निधौ तदा ।
उक्त्वा भगवता साकं वेदा अन्तर्मुखा नृप ॥

**श्री भगवानुवाच –**

राजन् जनकभूपाल योगी सांख्यायनो मुनिः ।
तदारभ्य सदाचार्यपदद्वन्द्वं समर्चयन् ॥

श्रीमदष्टाक्षरीं विद्यां जप्त्वा सिद्धिं परां गतः ।
इति ते श्रीमदष्टार्णमाहात्म्यमघनाशनम् ॥
किञ्चिदुक्तं महीपाल साधनं च प्रवक्ष्यते ॥ —१५०

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे षोडशोऽध्यायः ॥

## ॥ अथ सप्तदशोऽध्यायः ॥

**श्री भगवानुवाच –**

अथातः श्रीमदष्टार्णन्यासध्यानादिकं नृप ।
प्रवक्ष्यामि समासेन समाहितमना भव ॥

ब्राह्मे मुहूर्त उत्थाय स्वाचार्यचरणद्वयम् ।
प्रणम्य शयनस्थोऽपि दश द्वादशधा ततः ॥

गुरूनन्यानपि स्मृत्वा लक्ष्मीनारायणौ विभू ।
स्मृत्वा गौरीमहेशौ च वाणीं धातारमप्यथ ॥

अग्नीन्द्राद्यष्टदिक्पालान् ब्रह्मर्षीनपि योगिनः ।
प्राङ्मुखो वसुधां नत्वा भूतले दक्षिणं पदम् ॥

निक्षिप्य पुरतो वामं पादं पश्चाद्विनिक्षिपेत् ।
आचार्यचरणाम्भोजारूढं श्रीपादुकाद्वयम् ॥ —५

निर्मितं रत्नसहितं हेम्ना वा दारुणापि वा ।
अनन्यदर्शनो दृष्ट्वा नत्वा साष्टाङ्गमादरात् ॥

आचार्यपादुकाभावे तुलसीं वा महानदीम् ।
अनन्यदर्शनो दृष्ट्वा धेनुपुष्ठमथापि वा ॥

प्रक्षालितपदद्वन्द्वकरद्वन्द्वसमन्वितः ।
शुद्धं वासःपरीधाय श्रीमदाचार्यपादुके ॥

स्मृत्वाद्वादशधापूर्वं ब्रह्मविद्यां ततो जपेत् ।
भगवद्रश्मिविद्यां च पञ्चधावा त्रिधाजपेत् ॥

स्तुत्वाथ वैष्णवैस्सूक्तैः स्तवैः पौराणिकैस्तु वा ।
सहस्त्राणां महाविद्यामेकावृत्त्याथ वा जपेत ॥ —१०

ततश्शौचादिकं कृत्वा दन्तधावनमेव च ।
प्रातःस्नात्वा विशुद्धात्मा मार्जयेद्वार्द्रवाससा ॥

सन्ध्यामुपास्य विधिवदुपस्थाय दिवाकरम् ।
योऽसौ तपन्नुदेत्यादि सौरसूक्तेन नित्यशः ॥

मन्त्रसन्ध्यां ततःकुर्याल्लक्ष्मीनारायणेशितुः ।
आचार्यवदनात्प्राप्य सन्ध्यानन्तरमन्वहम् ॥

आदित्याभिमुखोजप्त्वा दीर्घमायुररोगताम् ।
सम्प्राप्य पत्नीपुत्राद्यैर्न वियोगं लभेत्क्वचित् ॥

धनेन पशुभिर्वापि न वियुक्तो भवेदसौ ।
देहान्ते भगवद्धाम सम्प्राप्नोत्यक्षयं नृप ॥ —१५

प्राणानायम्य सङ्कल्प्य मन्त्रसन्ध्यां समारभेत् ।
मन्त्रभस्मजलस्नानेष्विष्टं स्नानं विधाय च ॥

उदके विलिखेद्यन्त्रं साङ्गं बीजादिसंयुतम् ।
षट्कोणमष्टकोणं वा लिखित्वा यन्त्रमादरात् ॥

आर्षच्छन्दो दैवतं च बीजशक्ती न्यसेत्ततः ।
न्यासं षडङ्गमात्रं वा कृत्वा ध्यात्वा श्रियःपतिम् ॥

आवाहनादि मुद्राभिः पूजयित्वा ततः परम् ।
जलं दक्षिणहस्तस्थं कृत्वा द्वादशधा मनुम् ॥

श्रीमदष्टाक्षरं जप्त्वा वामहस्ते विनिक्षिपेत् ।
वासुदेवद्वादशार्णविद्यया शिरसि त्रिधा ॥ —२०

मार्जयित्वा वैष्णवेन षडर्णेन जलं पिबेत् ।
जलमञ्जलिनादाय गायत्र्या चाभिमन्त्रितम् ॥

अर्घ्यं दत्त्वा त्रिधा पश्चाद्गायत्रीं वैष्णवीं जपेत् ।
त्रयीबीजं समुद्धृत्य चतुर्थ्यन्तसमन्वितम् ॥

नारायणपदं पश्चाद्विद्महे पदमप्यथ ।
वासुदेवाय शब्दं च धीमहीति पदं ततः ॥

धियोयोनः प्रचोदयादित्यक्षरमथोच्चरेत् ।
गायत्री वैष्णवी प्रोक्ता महापातकनाशिनी ।

भुक्तिमुक्तिप्रदा साक्षाद्ब्रह्मदर्शनसिद्धिदा ।
एतस्या विष्णुगायत्र्या मुनिर्नारायणोऽस्म्यहम् ॥ —२५

छन्दो गायत्रमित्युक्तं परमात्मा श्रियःपतिः ।
देवो नारायणस्साक्षाज्जगतां पतिरच्युतः ॥

अष्टाविंशतिधा नित्यं जपेद्द्वादशधापि वा ।
प्राणानायम्य सङ्कल्प्य कृत्वा न्यासं षडङ्गकम् ॥

आदित्यमण्डलगतं ध्यात्वा नारायणं विभुम् ।
आदित्याभिमुखो नित्यमष्टोत्तरशतं शुचिः ॥

श्रीमदष्टारीं विद्यां न्यसेत्सकलसिद्धिदाम् ।
नारायणाख्यसूक्तेन द्वादशर्चेन नित्यशः ॥

स्तुतिं कुर्याद्भगवतः पञ्चधा वा त्रिधैकधा ।
ततो मन्दिरमागत्य नित्यहोमं समाचरेत् ॥ —३०

तर्पयित्वा पितॄन् देवान्मनुष्यांश्च ततः परम् ।
श्रीमदष्टाक्षरीं विद्यां जपेन्न्यासपुरस्सरम् ॥

एकेन जन्मना मुक्तिमिच्छता सर्वसिद्धिदा ।
श्रीमदष्टाक्षरीविद्या जप्या न्यासपुरस्सरा ॥

श्रीमदष्टार्णविद्याया जपहोमादिकं सदा ।
कर्तव्यं महतीं सिद्धिमिच्छतैकेन जन्मना ॥

नित्यहोमं समाप्याथ नत्वाचार्यपदाम्बुजम् ।
यत्किञ्चिद्दक्षिणां दद्यादपि शाकघृतादिकम् ॥

यत्किञ्चिद्दक्षिणाहीनमप्याचार्यपदाम्बुजे ।
वन्ध्यं दिनमिति प्राहुस्तन्महाघौघवर्धनम् ॥ —३५

अथवा प्रत्यहं हुत्वा स्मृत्वाचार्यपदाम्बुजम् ।
सुवर्णमथवारौप्यं ताम्रं वा धान्यतण्डुलान् ॥

सूपं शाकं घृतं वापि यत्किञ्चिदपि दक्षिणाम् ।
अवश्यं गुरवे दत्त्वा नित्यं पापैर्विमुच्यते ॥

करोत्यवन्ध्यं दिवसमपि यागफलं लभेत् ।
आचार्यचरणाम्भोजे यत्किञ्चिदपि दक्षिणाम् ॥

सङ्कल्प्य मनसा नित्यं मासि मास्यथवार्पयेत् ।
यायावरेभ्यो विप्रेभ्यो धान्यमुष्टिं सदार्पयेत् ॥

सत्कृत्य भिक्षुकेभ्यश्च दद्याद्भिक्षान्नमन्वहम् ।
आचार्यसन्निधौ तस्य पत्न्यै पुत्राय वार्पयेत् ॥ —४०

श्रोत्रियायाथवा दद्यादपि तेषामसन्निधौ ।
विद्यातपोभ्यां सहितो द्विजाग्र्यः पात्रमुच्यते ॥

अपात्रेभ्यो धनं दत्तमपि मेरुसमं नृप ।
सदानरकदुःखौघहेतुकं पातकावहम् ॥

वैदिकाचारसहितो वेदविच्छ्रोत्रियः स्मृतः ।
द्विजो वेदविहीनो यः पतितः स स्मृतो बुधैः ॥

अवेदविदुषे दानं दत्तं यत्किञ्चिदप्यथ ।
भस्मनीव हुतं प्रोक्तं किं च स्यान्नरकालयम् ॥

जपहोमसमिद्दीप्ते हुतं श्रोत्रियपावके ।
तारयेन्नरके मग्नानपि कोटिपितॄन्नृप ॥ —४५

दानमाचार्य पादाब्जे दत्तं यत्किञ्चिदप्यथ ।
ब्रह्मसायुज्यदं प्राहुस्तत्पितॄणां च भूपते ॥

विप्रमात्रे प्रतिज्ञातमपि वाचा धनादिकम् ।
षण्मासाभ्यन्तरे देयमत ऊर्ध्वं ऋणं महत् ॥

प्रतिज्ञातं च यद्वाचा षण्मासाभ्यन्तरे नृप ।
न दत्तं नरकौघेषु वहुदुःखप्रदं नृप ॥

आचार्येभ्यः प्रतिज्ञातमपि शाकघृतादिकम् ।
मासादर्वाङ्नदत्तं चेत्तदृणं मेरुसन्निभम् ॥

इहापि देवताशापं प्राप्यान्ते नरकं व्रजेत् ।
भगवत्करुणासिध्द्यै नित्यमाचार्यपादयोः ॥ —५०

यत्किञ्चिदपि दत्त्वाथ सिद्धिं चाप्नोति दुर्लभाम् ।
एकादश्यां पौर्णमास्याममायां द्वादशीदिने ।

सङ्क्रान्तौ भार्गवे वारे दत्तमक्षयसिद्धिदम् ॥
आचार्यपत्नीमाचार्यं विना भार्गववासरे ।

अपि साक्षाद्भगवते न देयं श्रेय इच्छता ।
शुक्ला तृतीया वैशाखी तस्यां दत्तमथाक्षयम् ॥

जयन्तीष्वपि सर्वासु दत्तमण्वपि सिद्धिदम् ।
नवरात्रव्रते चन्द्र भास्करग्रहणादिषु ॥

अलभ्ययोगेषु दत्तमक्षय्यं भोगमोक्षदम् ।
नित्यदानं सुखकरमायुस्स्वर्गापवर्गदम् ॥ —५५

भार्गवे वासरे दानमक्षयश्रीसमृद्धिदम् ।
चन्द्रसूर्यग्रहे दानं महापातकनाशनम् ।

अनन्तसौख्यदं स्वर्गभोगमोक्षसमृद्धिदम् ।
समस्तेष्वपि दानेषु सुमहद्दानपञ्चकम् ॥

प्रथमं सुमहद्दानं बहुसस्यौघसङ्कुलम् ।
चतुर्वृषभसंयुक्तं गोद्वयेन समन्वितम् ॥

यथोक्तदक्षिणायुक्तं महीदानं महीपते ।
नानेन सदृशं दानमिहामुत्र सुखप्रदम् ॥

श्रोत्रियाय दरिद्राय विवाहद्रव्यमप्यथ ।
दत्तं तारयते दातुः पितॄनथ पितामहान् ॥ —६०

द्वितीयं तु महद्दानं एतद्वंशाभिवृद्धिदम् ।
सालग्रामशिलादानं निष्कपञ्चकसंयुतम् ॥

पद्मरागमणिस्वर्णकुण्डलद्वितयान्वितम् ।
तृतीयं कुसुमदानं ब्रह्मसायुज्यकारणम् ॥

सालङ्कृतं बहुक्षीरं सवत्सं धेनुपञ्चकम् ।
एकैकदक्षिणा तत्र निष्कत्रयमितं धनम् ॥

दत्तमाचार्यपादाब्जे पर्वकाले विशेषतः ।
चतुर्थमेतद्दानं स्यात्पातकौघविभेदनम् ॥

सद्यस्सकलदुःखौघहरणं भुक्तिमुक्तिदम् ।
वर्षाशनमितद्रव्यदानं वासोयुगान्वितम् ॥ —६५

नवमन्दिरसंयुक्तं समस्तक्लेशवर्धनम् ।
महापापौघहरणमक्षयस्वर्गमोक्षदम् ॥

तुलापुरुषमुख्यानि दानानि सुमहन्त्यपि ।
सद्य एव महापापहराण्यत्र न संशयः ॥

आन्दोलिकां वा शिबिकां यः प्रयच्छति पर्वसु ।
बहुदक्षिणयायुक्तां महादुरितराशिभिः ॥

सद्य एव विमुक्तोऽसौ पितृमातृकुलान्वितः ।
दिव्यं विमानमारुह्य सत्यलोकेऽपि दुर्लभान् ॥

कल्पान्तेऽप्यक्षयान् भोगान् भुङ्क्तेऽसौ ब्रह्मणःपदे ।
नवीनं मन्दिरं रम्यं निर्माय दिवसे शुभे ॥ —७०

वर्षाशनमितद्रव्य दक्षिणासहितं नृप ।
दत्त्वा महेन्द्रधर्माद्यैः पूज्यमानो यथासुखम् ॥

भुङ्क्तेऽपिदुर्लभान् भोगान् नन्दनादिवनेष्वसौ ।
यागार्थं दक्षिणाद्रव्यं साङ्गमाचार्यमादयोः ॥

दत्त्वा सद्यो विमुक्तोऽसौ महापातकराशिभिः ।
विमुक्तःपितृभिस्साकं पूज्यमानोऽमराधिपैः ॥

वैकुण्ठे परमे धाम्नि मोदते कालमक्षयम् ।
अन्नप्रदानं सततं महादुरितनाशनम् ॥

वस्त्रदानं महापुण्यं दिव्यभोगसमृद्धिदम् ।
सुवर्णदानं सततं हरिसान्निध्यसिद्धिदम् ॥ –७५

रत्नदानं महापुण्यं मेरुमूर्ध्नि सुखप्रदम् ।
दिव्यरत्नसमायुक्तमुद्रिकादानमिष्टदम् ॥

कर्णेषु मुक्ताभरणदानं माहेन्द्रभोगदम् ।
रत्नाभरणदानं हि कर्णयोस्सद्य एव हि ॥

महादुरितसंघानां नाशनं भुक्तिमुक्तिदम् ।
पुराणधर्मशास्त्राणां संहितानां तथैव च ॥

दानं कल्मषराशिघ्नं सौख्यदं ब्रह्मणःपदे ।
यद्यन्मनोहरं वस्तु स्वगृहे संस्थितं शुभम् ॥

तत्तदाचार्यपादाब्जे दत्त्वा सिद्धिं परां व्रजेत् ।
तिलदानं महापुण्यं यमबाधानिवारणम् ॥ –८०

धान्यदानमिहामुत्र समस्तेष्टफलप्रदम् ।
समस्ततीर्थसान्निध्यं समस्तदुरितापहम् ॥

आचार्यचरणाम्भोजद्वयमेव न संशयः ।
आयुश्चलं मनुष्याणां सम्पदः क्षणभङ्गुराः ॥

दुःखमिश्रं सुखं भौमं तस्माद्धर्मरतो भवेत् ।
धर्मोऽप्यधर्मो वेदोक्तो धर्मोऽक्षयसुखप्रदः ॥

अधर्मो नरकक्लेशसिद्धिदो यममन्दिरे ।
तस्माच्छ्रुतीरितं धर्मं कुर्वन्नन्वहमादरात् ॥

महर्षिसिद्धगन्धर्वैः पूज्यः स्यादपि दैवतैः ।
वेदमातुर्जपकरो बहुशो वेदतत्परः ॥ –८५

वैदिकाचारनिरतः श्रोत्रियः पात्रमुच्यते ।
पात्रभूताय विप्राय देयं वस्तु धनादिकम् ॥

अपात्रं वेदरहितः सर्वकर्मबहिष्कृतः ।
अवेदविदे दत्तमणुमात्रं च भूपते ॥

आकल्पं नरके घोरे बहुदुःखप्रदायकम् ।
एकस्मै श्रोत्रियायापि दत्त्वा वस्तु धनादिकम् ॥

कुलं तारयते दातुर्दशपूर्वं दशापरम् ।
श्रोत्रियाणां सहस्रेभ्योऽप्येक आचार्य उत्तमः ॥

आचार्यायाणुमात्रं वा दत्त्वा याति परांगातिम् ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ॥ –९०

श्रीमदष्टार्णसिध्यर्थं विभुमाचार्यमाश्रयेत् ।
ब्रह्मचारिगृहस्थानां वनिनां गुरवस्त्रयः ॥

पितामातातथाचार्य इहामुत्रापि सन्ततम् ।
यतीनामेक आचार्यो गुरुर्भगवदात्मकः ॥

यतिवेषधरो विप्रो वन्द्यः पितापि सन्ततम् ।
मातुश्च पोषणं कुर्यात्तत्राधर्मो न विद्यते ॥

गर्भधारणपोषाभ्यां पितुर्माता गरीयसी ।
सर्ववन्द्येन यतिना प्रसूर्वन्द्या प्रयत्नतः ॥

आचार्य एव तत्रापि दैवतं पूज्य एव हि ।
साक्षाद्ब्रह्मणि दृष्टेऽस्य न माता न पिता गुरुः ॥ –९५

आचार्य एव तस्यापि प्रत्यहं दैवतं नृप ।
साक्षाद्ब्रह्मणि सन्दृष्टे ज्ञानिनामपि भूपते ॥

आचार्यस्य परित्यागान्नरकौघेषु सन्ततम् ।
बहुदुःखसमायुक्ता गतिर्नान्या विधीयते ॥

अपि साक्षात्कृतब्रह्मस्वरूप ज्ञानिनामपि ।
पोषणीयो नमस्कार्यस्त्रिसन्ध्यं प्रत्यहं नृप ॥

तस्मादवश्यमाचार्यं सर्वज्ञं भगवन्मयम् ।
ध्यात्वार्चयेन्नमस्कृत्य वासोभिर्भूषणैश्शुभैः ॥

कुण्डलोदरबन्धाद्यैर्मुद्रिकाभिरनेकशः ।
धनैर्धान्यैश्चरत्नैश्च पोषयेद्यत्नतोऽन्वहम् ॥ –१००

एतदेव महच्छ्रेयस्साधनं नान्यदुच्यते ।
नाष्टाक्षरी समाविद्या न पुण्यं गुरुपूजनात् ॥
न दैवमधिकं श्रीशान्न मुक्तिसदृशं फलम् ॥

न पुण्यमाचार्यपदारविन्द-
सम्पूजनादुत्तममस्ति लोके ।
नाष्टार्णविद्याजपहोमपूजना-
द्गतिप्रदं नास्ति परत्रचेह ॥

आचार्यपादाम्बुजयुग्ममेव गतिर्बहूनां गृहिणां यतीनाम् ।
आचार्यपादाम्बुजयुग्मतीर्थान्न विद्यते पावनमन्यतीर्थम् ॥

नाचार्यपत्नी सदृशी समर्च्या-
लक्ष्मीरुमावापि सरस्वती वा ।
आचार्यपत्न्येव गिरीन्द्रकन्यका
वाणी शची भूमिररुन्धती च ॥

आचार्यमित्थं हरिमीशितारं
ध्यात्वान्वहं पूज्यतमं वरेण्यम् ।
अभ्यर्च्य सम्पोष्य धनैरनेकै-
रवश्यमन्ते हरिरूपमेति ॥ —१०५

**ऋश्यश्रृङ्ग उवाच —**

इति गीतं भगवता जानकीपतिना पुरा ।
उक्तं नारायणेनादौ यद्भगवताद्विजाः ॥

तस्मात्सर्वज्ञमाचार्यं नित्यमभ्यर्च्य सादरम् ।
श्रीमदष्टाक्षरीं विद्यां जपेन्न्यासपुरस्सरम् ॥

इति दाशरथीयेऽस्मिंस्तन्त्रेऽनुत्तरनामके ।
उक्तस्सप्तदशोऽध्यायः पातकौघविभेदनः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे सप्तदशोऽध्यायः ॥



## ॥ अथाष्टादशोऽध्यायः ॥



**श्री ऋश्यश्रृङ्ग उवाच —**

अथातः श्रीमदष्टार्णन्यासध्यानादिकं द्विजाः ।
उक्तं भगवतापूर्वं प्रवक्ष्यामि समासतः ॥

साध्यो नारायणःस्वामी भगवानृषिरुच्यते ।
छन्दो गायत्रमित्युक्तं छन्दसामुत्तमोत्तमम् ॥

श्रियाचिद्रूपया लक्ष्म्या सहितः परमेश्वरः ।
नारायणस्त्रिजगतां पतिर्देवस्सनातनः ॥

अकारो बीजमित्युक्तमुकारश्शक्ति रुच्यते ।
विनियोगो भगवतः प्रसादार्थमुदाहृतः ॥

गौतमोऽत्रिर्भरद्वाजो विश्वामित्रो महामुनिः ।
जमदग्निर्वसिष्ठश्च कश्यपोऽगस्त्य एवच ॥ —५

अष्टाक्षराणां विज्ञेया ऋषयोऽष्टौ यथाक्रमम् ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥

त्रिष्टुप् च जगती चापि विराट्छन्दांसि वै क्रमात् ।
धरा ध्रुवस्तथासोम आपोऽग्निर्वायुरेव च ॥

प्रत्यूषश्च प्रभासश्च विज्ञेया देवताः क्रमात् ।
क्रुध्दोल्कायाग्निजायान्ते कृष्णवर्णाय हृद्यथ ॥

महोल्कायाग्निजायन्ते कनकवर्णाय मूर्ध्न्यथ ।
वीरोल्कायाग्निजायान्ते पिङ्गलेति पदात्परम् ॥

वर्णायाथशिखास्थाने ह्युल्कायाग्निप्रियामथ ।
हेमवर्णाय कवचं सहस्रोल्काय शब्दतः ॥ —१०

विद्युद्वर्णाय शब्दान्ते न्यसेदस्त्रं ततःपरम् ।
अङ्गुलीपञ्चकन्यासमेवमेव समाचरेत् ॥

तर्जन्यादिकनिष्ठान्ताङ्गुलीष्वर्णान् सबिन्दुकान् ।
विन्यस्य नमसा युक्तान्नाभौ गुह्ये ततःपरम् ॥

जान्वोः पादयुगे मूर्ध्न्यक्षिनासाहृदयेषु च ।
सबिन्दुकाक्षरन्यासः कर्तव्य इति भूपते ॥

हृदि मूर्ध्नि शिखायां च कवचे नेत्रयोरथ ।
अस्त्रं तथोदरे पृष्ठे न्यासमष्टाङ्गमाचरेत् ॥

इत्थं पञ्चाङ्गमष्टाङ्गं न्यासं कृत्वा समाहितः ।
अन्तर्बहिर्मातृकाख्यन्यासं कुर्यादनन्यधीः ॥ —१५

ऋषिर्ब्रह्मा समुद्दिष्टश्छन्दो गायत्रमीरितम् ।
देवता मातृका साक्षाच्चिद्रूपा श्रीः सरस्वती ॥

बीजानि हल उक्तानि स्वराश्शक्तय ईरिताः ।
ह्रस्वदीर्घद्यन्तयुतैष्षड्भिर्वर्गैष्षडङ्गकम् ॥

कृत्वा न्यासं ततो ध्यायेन्मातृकां पारमेश्वरीम् ।
आदिक्षान्ताक्षरश्रेणीमाणिक्याकल्पधारिणीम् ॥

चिद्रूपिणीं महालक्ष्मीं वाग्देवीं मातृकां नुमः ।
अथान्तर्मातृकान्यासः कण्ठहृन्नाभिगुह्यके ॥

पायौ भ्रूमध्यगे पद्मे षोडशद्वादशच्छदे ।
दशपत्रे च षट्पत्रे चतुःपत्रे द्विपत्रके ॥ —२०

पञ्चाशद्वर्णविन्यासः पत्रसंख्याक्रमाद्भवेत् ।
एकैकवर्णमेकैक पत्रान्तर्विन्यसेन्नृप ॥

एवमन्तः प्रविन्यस्य मनसाथ बहिर्न्यसेत् ।
शिरोवदनवृत्तेऽपि चक्षुश्श्रोत्रयुगेऽप्यथ ॥

नासाकपोलयुगले तथौष्ठयुगलेऽपि च ।
ऊर्ध्वाधोदन्तपङ्क्तौ च विन्यसेत् षोडशस्वरान् ॥

कचवर्गद्वयं हस्तपञ्चसन्धि स्थलेन्यसेत् ।
टतवर्गद्वयं पादसन्ध्यग्रेषु तथान्यसेत् ॥

पवर्गं पार्श्वयुगले पृष्ठनाभ्युदरेषु च ।
हृद्दोर्मूलककुत्कक्ष हृदादिकरपद्द्वये ॥ −२५

जठराननयोश्चैव व्यापकं विनियोजयेत् ।
पञ्चाशदक्षरन्यासः क्रमेणैवं विधीयते ॥

ओमाद्यन्तो नमोऽन्तो वा सविन्दुर्बिन्दुवर्जितः ।
मायालक्ष्मीकामबीजपूर्वान्यस्तव्य इष्यते ॥

केशवाय च कीर्त्यै च तथा नारायणाय च ।
कान्त्यै तथा माधवाय तुष्ट्या इति न्यसेन्नमः ॥

गोविन्दाय च पुष्ट्यै च विष्णवे च धृतिस्ततः ।
मधुसूदनशान्ती च त्रिविक्रमक्रिये तथा ॥

वामनाय दयायै च श्रीधराय वदेत्ततः ।
मेधायै च हृषीकेशो हर्षायै च नमस्तथा ॥ −३०

पद्मनाभाय श्रद्धायै तथा दामोदराय च ।
लज्जायै वासुदेवाय लक्ष्म्यै सङ्कर्षणाय च ॥

सरस्वत्यै च प्रद्युम्नप्रीत्यै नम इतीष्यते ।
अनिरुद्धाय रत्यै च स्वरान्ते प्रवदेदथ ॥

चक्रिणे विजयायै च गदिने शार्ङ्गिणे तथा ।
दुर्गायै च प्रभायै च खड्गिने विन्यसेदथ ॥

सत्यायै शंखिने चण्डायै नमः प्रवदेदथ ।
हलिने च तथावाण्यै तथा मुसलिने वदेत् ॥

विलासिन्यै शूलिने च विरजाय ततःपरम् ।
पाशिने विजयायै च तथैवाङ्कुशिने वदेत् ॥ –३५

विश्वायै च मुकुन्दाय विमदायै नमस्ततः ।
नन्दजाय सुनन्दायै नन्दिने स्मृतये तथा ॥

नराय ऋध्द्यै च तथा वदेन्नरकजित्ततः ।
समृध्द्यै हरये शुध्द्यै कृष्णबुद्धी ततःपरम् ॥

सत्याय मुक्त्यै सत्वाय मत्यै नम इतीरयेत् ।
शौरये च क्षमायै च शूराय परमा ततः ॥

जनार्दनाय च वदेच्छिद्र्यै स्याद्भूधराय च ।
क्लेदिन्यै विश्वमूर्तिश्च क्लिन्नायै तदनन्तरम् ॥

वैकुण्टाय नमः पश्चाद्वसुधायै ततः परम् ।
पुरुषोत्तमश्च वसुधा बलिने च परा तथा ॥ –४०

बलानुजाय च परायणायै च ततः परम् ।
बलायाप्यथ सूक्ष्मायै वृषघ्नाय ततः परम् ॥

सन्ध्यायै च वृषायाथ प्रज्ञायै च ततः परम् ।
हंसाय च प्रभायैस्याद्वराहाय निशा तथा ॥

विमलायाप्यमोघायै नृसिंहाय ततः परम् ।
विद्युतायै त्वगात्मा च ह्यसृगात्मा ततः परम् ॥

मांसात्मने तथामेद आत्मनेऽस्थ्यात्मनेऽपि च ।
जीवात्मने च परमात्मने नमश्तीरयेतु ॥

सर्वदेवमयीं साक्षाद्वैष्णवीं मातृकां पराम् ।
विन्यस्यैवं क्रमाद्रूप विराड्रूपी न संशयः ॥ —४५

मायाश्रीकामरूपं वा कामपूर्वमथापि वा ।
शिरोवदन वृत्तादिष्वयंन्यासक्रमः स्मृतः ॥

केशवादिरयंन्यासो महापातकनाशनः ।
देहिनां न्यासमात्रेण ब्रह्मतादात्म्यसिद्धिदः ॥

सर्वदेवमयीमेनां वैष्णवीं मातृकां पराम् ।
विन्यस्य सततं धीमान् भगवन्मयतां व्रजेत् ॥

विन्यस्य वैष्णवीमेनां मातृकामन्वहं शुचिः ।
श्रीमदष्टाक्षरीं जप्त्वा साक्षान्नारायणो भवेत् ॥

वैष्णवीं मातृकामेकामपि विन्यस्य वान्वहम् ।
श्रीमदष्टाक्षरीं जप्त्वा यथाशक्त्या दिने दिने ॥ —५०

सर्वदेवमयो देवः विराड्रूप्पः श्रियःपतिः ।
आचार्यानुग्रहाद्भूत्वा महतीं सिद्धिमश्नुते ॥

वन्द्योऽसौ सर्व देवानां मुनीनाञ्च भवत्यसौ ।
केशवादिरयंन्यासो न्यासमात्रेणदेहिनाम् ॥

अच्युतत्वं ददात्येव सत्यं सत्यं वदाम्यहम् ।
तत्त्वन्यासमथोवक्ष्ये शृणुष्वावहितोनृप ॥

विन्यस्यतत्त्वविन्यासं तत्तद्विद्भवतिध्रुवम् ।
मादयःप्रातिलोम्येन कान्ताः स्पर्शसंज्ञकाः ॥

नमःपराय पूर्वेतु प्रणवान्तेऽव्यवस्थिताः ।
जीवः प्राणश्च बुद्धिश्चाप्यहङ्कारो मनस्तथा ॥ —५५

सर्वाङ्गे हृदिविन्यस्य शब्दादि विषयास्ततः ।
मूर्ध्निघ्राणे च हृदयेऽप्युपस्थेपादयोरपि ॥

श्रोत्रत्वक् चक्षुर्जिह्वा घ्राणरुपेणदेहिनाम् ।
ज्ञानेन्द्रियाणिपञ्चापि तत्तत्स्थाने न्यसेत्पुनः ॥

वाक् पाणिपाद पायूपस्थानीतिकर्मेन्द्रियाणि च ।
तथैव तत्तत्स्थानेषु तत्तदेवप्रविन्यसेत् ॥

शिरो मुखेऽपिहृदये तथा गुह्येऽपि पादयोः ।
आकाशानिलतेजांसि सलिलं पृथिवी तथा ॥

विन्यसेत्पूर्ववच्चैव न्यासविद्भिरुदीरितम् ।
शहौ च सषलाः पञ्च तथा यश्चवला अपि ॥ —६०

क्षौं चेति दशवर्णानि प्रणवान्ते च पूर्ववत् ।
हृत्पद्मसोमसूर्याय स्वकलायुक्तमण्डलम् ॥

श्रियं हृद्येव विन्यस्य वासुदेवादयस्तथा ।
परमेष्ठी च पुरुषो विश्वव्यापीनिवर्तकः ॥

नारायणो नृसिंहश्च सकरोवाक्य पूरकौ ।
मूर्ध्न्यास्येहृदिगुह्ये च पादयोर्व्यापकं ततः ॥

तदात्मने नम इति तत्तत्स्थानेषु विन्यसेत् ।
अतत्त्वस्याप्यपूज्यस्य तत्प्राप्तेर्हेतुना पुनः ॥

तत्त्वन्यासमितिप्राहुः न्यासं तत्त्वविदो बुधाः ।
यःकुर्यात्तत्त्व विन्यासं स एवभवति ध्रुवम् ॥ —६५

तदात्मनानुप्रविश्य भगवानिह तिष्ठति ।
ततः स एव तत्त्वानि सर्वं तस्मिन् प्रतिष्ठितम् ॥

अज्ञातसर्वतत्त्वोऽपि तत्त्वन्यासेन सन्ततम् ।
सर्वतत्त्वमयः साक्षात्तत्त्ववित्सर्वविद्भवेत् ॥

तत्त्वन्यासेन सततं पूजां प्राप्नोति शाश्वतीम् ।
विश्वंभरो विराडात्मा साक्षान्नारायणोभवेत् ॥

तत्त्वन्यासमथैवं वा विन्यस्यान्वहमादरात् ।
आचार्यानुग्रहं प्राप्य श्रीमदष्टाक्षरं जपन् ॥

वन्द्यः समस्तदेवानामपि विश्वंभरोभवेत् ।
तन्मूर्तिपञ्चरन्यासमस्यतन्मूर्तिसिद्धये ॥ —७०

आकर्णयैकचित्तेन त्वं यतोस्मिन् फलान्तरम् ।
नमो भगवते ब्रूयद्वासुदेवाय इत्यथ ॥

ओमादेरस्य मन्त्रस्य चादायैकाक्षरं ततः ।
श्रीमदष्टाक्षरीं विद्यामादावेवसमुच्चरन् ॥

वातेरितः स्वरस्तद्वत् श्रीमदष्टाक्षरं ततः ।
वासुदेवद्वादशार्णस्यैकैकाक्षरमुच्चरन् ॥

नामैकैकमुपादाय विष्णोर्द्वादशनामसु ।
नामैकैकमुपादाय सूर्यस्यापि च नामसु ॥

चतुर्थ्यन्तं नमोऽन्तञ्च न्यस्तव्यं न्यासयोगतः ।
ललाटेनाभिहृदयकण्ठपार्श्वांसकंधरे ॥ —७५

पार्श्वान्तरेच स्कंदेच पृष्ठे ककुदि मूर्ध्न्यपि ।
केशवश्च ततो ब्रूयान्नारायण इति द्वयम् ॥

माधवश्चैव गोविन्दो विष्णुश्च मधुसूदनः ।
त्रिविक्रमो वामनश्च श्रीधरो नवमः स्मृतः ॥

हृषीकेशः पद्मनाभस्तथा दामोदरः क्रमात् ।
विष्णोर्द्वादशनामानि चामूनि मुनिसत्तम ॥

धातार्यमाच मित्रश्च वरुणांशुर्भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमःस्मृत ॥

त्वष्टाच विष्णुरित्येवं नामानि द्वादशात्मनः ।
तन्मूर्तिपञ्जरन्यासस्तुभ्यमुक्तोमया तव ॥ —८०

तन्मूर्तिपञ्जरन्यासं कृत्वा भगवदात्मकः ।
श्रीमदष्टाक्षरीं जप्त्वा चाचार्यानुग्रहात् सदा ॥

महतीं सिद्धिमासाद्य भवेत् साक्षाच्छ्रियः पतिः ।
तन्मूर्तिपञ्जरन्यासं कृत्वा तन्मूर्तिसिद्धये ॥

आचार्यानुग्रहादाशु ब्रह्मतादात्म्यसिद्धिभाक् ।
वर्णन्यासं दशविधं प्रवक्ष्यामि ततः परम् ॥

आचार्यानुग्रहाद्यस्य विज्ञानाद्ब्रह्मरूपभाक् ।
आदौ योगासनमयं स्वदेहं भावयेद्धिया ॥

पीठपादमयं हस्तपादयुग्मञ्चभावयेत् ।
पीठोपरितलां पार्श्वद्वयाभिमुखात्मकम् ॥ —८५

तत्पात्मकं स्वोदरञ्च ध्यात्वा स्वहृदयाम्बुजे ।
नवशक्तिमहापीठमन्त्रयुक्ते ततःपरम् ॥

अनुग्रहाय भक्तानां लीलानिर्मित विग्रहम् ।
स्वात्मानमेव ध्यात्वाथ भगवन्मयमच्युतम् ॥

कुर्याद्दशविधं वर्णन्यासं ब्रह्मैक्यसिद्धिदम् ।
आधारे हृदि वक्त्रे च दोर्मूलयुगळे तथा ॥

पादमूलयुगे नाभौ न्यास एक उदाहृतः ।
एकैकं मूलमन्त्रार्णनमान्तं प्रणवादिकम् ॥

सबिन्दुकं न्यसेद्धीमान् देवताभावसिद्धये ।
कण्ठे नाभौ च हृदयेस्तनयुग्मे च पार्श्वयोः ॥ –१०

पृष्ठे न्यासो द्वितीयोऽयं मन्त्रस्य समुदाहृतः ।
मूर्ध्न्यास्ये नेत्रयुगळे कर्णयुग्मे ततःपरम् ॥

नासायुगपुटेपश्चात्तृतीयोन्यास ईरितः ।
बाहुसन्ध्यष्टके पादसान्धिष्वष्टसु भूपते ॥

चतुर्थो न्यास आद्योऽसौ पञ्चमश्च ततःपरम् ।
अङ्गुलीष्वष्टसु न्यासः षष्ठोऽङ्गुष्ठं विनेरितः ॥

पादाङ्गुष्ठं विना पादाङ्गुलिन्यासश्च सप्तमः ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लमया नृप ॥

विन्यस्य मूलमन्त्रस्य सप्तवर्णान्यथाक्रमम् ।
प्राणरूपं स्वहृदाम्बुज एवाक्षरान्न्यसेत् ॥ —९५

अष्टमोन्यास उक्तोऽयं मूर्ध्नि नेत्रयुगे मुखे ।
हृदयेचोदरे पश्चादूरुजङ्घापदेष्वपि ॥

न्यासोऽयं नवमः प्रोक्तो देवताभावसिद्धिदः ।
कपोल स्कन्ध युगळोरुद्वये चरणद्वये ॥

न्यासोऽयं दशमः प्रोक्तो वर्णैर्मूलस्य सिद्धिदः ।
इत्थं दशविधं वर्णन्यासं कृत्वा दिने दिने ॥

देवताभावमाप्नोति येन स्युस्सर्वसिद्धयः ।
मूलमन्त्राक्षरन्यासं कृत्वा दशविधं नृप ॥

भगवत्कलया युक्तः सिद्धिमाप्नोत्यनुत्तमाम् ।
मातृकाक्षरविन्यासं केचिद्ब्रह्मविदोऽमलाः ॥ —१००

कुर्वन्तिभगवद्भाव सिद्ध्यर्थं सर्वसिद्धिदम् ।
"मातृकावर्णविन्यास आद्यः" शुद्ध इतीरितः ॥

"प्रणवाद्यो द्वितीयः" स्या तृतीयो "वाग्भवादिकः" ।
"मायाबीजादिकोन्यासश्चतुर्थस्समुदीरितः ॥

"लक्ष्मीबीजादिको" न्यासः पञ्चमस्समुदीरितः ।
"वाङ्मया कमलाद्यश्च" न्यासः षष्ठ उदीरितः ॥

" कामबीजादिकोन्यासः " सप्तमः समुदीरितः ।
" हंसमन्त्रादिकः " पश्चान्न्यासोऽष्टम उदीरितः ॥

" श्रीकण्ठमातृकान्यासो " नवमस्समुदीरितः ।
" वैष्णवो मातृकान्यासो " दशमःसमुदीरितः ॥ −१०५

दशधा मातृकान्यासं भगवद्भावसिद्धिदम् ।
केचिद्ब्रह्मविदो नित्यं कुर्वन्त्यखिलसिद्धिदम् ॥

दशधा मातृकान्यासफलदं स्यान्नसंशयः ।
विन्यस्य मातृकामन्तर्बहिः पूर्वं दिने दिने ॥

वैष्णवीं मातृकां पश्चान्न्यस्य सर्वार्थसिद्धिदाम् ।
तत्त्वन्यासं ततः कृत्वा न्यस्य तन्मूर्तिपञ्जरम् ॥

मूलमन्त्राक्षरन्यासं न्यसेद्दशविधं ततः ।
इत्थं विन्यस्य विधिवत्साक्षान्नारायणो भवेत् ॥

मन्त्रीचात्र न सन्देहो निग्रहानुग्रहक्षमः ।
न्यासं चतुर्दशविधं कृत्वेत्थं न्यासमादरात् ॥ −११०

वत्सरादिन्दिरानाथं भगवन्तं प्रपश्यति ।
उपदिश्यैव पुरतो न्यास जालमिदं गुरुः ॥

अथान्ते वासिनो दद्याच्छ्रीमदष्टाक्षरीं शुभाम् ।
चतुर्दशविधन्यासमज्ञात्वा यो गुरुर्नृप ॥

श्रीमदष्टाक्षरीं विद्यां प्रददाति महीतले ।
तावात्मवञ्चकौ प्रोक्तावुभावपि न संशयः ॥

सर्वज्ञमेव सततं तस्मादाचार्यमाश्रयेत् ।
सततं सिद्धमन्त्रस्य बहुज्ञस्यमहात्मनः ॥

प्राप्तव्या महती विद्या सरहस्या महीपते ।
सहस्रयोजनं वापि गत्वा वेदार्थपारगम् ॥ —११५

चतुर्दशविधन्याससहितां परमात्मनः ।
प्रद्यादपि गृह्णीयाच्छ्रीमदष्टाक्षरीं शुभाम् ॥

अन्यथा जपहोमाद्यैः कोटिशोऽपि न सिद्धिभाक् ।
न्यासः स्यान्मन्त्रसन्नाहो न्यासहीनो न सिद्धिदः ॥

न्यासः केशवकीर्त्यादिचतुर्दशविधः शुभः ।
चतुर्दश विधन्यासं कृत्वा जप्त्वा दिने दिने ॥

चतुर्दशसुलोकेषु पूजां प्राप्नोत्यनुत्तमाम ।
चतुर्दश विधन्यास पूर्विकामिन्दिरापतेः ॥

श्रीमदष्टाक्षरीं विद्यां योददातिमहीतले ।
तमाचार्यं विजानीहि साक्षान्मद्रूपिणं विभुम् ॥ —१२०

विद्यामात्रप्रदानेन नाचार्यत्वं द्विजन्मनः ।
सरहस्यमनोर्दाता ज्ञेय आचार्य ईरितः ॥

अविज्ञाय रहस्यानि गृहीत्वा मन्त्रमात्रकम् ।
बहुयोजनसाहस्रमपि गत्वा महीपते ॥

संसेव्य बहुवर्षं वा दत्वा प्राणधनादिकम् ।
श्रीमदष्टाक्षरीं विद्यां समस्तन्यासपूर्विकाम् ॥

गृह्णीयादप्यथान्यस्मात्पुनर्विप्रोत्तमान्नृप ।
स एव सकलन्यासपूर्वविद्याप्रदो विभुः ॥

आचार्य उच्यते लोके साक्षान्नारायणात्मकः ।
तमेव दैवतं विद्धि सदाचार्यं घृणानिधिम् ॥ –१२५

स एव स्वपिता माता सद्गुरुर्विधिरीश्वरः ।
परमात्मा परं ब्रह्म सएव हरिरुच्यते ॥

प्रयत्नेनापि संसेव्यस्तस्मादाचार्यमीश्वरम् ।
श्रीमदष्टाक्षरीं विद्यां समस्तन्यासपूर्विकाम् ॥

प्रजप्त्वा प्रत्यहं सर्वश्रेयसां राशिमश्नुते ।
चतुर्दशविधन्यासकर्ता साचार्यमीश्वरम् ॥

विनान्यस्मै न वन्देत विना स्वपितरावपि ।
अदेवो न यज्ञो भवेदित्येषा शाश्वती श्रुतिः ॥

न्यायेन भगवद्रूपी भूत्वा तस्माद्यजेद्धरिम् ।
आचार्यानुज्ञया नित्यं कृत्वेत्थं न्यासमादरात् ॥ –१३०

वर्षादूर्ध्वं न सन्देहो वन्द्यः स्यादपि दैवतैः ।
आज्ञासिद्धो महायोगी भवेद्ब्रह्मसमो नृप ॥

एकेन जन्मनैवासौ दुस्तरञ्चभवार्णवम् ।
तीर्त्वा सिद्धिमवाप्नोति देवानामपि दुर्लभाम् ॥

प्रजप्त्वा श्रीमदष्टार्णं मन्वहं न्यासपूर्वकम् ।
सकृत्स्मरणतोवापि जपकोटिफलं लभेत् ॥

अज्ञात्वा सकलन्यासं पुरश्चर्याशतैरपि ।
श्रीमदष्टाक्षरीसिद्धिं कल्पकोटिशतैरपि ॥

न किञ्चिदप्यवाप्नोति सत्यं सत्यं महीपते ।
सारात्सारतरं पुण्यमागमेषु श्रुतिष्वपि ॥ —१३५

अतिगुप्ततरं न्यासमप्येकं प्रवदाम्यहम् ।
श्रीमदष्टाक्षरीविद्यामादावुच्चार्य यत्नतः ॥

विन्यसेन्मातृकावर्णानखिलान् पूर्ववन्नृप ।
चिद्रूपामातृका नाम प्रोक्तेयं सर्वकामधुक् ॥

चतुर्दशविधन्यासमकृत्वापि दिने दिने ।
चिद्रूपामातृकान्यासमवश्यं प्रत्यहं न्यसेत् ॥

श्रीमदष्टाक्षरीविद्यापूर्विकां मातृकां शुभाम् ।
विन्यस्य प्रत्यहं जप्त्वा शतमष्टोत्तरं तु वा ॥

पुरश्चर्याफलं नित्यं प्राप्नोत्यत्र न संशयः ।
चतुर्दशविधं न्यासं न्यस्य चिद्रूपमातृकाम् ॥ —१४०

ब्रह्मविष्णुमहेशादिदैवतैरपि पूज्यते ।
समस्तन्याससहिता श्रीमदष्टाक्षरी शुभा ॥

प्रजप्त्वा सकला ज्ञेया निष्कलैवान्यथा स्मृता ।
ब्रह्म तादात्म्यसंसिद्धिमणिमादिगुणां श्रियम् ॥

इच्छताचार्यवक्त्राब्जाद्गृहीत्वा न्यासपूर्विका ।
श्रीमदष्टाक्षरीविद्या प्रजप्या सर्वसिद्धिदा ॥

रश्मिमालां प्रजप्त्वादौ न्यासजालमतः परम् ।
श्रीमदष्टाक्षरीं विद्यां दद्याच्छिष्याय सद्गुरुः ॥

सत्यंसत्यं प्रवक्ष्यामि भूयोभूयो महीपते ।
श्रीमदष्टाक्षरीविद्या जप्तव्या न्यासपूर्विका ॥ —१४५

अनुत्तरब्रह्मतत्त्वरहस्ये श्रुतिसङ्ग्रहे ।
तन्त्रे दाशरथीयेऽस्मिन्नध्यायोऽष्टादशः स्मृतः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे अष्टादशोऽध्यायः ॥

## ॥ अथैकोनविंशोऽध्यायः ॥



**श्री भगवानुवाच –**

इत्थं न्यस्ततनुर्नित्यं साक्षाद्भगवदात्मकः ।
ध्यायेन्निरामयं वस्तु सर्वब्रह्माण्ड नायकम् ॥

वाचामगोचरं सर्गस्थितिसंहारकारकम् ।
अनुत्तमं दुराधर्षं दुर्विज्ञेयमनूपमम् ॥

बालार्ककोटिसदृशं चन्द्रकोट्ययुतप्रभम् ।
आदिमध्यान्तरहितं निष्कलं च निरञ्जनम् ॥

न स्थूलं न च सूक्ष्मं यन्नदृष्टुं शक्यमद्भुतम् ।
मूलादि ब्रह्मरन्ध्रान्तं तेजः परममक्षयम् ॥

तन्महत्तेजसःपुञ्जपिञ्जरीकृतविग्रहः ।
ध्यायेत्स्वहृदयाम्भोजे परमात्मानमच्युतम् ॥ –५

अमृताम्बुनिधेर्मध्ये पारिजातवनावृतम् ।
कल्पद्रुमगणाकीर्णं दिव्यप्राकारशोभितम् ॥

नानामणिगणाकीर्णं नानाजनपदावृतम् ।
तद्विष्णोः परमं धाम वैकुण्ठमितिविश्रुतम् ॥

प्राकारैश्च विमानैश्च रत्नसौधैश्चशोभितम् ।
तन्मध्ये नगरी दिव्या सायोध्येति प्रकीर्तिता ॥

देवानां पूरयोध्येति श्रुतिसिद्धा सनातनी ।
मणिकाञ्चनचित्राढ्या प्राकारैर्बहुभिर्वृता ॥
दिव्याप्सरोगणैः स्त्रीभिः सर्वतस्समलंकृता ॥

चतुर्द्वारसमायुक्ता रत्नगोपुरसंवृता ।
चण्डादि द्वारपालैश्च कुमुदाद्यैस्सुरक्षिता ॥ −१०

कोटिभानुप्रतीकाशैर्गृहपङ्क्तिभिरावृता ।
आरूढयौवनैर्नित्यं दिव्यनारीनरैर्वृता ॥

तन्मध्यांतः पुरं रम्यमयोध्यायां मनोहरम् ।
रत्नप्राकारसहितं हेमतोरण शोभितम् ॥

विमानैर्गृहमुख्यैश्च प्राकारैर्बहुशोभितम् ।
दिव्याप्सरो गणैस्त्रीभिस्सर्वतः समलङ्कृतम् ॥

तन्मध्ये मण्डपं दिव्यं राजस्थानं महोच्चयम् ।
माणिक्यस्तम्भसाहस्रजुष्टं रत्नमयं शुभम् ॥

नित्यमुक्तैस्समाकीर्णं सामगानोपशोभितम् ।
मध्ये सिंहासनं रम्यं सर्वदेवमयं शुभम् ॥ −१५

धर्मादि दैवतैर्नित्यैर्नित्यं पादमयात्मकैः ।
धर्मज्ञानवैरैस्वर्यवैराग्यं पादविग्रहैः ॥

ऋक्सामाथर्वणयजूरूपैर्नित्यैर्वृतं क्रमात् ।
आधारशक्तिचिच्छक्ति मुख्यशक्तिभिरावृतम् ॥

वह्निसूर्येन्दुसहितं वैनतेयादिभिर्वृतम् ।
च्छन्दोमयं सर्वमन्त्रमयं रत्नविभूषितम् ॥

सर्वाक्षरमयं दिव्यं योगपीठमनुत्तमम् ।
तन्मध्येऽष्टदळंपद्ममुदयार्कशतप्रभम् ॥

तन्मध्ये कर्णिकायान्तु साविञ्यां जगतीपतिम् ।
आसीनं परमात्मानं श्रियासह परात्परम् ॥ —२०

इन्दीवरदळश्यामं कोटिकन्दर्पसुन्दरम् ।
युवानमुदयादित्यसमकोटिसमद्युतिम् ॥

कोमलावयवैर्युक्तं कोटिपूर्णेन्दुसन्निभम् ।
प्रबुध्दं पुण्डरीकाक्षं कामचापसमभ्रुवम् ॥

सुनासं सुकपोलाढ्यं सुश्रोत्राननपङ्कजम् ।
मुक्ताफलाभदन्ताढ्यसस्मिताधरविद्रुमम् ॥

पूर्णेन्दुशतसङ्काशप्रसन्नमुखपङ्कजम् ।
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विराजितम् ॥

सुस्निग्धनीलकुटिलकुन्तलैरुपशोभितम् ।
मन्दारपारिजाताढ्यकबरीकृत केशकम् ॥ —२५

प्रातरुद्यत्सहस्रांशुनिभकौस्तुभशोभितम् ।
हारस्वर्णस्रगासक्त कम्बुग्रीवविराजितम् ॥

सिंहस्कन्धनिभैः प्रोच्चैः पीनैरंसैर्विराजितम् ।
पीनवृत्तायतभुजैश्चतुर्भिरुपशोभितम् ॥

अङ्गुलीयैश्च केयूरकटकैरभिमण्डितम् ।
बालार्ककोटिसङ्काशकौस्तुभादिविभूषणम् ॥

विराजितमहावक्षःस्थलं सर्वाङ्गसुन्दरम् ।
दिव्यमालाम्बरधरं वनमालाविराजितम् ॥

विधातुर्जननस्थाननाभिपद्मसुशोभितम् ।
बालातपनिभश्लक्ष्णपीनवस्त्रयुगावृतम् ॥ –३०

नानारत्नविचित्राढ्यकटकाभ्यां विराजितम् ।
वरदाभयहस्ताभ्यामितराभ्यां तथैव च ॥

सज्योत्स्न चन्द्रप्रतिमनखपङ्क्तिविभूषितम् ।
कोटिकन्दर्पलावण्य सौन्दर्यनिधिमच्युतम् ॥

दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पस्रगन्वितम् ।
शङ्खचक्रगृहीताभ्यामुद्बाहुभ्यां विराजितम् ॥

वरदाभयहस्ताभ्यामितराभ्यां तथैव च ।
वामाङ्कसंस्थितां देवीं महालक्ष्मीं महेश्वरीम् ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतप्रभाम् ।
सर्वलक्षणसम्पन्नां यौवनारम्भविग्रहाम् ॥ –३५

रत्नकुण्डलसंयुक्तां वाळीयुगळशोभिताम् ।
दिव्यचन्दनलिप्ताङ्गीं दिव्यपुष्पोपशोभिताम् ॥

मन्दारकेतकीजातिकुसुमाञ्चितकुण्डलाम् ।
मुक्तामाणिक्यखचितनासिकाभरणान्विताम् ॥

भगवच्चापसदृशभ्रूयुग्मेन विराजिताम् ।
राजीवायतनेत्रान्तामञ्जनाञ्चितलोचनाम् ॥

अकलङ्कचरच्चन्द्रसहस्रसदृशाननाम् ।
मुक्ताजालसमप्रख्यदन्तपङ्क्तिविभूषिताम् ॥
पक्वबिम्बफलप्रख्याधरद्वयशोभिताम् ॥

तरुणादित्यसङ्काश कर्णपुष्पोपशोभिताम् ।
सुस्निग्धनीलकुटिलकुन्तलैरुपशोभिताम् ॥ —४०

स्मितवक्त्रां विशालाक्षीं प्रसन्नवदनाम्बुजाम् ।
आद्यभूषणचिन्ताकपदकादिविभूषिताम् ॥

हारस्वर्णस्रगासक्तकम्बुग्रीवविराजिताम् ।
तप्तकाञ्चनवर्णाभां तप्तकाञ्चनभूषणाम् ॥

हस्तैश्चतुर्भिस्संयुक्तां कनकाम्बरभूषणाम् ।
नानारत्नविचित्राढ्यकनकाम्बुजमालया ॥

हारकेयूरकटकैरङ्गुलीयैश्चशोभिताम् ।
भुजद्वयधृतोदग्रपद्मयुग्मविराजिताम् ॥

गृहीतमातुलुङ्गाख्य जाम्बूनदकराञ्चिताम् ।
मातरं सर्वजगतां शरणागतवत्सलाम् ॥ —४५

ब्रह्मरुद्रमहेन्द्रादि मौलिमाणिक्यजातया ।
कान्त्याविराजितपदां भक्तत्राणपरायणाम् ॥

एवं नित्यानपायिन्या महालक्ष्म्या समन्वितम् ।
अनन्तकोटिब्रह्माण्डनायकं भक्तवत्सलम् ॥

तेजोमयं जगद्वन्द्यं श्रीपतिं परमेश्वरम् ।
पार्श्वयोर्धरणीदेव्या नीलादेव्यासमन्वितम् ॥

संसेवितं चाष्टदिक्षु विमलाद्यष्टसिद्धिभिः ।
अनन्तविहगाधीशसेनान्याद्यैः सुरेश्वरैः ॥

नित्यमुक्तैःसमाकीर्णमन्यैः पारिजनैरपि ।
सर्वदेवोत्तमैर्वन्द्यं ध्येयं सकलयोगिभिः ॥ —५०

नारायणमहंवन्दे भक्तत्राणपरायणम् ।
इत्थं लक्ष्मीपतिं ध्यात्वा नारायणमजं विभुम् ॥

आचार्यं मस्तके नत्वा श्रीमदष्टाक्षरीं जपेत् ।
आचार्यवदनादेव ध्यानसूक्तमिमं शुभम् ॥

गृहीत्वासततं ध्यात्वा पठित्वापि दिने दिने ।
ब्रह्मतादात्म्यसंसिद्धिं व्रजत्याशु न संशयः ॥

बालार्कमण्डले यद्वा सन्तप्तकनकप्रभम् ।
वेदाश्वरथमारूढं पीताम्बरविराजितम् ॥

किरीटकुण्डलधरं मुक्ताहारविराजितम् ।
सुवर्णरत्नखचितमुद्रिकाभिरलङ्कृतम् ॥ —५५

राजीवायतनेत्रान्तं प्रसन्नवदनाम्बुजम् ।
बालादित्यसहस्राभं कामकोटिसमद्युतिम् ॥

अकलङ्कशरत्पूर्णचन्द्रसाहस्रसन्निभम् ।
सुवर्णरत्नखचितं मुद्रिकाभिरलङ्कृतम् ॥

शङ्खचक्रगदापद्मधरं श्रीवत्सवक्षसम् ।
कौस्तुभोद्भासितोरस्कं वनमालाविभूषितम् ॥

मूर्तिमद्भिश्चतुर्वेदैः संस्तुतं परमेश्वरम् ।
मुनिभिर्वालखिल्याद्यैर्ब्रह्मरुद्रादिदैवतैः ॥

योगिभिस्सनकाद्यैश्चस्तूयमानमहर्निशम् ।
वीरासनसमासीनं विद्युत्कोटिसमश्रियम् ॥ —६०

श्रियादेव्यामहालक्ष्म्या राज्यलक्ष्म्यासमन्वितम् ।
श्रियःपतिं त्रिजगतां हेतुभूतं सनातनम् ॥

हिरण्मयं महायोगिध्येयं नित्यं हृदम्बुजे ।
नारायणं जगन्नाथं बहिरन्तस्तमोहरम् ॥

देवदेवंजगद्वन्द्यं सर्वकारणकारणम् ।
शरण्यं सर्वजगतामिन्दिरारमणं प्रभुम् ॥

भजामि परमात्मानं श्रीभूनीलापतिं हरिम् ।
ध्यानसूक्तद्वयं पुण्यमिदमुक्तं मया तव ॥

आचार्यानुग्रहादेव गृहीत्वा सुशुभे दिने ।
तोषयित्वा शुभैरर्थैर्जप्त्वाध्यात्वा च सन्ततम् ॥ —६५

श्रीमदष्टाक्षरीं जप्त्वा सहस्रं वा चतुश्शतम् ।
त्रिशतं शतमेकं वा साक्षान्नारायणो भवेत् ॥

आचार्यानुज्ञया नित्यं ध्यानसूक्तद्वयं तु वा ।
पठित्वा प्रत्यहं धीमान् विमुक्तोऽखिलपातकैः ॥

देहान्तेपरमंधाम यातिविष्णोः सनातनम् ।
इति दाशरथीयेऽस्मिन् तन्त्रेवेदार्थ सङ्ग्रहे ॥
ध्यानसूक्तद्वयाध्याय उक्तो एकोनविंशकः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे एकोनविंशोऽध्यायः ॥

## ॥ अथ विंशोऽध्यायः ॥



श्री भगवानुवाच –

यन्त्रोद्धारमथोवक्ष्ये शृणुष्वावहितो नृप ।
यत्र सम्पूज्य लक्ष्मीशं ब्रह्मानन्दसुखं लभेत् ॥

न्यासजालं यदुदितं मया पूर्वं महीपते ।
अवश्यं सकलन्यासाः कर्तव्या गुर्वनुज्ञया ॥

न्यासेन भगवद्रूपी भूत्वा मन्त्रमयः पुमान् ।
ततश्च हृदयाम्भोजे ध्यायेन्नारायणं विभुम् ॥

यद्वा नारायणात्मानं ध्यायेत्स्वाचार्यमीश्वरम् ।
तत्पत्नीमपिचध्यायेत्त्रिजगन्मातरं श्रियम् ॥

भगवन्मूर्तिसिद्ध्यर्थमात्मनोऽथमहीपते ।
किरीटविद्यामुच्चार्य मनसा कुसुमाञ्जलिम् ॥ –५

पञ्चवारं हृदम्भोजे प्रदद्यान्मौनमाश्रितः ।
त्रयीबीजं किरीटेति केयूरेतिपदं ततः ॥

हरेतिमुकुटेत्युक्त्वा कुण्डलेतिधरेत्यथ ।
शङ्खचक्रगदापद्महस्तशब्दमतःपरम् ॥

पीताम्बरधरेत्युक्त्वा श्रीवत्साङ्कितशब्दतः ।
वक्षःस्थलपदं पश्चाच्छ्रीभूमिसहितेत्यथ ॥

स्वात्मज्योतिरिति प्रोक्त्वा ततोऽक्षयपदं नृप ।
पदं दीप्तिकराया नंतादित्येति पदादथ ॥

तेजसे हृदयोपेतवह्निपत्नीपदं नृप ।
अयं किरीटमन्त्रःस्याद्भगवन्मूर्तिसिद्धिदः ॥ —१०

यदुक्तं मन्त्रदेवस्य मन्त्रेऽस्मिन् भूषणादिकम् ।
तद्दिव्यभूषणं प्रोक्तमन्यन्मानुषभूषणम् ॥

दिव्यैर्विभूषणैश्शिष्यो य आचार्यं समर्चयेत् ।
अवश्यं भगवद्रूपी स्वयमेव भवेद्ध्रुवम् ॥

मुखालंकरणं दिव्यं यदुक्तं कुण्डलद्वयम् ।
तदुत्तमालङ्करणमेतेष्वपि महीयते ॥

तस्मादवश्यं सन्तप्तकनकेन विनिर्मितम् ।
सुशुद्धपद्मरागाख्यं मणिबिन्दुविभूषितम् ॥

शुभेदिने शुभेलग्ने पुरश्चर्यादिकर्मसु ।
आचार्यकर्णयोर्दत्वा प्रणिपातपुरस्सरम् ॥ —१५

सुवर्णवालीयुग्मेन ताटङ्काभरणेनवा ।
आचार्यपत्नीमभ्यर्च्य षण्मासादिन्दिरापतिम् ॥

पश्यत्येव स्वचक्षुर्भ्यां सत्यमेव महीपते ।
आचार्यरूपिणं विद्धि मामेव जगतीपतिम् ॥

तत्पत्नीं तत्प्रियां विद्धि श्रियं त्रिजगदम्बिकाम् ।
मकराकृतिसंतप्तकाञ्चनेन विनिर्मितम् ॥

कुण्डलद्वितयं रम्यं पद्मराग विभूषितम् ।
आचार्यकर्णयोर्दत्वा शुभलग्ने शुभेदिने ॥

अवश्यं पितृसाहस्रं मग्नं च नरकार्णवे ।
उध्दृत्य काञ्चनमयं विमानं दिव्यमक्षयम् ॥ –२०

आरुह्य कोटिकन्दर्पसुन्दरो दिव्यभोगभाक् ।
ब्रह्माण्डमखिलं भित्त्वा पदं प्राप्नोति शाश्वतम् ॥

इहापि परमामृद्धिं धनधान्यादिसङ्कुलाम् ।
पुत्रपौत्रवतीमायुरारोग्यसहितां लभेत् ॥

यद्यद्विभूषणं दिव्यमाचार्याय समर्पयेत् ।
ब्रह्मानन्दसुखावाप्तिकरं तत्तन्न संशयः ॥

पीताम्बरयुगं नित्यं वासस्सु भगवद्धृतम् ।
तदेवभगवत्पत्न्या श्रियापि धृतमन्वहम् ॥

आचार्यायापि तत्पत्न्यै दुकूलं यः प्रयच्छति ।
ग्रहणादिषु पुण्येषु कालेषु नियतव्रतः ॥ –२५

दिव्यपीताम्बरधरो दिव्यालंकरणान्वितः ।
ब्रह्म तादात्म्यसंसिद्धिमवश्यं प्राप्नुयादसौ ॥

तस्मादवश्यं दातव्यमलंकारधनादिकम् ।
आचार्याय च तत्पत्न्यै तत्सुतेभ्योऽपि सन्ततम् ॥

यन्त्रस्वरूपं वक्ष्यामि श्रीपतेः परमात्मनः ।
यत्रसंपूज्य लक्ष्मीशं ब्रह्मानन्दसुखं लभेत् ॥

विलिख्य षडरं पूर्वं वृत्तमष्टदलं ततः ।
तद्बहिर्विलिखेद्वृत्तं चतुरश्रमतः परम् ॥

षट्कोणमध्ये प्रणवद्वयान्तरविगर्भितम् ।
साध्यं कर्मसमालिख्य षट्सु कोणेष्वतः परम् ॥ –३०

सन्दर्शनन्नृसिंहस्य वर्णषट्कं समालिखेत् ।
श्रीमदष्टाक्षरीवर्णान् विलिखेदष्टपत्रके ॥

तदग्रेषु श्रीकरस्य मनोरेकैकमक्षरम् ।
लिखित्वा द्वादशारेषु वासुदेवमहामनोः ॥

एकैकं वर्णमालिख्य द्वात्रिंशारे ततः परम् ।
नृसिंहानुष्टुभमनोरेकैकं वर्णमालिखेत् ॥

नृसिंहैकाक्षरेणाथ वेष्टयेद्वृत्तमन्ततः ।
श्रीमदष्टाक्षरीविद्यायन्त्रमेतदुदीरितम् ॥

पञ्चाशदक्षरैः पश्चाद्वेष्टयेच्चतुरश्रकम् ।
चतुरश्रं विनाष्टार्णयन्त्रं लघुसमीरितम् ॥ –३५

चतुरश्रसमायुक्तं बृहद्यन्त्रमुदीरितम् ।
यन्त्रमेतल्लिखित्वादौ सौवर्णे राजतं तु वा ॥

भूर्जपत्रमयंताम्रलिखितं वा श्रियःपतेः ।
प्राणसंस्थापनं कृत्वा शुभलग्ने शुभेदिने ॥

स्वाचार्यचरणाम्भोजद्वयं संपूज्य वस्तुभिः ।
अलङ्कारैश्च वासोभिरपि तस्य कलत्रकम् ॥

श्रीमदष्टाक्षरीं विद्यां समस्तन्यास संयुताम् ।
त्रिशताधिकसाहस्रं.... हुत्वा तत्र शतं घृतम् ॥

रश्मिमन्त्रैः सकृद्धुत्वा पूजयेत्प्रत्यहं नृप ।
अथवाधारयेद्यन्त्रं गुलीकृत्य च यत्नतः ॥ –४०

धारणार्थं च पूजार्थं यन्त्रद्वितयमातरात् ।
विलिख्य धारयित्वादौ पूजयेद्यदि सन्ततम् ॥

मन्दभाग्योऽपि सकलसम्पदामाश्रयो भवेत् ।
चलन्ति सम्पदोऽन्यस्य मन्दिरे कुत्रचित्क्वचित् ॥

आधिव्याधिभयेरक्षः कूश्माण्डादिभयेषु च ।
रक्षाकरं शुभकरं सर्वारिष्टविमर्दनम् ॥

धारणात् पूजनादस्य मृत्युकालभयं न हि ।
आचार्यानुग्रहात्तस्य मोक्षश्रीः शाश्वती शुभा ॥

तत्पाणिकमले तिष्ठत्यवश्यं नात्रसंशयः ।
अथ पूजाविधानं ते प्रवक्ष्यामि द्विधा नृप ॥ –४५

यस्य विज्ञानमात्रेण साक्षाद्विष्णुमयो भवेत् ।
विमलोत्कर्षिणीज्ञाना क्रियायोगा तथैव च ॥

मही सत्त्वा तथेशानानुग्रहा नवशक्तयः ।
नवशक्तिधृतं पीढमभ्यर्च्यादौ श्रियःपतेः ॥

शङ्कं ॐ नमः पदमाभाष्य पदं भगवते ततः ।
विष्णवे पदमुच्चार्य सर्वभूतात्मने पदम् ॥

वासुदेवाय शब्दं च ततः सर्वान्मने पदम् ।
योगपीठात्मने पश्चान्नतिशब्दसमन्वितम् ॥

अनेन पीठमन्त्रेण पीठं भगवतान्यसेत् ।
षट्कोणमध्ये मूलेन लक्ष्मी मन्त्रयुतेन च ॥ –५०

श्री श्रीशद्वादशाक्षर्या समावाह्य श्रियःपतिम् ।
कुर्यात्सर्वोपचारांश्च श्री श्रीशब्रह्मविद्यया ॥

मूलविद्यां श्रियोमन्त्रान् ब्रह्मविद्यां समुच्चरन् ।
अभ्यर्च्य पञ्चधा पश्चाल्लक्ष्मीनारायणौ विभू ॥

हृदयादिषडङ्गानि षट्कोणेष्वथार्चयेत् ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥

दिक्ष्वभ्यर्च्य श्रियं वाणीं रतिं प्रीतिं विदिक्षु च ।
"द्वितीयावरणं" प्रोक्तं चक्रं शङ्खं गदाम्बुजे ॥

कौस्तुभं मुसलं खड्गं वनमालामतःपरम् ।
"तृतीयावरणं" प्रोक्तं ध्वजं पद्मनिधिं ततः ॥
गरुत्मन्तं शङ्खनिधिं दिक्षु विघ्नेश्वरं ततः ॥ —५५

वटुकं च ततो दुर्गां विष्वक्सेनं विदिक्षु च ।
"चतुर्थावरणं" प्रोक्तं दिक्पालैः पञ्चमं विदुः ॥

लघुपूजाविधानंते प्रोक्तमेतदभीष्टदम् ।
इत्थं यन्त्रे समभ्यर्च्य रमानाथं जगत्पतिम् ॥

विमुक्तः सर्वपापौघैः समस्तफलसिद्धिभाक् ।
बृहत्पूजाविधानंते रहस्यमपि सन्ततम् ॥

अनुग्रहात् प्रवक्ष्यामि तुभ्यं जनकभूपते ।
चण्डं प्रचण्डं प्राग्द्वारे याम्ये भद्रसुभद्रकौ ॥

जयं च विजयं पश्चाद्द्वारपालान् समर्चयेत् ।
धातारं च विधातारमुत्तरद्वारिपूजयेत् ॥ —६०

कुमुदं कुमुदाक्षं च पुण्डरीकञ्च वामनम् ।
अम्बुकर्णं सर्वनेत्रं सुमुखं सुप्रतिष्ठितम् ॥

दिक्पतीनर्चयेदित्थमयोध्या नगराद्बहिः ।
तन्मध्येभगवद्दिव्यांतःपुरेति गृहाय च ॥

नमउक्त्वा भगवतो गृहीतः पुरमर्चयेत् ।
मणिप्राक्परसहिततोमरेतिपदात्परम् ॥

भगवद्दिव्यपदतो विमानाय नमस्तथा ।
विमानं तत्र सम्पूज्य तन्मध्ये दिव्यशब्दतः ॥

अप्सरस्त्रीभ्य इत्युक्त्वा हृदयेनाप्सरस्त्रियः ।
तन्मध्ये पदमुच्चार्य राजास्थानपदं ततः ॥ –६५

महोच्चयपदं मण्डपायेति नम उच्चरेत् ।
इत्थं मण्डपमभ्यर्च्य तन्मध्ये पदमप्यथ ॥

माणिक्यस्तम्भसाहस्रजुष्टाय पदमप्यथ ।
रत्नमण्डपमभ्यर्च्य चतुर्थ्यन्तं नमोऽन्वितम् ॥

अभ्यर्च्य मण्डपं पश्चाद्भूयोऽपि वसुधापते ।
तन्मध्ये सर्ववेदेति समदिव्य पदात्परम् ॥

रत्नसिंहासनायेति नम उच्चार्य भूपते ।
सिंहासनं समभ्यर्च्य धर्मं ज्ञानमतःपरम् ॥

वैराग्यमप्यथैश्वर्यं दिक्ष्वधर्ममतःपरम् ।
अज्ञानमप्यवैराग्यमनैश्वर्यं विदिक्षु च ॥ –७०

समभ्यर्च्य यजेत्पश्चादृग्वेदं यजुषां गणम् ।
सामवेदं ततोवेदमथर्वणमतःपरम् ॥

शक्तिमाधारशक्तिं च चिच्छक्तिं च सदाशिवाम् ।
अभ्यर्च्य मण्डळेवह्नेर्यजेदर्कस्य मण्डलम् ॥

चन्द्रमण्डलमभ्यर्च्य कूर्मं नागाधिपं ततः ।
वैनतेयं त्रयीराजं यजेच्छन्दांस्यतः परम् ॥

सर्वमन्त्रान् समभ्यर्च्य सर्वमन्त्राक्षरेत्यथ ।
यायदिव्यपदं योगपीठायनम इत्यथ ॥

योगपीठं समभ्यर्च्य पूर्वोक्तमनुनापिच ।
तन्मध्ये पदमुच्चार्य बालसूर्यशतेत्यथ ॥ —७५

सन्निभायाष्टदळतः पद्माय नम उच्चरेत् ।
पद्ममभ्यर्च्य तन्मध्ये सावित्र्यै नम उच्चरेत् ॥

श्रीमदष्टार्णमन्त्रस्य ह्यार्षच्छन्दोऽथदैवतम् ।
बीजशक्ती ततोन्यस्य देवदेवं श्रियःपतिम् ॥

ध्यात्वा स्वहृदयाम्भोजे मन्त्रोऽप्यावाह्ययत्नतः ।
श्रीमदष्टाक्षरीं विद्यां वासुदेवमनुं ततः ॥

षडक्षरीं वैष्णवीं च श्रीमन्त्रानथ संस्मरेत् ।
ब्रह्मविद्यां समुच्चार्य समावाह्य श्रियःपतिम् ॥

सर्वोपचारान् कुर्वीत श्री श्रीशब्रह्मविद्यया ।
प्रणवं चित्कलाबीजं श्री श्रीशाष्टाक्षरं ततः ॥ —८०

रत्नसिंहासनं पश्चात् कल्पयामि नमः पदम् ।
उपचार्यासनमुख्यैश्च यजेत्सर्वोपचारकैः ॥

रत्नसिंहासनं पाद्यमर्घ्यमाचमनीयकम् ।
कृत्वा पञ्चामृतस्नानं स्नानंशुद्धोदकैरथ ॥

वस्त्रद्वयं स्वर्णयज्ञोपवीतत्रितयं ततः ।
दिव्यश्रीचन्दनं पश्चादक्षतान् कल्पयेदथ ॥

नानाविधानि दिव्यानि कुसुमानि च कल्पयेत् ।
नानाविधानि दिव्थानि भूषणान्यर्पयेदथ ॥

धूपदीपं कल्पयित्वा नीराजनमतःपरम् ।
छत्रञ्च चामरद्वन्द्वं दर्पणञ्चापिकल्पयेत् ॥ —८५

रक्षामाचमनीयञ्च भूयो नैवेद्यमादरात् ।
पानीयमपि हस्ताब्ज प्रक्षाळनमतःपरम् ॥

ताम्बूलञ्च चतुर्विंशत्युपचारान् प्रकल्पयेत् ।
पूर्वोक्तविधिना लक्ष्मीपतिं नारायणं विभुम् ॥

सालग्रामशिलाचक्रे ध्यात्वा यन्त्रेऽथवा ततः ।
ब्रह्मविद्यां समुच्चार्य पञ्चवारमथार्चयेत् ॥

भूदेवीं दक्षिणेपार्श्वे वामे नीलां समर्चयेत् ।
षडङ्गान्यर्चयेत्पश्चदग्नीशासुरदिक्षु च ॥

वायव्ये मध्यभागे च सर्वदिक्षु क्रमान्नृप ।
अष्टदिक्षु दलाग्रेषु विमलाद्यास्ततः परम् ॥ —९०

विमलामादितोऽभ्यर्च्य तत उत्कर्षिणीं नृप ।
ज्ञानं क्रियां तथायोगं प्रज्ञां सत्यामतःपरम् ॥

ईशानानुग्रहे पश्चादर्चयेद्वसुधापते ।
ततःप्राच्यादि भागेषु वासुदेवं श्रियं यजेत् ॥

सङ्कर्षणमथोवाणीं प्रद्युम्नं रतिमप्यथ ।
अनिरुद्धं तथा शान्ति द्वितीयावरणं स्मृतम् ॥

केशवं नारायणं माधवं गोविन्दं विष्णुमेव च ।
मधुसूदनमभ्यर्च्य तौ त्रिविक्रमवामनौ ॥
श्रीधरं च हृषीकेशं पद्मनाभमतःपरम् ॥

दामोदरं सङ्कर्षणं वासुदेवमतःपरम् ।
प्रद्युम्नमनिरुद्धञ्च पुरुषोत्तममप्यथ ॥ —९५

अधोक्षजं नारसिंहमच्युतञ्च जनार्दनम् ।
उपेन्द्रं च हरिं पश्चाच्छ्रीकृष्णञ्च क्रमाद्यजेत् ॥

तृतीयावरणं पश्चान्मत्स्यं कूर्मं वराहकम् ।
नारसिंहं वामनञ्च जामदग्न्यमतःपरम् ॥

रामं दाशरथिं पश्चाद्धलराममतःपरम् ।
बुद्धञ्च कल्किमित्येतानवतारान् क्रमाद्यजेत् ॥

चतुर्थावरणं प्रोक्तं सत्यमच्युतमेव च ।
अनन्तं सर्वमभ्यर्च्य विष्वक्सेनमतः परम् ।

गजाननं शङ्खनिधिं यजेत्पद्मनिधिं ततः ।
पञ्चमावरणं प्रोक्तमृग्वेदं यजुषां गणम् ॥ –१००

सामवेदमथर्वाणं सावित्रीं विहगेश्वरम् ।
धर्मञ्च यज्ञपुरुषं षष्ठावरणमीरितम् ॥

शङ्खं चक्रं गदां पद्मं खड्गं शार्ङ्गं हलं तथा ।
मुसलं सप्तमं प्रोक्तं देवस्यावरणं शुभम् ॥

शचीमहेन्द्रौ स्वाहाग्नी तथा संहारणीयमौ ।
तामसीनिर्ऋतीपश्चाद्भार्गवीवरुणौ तथा ॥

गतिवायू च सम्पत्तिकुबेरौ च ततः परम् ।
रुद्राणीशङ्करौ पश्चादूर्ध्वे वाक्चतुराननौ ॥

लक्ष्मीनारायणौ पश्चदष्टमावरणं स्मृतम् ।
वज्रायुधं शक्तिदण्डौ खड्गं पाशं ध्वजं गदाम् ॥ –१०५

त्रिशूलमम्बुजं चक्रं नवमावरणं स्मृतम् ।
साध्यान् मरुद्गणांश्चैव विश्वेदेवानतः परम् ॥

योगिनः सनकाद्यांश्च देवर्षीन्नारदादिकान् ।
कपिलादिमहासिद्धान् दत्तात्रेयादियोगिनः ॥

प्रह्लादादि महाभक्तानाञ्जनेयादिकिङ्करान् ।
ज्ञानिनो जनकाद्यांश्च नृपान् दशरथादिकान् ॥

अर्चयित्वा पुनः श्रीशं ब्रह्मविद्यां समुच्चरन् ।
अर्कावृच्या समभ्यर्च्य लक्ष्मीनारायणौ विभू ॥

उपचारान् धूपदीपनैवेद्यादीन् समर्पयेत् ।
तत आचार्यमुद्दिश्य भगवत्सन्निधौ नृप ॥ –११०

यत्किञ्चिदपि वा देयं सुवर्णं रजतं तु वा ।
ताम्रं धान्यं घृतं वापि प्रत्यहं श्रेय इच्छता ॥

यद्वा सङ्कल्पितं चित्ते दातव्यं मासि मासि च ।
अवन्ध्यं दिवसं कुर्यादन्यथा पापभुग्भवेत् ॥

पूजाविधानमेतत्ते सम्यङ मह उदीरितम् ।
महापातकसंघौघनाशनं भुक्तिमुक्तिदम् ॥

अशक्तः प्रत्यहं कर्तुं कुर्याद्भार्गववासरे ।
मासिमास्यथवाकुर्यात्प्रथमेभार्गवे दिने ॥

नवरात्रव्रतेऽवश्यं कुर्यात्प्रत्यहमर्चयन् ।
अलभ्ययोगेषु सदाकर्तव्यं पूजनं नृप ॥ –११५

तं पालयति लक्ष्मीशः प्रत्यहं पुत्रवत्सदा ।
इत्थमाचार्यतः पुंसःश्रेयोराशिर्दिने दिने ॥

सिध्यन्ति सम्पदःसर्व भोगा अपि सुदुर्लभाः ।
इत्थं श्रीशयजनं महान् यागउदाहृतः ॥

राजसूयोऽश्वमेधोवा नैतेन सदृशो भवेत् ।
न्यूनातिरिक्तसम्पूर्त्यै यागसाफल्यसिद्धये ॥

आचार्यदक्षिणांदद्याद्वित्तलोभविवर्जितः ।
आचार्यदक्षिणाहीनं यद्दिनं वसुधापते ॥

यमदूतैर्यमेनापि तत्र दृष्टो भवत्यसौ ।
यमभीतिहरं पुंसां भोगस्वर्गापवर्गदम् ॥ —१२०

आचार्यदक्षिणादानं प्रत्यहं वसुधापते ।
लक्ष्मीनारायणौ नित्यमित्थमर्चयतो नृप ॥
सिध्यन्ति सिद्धयस्सर्वास्त्रिदशैरपि दुर्लभाः ॥

पूजाविधानमेतत्ते प्रोक्तं जनकभूपते ।
वेदाध्ययनसक्तस्य सदाचारवतोऽन्वहम् ॥
श्रीमदष्टाक्षरीविद्या जपासक्तस्य सन्ततम् ॥
अनेन विधिनापूजाकर्तुरन्वहमादरात् ।
समस्ताभीप्सितं तस्य सिध्यत्यपि सुदुर्लभम् ॥

अनुत्तरब्रह्मतत्त्व रहस्ये श्रुति संग्रहे ।
इतिदाशरथीयेऽत्र विंशाध्याय उदीरितः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे विंशोऽध्यायः ॥

## ॥ अथैकविंशोऽध्यायः ॥



ऋषय ऊचुः —

ऋश्यशृङ्ग महाभाग भगवन् योगिनांवर ।
वेदोदितं सदाचारं मन्वाद्यैरप्युदीरितम् ॥

त्वन्मुखाच्छ्रोतुमिच्छामः परं कौतूहलं हि नः ।
यथा श्रियःपतिस्तुष्टो भक्तानां सततं भवेत् ॥

यथा चित्तस्य शुद्धिस्स्याद्यथाशुद्धं कळेवरम् ।
श्रीमदष्टाक्षरीविद्या रश्मिमाला समन्विता ॥

यथा नायासतः सिध्येत्तत्परं ब्रूहि नो मुने ।

ऋश्यशृङ्ग उवाच —

पुरा भगवता प्रोक्तं रुद्राय परिपृच्छते ॥

जानकीपतिना प्रोतं सदाचारं वदाम्यहम् ।
साध्यनारायणेनादावुक्तं राज्ञे महात्मने ॥ —५

पुनर्दाशरथिःप्राह शम्भवे जानकीपतिः ।
ब्रह्मचर्यञ्चगार्हस्थ्यं वनवासश्चभिक्षुता ॥

चत्वार आश्रमा एते द्विजातीनां महामते ।
श्रीमदष्टाक्षरीविद्या समस्ताश्रमिणामपि ॥

जप्त्वाभीप्सितसंसिद्धिं दद्यान्मुक्तिञ्च शाश्वतीम् ।
सदाचारवतानित्यं समस्तन्यासससंयुता ॥

श्रीमदष्टाक्षरीविद्या दद्यात्सिद्धिञ्च दुर्लभाम् ।
संक्षेपादुदितं पूर्वं सदाचारं महामते ॥

पुनर्विशेषतो वक्ष्ये सावधानमनाश्शृणु ।

**श्री भगवानुवाच –**

शृणुराजन् प्रवक्ष्यामि सदाचारं महामते ॥ –१०

यच्छ्रुत्वापि नरो धीमान् नाज्ञानतिमिरं विशेत् ।
ब्राह्मणाः क्षत्रियावैश्यास्त्रयोवर्णा द्विजास्स्मृताः ॥

प्रथमं मातृतो जन्म द्वितीयंचोपनायनात् ।
येषां क्रिया निषेकादिश्मशानान्ता च वैदिकी ॥

आदधीत सुधीर्गर्भमृतौ मूलयमांस्त्यजेत् ।
स्पन्दनात्प्राक् पुंसवनं सीमन्तोन्नयनं ततः ॥

मासिषष्ठेऽष्टमेवापि जातेऽथो जातकर्म च ।
नामह्न्येकादशे गेहाच्चतुर्थे मासि निष्क्रमः ॥

मासेऽन्नप्राशनं षष्ठे चूडाऽब्दे वा यथाकुलम् ।
शममेनो व्रजत्येव बीजगर्भजमेव च ॥ –१५

स्त्रीणामेताःक्रियास्तूष्णीं पाणिग्राहस्तु मन्त्रवान् ।
सप्तमेवाष्टमेऽब्दे वा सावित्रीं ब्राह्मणोऽर्हति ॥

नृपस्त्वेकादशेवैश्यो द्वादशे वा यथाकुलम् ।
ब्रह्मतेजोऽभिवृध्द्यर्थं विप्रोऽब्दे पञ्चमेऽर्हति ॥

षष्ठे बलार्थी नृपतिःमौञ्जीं वैश्योऽष्टमेधिये ।
महाव्याहृतिपूर्वञ्च वेदमध्यापयेद्गुरुः ॥

उपनीयततः शिष्यं शौचाचारे च शिक्षयेत् ।
पूर्वोक्तविधिनाशौचं कुर्यादाचमनं सदा ॥

दन्तान्जिह्वांचसंशोध्य कृत्वामलविशोधनम् ।
स्नानाम्बुदैवतैर्मन्त्रैःप्राणानायम्ययत्नतः ॥ —१०

उपस्थानं रवेःकृत्वा सन्ध्ययोरुभयो रपि ।
अग्निकार्यं ततः कृत्वा श्रीमदष्टाक्षरीरतः ॥

आचार्यमभिवाद्याथ विप्राग्र्यांश्चभिवादयेत् ।
ब्रुवन्नसावहमिति ह्युपासीत ततो गुरुम् ॥

अभिवादनशीलस्य वृद्धसेवारतस्य च ।
आयुर्बलं यशोबुद्धिर्वर्धेतश्चोरहर्निशम् ॥

अधीते गुरुणाहूतः प्राप्तं तस्मै निवेदयेत् ।
कर्मणा मनसा वाचा हितं तस्य स्मरेत्सदा ॥

अध्याप्यधर्मतोह्यर्थान् साध्वाप्तज्ञानवित्तमाः ।
शक्ताःकृतज्ञाः शुचयोऽद्रोहिकल्पानसूयकाः ॥ —२५

कुर्वन्तः सद्गुरोराज्ञापालनं धर्ममाप्नुयुः ।
श्रीमदष्टाक्षरीं सांगां ज्ञातुं जप्तुं च सन्ततम् ॥

आश्रयेद्ब्रह्मचर्येऽपि ब्राह्मणोमुक्तिसिद्धये ।
वेदाध्ययनसिध्यर्थं प्राप्तयेऽष्टाक्षरस्य च ॥

आश्रयेत् सद्गुरुं धीमान् गुरुद्वयमथापिवा ।
धारयेन्मेखलादण्डोपवीताजिनमेव च ॥

अनिन्द्येषु चरेद्भैक्ष्यं ब्राह्मणेष्वात्मतृप्तये ।
ब्राह्मणक्षत्रियविशामादिमध्यावसानतः ॥

भैक्षचर्याक्रमेणस्याद्भवच्छब्दोपलक्षिता ।
वाग्यता गुर्वनुज्ञातो भुञ्जीतान्नमकुत्सयन् ॥ –३०

एकान्नं न समश्नीयाच्छ्राद्धेऽश्नीयात्तथा यदि ।
अनारोग्यमनायुष्यमस्वर्ग्यं चेतिभोजनम् ॥

अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ।
न द्विर्भुञ्जीत चैकस्मिन्दिवा क्वापि द्विजोत्तमः ॥

सायं प्रातर्द्विजोऽश्नीयादग्निहोत्रविधानवत् ।
मधु मांसं प्राणहिंसां भास्करालोकनाञ्जने ॥

स्त्रियं पर्युषितोच्छिष्टं परिवादञ्चवर्जयेत् ।
औपनायनिकः कालो ब्रह्मक्षत्रविशां परः ॥

आषोडशाद्द्वाविंशादाचतुर्विंशतिरब्दतः ।
इतोप्यूर्ध्वं न संस्कार्याः पतिता धर्मवर्जिताः ॥ –३५

व्रात्यस्तोमेन यज्ञेन पतितं परिशोधयेत् ।
सावित्रीपतितैः सार्धं संसर्गं न समाचरेत् ॥

ऐणं च रौरवं चास्त्वं क्रमाच्चर्मद्विजन्मनाम् ।
उपवीतं क्रमेणस्यात्कार्पासं शाणमाविकम् ॥

त्रिवृदूर्ध्वं व्रतं तच्च भवत्यायुर्विवृद्धये ।
बिल्वपालाशयोदण्डो ब्राह्मणस्य नृपस्यतु ॥

न्यग्रोधचालदळयोर्वा दरौदुम्बरौ विशः ।
आमौलितो ललाटं वा नासिकोर्ध्वप्रमाणतः ॥

ब्रह्मक्षत्रविशां दण्डः .... .... ... ।
प्रदक्षिणं परीत्याग्निमुपस्थाय दिवाकरम् ॥ –४०

दण्डाजिनोपवीतदंडाढ्यश्चरेद्भैक्षं यथोदितम् ।
मातृमातृष्वसृपितृपितृष्वसृ पुरस्सराः ॥

प्रथमं भिक्षणीयाःस्युर्बन्धुनार्यस्ततःपरम् ।
औपनायनिके काले ततो विप्राग्र्यमन्दिरे ॥

भिक्षाचर्यं चरेद्धीमाननिन्द्ये वसुधापते ।
यावद्वेदमधीतेऽसौ चरेद्वेदव्रतानि च ॥

ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृहीभवेत् ।
उपकुर्वन् गुरोर्नित्यं तदुक्तेषु च नैष्ठिकः ॥

तिष्ठेत्तावद्गुरुकुले यावत्स्यादायुषः क्षयः ।
गृहाश्रमं समाश्रित्य यः पुनर्ब्रह्मचर्यभाक् ॥ —४५

नासौयतिर्वनस्थोवा स्यात्सर्वाश्रमविवर्जितः ।
अनाश्रमी नतिष्ठेत दिनमेकमपि द्विजः ॥

आश्रमंतु विना तिष्ठन् प्रायश्चित्तीयते हि सः ।
जपं होमं व्रतं दानं स्वाध्यायं पितृतर्पणम् ॥

विनाश्रमं प्रकुर्वाणो नासौ तत्फलमश्नुते ।
मेखलाजिनदण्डाश्च लिङ्गं स्याद्ब्रह्मचारिणः ॥

गृहिणो वेदयष्ट्यादि नखरोमविहीनता ।
त्रिदण्डादि यतेरुक्तमुपलक्षणमत्रवै ॥

एतल्लक्षणहीनस्तु प्रायश्चित्ती दिने दिने ।
जीर्णं कमण्डलुं दण्डमुपवीताजिने अपि ॥ —५०

अशुच्यैतानि निक्षिप्य गृह्णीयाच्च मन्त्रवत् ।
विदध्यात्षोडशे वर्षे केशान्तं कर्म च क्रमात् ॥

द्वाविंशे वा चतुर्विंशे गार्हस्थ्यस्य प्रवृत्तये ।
तपोयज्ञव्रतेभ्यश्च सर्वस्माच्छुभकर्मणः ॥

श्रुतिरेको द्विजातीनां हेतुर्निःश्रेयसश्रियः ।
वेदारम्भे विसर्गे च विदध्यात्प्रणवं सदा ॥

अफलोऽनोंकृतो यस्मात्पठितोऽपि न सिद्धये ।
वेदस्य वदनं प्रोक्तं गायत्री त्रिपदापरा ॥

तिसृभिःप्रणवाद्याभिर्महाव्याहृतिभिः सदा ।
सहस्रं साधिकं किञ्चि त्त्रिकमेतज्जपन्त्यमी ॥ —५५

मासं बहिः प्रतिदिनं महाघादपि मुच्यते ।
आत्र्यब्दमेतद्यो ऽभ्यस्येत्प्रतिघस्रमनन्यधीः ॥

सव्योममूर्तिश्शुद्धात्मा नित्यं ब्रह्माधिगच्छति ।
त्रिवर्णमयमोंकारं भूर्भुवस्वरितित्रयम् ॥

पदत्रयन्तु गायत्र्यास्त्रयोवेदानदूदुहत् ।
एतदक्षरमेताश्च जपन् व्याहृतिपूर्वकम् ॥

सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ।
विधिकृतोर्दशगुणो जपकृतुरुदीरितः ॥

वेदमातुर्जपो नित्यं श्रीमदष्टाक्षरी जपः ।
अश्वमेधादियागेभ्यो द्वावुक्तावधिकौ कृतू ॥ —६०

आचार्यदक्षिणादानं महादान शतादपि ।
अधिकं प्रोक्तमाचार्यैर्वेदवेदान्तवेदिभिः ॥

अधीत्य वेदान् वेदौ वा वेदं वा शक्तितो द्विजः।
सम्पूर्णधान्यधरणीदानस्य फलमश्नुते ॥

श्रुतिमेव सदाभ्यस्येत्तपस्तप्यन् द्विजोत्तमः ।
श्रुत्यभ्यासो हि विप्रस्य परमं तप उच्यते ॥

हित्वा श्रुतेरध्ययनं योऽन्यत्पठितुमिच्छति ।
सदोग्ध्रीं धेनुमुत्सृज्य ग्रामक्रोडं दुधुक्षति ॥

श्रीमदष्टाक्षरी साङ्गा लभ्यते यन्मुखाम्बुजात् ।
आचार्योऽयं शतगुणोऽधिकःपूर्वगुरोरपि ॥ —६५

योऽध्यापयेदेकदेशं श्रुतेरङ्गान्यथा पिवा ।
वृत्त्यर्थं स उपाध्यायो विद्वद्भिः परिपठ्यते ॥

यथाविधि निषेकादि यः कर्मकुरुते द्विजः ।
संभावयेत्तथान्येन स गुरुः कीर्त्यते इह ॥
अग्न्याधानात्पाकयज्ञादग्नींषोमादिकान् मखान् ॥

सहस्रशः पिता माता गौरवेणातिरिच्यते ।
पितुर्मातुरुपाध्यायाद्गुरोराचार्यतोऽपि च ॥

भगवद्रश्मिसहितश्रीमदष्टाक्षरीपदः ।
सहस्रशो धिकः प्रोक्त आचार्यो भगवानसौ ॥

ब्रह्मनारायणी विद्या हंस नारायणाभिधा ।
षोडशार्णादिविद्याश्च नृसिंहानुष्टुभादयः ॥ —७०

शुद्धाष्टाक्षरविद्यायाः कलां नार्हति षोडशीम् ।
सप्तकोटिमनूनाञ्च शास्त्राणामपि सन्ततम् ॥

चतुर्णामपि वेदानां पुराणानाञ्च भूपते ।
शुद्धैव श्रीमदष्टार्णा राज्ञी नातोऽधिकापरा ॥

श्रीमदष्टाक्षरीं विद्यां साङ्गां रश्मिसमन्विताम् ।
यः प्रयच्छति विप्रोऽसौ साधकाय महीपते ॥

पितुर्मातुरुपाध्यायाद्गुरोर्वाचार्यतोऽप्यसौ ।
ब्रह्मविष्णुमहेशेभ्योऽप्यधिकश्शतशो नृप ॥

विज्ञायेत्थं सदाचार्यतत्त्वं गुप्तमपि श्रुतौ ।
आचार्यचरणाम्भोजे दृढभक्तः सदा भवेत् ॥ —७५

विप्राणां ज्ञानतो ज्यैष्ठ्यं बाहुजानाञ्च वीर्यतः ।
वैश्यानां धान्यधनतश्चतुर्थानां तु जन्मतः ॥

यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
तथाविप्रोऽनधीयानस्त्रयोऽमी नामधारिणः ॥

स्वकर्मनिरतानां च वेदयज्ञक्रियावताम् ।
ब्रह्मचारी चरेद्भैक्ष्यं वेश्मसु प्रयतोऽन्वहम् ॥

यथेष्ट चेष्टा न भवेद्गुरोर्नयनगोचरे ।
न नाम प्रतिगृह्णीयात्परोक्षेऽप्यन्वहं नृप ॥

गुरुनिन्दाभवेद्यत्र परिवादस्तु यत्र च ।
कर्णौ पिधाय वास्थेयं यातव्यं वा ततोऽन्यतः ॥ —८०

स्वगुरोस्तु परीवादाच्छ्वाभवेद्गुरुनिन्दकः ।
कुत्स्याक्षरीक्षुद्रकीटः स्यात्तिरस्काराद्भवेत् कृमिः ॥

श्रीमदष्टाक्षराचार्यनिन्दां श्रुत्वापि वा सकृत् ।
षष्टिवर्षसहस्राणि निष्ठासुकृमितां व्रजेत् ॥

नाभिवाद्या गुरोः पत्नी स्पृष्ट्वा स्त्री युवतिः सती ।
क्वापि विंशतिवर्षेण ज्ञातृणा गुरुदोषयोः ॥

स्वभावश्चञ्चलः स्त्रीणां दोषः पुंसामतः स्मृतः ।
प्रमदासु प्रमाद्यन्ति क्वचिन्नैव विपश्चितः ॥

विद्वांसंमप्यविद्वांस स्त्रियस्ता धर्षयन्त्यलम् ।
स्ववशंचापि कुर्वन्ति सूत्रबद्धशकुन्तवत् ॥ —८५

न माता न दुहिता वा न स्वसैकान्तशीलता ।
बलवन्तीन्द्रियाण्यत्र मोहयन्त्यपि कोविदम् ॥

गुरुशुश्रूषया नित्यं प्राणैरर्थैश्च पुष्कलैः ।
विद्या सिध्यति तत्पश्चाद्ब्रह्म पश्यति केवलम् ॥

सुतस्य संभवत्क्लेशं सहते पितरौ चयम् ।
शक्ता वर्षशतेनापि नो कर्तुं तस्य निष्कृतिः ॥

अतस्तयोः प्रियं कुर्यादाचार्यस्य च सन्ततम् ।
श्रीमदष्टाक्षरी साङ्गा भगवद्रश्मिसंयुता ॥

यस्यवक्त्राम्बुजाल्लब्धा भोगस्वर्गापवर्गदा ।
तस्योपकर्तुं केनापि न शक्यं कल्पकोटिभिः ॥ —९०

तमवश्यं यजेद्धीमान् नारायणमिवापरम् ।
जनके मातरि गुरौ त्रिषु तुष्टेषु सन्ततम् ॥

तत्तपः परमं प्राहुर्ब्रह्मसायुज्यसिद्धिदम् ।
त्रीन् गुरून् समतिक्रम्य त्रिकल्पं निपतत्यधः ॥

त्रीनेवामून् समाराध्य त्रीँल्लोकान् स जयेत् सुधीः ।
पिता माता च वेदानामुपदेष्टा ततःपरम् ॥

श्रीमदष्टाक्षरीदाता चतुर्थो गुरुरुच्यते ।
चतुर्वर्ग फलं प्रोक्तं चतुर्गुरुसमर्चनात् ॥

पितरं मातरं वापि त्यजेद्वेदगुरूनपि ।
ब्रह्मविद्याप्रदाचार्यं प्राणान्तेऽपि न सन्त्यजेत् ॥ —९५

एकैकापि महाविद्या यस्य वक्त्रेण लभ्यते ।
तं त्यक्त्वा नरकेघोरे तिष्ठत्या चन्द्रतारकम् ॥

रश्मिमाला प्रदाचार्यत्यागे वक्तुं न शक्यते ।
सर्वा अपि महाविद्या यत्र तिष्ठन्ति सिद्धिदाः ॥

तस्माद्भगवतो रश्मिविद्या दाता गुरुर्महान् ।
स एव साक्षाद्भगवान् भोगस्वर्गापवर्गदः ॥

न तं त्यजेच्च प्राणान्ते स एव कुलदैवतम् ।
रश्मिविद्याप्रदाचार्ये स्वसमीपस्थिते परम् ॥

तं त्यक्त्वा योऽर्चयेदर्थैराकल्पं नरके वसेत् ।
रत्नजातैस्सुबहुभिस्सन्तोष्याचार्थमन्वहम् ॥ —१००

अपिब्रह्मविदेऽन्यस्मै ददातु न ददातु वा ।
निर्वाणार्थप्रयत्नोऽयं सदाचारश्च धीमताम् ॥

सदाचारो गृहेयद्वत्त तथास्त्याश्रमान्तरे ।
विद्याजातं पठित्वा तु गृहाश्रममथाश्रयेत् ॥

गृहाश्रमात्परं नास्ति यदि पत्नीवशंवदा ।
आनुकूल्यं हि दम्पत्योस्त्रिवर्गफलहेतवे ॥

अनुकूलं कलत्रं चेत्त्रिदिवेन हि किं ततः ।
प्रतिकूलं कलत्रं चेन्नरकेणहि किं ततः ॥

गृहाश्रमः सुखार्थाय भार्यामूलं हि तत्सुखम् ।
स्वभार्यायां विनीतायां त्रिवर्गो वर्धते ध्रुवम् ॥ —१०५

जलूकयोपमीयन्ते प्रमदा मन्दबुद्धिभिः ।
जलौका केवलं रक्तमाददाना मनस्विनी ॥

मृगीदृशां जलौकानां विचारान्महदन्तरम् ।
प्रमदा सर्वमादत्ते चित्तं वित्तं बलं सुखम् ॥

दक्षा प्रजावती साक्षात् प्रियवाक्यवशंवदा ।
गुणैरमीभिस्संयुक्ता सा श्रीः स्त्रीरूपधारिणी ॥

गुरोरनुज्ञया स्नात्वा व्रतं वेदं समाप्य च ।
उद्वहेच्च ततोभार्यां सवर्णां साधुलक्षणाम् ॥

रोगहीनां भ्रातृमतीं स्वस्मात्किञ्चिल्लघीयसीम् ।
उद्वहेत द्विजो भार्यां सौम्यास्यां मृदुभाषिणीम् ॥ —११०

लक्षणानि परीक्ष्यादौ ततः कन्यां समुद्वहेत् ।
सुलक्षणा सुचारित्रा पत्युरायुर्विवर्धयेत् ॥

सुलक्षणापि दुश्शीला कुलक्षयशिरोमणिः ।
कुलक्षणापि या साध्वी सर्वलक्षणभूस्तु सा ॥

सुलक्षणा सुचारित्र्या स्वाधीनापतिदेवता ।
लक्ष्मीशानुग्रहादेव गृहे योषिदवाप्यते ॥

अलङ्कृतास्सुवासिन्यो याभिः प्राक्तनजन्मनि ।
नानाविधैरलंकारैस्सुरूपास्ता भवन्ति हि ॥

सुतीर्थेषु वपुर्याभिः क्षालितं त्याजितं तु वा ।
ता लावण्यतरङ्गिण्यो भवन्ति हि सुलक्षणाः ॥ —११५

अर्चिता जगतां माता याभिश्शिव वधूरिह ।
नारायणप्रिया श्रीर्वा शची वा शक्रवल्लभा ॥

ताभवन्ति सुचारित्रा योषाः स्वाधीनभर्तृकाः ।
स्वाधीनपतिकानाञ्च सुशीलानां मृगीदृशाम् ॥

स्वर्गापवर्गावत्रैव सुलक्षणफलं हि तत् ।
सुलक्षणैस्सुचारित्रैरपि मन्दायुषं पतिम् ॥

दीर्घायुषं प्रकुर्वन्ति प्रमदाः सम्पदास्पदम् ।
आचार्यपत्नीं श्रीबुद्ध्या वासोऽलङ्करणादिभिः ॥

प्राग्जन्मन्यर्चिता शिष्यैर्यैस्तत्पत्नीभिरेव वा ।
ते सर्वभाग्यसहिताः कन्दर्पसदृशप्रभाः ॥ —१२०

पुत्रपौत्रादिसहिता राजराजसमाः श्रिया ।
अनुत्तर ब्रह्मतत्त्व रहस्ये श्रुतिसङ्ग्रहे ॥
अध्याय एकविंशोऽयं तन्त्रे दाशरथीरिते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे एकविंशोऽध्यायः ॥

## ॥ अथ द्वाविंशोऽध्यायः ॥

**श्री भगवानुवाच –**

विवाहानपि वक्ष्यामि निबोध वसुधापते ।
येषां विज्ञानमात्रेण सर्वपापैः प्रमुच्यते ॥

विवाहा ब्राह्मदैवार्षाः प्राजापत्यासुरौ तथा ।
गान्धर्वो राक्षसश्चापि पैशाचोऽष्टम उच्यते ॥

स ब्राह्मो परमाहूय यत्रकन्या स्वलङ्कृता ।
दीयते तत्सुतः पूयात्पुरुषानेकविंशतिम् ॥

यज्ञार्थमृत्विजे दैवस्तज्जःपाति चतुर्दश ।
परादादाय गोद्वन्द्वमार्षस्तज्जः पुनातिषट् ॥

सहोभौ चरतां धर्ममित्युक्त्वा दीयतेऽर्थिने ।
तत्कन्यायां समुत्पन्नो वंश्यानष्टौ पुनाति सः ॥ —५

चत्वार एतेविप्राणां धर्म्याः पाणिग्रहास्स्मृताः ।
आसुरः क्रयणाद्द्रव्यैर्गान्धर्वोऽन्योन्यमन्त्रतः ॥

प्रसह्य कन्याहरणं राक्षसो निन्दितस्सताम् ।
छलेन कन्याहरणात्पैशाचो गर्हितोऽष्टमः ॥

प्रायः क्षत्रविशामुक्ता गान्धर्वासुरराक्षसाः ।
अष्टमस्तेषु पापिष्ठः पापिष्ठानां हि संभवेत् ॥

सवर्णया करो ग्राह्यो धार्यः क्षत्रियया शरः ।
प्रतोदो वैश्ययादेयो वासोऽन्तः शूद्रया तथा ॥

असवर्णेष्वेषविधिः स्मृत उत्कृष्टहेतवे ।
सवर्णाभिस्तु सर्वाभिः पाणिग्राह्यः स्वयं विधिः ॥ —१०

धर्म्यैर्विवाहैर्जायन्ते धर्म्या एव शतायुषः ।
अधर्म्यैर्धर्मरहिता मन्दभाग्यधनायुषः ॥

ऋतुकालाभिगमनं धर्मोऽयं गृहिणः परः ।
स्त्रीणां वरमनुस्मृत्वा यथाकाम्यथवा भवेत् ॥

दिवाभिगमनं पुंसामनायुष्यं परं मतम् ।
श्राद्धार्हसर्वपर्वाणि ज्ञात्वा त्याज्यानि धीमता ॥

तत्र गच्छन् स्त्रियं मोहाच्च्युतो धर्माद्भवत्यसौ ।
ऋतुकालाभिगामीयः स्वदारनिरतश्चयः ॥

स साधुर्ब्रह्मचारीह विज्ञेयस्सगृहाश्रमी ।
ऋतुष्षोडशयामिन्यश्चतस्रस्तासु गर्हिताः ॥ –१५

पुत्रास्तास्वपि यथायुग्मा अयुग्माः कन्यका प्रजाः ।
त्यक्त्वा चन्द्रमसं दुःस्थं मघां मूलं विहाय च ॥

शुचिस्सन्निर्विशेत्पत्नीं पुन्नामर्क्षे विशेषतः ।
शुचिं पुत्रं प्रसूयेत पुरुषार्थप्रसाधकम् ॥

आर्षे विवाहे गोद्वन्द्वं यदुक्तं तन्नशस्यते ।
शुल्कमण्वपि कन्यायाः कन्याविक्रयपापकृत् ॥

अपत्यविक्रयी कृत्यं वसेद्विट्कृमिभोजने ।
अतोनाण्वपिकन्याया उपजीवेत्पिता धनम् ॥

स्त्रीधनादुपजीवन्ति ये मोहादिह बान्धवाः ।
न केवलं निरयगास्तेषामपि च पूर्वजाः ॥ —२०

पत्या तुष्यति यत्र स्त्री तुष्येद्यत्र स्त्रिया पतिः ।
तत्र तुष्टा महालक्ष्मीर्निवसेद्दानवारिणः ॥

वाणिज्यं नृपतेस्सेवा वेदानध्ययनं तथा ।
कुविवाहः क्रियालोपः कुले पतनहेतवः ॥

कुर्याद्वैवाहिके वह्नौ गार्ह्यकर्मान्वहं गृही ।
पञ्चयज्ञक्रियांचापिपत्नी दैनन्दिनीमपि ॥

गृहस्थाश्रमिणः पञ्चसूनाकर्म दिने दिने ।
खण्डिनी पेषिणी चुलीह्युदकुम्भश्च मार्जनी ॥

तासाञ्च पञ्चसूनानां निराकरणहेतवः ।
क्रतवः पञ्च निर्दिष्टा गृहीश्रेयो विवर्धनाः ॥ —२५

पठनं ब्रह्मयज्ञःस्यात्तर्पणञ्च पितृक्रतुः ।
होमो दैवो बलिर्भौतोऽतिथ्यर्चादिक्रतुः क्रमात् ॥

पितृप्रीतिं प्रकुर्वाणः कुर्वीत श्राध्दमन्वहम् ।
अन्नोदकपयोमूलफलैर्वापि गृहाश्रमी ॥

धेनुदानेन यत्पुण्यं पात्राय विधिपूर्वकम् ।
सत्कृत्य भिक्षवे भिक्षां दत्वा तत्फलमाप्नुयात् ॥

तपोविद्यासमिद्दीप्ते हुतं विप्राताख्यपावके ।
तारयेद्विघ्नसङ्घेभ्यः पापौघादपि दुस्तरात् ॥

अनर्चितोऽतिथिर्गेहाद्भग्नाशो यस्य गच्छति ।
आजन्मसञ्चितात्पुण्यात् तत्क्षणात्स बहिर्भवेत् ॥ —३०

सान्त्वपूर्वाणि वाक्यानि शय्यार्थं भूतृणोदके ।
एतान्यपि प्रदेयानि सदाभ्यागततुष्टये ॥

गृहस्थः परपाकादीप्रेत्य तत्पशुतां व्रजेत् ।
श्रेयः परान्नपुष्टस्य गृह्णीयादन्नदो यतः ॥

भुञ्जजानोऽतिथिशेषान्नमायुर्वर्धनभाग्भवेत् ।
प्रणोद्यातिथिमन्नाशी किल्बिषी च गृहाश्रमी ॥

वैश्वदेवान्तसम्प्राप्तसूर्योढोऽतिथिरागतः ।
न पूर्वकाल आयातो न च दृष्टस्ततः क्वचित् ॥

बलिपालकरे विप्रे यद्यन्योऽतिथिरागतः ।
अदत्वा तं बलिं तस्मै यथाशक्त्यन्नमर्पयेत् ॥ —३५

कुमार्यश्च सुवासिन्यो गर्भिण्योऽतिरुजार्दिताः ।
अतिथिश्चार्थिनोऽप्येते भोज्या नात्रविचारणा ॥

पितृदेवमनुष्येभ्यो दत्वाम्नोऽत्यमृतं गृही ।
स्वार्थंपचन्नघं भुङ्क्ते केवलं स्वोदरंभरः ॥

आचार्यपत्नीपुत्राणामन्नसूपघृतादिकम् ।
अपरामृश्य यो भुङ्क्ते स भुङ्क्ते पापमक्षयम् ॥

माध्याह्निकं वैश्वदेवं नित्यं कुर्यात्प्रयत्नतः ।
वैश्वदेवविहीना ये आतिथ्येन विवर्जिताः ॥

ते सर्वे वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ।
अकृत्वा वैश्वदेवन्तु भुञ्जते यद्द्विजाधमाः ॥ —४०

इहलोकेऽपि हीनास्ते काकयोनिं व्रजन्त्यथ ।
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ॥

तच्च कुर्वन्यथाशक्ति प्राप्नुयात्स्वर्गतिं पराम् ।
षष्ठ्यष्टम्योस्त्यजेद्भूप तैलं मांसस्य भक्षणम् ॥

चतुर्दश्यां पञ्चदश्यां स्त्रीसङ्गमपि वर्जयेत् ।
नोदयन्तमवेक्षेत नास्तंयन्तं न मध्यगम् ॥

न राहुणोपसृष्टञ्च नाम्बुसंस्थं दिवाकरम् ।
न वीक्षेतात्मनोरूपमाशुधावेन्न वर्षति ॥

नोल्लङ्घयेद्वत्सतरीं न नग्नो जलमाविशेत् ।
देवतायतनं विप्रं धेनुं मधु मृदं घृतम् ॥ —४५

ज्ञानवृद्धं वयोवृद्धं विद्यावृद्धं तपस्विनम् ।
अश्वत्थं चैत्यवृक्षञ्च गुरुं जलधृतं घटम् ॥

सिद्धान्नं दधिसिद्धार्थं गच्छन् कुर्यात्प्रदक्षिणम् ।
रजस्वलां न सेवेत नाश्नीयात् सह भार्यया ॥

एकवासा न भुञ्जीत न भुञ्जीतोत्कटासने ।
नाश्नन्तीं स्त्रियमीक्षेत श्रेयस्कामो द्विजोत्तमः ॥

असन्तर्प्य पितॄन् देवान् नाद्यादन्नं नवं क्वचित् ।
असन्तर्प्य सदाचार्यं नरत्नं धारयेत् क्वचित् ॥

पश्चिष्टिं च विना मांसं दीर्घकालं जिजीविषुः ।
न मूत्रं गोव्रजे कुर्यान्न वल्मीके न भस्मनि ॥ —५०

न गर्तेषु न सत्त्वेषु न तिष्ठन्नव्रजन्नपि ।
गो विप्रसूर्य वाय्वग्निचन्द्रार्कान्वा गुरूनपि ॥

अभिपश्यन्नकुर्वीत मलमूत्रविसर्जनम् ।
दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्रउदङ्मुखः ॥

मलं मूत्रं त्यजेन्नित्यं निशायां दक्षिणामुखः ।
मुखेनोपधमेन्नाग्निं नग्नां नेक्षेत योषितम् ॥

न नद्यीं तापयेदग्नौ न वस्त्वशुचि निक्षिपेत् ।
प्राणिहिंसां न कुर्वीत नाश्नीयात्सन्ध्ययोर्द्वयोः ॥

न संविशेच्च सन्ध्यायां प्रत्यग्याम्य शिराअपि ।
विण्मूत्रष्ठीवनं नाप्सु कुर्याद्दीर्घजिजीविषुः ॥ —५५

नाचक्षेत धयन्तीं गां नेन्द्रचापं प्रदर्शयेत् ।
नैकः स्वप्यात्क्वचिच्छून्ये न शयानं प्रबोधयेत् ॥

नैको यायाच्च पन्थानं न वार्यञ्जलिना पिबेत् ।
न दिवोद्धृतसारञ्च भक्षयेद्दधि नो निशि ॥

स्त्रीधर्मिण्या नाभिवदेन्नाद्यादातृप्तिरात्रिषु ।
तौर्यत्रिकप्रियो नस्यात्कांस्ये पादौ न धावयेत् ॥

श्राद्धं कृत्वा परश्राद्धे योऽश्नीयाज्ज्ञानवर्जितः ।
दातुः श्राद्धफलं नास्ति भोक्ता किल्बिषभाग्भवेत् ॥

न धारयेदन्यभुक्तं वासश्चोपानहावपि ।
न भिन्नभोजनेऽश्नीयान्नाश्नीताग्न्यादिदूषितम् ॥ —६०

आरोहणं गवां पृष्ठे प्रेतधूमपरिप्लुते ।
बालातपं दिवास्वापं त्यजेद्दीर्घं जिजीविषुः ॥

स्नात्वा न मार्जयेद् गात्रं विसृजेन्न शिखां पथि ।
हस्तौ शिरो न धुनुयान्नाकर्षेदासनं पदा ॥

नोत्पाटयेल्लोमनखं दशनेन कदाचन ।
करजैः करजच्छेदं तृणच्छेदञ्च वर्जयेत् ॥

शुभाय न यदायाति त्यजेत्तत्कर्म यत्नतः ।
नापद्वारेण गन्तव्यं स्ववेश्मपरवेश्मनोः ॥

क्रीडेन्नाक्षैस्सहासीत न धर्मघ्नैर्नरोगिभिः ।
न शयीत क्वचिन्नग्नः पाणौ भुञ्जीत नैव च ॥ —६५

आर्द्रपादकरास्यायाद्दीर्घकालं च जीवति ।
संविशेन्नार्द्रचरणो नोच्छिष्टः क्वचिदाव्रजेत् ॥

शयनस्थो न चाश्नीयान्न पिबेन्न जपेद्द्विजः ।
सोपानत्कश्चनाचामेत् न तिष्ठन् धारया पिबेत् ॥

सर्वं तिलमयं नाद्यात् प्रायः शर्माभिलाषुकः ।
न च वीक्षेत विण्मूत्रे नोच्छिष्टः संस्पृशेच्छिरः ॥

नाधितिष्ठेत्तुषाङ्गारभस्मदेशकपालिकाः ।
पतितैः सह संवासः पतनायैव जायते ॥

श्रावयेद्वैदिकं मन्त्रं न शूद्राय कदाचन ।
ब्राह्मण्याद्धीयते विप्रः शूद्रो धर्माच्च हीयते ॥ —७०

धर्मोपदेशः शूद्राणां स्वंश्रेयः प्रतिपादयेत् ।
द्विजशुश्रूषणं धर्मः शूद्राणां परमःस्मृतः ॥

कण्डूयनं न शिरसः पाणिभ्यां शुभदं मतम् ।
आन्दोलनं कराभ्याञ्च केशानां केशलुञ्छनम् ॥

अशास्त्रवर्तिनोभूपालुब्धात्कृत्वा प्रतिग्रहम् ।
ब्राह्मणः सान्वयो याति नरकानेकविंशतिम् ॥

अकालविद्युत्स्तनिते वर्षतौ पांसुवर्षणे ।
महावातध्वनौ रात्रावनध्यायाः प्रकीर्तिताः ॥

उल्कापातध्वनौ कम्पे दिग्दाहे मध्यरात्रिषु ।
सन्ध्ययोर्वृषलोपान्ते राजवाद्ये च सूतके ॥ —७५

दर्शेऽष्टकासु भूतायां श्राद्धिकं प्रतिगृह्य च ।
प्रतिपद्यपि पूर्णायाममायां सर्वपर्वसु ॥

खरोष्ट्र क्रोष्टुविरुते समुदाये रुदत्यपि ।
उपाकर्मणिचोत्सर्गे न विमानेतरौ जले ॥

आरण्यकमधीत्यापि शालसीम्नोरतिध्वनौ ।
अनध्यायेषु सर्वेषु नाधीयीत द्विजः क्वचित् ॥

कृतान्तरायो न पठेत्कृकलासादिबभ्रुभिः ।
भूताष्टम्योः पञ्चदश्योर्ब्रह्मचारीभवेत्सदा ॥

अनायुष्यं परं चेह परदारोपधर्षणम् ।
तस्मात्तद्दूरतस्त्याज्यं वैरिणाश्चोपसेवनम् ॥ —८०

पूर्वादिभिः परित्यक्तमात्मानं नावमानयेत् ।
सदोद्यमवतां यस्माच्छ्रेयो विद्या न दुर्लभा ॥

सत्यं ब्रूयात्प्रियंब्रूयान्नब्रूयात्सत्यमप्रियम् ।
प्रियंच नानृतं ब्रूयादेष धर्मो महीयते ॥

भद्रमेव वदेन्नित्यं भद्रमेव विचिन्तयेत् ।
भद्रैरेव हि संसर्गो नाभद्रैश्च कदाचन ॥

रूपवित्तकुलैर्हीनान् सुधीर्नाधिक्षिपेन्नरान् ।
वीक्षेत नाशुचिस्सप्त ब्रह्मर्षिग्रहतारकाः ॥

वाचोवेगं मनोद्वेगं जिह्वावेगं च वर्जयेत् ।
उत्कोचद्यूतदीनार्तद्रव्यं दूरात् परित्यजेत् ॥ —८५

गो ब्राह्मणाग्नीनुच्छिष्टः पाणिना नैव संस्पृशेत् ।
नस्पृशेदनिमित्तेन स्वानि खानित्वनातुरः ॥

गुह्यजान्यपि रोमाणि तत्स्पर्शादप्यशुचिर्भवेत् ।
पादशौचोदकं मूत्रमुच्छिष्टान्नोदकानि च ॥

निष्ठीवनं श्लेष्मौघं गृहाद्दूरे विनिक्षिपेत् ।
अहर्निशं श्रुतेर्जापाच्छ्रौताचार निषेवणात् ॥

अद्रोहवत्यां मत्यां च जातिं स्मरति पौर्वकीम् ।
वृद्धान् प्रयत्नाद्वन्देत तेषां दद्यात्स्वमासनम् ॥

विनम्रमानमस्त्वेषा मनुयायाद्यतश्चतान् ।
श्रुतिभूदेवदेवानां नृपसाधु तपस्विनाम् ॥ —९०

पतिव्रतानां नारीणां निन्दां कुर्यान्न कुत्रचित् ।
न मनुष्यस्तुतिं कुर्यान्नात्मानं बहुमानयेत् ॥

अभ्युद्यतं न प्रणमेत् परमर्माणि नोच्चरेत् ।
अधर्मात्सेवते पूर्वं विद्वेष्टृनविसर्जयन् ॥

सर्वतोभद्रनरोनश्यति सान्वयः ।
उद्धृत्य पञ्चमृत्पिण्डान् स्नायात् परजलाशये ॥

अनुद्धृत्य च तत्कर्तुरेनसः स्यात्तुरीयभाक् ।
श्रद्धया पात्रभूताय यत्किञ्चिद्दीयते वसु ॥

ब्रह्मविच्छतकोटिभ्यो दत्तं दानसहस्रकम् ।
आचार्यदानलेशस्य कलां नार्हति षोडशीम् ॥ —९५

श्रद्धया प्रतिगृह्णाति श्रद्धया प्रददाति च ।
स्वर्गिणौ तावुभौ स्यातां पततोऽश्रद्धया ह्यधः ॥

अनृतेन क्षरेद्यज्ञस्तपो विस्मयतः क्षरेत् ।
क्षरेत्कीर्तनतो दानमायुर्विप्रावमानतः ॥

गन्धपुष्पकुशाञ्छय्यां कांस्यमांसं पयोदधि ।
मणिमाल्यगृहं धान्यं ग्राह्यमेतदुपस्थितम् ॥

मधूदकं फलं मूलमेधांस्यभयदक्षिणाम् ।
अभ्युद्यतानि ग्राह्याणि ह्येतान्यपि निकृष्टतः ॥

इत्थमानृण्यमापाद्य देवर्षिपितृजाद्दणात् ।
माध्यस्थ्यमाश्रयेद्गेही सुते विश्वग्विसृज्य च ॥ —१००

गृहे विज्ञानमभ्यस्येच्छ्रीमदष्टाक्षरीं जपेत् ।
अवश्यं गृहिणाकार्यमाचार्य चरणार्चनम् ॥

एकेन जन्मना मुक्तिः श्रीमदष्टक्षरी जपात् ।
एकेन जन्मना मुक्तिर्नरनारायणाश्रमे ॥

एकेन जन्मना मुक्तिर्वाराणस्यां महीयते ।
एकेन जन्मना मुक्तिराचार्यचरणार्चनात् ॥

मनसापि सदाचारमलं विद्वान्नलङ्घयेत् ।
सदाचारपरोनित्यं नित्यमाचार्यसेवकः ॥

भगवद्रश्मिसहितां समस्तन्याससंयुताम् ।
श्रीमदष्टाक्षरीं जप्त्वा साक्षाद्ब्रह्ममयो भवेत् । —१०५

गृहस्थस्य सदाचार इति प्रोक्तो महीपते ।
यमाकर्ण्य नरोधीमान् मुञ्चत्यज्ञानजं तमः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे द्वाविंशोऽध्यायः ॥

## ॥ अथ त्रयविंशोऽध्यायः ॥

**श्री भगवानुवाच** –

पुनर्विशेषंवक्ष्यामि सदाचारस्य भूपते ।
यं श्रुत्वापि नरो धीमान् मुच्यते पापराशिभिः ॥

समीहितार्थसंसिद्धिर्लभ्यते पुण्यभारतः ।
तत्रपुण्यंभवेद्विप्रस्मृतिवर्त्मानुभाजनात् ॥

स्मृतिवर्त्मजुषः पुंसः संस्पर्शात्तप्यते मुने ।
कलिकालावपि सदाच्छिद्रं प्राप्यजिघांसतः ॥

वर्जितस्य विधानेन प्रोक्तस्याकरणीयतः ।
कलिकालादपि हतो ब्राह्मणो रंध्र दर्शनात् ॥

निषिद्धाचरणं तस्मात् कथयिष्ये तवाग्रतः ।
तद्दूरतः परित्यज्य नरो न निरयीभवेत् ॥ —५

अश्वनादृगृक्षनिर्यासान्पायसापूपशष्कुलीः ।
अदैवपित्र्यं पललमवत्सागोपयस्त्यजेत् ॥

लशुनं गृञ्जनमपि पलाण्डुञ्च परित्यजेत् ।
वाशिरैकशफं हेयं तक्रमेरक माविकम् ॥

रात्रौ दधि न भोक्तव्यं दिवाच नवनीतकम् ।
आयुष्कामैः स्वर्गाकामैस्त्याज्यं मांसं प्रयत्नतः ॥

यज्ञार्थपशुहिंसाया सा स्वर्ग्यानेतराक्वचित् ।
त्यजेत् पर्युषितं सर्वमखण्डस्नेहनिर्मितम् ॥

प्राणात्यये क्रतौ श्राद्धे भेषजे विप्रकाम्यया ।
अकाल्यमित्थं पललं भक्षयन्न च दोषभाक् ॥ —१०

न तादृशं भवेत्पापं मृगयावृत्तिकाङ्क्षिणः ।
यादृशंभवतिप्रेत्य लौल्यान्मांसोपसेविनः ॥

मखार्थं ब्राह्मणाः सृष्टाः पशुद्रुमलतौषधीः ।
निघ्नन्हिंसको विप्रस्तासामपि शुभागतिः ॥

पितृदेवक्रतुकृते मधुपर्कार्थमेव च ।
अत्र हिंसाप्यहिंसास्याद्धिंसान्यत्र सुदुस्तरा ॥

यो जन्तूनात्मतृप्त्यर्थं हिनस्ति ज्ञानदुर्बलः ।
दुराचारस्य तस्येह नामुत्रापि सुखं क्वचित् ॥

भोक्तानुमन्ता संस्कर्ता क्रयविक्रयहिंसकाः ।
उपकर्ता घातयिता हिंसका अष्टधा स्मृताः ॥ —१५

प्रत्यब्दमश्वमेधेन शतवर्षाणि यो यजेत् ।
अमांसभक्षको यस्तु द्वितीयोऽत्र विशिष्यते ॥

यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथात्मनि तथा परे ॥

सुखं वा यदि वा चान्यत् यत्किञ्चित्क्रियते परे ।
यत्कृतं हि पुनः पश्चात् सर्वमात्मनि संभवेत् ॥

न क्लेशेन विना द्रव्यमर्थहीने कुतः क्रिया ।
क्रियाहीने कुतो धर्मो धर्महीने कुतः सुखम् ॥

सुखं हि सर्वैराकाङ्क्ष्यं तच्च धर्मसमुद्भवम् ।
तस्माद्धर्मोऽत्रकर्तव्यश्चातुर्वर्ण्येन यत्नतः ॥ —२०

न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम् ।
दानञ्च विधिना देयं काले पात्रे च भावतः ॥

विधिहीनमपात्रेऽपि यो ददाति प्रतिग्रहम् ।
न केवलं हि तद्याति शेषं तस्य च नश्यति ॥

व्यसनार्थे कुटुम्बार्थे यद्यागार्थे च दीयते ।
तदक्षयं भवेदत्र परत्रच न संशयः ।
आचार्यपत्नी पुत्रादि पोषणार्थं यतव्रतः ॥

ग्रहणादिषु कालेषु यो दद्यादादराद्धनम् ॥

तस्य पुण्यफलं वक्तुं न शक्तोऽस्मि महीपते ।
वर्षाशनमितं द्रव्यं शतनिष्कमुदाहृतम् ॥ —२५

तदर्धं वा तदर्धं वा तन्न्यूनं निष्फलं स्मृतम् ।
आचार्यचरणाम्भोजे वर्षाशनमितं धनम् ॥

एकस्मिन् दिवसे दत्वा प्रतिसंवत्सरं नृप ।
तुला पुरुषमुख्यानि महादानानि भूरिशः ॥

कृत्वा दिने दिनेऽवश्यं तत्फलं प्राप्नुयादसौ
पितृवंश्यशतैर्युक्तो मातृवंशशतैरपि ॥

भगवत्सन्निधावन्ते सुखमक्षयमश्नुते ।
मातापितृविहीनं ये मौञ्जीपाणिग्रहादिभिः ॥

संस्कारयन्ति येवित्तैस्तेषांश्रेयोऽक्षयं स्मृतम् ।
ब्राह्मणाय दरिद्राय पाणिग्राहमितं धनम् ॥ -३०

यः प्रयच्छति धर्मात्मा तस्य पुण्यं प्रयच्छति ।
नाग्निहोत्रैर्न तच्छ्रेयो नाग्निष्टोमादिभिर्मखैः ॥
यच्छ्रेयः प्राप्यते मर्त्यैरेकविप्रप्रतिष्ठिते ॥

पितृगेहेऽपि या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहा तत्पिता ज्ञेयो वृषली सापि कन्यका ॥

यस्तां परिणयेन्मोहात्सभवेद्वृषलीपतिः ॥

तेन संभाषणं त्याज्यमपाङ्क्तेये न सन्ततम् ।
विज्ञाप्यदोषमुभयोः कन्यायाश्च वरस्य च ॥

सम्बन्धं रचयेत्पश्चादन्यथा दोषभाक् पिता ।
स्त्रियः पवित्राः सततं नैता दुष्यन्ति कुत्रचित् ॥ -३५

स्त्रीणां सौम्यं ददौ सोमः पावकः सर्वमेध्यताम् ।
कल्याणवाणीं गन्धर्वस्तेन मेध्यास्सदास्त्रियः ॥

कन्यां भुङ्क्ते रजःकालेऽग्निःशशी रोमदर्शने ।
रजोद्भवेतु गन्धर्वास्तत्प्रागेव प्रदीयते ॥

दृश्यरोमात्वपत्यघ्नी कुलघ्न्युद्गतयौवना ।
पितृघ्ना ऽविष्कृतरजास्ततस्तां परिवर्जयेत् ॥

कन्यादानफलप्रेप्सुस्तस्माद्द्यात्तदनग्निकाम् ।
अन्यथा तत्फलं दातुः प्रतिग्राही पतत्यधः ॥

कन्यामभुक्तां सोमाद्यैर्ददद्दानफलंलभेत् ।
देवभुक्तांददद्दाता न स्वर्गमधिगच्छति ॥ —४०

शयनासनदानानि कुतपः स्त्रीमुखं शुभम् ।
यज्ञे पात्राणि सर्वाणि न दुष्यन्ति बुधाः क्वचित् ॥

वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने ।
नार्यां रतिप्रयोगेषु श्वा मृगग्रहणे शुचिः ॥

अजाश्वयोर्मुखं मेध्यं गावो मेध्यास्तु पृष्ठतः ।
ब्राह्मणाः पादतो मेध्यास्त्रियोमेध्याश्च सर्वतः ॥

बलात्कारेण भुक्ता वा चोरहस्तगतापि वा ।
न त्याज्या दूषिता नारी नास्त्यागो न विसृज्यते ॥

आम्लेन ताम्रशुद्धिः स्याच्छुद्धिः कांस्यस्यभस्मना ।
संशुद्धा रजसा नार्यस्तटिनी वेगतश्शुचिः ॥ —४५

मनसापि न या नारी संस्मरेत् पुरुषान्तरम् ।
सोमया सहसौख्यानि भुङ्क्तेचात्रापि कीर्तिभाक् ॥

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

अप्रयच्छन् समाप्नोति भ्रणहत्या मृतौ नृप ।
गम्यं त्वभावेदातृणां कन्या कुर्यात्स्वयंवरम् ॥

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधश्शयां वासयेद्व्यभिचारिणीम् ॥

व्यभिचाराहतौ शुद्धिर्गर्भेत्यागो विधीयते ।
गर्भभर्तृवधादौ च महत्यपि च पातके ॥ —५०

आरोप्य शूद्रां शयने विप्रो गच्छत्यधोगतिम् ।
उत्पाद्य पुत्रं शूद्रायां ब्राह्मण्यादेव हीयते ॥

दैवपित्र्यातिथीयानि तत्प्रदानानि यस्यतु ।
देवाद्यास्तन्न चाश्नन्ति स च स्वर्गं न गच्छति ॥

यागयोग्यानि देहानि नश्यन्त्यप्रतिपूजिताः ।
कृत्याभिर्निहतानीव पश्येद्यस्मान्नसंशयः ॥

तदभ्यर्च्याः सुवासिन्यो भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सङ्कटेषूत्कटेषु च ॥

यत्र नार्यः प्रमुदिताः भूषणाच्छादनाशनैः ।
रमन्ते देवतास्तत्र तत्रस्युः सफलाः क्रियाः ॥ —५५

अक्षयश्रेयइच्छद्भिर्वासोन्नैर्दिव्यभूषणैः ।
आचार्यपत्नी सम्पूज्या विशेषाद्भार्गवे दिने ॥

अक्षयायां तृतीयायां नवरात्रव्रतेऽपि च ।
ताटङ्कहेमचिंताक वालीयुग्मादिभूषणैः ॥

आचार्यपत्नीमभ्यर्च्य साक्षाल्लक्ष्मीधिया नृप ।
विमुक्तः सकलापद्भ्यो दुस्तरात्सङ्कटादपि ॥

कुबेर सदृशो लक्ष्म्या ततोऽन्ते मुक्तिभाग्भवेत् ।
यत्र तुष्यति भर्त्रा स्त्री यथा भर्ता च तुष्यति ॥

तत्र वेश्मनि कल्याणं सम्पद्येत पदे पदे ।
जपो हतोऽहुतो होमः प्रहूतो भौतिको बलिः ॥ —६०

प्राशितं पितृसंतृप्तिः हुतं ब्राह्मं द्विजार्चनम् ।
पञ्चयज्ञानिमान् कुर्वन् ब्राह्मणो नावसीदति ॥

एतस्या अननुष्ठानात्पञ्चसूनामवाप्नुयात् ।
ब्राह्मणं कुशलं पृच्छेद्बाहुजातमनामयम् ॥

वैश्यं सुखं समागम्य शूद्रं सन्तोषमेव च ।
जातमात्रशिशुस्तावद्यावदष्टौ समाः स्मृताः ॥

भक्ष्याभक्ष्येषु नो दुष्येद्यावन्नैवोपनीयते ।
भरणं पोष्यवर्गस्य दृष्टादृष्टफलोदयम् ॥

प्रत्यवायोह्याभरणे भर्तव्यं तत्प्रयत्नतः ।
आचार्यः स्वपिता माता स्वापत्यानिसमाश्रिताः ॥ —६५

अभ्यागतोऽतिथश्चाग्निः पोष्यवर्गा अमी नव ।
स जीवति पुमान् पुत्रैर्बन्धुभिश्चोपजीव्यते ॥

जीवन्मृतोऽथविज्ञेयः केवलं स्वोदरंभरः ।
दीनानाथविशिष्टेभ्यो दातव्यं भूतिकाम्यया ॥

अदत्तदाता जायन्ते परभोग्योपजीविनः ।
विनयी शीलसंयुक्तो दयावांश्च क्षमान्वितः ॥

देवतातिथिभक्तश्च गृहस्थो धार्मिकः स्मृतः ।
शर्वरी मध्यमौ यामौ हुत शेषञ्च यद्धविः ॥

तत्रस्वपंस्तदश्नंश्च ब्राह्मणो नावसीदति ।
नवैतानि गृहस्थेन कार्याण्यभ्यागते गुरौ ॥ —७०

मुदाव्ययानियत्साम्यं भाष्यञ्चक्षुर्मनोमुखम् ।
अभ्युत्थानमिहायाते सस्नेहं पूर्वभाषणम् ॥

उपासनमनुव्रज्या गृहस्थोन्नतिहेतवः ।
तथैव व्यययुक्तानि कार्याण्येतानि वै नव ॥

आसनं पादशौचञ्च यथाशक्त्यशनं क्षितिः ।
शय्यातृणजलाभ्यङ्गसेवा गार्हस्थ्यसिद्धिदाः ॥

तथैव नव कर्माणि त्याज्यानि गृहमेधिना ।
पैशुन्यं परदाराश्च द्रोहक्रोधानृताप्रियम् ॥

द्वेषो दम्भश्च माया च स्वर्गमार्गार्गलानि हि ।
नवावश्यककर्माणि कार्याणि प्रतिवासरम् ॥ —८५

स्नानं सन्ध्या जपोहोमस्स्वाध्यायो देवतार्चनम् ।
वैश्वदेवं तथातिथ्यं नवमं पितृतर्पणम् ॥

नव गोप्यानि यान्यत्र मुने तानि निशामय ।
जन्मर्क्षं मैथुनं मन्त्रो गृहच्छिद्रञ्च वञ्चनम् ॥

आयुर्धनं प्रदानञ्च न प्रकाश्यानि सर्वदा ।
नवैतानि प्रकाश्यानि रहः पापमकुत्सितम् ॥

प्राप्यश्च ऋणशुद्धिश्च स्वान्वयः क्रयविक्रयौ ।
कन्यादानं गुणोत्कर्षो नान्यत्केनापि कुत्रचित् ॥

पात्रमित्रविनीतेषु दीनानाथोपकारिषु ।
मातापितृगुरुष्वेव नवकं दत्तमक्षयम् ॥ —८७

निष्फलं न वसूत्कृष्टं चाटुचारणतस्करे ।
कुवैद्ये कितवे धूर्ते शठे मल्ले च वन्दिषु ॥

आपत्स्वपि न देयानि नववस्तूनि सर्वदा ।
पुत्रेषु सत्सु सर्वस्वं दाराश्च शरणागताः ॥

न्यासार्थः कुलवृत्तिश्च निक्षेपः स्त्रीधनं सुतः ।
यो ददाति स मूढात्मा प्रायश्चित्तैर्विशुध्यति ॥

आचार्यायैव सर्वस्वं पुरश्चरणकर्मणि ।
देयश्च विश्वजिद्यागे नान्यत्कस्यापि कुत्रचित् ॥

एतन्नवानां नवकं ज्ञात्वा श्रियमवाप्नुयात् ।
अन्यत्ते नवकं वच्मि सर्वेषां स्वर्गमार्गदम् ॥ —८५

सत्यं शौचमहिंसा च क्षान्तिर्दानं दयादयः ।
अस्तेयमिन्द्रियाक्रोधस्सर्वेषां धर्मसाधनम् ॥

अभ्यस्यनवतिं चैतां स्वर्गमार्गप्रदीपिकाम् ।
सतामभिमतां पुण्यं गृहस्थो नावसीदति ॥

जिह्वाभार्यासुतो भ्राता मित्रदाससमाश्रिताः ।
यस्यैते विनयाढ्याश्च तस्य सर्वं त्तगौरवम् ॥

पानं दुर्जन संसर्गः पत्या च बिरहोऽटनम् ।
स्वापोऽन्यगृहवासश्च नारीणां दूषणानिषट् ॥

समर्घधान्यमुद्धृत्य ह्यनर्घ्यं यः प्रयच्छति ।
स वार्धुषिक इत्युक्तः सर्वकर्मबहिष्कृतः ॥ —९०

महिषीत्युच्यते भार्या या भवेद्व्यभिचारिणी ।
तां दुष्टां कामयानोसौ नाम्ना महिषिकः स्मृतः ॥

अग्रे माहिषिकं दृष्ट्वा मध्ये तु वृषलीपतिम् ।
अन्तर्वार्धुषिकं दृष्ट्वा निराशाः पितरोगताः ॥

यावदुष्णं भवत्यन्नं यावन्मौनेन भुज्यते ।
तावदश्नन्ति पितरो यावन्नोक्तो हविर्गुणः ॥

विद्याविनयसम्पन्ने श्रोत्रिये गृहमागते ।
क्रीडन्त्योषधयस्सर्वा यास्यामः परमां गतिम् ॥

भ्रष्टशौचव्रताचारे विप्रे वेदविवर्जिते ।
रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ॥ —९५

यस्यो दरगतस्यान्नं वेदाभ्यासेन जीर्यति ।
स तारयति दातारं दशपूर्वान् दशापरान् ॥

न स्त्रीणां वपनं कार्यं न च गाः समनुव्रजेत् ।
न च रात्रौ वसेद्गोष्ठे न कुर्याद्वैदिकीं श्रुतिम् ॥

सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलीद्वयम् ।
सुवासिनीनामेवंस्यान्नान्यथा मुण्डनं भवेत् ॥

राजा वा राजपुत्रो वा ब्राह्मणो वहुशो श्रुतः ।
केशानां रक्षणार्थाय दद्याद्द्विगुणदक्षिणाम् ॥

यो गृहीत्वा विवाहाग्निं गृहस्थोऽभिमन्यते ।
अन्नं तस्य न भोक्तव्यं वृथा पाको हि संस्मृतः ॥ —१००

दाराग्निहोत्रदीक्षाञ्च कुरुते योऽग्रजेस्थिते ।
परिवेत्ता स विज्ञेयः परिवित्ती च पूर्वजः ॥

सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ।
क्लीबे देशान्तरस्थे च मूके प्रव्रजिते जडे ॥

कुब्जे खर्वेच पतिते न दोषः परिवेदने ।
वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात् ॥

तावन्ति भ्रूणहत्यानि वेदविक्रयकृल्लभेत् ।
यस्तु प्रव्रजितो भूत्वा सेवते मैथुनं पुनः ॥

षष्टिवर्षसहस्राणि निष्ठायां जायते कृमिः ।
शूद्रान्नं शूद्रसम्पर्कं शूद्रेण च सहासनम् ॥ —१०५

शूद्राद्विद्यागमः कश्चिज्ज्वलंतमपि पातयेत् ।
शूद्रादाहृत्यनिर्वापं ये पचन्त्यबुधाद्विजाः ॥

ते यान्ति नरकं घोरं ब्रह्मतेजो विवर्जिताः ।
हस्तदत्तानि लवणव्यञ्जनादीनि सन्ततम् ॥

दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते तु किल्बिषम् ।
आयसेनैव पात्रेण यदन्नमुपदीयते ॥

भोक्तुः स्याद्द्विगुणं पापं दाता च नरकं व्रजेत् ।
अङ्गुल्यादत्तकाशं च प्रत्यक्षलवणं च यत् ॥

मृत्तिकाभक्षणमपि समं गोमांसभक्षणम् ।
अग्रतो निवसेन्मूर्खो दूरतश्च गुणान्वितः —११०

गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ।
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ॥

ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ।
सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ॥

भोजने चैव दाने च विनाचार्यं स किल्बिषी ।
गोरक्षकान् वाणिजकांस्तथाकाव्यकुशीलकान् ॥

प्रेष्यान् वार्धुषिकांश्चापि विप्रान् शूद्रवदाचरेत् ।
देवद्रव्यविभागेन ब्रह्मस्वहरणेन च ॥

कुलान्याशु विनश्यन्ति त्वाचार्यातिक्रमेण च ।
मादेहीति वचःप्रोच्य गवादिब्राह्मणेषु च ॥ —११५

तिर्यग्यो निशतं प्राप्य चण्डालेष्वभिजायते ।
वाचायच्च प्रतिज्ञातं कर्मणा नोपपादितम् ॥

ऋणादप्यधिकं तत्स्यादिहलोके परत्र च ।
श्रोत्रियेभ्यः प्रतिज्ञातं षण्मासाभ्यन्तरेऽपि वा ॥

प्रयत्नेनापि दातव्यमिच्छाद्भिः श्रेय उत्तमम् ।
आचार्य चरणाम्भोजे पुरश्चरणकर्मणि ॥

सद्य एव प्रदातव्या दक्षिणा शास्त्रचोदिता ।
मासाभ्यन्तरतोऽवश्यमथवादक्षिणा शुभा ॥

आचार्याय प्रदातव्या महतीं सिद्धिमिच्छता ।
मासद्वयात्त्रिभिर्मासैर्दातव्या वृद्धिसंयुता ॥ —१२०

मासत्रयमतिक्रम्य दातव्या द्विगुणा नृप ।
मास षट्कमतिक्रम्य स्वर्णस्तेयी पतत्यधः ॥

आचार्याय प्रतिज्ञातं यत्किञ्चिदपि वा वसु ।
मासेन मेरुसदृशमृणं तद्वसुधापते ॥

तस्मादवश्यमाचार्यपादाब्जयुगळे धनम् ।
सद्य एव प्रदातव्यं पुरश्चरणकर्मसु ॥

यवनानपि भिक्षित्वा ह्यन्त्यजानपि वा परान् ॥
सद्यो वितरणं कार्यमाचार्यार्थे महीपते ।

ऋणं कृत्वापि वा देयं सद्य आचार्यपादयोः ।
भिक्षान्नमपिवाचार्य कुलेभिक्षेत नैव हि ॥ —१२५

अग्निष्टोमादि यागेऽपि दक्षिणाशास्त्रचोदिता ।
सद्य एव प्रदातव्या मासात्त्रितयतोऽपिवा ॥

सपुत्रो यजमानोऽसौ विनश्यत्यन्यथा नृप ।
विघसाशी भवेन्नित्यं नित्यंचामृतभोजनः ॥
अमृतं यज्ञशेषः स्याद्विघसंभुक्तशेषकम् ॥

हस्तौ प्रक्षाल्य गण्डूषं यः पिबेद्भोजनोन्तरे ।
दैवं पित्र्यं तथात्मानं त्वयं स उपघातयेत् ॥

गणान्नं गणिकान्नं च यदन्नं ग्रामयाजके ।
स्त्रीणां प्रथमगर्भेषु मुक्त्वा चान्द्रायणं चरेत् ॥

पक्षेवा यदि वा मासे यस्य गेहेऽत्ति न द्विजः ॥ –१३०
भुक्त्वा दुरात्मनस्तस्य चरेच्चान्द्रायणं व्रतम् ।
सत्रिणां दीक्षितानाञ्च यतीनां ब्रह्मचारिणाम् ॥

एतेषां सूतकं नास्ति ऋत्विजां कर्मकुर्वताम् ।
अजीर्णेह्युदिते वान्ते श्मश्रुकर्मणि मैथने ॥

दुःस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते ।
चैत्यवृक्षं चितिं यूपं शिवनिर्माल्यभोजनम् ॥

वेदविक्रयिणं स्पृष्ट्वा स वासा जलमाविशेत् ।
अग्न्यागारगवांगोष्ठे देवब्राह्मणसन्निधौ ॥

स्वाध्याये भोजने पाने पादुके परिवर्जयेत् ।
खलक्षेत्रगतं धान्यं कूपवारिषु तज्जलम् ॥ –१३५

अग्राह्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः ।
यद्वेष्टितशिराभुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ॥

सोपानत्कोऽपि यो भुङ्क्ते तद्वै रक्षांसि भुञ्जते ।
धर्मशास्त्ररथारुढा वेदखड्गधरा द्विजाः ॥

क्रीडार्थमपि यद्ब्रूयुः सधर्मः परमः स्मृतः ।
गन्धाभरणमाल्यानि यः प्रयच्छतिसन्ततम् ॥

स सुगन्धिः सदाहृष्टो यत्र यत्र प्रजायते ।
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥

वैश्यस्यचान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ।
वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ॥ –१४०

अमृतं तेन विप्रान्नमृग्यजुस्सामसंस्मृतम् ।
व्यवहारानुरूपेण न्यायेन यदुपार्जनम् ।
क्षत्रियस्य पयस्तेन प्रजापालनकोद्भवम् ॥
प्रवाहादनड्वाहाद्यमन्नमुत्पाद्यमिच्छति ॥

विशां यज्ञविधानेन वैश्यान्नं तेनसंस्मृतम् ।
अज्ञानतिमिरान्धस्य मद्यपानरतस्य च ।
रुधिरं तेन शूद्रान्नं दैवमन्त्रविवर्जितम् ॥

नवृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्वन् प्रेत्यचेह विनश्यति ॥

कामिनीषु विनाहेषु गवां भुंक्ते जनक्षये ॥ –१४५

ब्राह्मणाद्युपपत्तौ च शपथे नास्ति पातकम् ।
न यमं यमइत्याहुरात्मावै यम उच्यते ॥

आत्मा हि यमितो येन तं यमः किं करिष्यति ।
एकः क्षमावतां दोषो न द्वितीयः कथञ्चन ॥
यदेनं क्षमयायुक्तमशक्तं मन्यते जनः ।
न तस्य शास्त्राभिरतस्य मोक्षो
न चैव रम्यावसथप्रियस्य ।
न भोजनाच्छादनतत्परस्य
न लोकचित्तग्रहणे रतस्य ॥
एकांतशीलस्य सदैव तस्य
सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
स्वाध्याययोगे रतमानसस्य
मोक्षो ध्रुवं नित्यमहिंसकस्य ॥ –१५०
न्यायागतधनस्तत्व ज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च नित्यमाचार्यसेवकः ॥
भगवद्रश्मिसहितश्रीमदष्टाक्षरीरतः ।
देवतानामृषीणाञ्च पितॄणाञ्चाप्यनुग्रहात् ॥
आचार्यानुग्रहान्मुक्तिं प्राप्नोत्येव गृहाश्रमी ।
अनुत्तरब्रह्मतत्त्व रहस्ये श्रुतिसङ्ग्रहे ।
अध्यायोऽयं त्रयोविंशस्तन्त्रे दाशरथीरिते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥



**श्री भगवानुवाच –**

उषित्वैवं गृहे विप्रो गृहस्थादाश्रमात्परम् ।
वलीपलितसंयुक्तस्तृतीयाश्रममाश्रयेत् ॥

अपत्यापत्यमालोक्य ग्राम्याहारान् विसृज्य च ।
पत्नीं पुत्रेषु निक्षिप्य पत्न्या वा वनमाविशेत् ॥

वसानश्चर्मचीराणि साग्निः मुन्यन्नवर्तनः ।
शाकमूलफलैर्वापि पञ्चयज्ञान् प्रवर्तयेत् ॥

जटी सायं व्रजेत् स्नायी श्मश्रुनखलोमभृत् ।
स मूलफलभिक्षाभिरर्चयेद्भिक्षुकातिथीन् ॥

अन्यथा शाकदाता वा दान्तः स्वाध्यायतत्परः ।
आचार्यचरणाम्भोज शुश्रूषणपरायणः ॥ –५

भगयद्रश्मिसहित श्रीमदष्टाक्षरीरतः ।
वैखानिकश्च जुहुयादग्निहोत्रं यथाविधि ॥

उत्पन्नैः स्वयमानीतैः पुरोडाशांश्च निर्वपेत् ।
स्वयंकृतश्च लवणं नाद्यान्मधुफलप्रदः ॥

वर्जयेद्भिल्वशिग्रूँश्च कतकं पलनं मधु ।
उत्पन्नमाश्विने मासि त्यजेत्तत्पूर्वसञ्चितम् ॥

ग्राम्याणि फलमूलानि यत्नजातं च वर्जयेत् ।
त्रिषड्द्वादशमासान्नफलमूलादिसंग्रही ॥

नक्ताश्येकान्तराशी वा पक्षकालाशनोऽपि वा ।
चान्द्रायणव्रती वा स्यात् पक्षभुग्वाथ मासभुक् ॥

वैखानसमतस्थो वा फलमूलाशनोऽपि वा ।
तपसा शोषयेद्देहं पितृदेवांश्च तर्पयेत् ॥

अग्निमात्मनि चाधाय विचरेदनिकेतनः ।
भिक्षयेत्प्राणयात्रार्थं तापसान् वनवासिनः ॥

ग्रामादानीय वाश्नीयादष्टौ ग्रासान् वसन् वने ।
इत्थं वनाश्रमी विप्रो ब्रह्मलोके महीयते ॥

अतिवाह्यायुषोभागं तृतीयमिति कानने ।
आयुष्यस्य तुरीयांशे त्यक्त्वा सङ्गान् परित्यजेत् ॥

ऋणत्रयमसंशोध्यत्वनुत्पाद्य सुतानपि ।
तथा यज्ञाननुष्ठाय मोक्षमिच्छन् व्रजत्यधः ॥

मनागपि न भूतानां यस्मादुत्पाद्यते भयम् ।
सर्वभूतानि तस्येह प्रयच्छन्त्यभयं सदा ॥

एक एव चरेन्नित्यमनग्निरनिकेतनः ।
सिद्ध्यर्थमसहायः स्याद्ग्राममन्नार्थमाश्रयेत् ॥

जीवितं मरणं वापि नाभिकांक्षेद्यतिः क्वचित् ।
कालमेव प्रतीक्षेत नित्यमोङ्कार जापकः ॥

कर्तव्याः सकला न्यासा यतिना वश्यमन्वहम् ।
श्रीमदष्टार्णविद्यायामवश्यं निरतो भवेत् ॥

गृहसंमार्जनाद्यैश्च पादसंवाहनादिभिः ।
वस्त्रप्रक्षाळनाद्यैश्च नित्यमाचार्यसेवकः ॥ –२०

सर्वत्रममताशून्यस्सर्वत्रसमतायुतः ।
वृक्षमूलनिकेतश्च मुमुक्षुरिह शस्यते ॥

स्नानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
यतेश्चत्वारि कर्माणि पञ्चमं नोपपद्यते ॥

वार्षिकांश्चतुरोमासान् विचरेन्न यतिः क्वचित् ।
बीजाङ्कुराणां जन्तूनां हिंसा यत्र यतो भवेत् ॥

गच्छेत् परिहरन् जन्तून् पिबेत् कं वस्त्रशोधितम् ।
वाचं वदेदनुद्वेगां सकृद्वा केनचित्क्वचित् ॥

....सदात्मसहायश्च निरपेक्षो निराश्रयः ।
नित्यमध्यात्मनिरतो नीचकेशनखोदरी ॥ –२५

कुसुम्भवैणदण्डाढ्यो भिक्षाशी रतिवर्जितः ।
अलाबुदारुमृद्रेणु पात्रं शस्तं न पञ्चमम् ॥

न ग्राह्यं तैजसं पात्रं भिक्षुकेण कदाचन ।
एककालं चरेद्भैक्ष्यं न कुर्यात्तत्र विस्तरम् ॥

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
दत्ते शरावसम्पाते भिक्षां नित्यं चरेद्यतिः ॥

अल्पाहारो रहःस्थायी इन्द्रियार्थेष्वलोलुपः ।
रागद्वेषविनिर्मुक्तो भिक्षुर्मोक्षाय कल्पते ॥

आश्रमेषु यतिर्यस्य मुहूर्तमपि विश्रमेत् ।
किं तस्यानेकतन्त्रेण कृतकृत्यस्य जगत्पते ॥ —३०

सञ्चितं यद्गृहस्थस्य पापमामरणान्तिकम् ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ॥

दृष्ट्वा जराभिभवनमसह्यं रोगपीडनम् ।
देहात्यये पुनर्गर्भं गर्भक्लेशं च दारुणम् ॥

नानायोनिसहस्रेष्वावियोगं प्रियैस्सह ।
अप्रियैस्सहसंयोगमधर्मं दुःखसंभवम् ॥

पुनर्निरयसल्लीना नरके यातनाश्च याः ।
कर्मदोषसमुद्भूता नृणां जातीरनेकधा ॥

देहस्यानित्यतां दृष्ट्वा नित्यतां परमात्मनः ।
कुर्वीतमुक्तये यत्नं यत्रकुत्राश्रमे रतः ॥ —३५

ब्रह्मचारी गृहस्थो वा वनी वा भिक्षुकोऽपि वा ।
अवश्यमाचार्यपदद्वन्द्वशुश्रूषणे रतः ॥

स्वाश्रमोचित वेदोक्त कर्म कुर्वन् दिने दिने ।
रश्मिविद्यासमायुक्तन्यासजालसमन्विताम् ॥

श्रीमदष्टाक्षरीं जप्त्वा ब्रह्मभूतो भवेद्ध्रुवम् ।
कृतत्रेताद्वापरेषु क्रमादाश्रमसंयुताः ॥ —४०

सन्ति विप्रा महात्मानो निग्रहानुग्रहक्षमाः ।
ब्रह्मचर्यं वने वासो युगे तिष्येन विद्यते ॥

यतिवेषोऽपि विप्राणां दोषायैव कलौयुगे ।
पुत्रमित्रकलत्रादि पोषणासक्तमानसाः ॥

यतिवेषधरा विप्रा भवन्त्यस्मिन् कलौयुगे ।
दम्भलोभानृतयुताः शौचाचार विवर्जिताः ॥

भक्ष्यभोज्यघृतापूपनिरताः प्रत्यहं नृप ।
वृथा शापं विमुञ्चन्ति भिक्षार्थमपि सन्ततम् ॥

गतभर्तृकनारीषु चतुर्थाश्रमबोधकाः ।
तासु संसर्गनिरताः पुत्रदर्शन लालसाः ॥ —४५

यतिवेषं करिष्यन्ति पण्डिताश्च कलौयुगे ।
गार्हस्थ्यमेव सकलाश्रमेषूत्तममुच्यते ॥

कृत्वापि पातकं घोरं गृहस्थो मतिमान्नरः ।
प्रायश्चित्तैर्विमुक्तः स्यान्नान्यत्रासक्त आश्रमे ॥

गृहस्थ एव सर्वेषामाधारः परिकीर्तितः ।
अस्मिन् कलियुगे घोरे गृहस्था अपि सन्ततम् ॥

वेदाचारपरिभ्रष्ठाः पाखण्डाचारसंयुताः ।
परनारीषु निरता दम्भलोभानृतप्रियाः ॥

अभ्यस्यापि महाविद्यामाचार्यपदनिन्दकाः ।
एतेयमातिथिभूतास्सर्वे नरकभागिनः ॥ —५०

तस्माद्वैदिकमाचारं स्वाश्रमोचितमन्वहम् ।
कुर्वन्नाचार्यशुश्रूषां कुर्वन् प्राणधनैरपि ॥

वेदाध्ययनवान्नित्यं समस्तन्याससंयुताम् ।
श्रीमदष्टाक्षरीं जप्त्वा शुद्धकैवल्यमश्नुते ॥

अशक्तः सोमयागादियज्ञेषु नियतव्रतः ।
पौर्णमास्याममायां वा मासि मासि समाहितः ॥

विधिवत्संस्कृते वह्नौ मन्त्रैराचार्यचोदितैः ।
एकैकशो हुनेदाज्यं मूलेनाष्टोत्तरं शतम् ॥

रश्मिमन्त्रैस्सकृद्धुत्वा तत आचार्यपादयोः ।
निष्कमेकं तदर्धं वा प्रदत्वा दक्षिणां नृप ॥ —५५

प्रत्यहं वा जपेयस्य मासि मासि लभेत्फलम् ।
अमा सोमेन रविणा सहिता यदि भूपते ॥

कृत्वेत्थं विधिना होममाचार्यचरणद्वये ।
दत्वा विशेषतो निष्कसुवर्णं वा प्रयत्नतः ॥

सम्पूर्णदक्षिणायुक्तदशाग्निष्टोमजं फलम् ।
प्रत्यहं लभतेऽवश्यं तस्मिन् मासि न संशयः ॥

अनधीत्य द्विजो वेदाननिष्ट्वा विपुलैर्मखैः ।
अनुत्पाद्य सुतान् विप्रो नरकेषु निमज्जति ॥

तस्मादवश्यं वेदानां कार्यमध्ययनं बुधैः ।
अग्निष्टोमादयो यागाः कार्यास्सम्पूर्णं दक्षिणाः ॥ —६०

उत्पादनीयाः पुत्राश्चेहामुत्र सुखप्रदाः ।
अथवा सर्वयागानां फलमिच्छन् महीतले ॥

श्रीमदष्टाक्षरीविद्या भगवद्रश्मिसंयुता ।
न्यासयुक्ता प्रजप्तव्या होतव्या हविषा सदा ॥

शतसाहस्रशो यागदक्षिणाफलमिच्छता ।
ग्रहणादिषु कालेषु नवरात्रफले शुभे ॥

अक्षयायां तृतीयायामलभ्यार्धोदयादिषु ।
यथोक्तदक्षिणासाङ्गा दातव्या वसुधापते ॥

लक्ष्मीनारायणीविद्या सहस्राणि यशस्करी ।
नारायणाभिधं सूक्तमपि पातक भञ्जनम् ॥ —६५

वेदपारायणफलप्रेप्सुर्नित्यं जपेद्बुधः ।
आचार्यचरणाम्भोज शुश्रूषान्वहमादरात् ॥

रश्मिविद्या न्यासयुता श्रीमदष्टाक्षरी रतिः ।
यावज्जीवं निवासश्च वाराणास्यां महीपते ॥
कलेबरस्य त्यागो वा क्षेत्रे श्रीपुरुषोत्तमे ॥

मोक्षलक्ष्मीसाधनानि चत्वार्येतानि भूपते ।
पञ्चमं साधनं नास्ति साक्षान्मुक्तिफसप्रदा ॥

तत्राप्याचार्यशुश्रूषा श्रीमदष्टाक्षरीरति ।
इहापि सकलैश्वर्य प्रदान्ते मुक्तिभुक्तिदा ॥

गृहस्थ एव देवानां पितॄणां योगिनामपि ।
आश्रयः सर्वभूतानां नाश्रया भिक्षुकादयः ॥ —७०

पङ्गवो बधिरा अन्धा वैदिकं कर्तुमक्षमाः ।
यत्याश्रममनुप्राप्य मुक्तिभाजो भवन्ति हि ॥

श्रौते कर्मण्यशक्तानां चतुर्थाश्रमईरितः ।
गृहस्थस्सर्वकर्माणि कुर्वन् प्रत्यहमादरात् ॥

कृत्वाचार्यस्य शुश्रूषां श्रीमदष्टाक्षरीं जपन् ।
पितृवंशसमुद्भूतो मातृयंशशतान्वितः ॥
ब्रह्मानन्दमयीं मुक्तिमवश्यं लभते नृपः ॥

आचार्यपादाम्बुजयुग्मसेवा
संसक्तचित्तोऽन्वहमादरेण ।
न्यासैस्सहाष्टाक्षरमन्त्रजापी
होता घृताद्यैर्मनुनार्चकश्च ॥ —७०

ब्राह्मे मुहूर्ते कमलाधिनाथ-
रश्मिप्रजापी ग्रहणेरवीन्दोः ।
वैशाखशुक्ले दिवसेऽक्षयाख्ये
योगेष्वलभ्येषु रमेशयोगे ॥

शरन्नवम्याश्च महत्सुपर्व
स्वमादिने भास्करचन्द्रयुक्ते ।
जप्त्वा च हुत्वा गुरुपादयुग्मे
समर्प्य वित्तं बहुळं महीश ॥

कर्णद्वये कुण्डलयुग्ममादरा-
त्समर्प्य पत्न्या अपि सद्गुरोश्च ।
ताटङ्कवाळी युगलादिभूषणै-
रभ्यर्च्य विप्रा अथ भोजनीयाः ॥

प्रत्यब्दमित्थं नियमान्वितो यः
करोति विद्या जपहोमकर्म ।
आयुष्यमारोग्यमथार्थसिद्धिं
रत्नानि मुक्ता हयहस्ति सङ्घान् ॥

संप्राप्य पुत्रानथ पौत्रकांश्च
विद्यां श्रियं भाग्यमथाक्षयञ्च ।
मातुःपितुर्वंशशतान्वितोन्ते
दिव्यं विमानं मणिकाञ्चनाढ्यम् ॥ —७५

आरुह्य साक्षाद्भगवत्स्वरूपी
प्राप्नोत्ययोध्या नगरं सुरम्यम् ।
गुर्वाश्रितश्चापि दिने दिने यो
जप्त्वा च हुत्वा विधिवन्मनुष्यः ॥

आचार्यपत्नीमभिपूज्यवस्त्रै-
राकल्पसङ्घैः श्रियमेति दिव्याम् ।
पुत्रप्रपौत्रैस्सहितां समृद्धिं
प्राप्याथ साक्षाद्धरिरूपमेति ॥

मासे मासे भार्गवे वासरे वा
यद्येकस्मिन् सद्गुरोः पुत्रयुक्ताम् ।
पत्नीं भक्ष्यैराज्यभोज्यैश्च वस्त्रै-
राकल्पैर्वा तोषयित्वा द्विजाग्र्यः ॥

प्राप्नोत्यवश्यं धनरत्नसङ्कुलां
श्रियं तथारोग्यमनुत्तमञ्च ।
वंशाभिवृद्धिं समवाप्यचान्ते
विष्णोः पदं तत्परमं प्रयाति ॥

अष्टार्णविद्या जपहोमतत्परा
आचार्यपादाम्बुजसेवकाश्च ।
धन्याः कृतार्था मनुजेन्द्र नित्यं
सम्प्राप्तकामा अथ यान्ति मुक्तिम् ॥ —८०

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे चतुर्विंशोऽध्यायः ॥

## ॥ अथ पंचविंशोऽध्यायः ॥

**राजोवाच –**

धन्योऽस्मिकृतकृत्योऽस्मि नारायण जगत्पते ।
श्रीमदष्टाक्षरीन्यासच्छन्द आर्षादिकं श्रुतम् ॥

पुरश्चरणकृत्यञ्च साधनं काम्यमप्यथ ।
वद मे करुणामूर्ते कृपया धर्मनन्दन ॥

**श्री भगवानुवाच –**

अथातः संप्रवक्ष्यामि न्यासजालस्य सिद्धिदम् ।
छन्द आर्षादिकं सर्वं यज्ज्ञात्वा सिद्धिमान् भवेत् ॥

अन्तर्बहिर्मातृकाया ऋषिर्ब्रह्मा प्रजापतिः ।
च्छन्दो गायत्त्रमुद्दिष्टं चिद्रूपा श्रीः सरस्वती ॥

देवता कथिता श्रीश पीतये योग ईरितः ।
अक्लीबदीर्घह्रस्वाद्यवर्गैष्षड्भिष्षडङ्गकम् ॥
विन्यस्य भावयेद्धीमान् मातृकां परमेश्वरीम् ॥ –५

पञ्चाशल्लिपिभिर्विभक्तमुखदोः करामध्यवक्षःस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।
मुद्रामक्षसुधाढ्यहेमकलशं विद्याश्च हस्ताम्बुजे-
बिभ्राणां विशदप्रभां त्रिणयनां वाग्देवतामाश्रये ॥

अन्तर्ब्रहिर्मातृकाख्यमकृत्वा न्यासमन्वहम् ।
ना सिद्धिं लभतेमन्त्री पुरश्चर्याशतैरपि ॥

प्रणवाद्यांन्यसेत्पश्चान्मातृकां परमेश्वरीम् ।
कृत्वा पूर्वादितन्यासमार्षच्छन्दादिकं तथा ॥

सिन्दूरकान्तिममिताभरणं त्रिणेत्रं
विद्याक्षसूत्रमृगपाशवरान् दधानम् ।
पार्श्वस्थितां भगवतीमपि काञ्चनाभां
ध्यायेत्कराब्जधृतपुस्तक वर्णमालाम् ॥

प्रणवाद्यामिमांन्यस्य मातृकां सर्वसिद्धिदाम् ।
ब्रह्मरूपी भवत्येव सत्यानन्दचिदात्मकः ॥ –१०

वागाद्यां मातृकां न्यस्येत्सर्वविद्याफलप्रदाम् ।
ऋषिः प्रजापतिश्छन्दो गायत्रं देवता परा ॥
वागीश्वरी मातृकास्यान्न्यासः पूर्वोक्त एव हि ॥

अक्षस्रजं हरिणपोतमुदग्रटङ्कं
विद्यां करैरविरतं दधतीं त्रिणेत्राम् ।
अर्धेन्दुमौलिमरुणामरविन्दभासं
वर्णेश्वरीं प्रणमतस्तनभारनम्राम् ॥

वाग्भवाद्यमिमं न्यासं कृत्वा मन्तृकया बुधः ।
पारङ्गतोऽसौ विद्यानां भवत्येव जडोऽपि च ॥

पञ्चब्रह्मकलां न्यस्येत्त्रयीवर्णादिकास्ततः ।
ऋषिः प्रजापतिश्छन्दो गायत्रं समुदाहृतम् ॥

कलात्मा वर्णजननी देवता शारदा स्मृता ।
ह्रस्वदीर्घान्तरगतैः षडङ्गं प्रणवैः स्मृतः ॥ —१५

हस्तैः पद्मं रथाङ्गं गुणमथहरिणं पुस्तकं वर्णमालां
टङ्कं शुभ्रं कपालं दरममृतलसद्धेमकुम्भं वहन्तीम् ।
मुक्ता विद्युत्पयोदस्फुरित नवजपा बंधुरैः पञ्चवक्त्रै-
स्त्र्यक्षैर्वक्षोज नम्रां सकल शशिनिभां शारदां तां नमामि ॥

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
रोधिका दीपिका चैव रोचिकामोचिका परा ॥

सूक्ष्मा सूक्ष्मामृता पश्चाज्ज्ञाना ज्ञानामृता तथा ।
आप्यायिनी व्यापिनी च व्योमनीच कला इमाः ॥

सदाशिवसमुद्भूताष्षोडशोक्ता महीपते ।
सृष्टिर्ऋद्धिस्स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ॥
स्थितिः सिद्धिरितिप्रोक्ता दशब्रह्म कला इमाः ॥

जराच पालिनी शान्तिरीश्वरी रतिकामिके ।
वरदाह्लादिनी प्रीतिर्दीर्घा विष्णुकलादश ॥ –२०

तीक्ष्णा रौद्री भया निद्रा तन्त्रा शुक्रोधिनी क्रिया ।
उत्कारी मृत्युरित्युक्ता दशरुद्रकला इमाः ॥

पीता श्वेतारुणा पश्चादसिता च चतुष्कलाः ।
ईश्वराङ्ग समुद्भूताः कलाः पञ्चाशदीरिताः ॥

कलान्यासमिमं कृत्वा साक्षाद्ब्रह्मकलान्वितः ।
आज्ञासिद्धिं समासाद्य तेजोमय तनुर्भवेत् ॥

श्रीकण्ठमातृकान्यासं व्योमशक्तिसमन्वितम् ।
न्यसेच्छ्रीकण्ठपूर्णादिं पञ्चाशान्मिथुनात्मकम् ॥

तार्तीयपूर्वां तां न्यस्येन्नमोन्तां रुद्रसंयुताम् ।
सधातुप्राणशक्त्यात्म युक्तायादिषु ते क्रमात् ॥ –२५

ऋषिस्स्याद्दक्षिणामूर्तिर्गायत्रं च्छन्द ईरितम् ।
अर्धनारीश्वरः प्रोक्तो देवता तन्त्रवेदिभिः ॥
हसाषड्दीर्घयुक्तेन कुर्यादङ्गानि देशिकः ॥

बन्धूक काञ्चननिभं रुचिराक्षमालां
पाशाङ्कुशौ च वरदं निजबाहुदण्डैः ।
बिभ्राणमिन्दुशकलाभरणं त्रिणेत्रं
मेधां त्रिकेशमनिशं वपुराश्रयामः ॥

श्रीकण्ठानन्तसूक्ष्मेशास्त्रिमूर्तिरमरेश्वरः ।
अर्घीशो भार भूतेशो तिथीशः स्थाणुना हरः ॥

रुण्टीशो भौतिकस्सद्यो जातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनाश्शिवषोडशमूर्तयः ॥

पश्चात्क्रोधीशचण्डीशपञ्चास्येशशिवोत्तमाः ।
अथैकरुद्रकूर्मैकनेत्राह्वचतुराननाः ॥ —२०

अजेश शर्वसोमेश राजहिंगुलधारकौ ।
अर्धनारीश्वरश्चोमाकान्तश्चाषाढदण्डिनौ ॥

स्युरत्रिमीनमेषाख्या लोहिताख्यं शिवं तथा ।
छलगण्ड द्विरण्डेशौ महाकालकपालिनौ ॥

भुजङ्गेशः पिनाकीशः खड्गीशाख्यौ बकस्ततः ।
श्वेतभृग्वीश लकुलि शिवस्संवर्तकस्ततः ॥

एते रुद्रास्सिता रक्ता धृत्तशूलकपालकाः ।
पूर्णोदरीस्याद्विरजा शाल्मली तदनन्तरम् ॥

कोलाक्षी वर्तुलाक्षी च दीर्घकर्णा समीरिता ।
सुदीर्घमुखिगोमुख्यौ दीर्घाजिह्वा तथैव च ॥ –३५

कुण्डोदर्यूर्ध्वकेशी च तथाविकृतमुख्यपि ।
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी तथा ॥

सुश्रीमुखी च विद्यामुखी ह्येताः स्वरशक्तयः ।
महाकाली सरस्वत्यौ सर्वसिद्धिसमन्विता ॥

गौरी त्रैलोक्यविद्यास्यान्मन्त्रशक्तिस्ततः परम् ।
आत्मशक्तिभूतमाता तथालम्बोदरीमता ॥

द्राविणी नागिनी माया खेचरी चापि मञ्जरी ।
रूपिणी ठारिणीपश्चात्काकोदर्यपि पूतना ॥

स्याद्भद्रकाल्यौ योगिन्यौ शङ्खिनी गर्जिनी तथा ।
कालरात्रिश्च कुब्जीस्यात्कपर्दिन्यपि वज्रवा ॥ –४०

जया वसुमुखेश्वर्या रेवती च परा तथा ।
वारुणी वायवी प्रोक्ता पश्चाद्दक्षोपधारिणी ॥
ततश्च सहजा लक्ष्मीर्व्यापिनी माययान्विता ॥

एता रुद्रस्य पीठस्थास्सिन्दूरारुणविग्रहाः ॥

रक्तोत्पलकपालाभ्यामलङ्कृत्य कराम्बुजाः ।
श्रीकण्ठमातृकामेतां विन्यस्यादौ दिने दिने ॥

श्रीमदष्टाक्षरीं जप्त्वा साक्षाद्ब्रह्ममयो भवेत् ।
रुद्रमूर्तिस्समं हर्ता कर्ता साक्षान्नसंशयः ॥ —४५

त्रयी माया रमा कामबीजपूर्वकइष्टदः ।
कर्तव्यस्सततं न्यासो ब्रह्मतादात्म्यसिद्धिदः ॥

स्वराद्यां वा न्यसेदेतां मातृकामिष्टसिद्धिदाम् ।
स धातुप्राणशक्त्यात्मयुक्तायादिषु विष्णवः ॥

ऋषिः प्रजापतिः प्रोक्तो गायत्रं छन्दईरितमम् ।
नारायणोऽर्धलक्ष्मीशो देवतात्र समीरिता ॥
दीर्घ .... .... षडङ्गानि प्रतिविन्यसेत् ॥

हस्तैर्बिभ्रत्सरसिजगदाशङ्खचक्राणि विद्यां
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरताकल्पमाश्लेषलोभा
देकीभूतं वपुरवतुनः पुण्डरीकाक्षलक्ष्म्योः ॥

शंखं चक्रगदांबुजानि सततं हस्ताम्बुजैर्धारयन्
आदर्शं च हिरण्मयं घटमथो विद्युत्पयोदाकृतिम् ।
केयूराङ्गदहारकुण्डलधरो माणिक्यभूषोल्लस-
द्वक्त्राब्जोऽर्धरमान्वितो विजयते नारायणः श्रीपतिः ॥ –५०

वैष्णवीं मातृकामेकामपि विन्यस्यचान्वहम् ।
श्रीमदष्टाक्षरीं जप्त्वा साक्षान्नारायणो भवेत् ॥

मन्त्रीचात्र न सन्देहो निग्रहानुग्रहक्षमः ।
भवेद्ब्रह्ममयः साक्षाद्वैष्णवीं न्यस्य मातृकाम् ॥

शक्तिपूर्वां तनौ न्यस्येन्मातृकां मनुवित्तमः ।
ऋषिश्शक्तिस्स्मृता च्छन्दो गायत्रं देवताबुधैः ॥

संप्रोक्ता विश्वजननी सर्वसौभाग्यदायिनी ।
दीर्घार्धैऽयुजांगानि कुर्यान्मायात्मना बुधः ॥

उद्यत्कोटिदिवाकरप्रतिभटो तुङ्गोरुपीनस्तनी-
बद्धार्धेन्दुकिरीटहाररशनामञ्जीर संशोभिता ।
बिभ्राणाकरपङ्कजैर्जपपटीं पाशांकुशौ पुस्तकं
दद्याद्वो जगदीश्वरी त्रिणयना पद्मे निषण्णा सुखम् ॥–५५

शक्तिबीजादिकां न्यस्य मातृकां सर्वसिद्धिदाम् ।
आश्रयः सर्वभाग्यानां भवत्यत्र न संशयः ॥

न्यसेच्छ्रीबीजसम्पन्नां मातृकां विधिनातनौ ।
ऋषिर्भृगुः स्मृतश्छन्दो गायत्रं देवता मता ॥

समस्तसम्पदामादिर्जगतां नायिका बुधैः ।
प्रोक्ता तु तेन बीजेन कुर्यादंगानि साधकः ॥

विन्दूद्दामसहस्राभां हिमगिरिप्रख्यैश्चतुर्भिर्गजै-
शुण्डादण्डसमुद्धृतामृतमयैरासिच्य मानामिमाम् ।
बिभ्राणां करपङ्कजैर्जपपटीं पद्मद्वयं पुस्तकं
भास्वद्रत्नसमुज्ज्वलां कुचनतां ध्यायेज्जगत्स्वामिनीम् ॥

श्रीवीजपूर्वां विन्यस्य मातृकां सर्वसिद्धिदाम् ।
आचार्यानुग्रहात्साक्षाद्भवेच्छ्रीकलयान्वितः ॥ —६०

न्यसेत्स्मराद्यां वपुषि मातृकां मङ्गलप्रदाम् ।
ऋषिः संमोहनः प्रोक्तश्छन्दो गायत्रमुच्यते ॥

देवता मन्त्रिभिः प्रोक्ता समस्तजननी परा ।
स्वरेण दीर्घयुक्तेन विदध्यादङ्गकल्पनाम् ॥

वालार्ककोटिरुचिरां स्फटिकाक्षमलां
कोदण्डमिक्षुजनितं स्मरपञ्चबाणान् ।
विद्यां च हस्तकमलैर्दधतीं त्रिणेत्रां
ध्यायेत्समस्तजननीं नव चन्द्रचूडाम् ॥

स्मराद्यां मातृकां न्यस्य कन्दर्पसमकान्तिमान् ।
वशीकरीति त्रैलोक्यं किञ्च ब्रह्ममयोभवेत् ॥

श्रीशक्तीकामबीजाद्यां मातृकां विन्यसेदपि ।
ऋषिस्संमोहनं च्छन्दो गायत्रं देवतामनोः ॥ —६५

त्रैलोक्यामोहिनी प्रोक्ता सर्वलोकवशङ्करी ।
आवर्तितैस्त्रिभिर्बीजैः षडङ्गानिप्रकल्पयेत् ॥

ध्येयमक्षवलयेक्षुशरान्सपाशान्
पद्मद्वयंशुकशरान् नवपुस्तकञ्च ।
आबिभ्रतीं निजकरैररुणां कुचार्तां
संमोहिनीं त्रिणयनां तरुणेन्दुचूडाम् ॥

बीजत्रयाद्यां विन्यस्य मातृकामिष्टसिद्धिदाम् ।
सर्वसौभाग्यसम्पन्नः सकलैश्वर्यसंयुतः ॥

समस्तविद्यासम्पन्नो जीवेच्च शरदांशतम् ।
हंसविद्यादिकां न्यसेन्मातृकामखिलेष्टदाम् ॥

ऋषिर्ब्रह्मा समुद्दिष्टः छन्दो गायत्रमीरितम् ।
समस्तवस्तुसम्प्राप्तिकरं तेजोमयं शिवम् ॥ —७०

दैवतं परमं ब्रह्म परमात्माभिधं नृप ।
स्वाहाद्यैः पञ्चमनुभिः पञ्चाङ्गानि प्रकल्पयेत् ॥

अस्त्रं दिक्षु समस्तेन मूलेन वसुधापते ।
वेदादिशक्तिरजपा परमात्मा महामनुः ॥
वह्निजायाश्च कथिताः पञ्चमन्त्राः शुभावहाः ॥

ब्रह्मतादात्म्यसिद्ध्यर्थं समस्तफलसिद्धये ।
हंसाद्यां मातृकां न्यस्येत्परब्रह्ममयीमथ ॥

तारादिपञ्चमनुभिः परिचीयमानं
मानैकगम्यमनिशं जगदेकमूलम् ।
सञ्चित्समस्तभुवनेश्वरमच्युतं त-
तेजः परं भजत सान्द्रसुधांशुराशिम् ॥

हंसाद्यां मातृकां न्यस्य श्रीमदष्टाक्षरीं जपन् ।
अणिमादिगुणैश्वर्यसहितोभगवानसौ ॥ —७५

इत्थमेकादशविधं मातृकान्यासमन्वहम् ।
आचार्यानुग्रहाल्लब्ध्वा श्रीमदष्टाक्षरीं जपन् ॥

साक्षान्नारायणो ज्ञेयो निग्रहानुग्रहक्षमः ।
स एव सर्वं जगतां कर्ता हर्ता च पालकः ॥

देवतानामृषीणाञ्च नमस्कार्यो भवत्यसौ ।
एकादशविधन्यासेष्वशक्तो वसुधापते ॥

वैष्णवीं मातृकां वापि विन्यसेदन्वहं शुचिः ।
तत्त्वन्यासं ततः कुर्याद्येनतत्त्वमयः पुमान् ॥

विराड्रूपी हरिः साक्षाद्भवत्यत्र न संशयः ।
ऋषिर्ब्रह्मा ततश्छन्दो गायत्रं दैवतं स्मृतम् ॥ –८०

देवता भगवान् साक्षात्सर्वतत्त्वमयोहरिः ।
षड्दीर्घमायया कुर्यात्षडङ्गं प्रणवाद्यया ॥

भूतोयाग्नि मरुद्वियद्गुणमयं सर्वप्रपञ्चात्मकं
विश्वस्यस्थितिसर्गसंहृतिकरं सत्यात्मकं चिद्घनम् ।
विष्णुब्रह्मशिवाकृतिं सुरमुनिस्तुत्यं हृदब्जस्थितं
युक्तं चित्कलयाश्रयेऽहमनिशं नारायणाख्यं महः ॥

ज्ञात्वा तत्त्वमयं न्यासमाचार्यवदनाम्बुजात् ।
विन्यस्य श्रीमदष्टार्णं भक्त्या च प्रजपन् बुधः ॥

तन्मूर्तिपञ्जरन्यासं ततःकुर्यादनन्यधीः ।
ऋषिरादित्यभगवानथर्वर्षिः प्रजापतिः ॥

गायत्रं दैवतं च्छन्दः सवितुर्मण्डलास्थितः ।
आदित्यात्मा जगत्स्वामी देवो नारायणः स्मृतः ॥ –८५

ध्येयःसदासवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसान्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

तन्मूर्तिपञ्जरन्यासं विन्यस्यादौ दिने दिने ।
भवेत्सभगवन्मूर्तिश्शब्दब्रह्ममयः पुमान् ॥

वर्णन्यासं दशविधं कुर्याद्ब्रह्मैक्यसिद्धिदम् ।
ऋषिरस्याहमेवास्मि साध्यो नारायणो नृप ॥

गायत्रं दैवतंच्छन्दः साक्षाल्लक्ष्मीपतिर्विभुः ।
हरिर्नारायणः स्वामी देवतात्र समीरितः ॥

वन्दे नीलपयोदकोमलतनुं शंखं च चक्रं गदाम्
विभ्राणं कमलं रमावसुमती संशोभिपार्श्वद्वयम् ।
दिव्याकल्पशताभिराममनिशं रत्नासनेसंस्थितं
शान्तं सुन्दरमच्युतं सुरमुनिब्रह्मेशशक्रार्चितम् ॥ —१०

वर्णन्यासं दशविधं कृत्वेत्थं नित्यमादरात् ।
आचार्यानुग्रहात्पश्चादवश्यं हरिरूपधृक् ॥

चिद्रूपमातृकान्यासं भगवद्भावसिद्धिदम् ।
कुर्यादवश्यं सकलन्यासजालफलप्रदम् ॥

मुनिरस्याप्यहं प्रोक्तः साध्यो नारायणो विभुः ।
छन्दश्च देवी गायत्री परमात्मा श्रियःपतिः ॥

नारायणो जगत्स्वामी देवता संस्मृतो बुधैः ।
अस्यापि मूलपञ्चाङ्गन्यासः सद्भिरुदीरितः ॥
षड्भिर्वर्णैः षडङ्गं वा विन्यसेद्वसुधापते ॥

मूले कल्पतरोर्महामणिमये सिंहासने संस्थितं
देव्या चित्कलया श्रिया च सहितं नीलामहीसेवितम् ।
दिव्याकल्पशताभिराममनिशं नित्यं प्रसन्नं विभुं
वन्दे देव मुनीन्द्रवन्दितपदं नारायणं चिद्घनम् ॥ —९५

चिद्रूपमातृकान्यासं समस्तफलसिद्धिदम् ।
सर्वन्यासेष्वशक्तोऽपि स्वाचार्यानुग्रहान्नृप ॥

कृत्वादावन्वहं धीमान् श्रीमदष्टाक्षरीं जपेत् ।
चिद्रूपमातृकां न्यस्य साक्षान्नारायणो भवेत् ॥

सर्वमन्त्रमयः सर्वदेवैरप्यर्चितो भवेत् ।
आचार्यं वेदवेदान्तपारगं श्रोत्रियं द्विजम् ॥

सहस्रं योजनं वापि गत्वावश्यं महीपते ।
ब्रह्मतादात्म्यमन्विच्छन् मुक्तिमेकेन जन्मना ॥

पूर्वं संप्राप्तविद्योऽपि सन्त्यज्य सकलान् गुरून् ।
संसेव्य बहुवर्षं वा रत्नप्राणधनैरपि ॥ —१००

श्रीमदष्टाक्षरीं विद्यां भगवद्रश्मि संयुताम् ।
अवश्यमपि गृह्णीयात्समस्तन्यास पूर्विकाम् ॥

त्तमाचार्यं विजानीयान्मामेवाभेदतस्सदा ।
अवश्यं सकलन्यासा आचार्यवदनाम्बुजात् ॥

न्यस्तव्याश्च गृहीतव्या देवताभाव सिद्धिदाः ।
अवश्यमुपदेष्टव्याः करोतु न करोतु वा ॥

आचार्येण स्वशिष्याय विनीताय महात्मने ।
आचार्यानुग्रहाज्ज्ञात्वा न्यासजालमिदं शुभम् ॥

विन्यस्य श्रीमदष्टार्णं शताधिकसहस्रकम् ।
जप्त्वा मासत्रयं पश्चात्पश्यत्येव श्रियः पतिम् ॥ –१०५

भगवत्कलयापूर्णः कामकोटिसमप्रभः ।
तेजोमयवपुर्मृत्युजरामुक्तो भवत्यसौ ॥

अविच्छिन्नोपासनया सिद्धिरेषा प्रजायते ।
कृत्वा दिने दिनेऽवश्यं न्यासजालमिदं शुभम् ॥

विनाचार्यं न वन्देत मातरं पितरं तु वा ।
वन्द्यमानो व्रजत्येव मृत्युं मासान्न संशयः ॥

मासत्रयाद्भवत्यस्य शक्राद्या अपि किङ्कराः ।
शुभे दिने शुभेलग्ने न्यासजालमिदं शुभम् ॥

गृहीत्वैवततोष्टार्णां गृह्णीयाच्छ्रेयसे नृप ।
सप्तद्वीपवतीभूमिर्धनधान्यौघसङ्कुला ॥ –११०

दक्षिणा विहिता शास्त्रे सर्वस्वमपि वा नृप ।
वर्षाशनमितद्रव्यमथवा गुरवेऽर्पयेत् ॥

सद्यस्सिद्धिमवाप्नोति जपहोमादिकं विना ।
कृत्वावश्यमिदं न्यासजातं प्रत्यहमादरात् ॥

अष्टोत्तरशतंवापि श्रीमदष्टाक्षरीं जपेत् ।
भार्गवे वासरे वापि पक्षे वा मासि मासि वा ॥

मासत्रये वा षण्मासे न्यासजालमिदं न्यसेत् ।
महतीं सिद्धिमिच्छद्भिर्न्यस्तव्यं प्रत्यहं बुधैः ॥

वेदवेदान्तशास्त्रौघसारभूतार्थसङ्ग्रहम् ।
न्यासजालमिदं पुण्यं भगवद्भावसिद्धिदम् ॥ —११५

अक्षयायां तृतीयायां रवीन्दुग्रहणेऽपि वा ।
आश्विने नवरात्रे च विजये दशमीदिने ॥

आचार्यवदनाम्भोजाद्भगवद्रश्मिसंयुता ।
समस्तन्याससहिता श्रीमदष्टाक्षरी शुभा ॥

आचार्यदक्षिणां दत्वा चाध्येतव्या पुनःपुनः ।
अवश्यं महतीं सिद्धिमणिमादिगुणान्विताम् ॥

ब्रह्मतादात्म्यसंसिद्धि हेतुभूतां सनातनीम् ।
प्राप्नोत्यत्र न सन्देहो विना होमजपादिकम् ॥

सर्वन्यासेष्वशक्तश्चेन्मातृका वैष्णवीमपि ।
तत्त्वन्यासं ततः कृत्वा न्यासं तन्मूर्तिपञ्जरम् ॥ —१२०

वर्णन्यासं दशविधं न्यस्यचिद्रूपमातृकाम् ।
श्रीमदष्टाक्षरं मन्त्रं जपेन्नित्यं महीपते ॥

तत्राप्यशक्तोमतिमान् न्यस्य वैष्णव मातृकाम् ।
अवश्यं न्यासा न्यस्तव्यास्सर्वे सद्गुर्वनुग्रहात् ॥

पक्षे वा मासि वा सेवा षण्मासे वा महीपते ।
अवश्यं सकलान्यासाः कर्तव्या हरिशासनात् ॥

अन्यथा महती सिद्धिर्लभ्यते न कदाचन ।
जयन्तीष्वपि सर्वासु भार्गवे वासरेऽपिवा ॥

एकादश्याममायां वा रविसङ्क्रमणेऽपि वा ।
व्यतीपातेऽपि वा कार्यं न्यासजालमिदं शुभम् ॥ —१२५

न्यासैस्सहाष्टार्णमनुप्रजापी
स्वाचार्यशुश्रूषण सक्तचित्तः ।
दिने दिने वैदिकपावके च
हुत्वाहविर्द्वादशधापि भूप ॥

विशेषतो भार्गववासरेऽथ
जप्त्वा च हुत्वाथ गुरुप्रियायै ।
भक्ष्यं च भोज्यं घृतसूपसंयुतं
सुवर्णमुक्ताफल भूषणादिकम् ॥

दत्वा लभेदक्षयसम्पदृद्धिं
वंशाभिवृद्धिं च तथा चिरायुः ।
लब्ध्वाविमानं मणिहेमनिर्मितं
प्राप्नोत्यथान्ते भगवत्पदञ्च ॥

अवश्यमाद्येऽपि भृगोर्दिने वा
मासस्यवाऽऽद्ये च समाहितात्मा ।
जप्त्वा च हुत्वा विधिवत्समर्च्य
चाचार्यपत्न्यै मणिकाञ्चनादिकम् ॥

आयुष्यमारोग्यमथाक्षयं च
वित्तञ्च मुक्ताफल रत्नजातम् ।
वंशाभिवृद्धिं समवाप्यभोगान्
प्राप्नोति साक्षाद्भगवत्पदञ्च ॥ –१३०

न्यासैस्सहाष्टार्णजपी महात्मा
न्यासैस्सहाष्टार्णजपी विधाता ।
न्यासैस्सहाष्टार्णजपी शिवश्च
न्यासैस्सहाष्टाक्षरमन्त्रजापी ॥

नारायणः सर्वचराचरस्य
गुरुर्गरीयानपि विश्ववन्द्यः ।

सत्यं सत्यं पुनस्सत्यं न मृषा प्रोच्यते मया ।
एतदेव परं तत्वं विजानीहि महीपते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे पञ्चविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः ॥

**श्री भगवानुवाच –**

श्रीमदष्टार्णविद्यायाः साधनं सर्वसिद्धिदम् ।
पुरश्चर्याभिधं कर्म वक्ष्यामि वसुधापते ॥

इत्थं पञ्चदशन्यासैस्सन्नद्धनिजविग्रहः ।
आचार्यचरणाम्भोजं ध्यात्वा ब्रह्मविले शुभे ॥

हृत्पद्मकर्णिकामध्ये श्रीपतिं जगतीपतिम् ।
ध्यात्वाथ श्रीमदष्टार्णं यथाशक्त्यान्वहं जपेत् ॥

सहस्रं साधिकं किञ्चिद्षण्मासं वत्सरं तु वा ।
जप्त्वा हुत्वान्वहं भूप ज्वलिते जातवेदसि ॥

आचार्यपत्नी पुत्रादीनभ्यर्च्य धनराशिभिः ।
संवत्सरान्महतीं सिद्धिं देवानामपि दुर्लभाम् ॥ –५

जरामरणशून्यत्वं दीर्घमायुररोगताम् ।
कन्दर्पसमसौभाग्यं वाचां सिद्धिमनुत्तमाम् ॥

परकायप्रवेशादि सामर्थ्यं च लभेदसौ ।
मृतानामपि साहस्रं करस्पर्शनमात्रतः ॥

सञ्जीवयति भूपाल संशयो नात्र विद्यते ।
अणिमादिगुणैर्युक्तो वत्सरात्खेचरो भवेत् ॥

अष्टार्णविद्यासंसिद्धिः पुरश्चर्यां विनापि च ।
उक्तं ते च महाभाग यदि विघ्नो न जायते ॥

चतुर्लक्षं कृतौ प्रोक्तं त्रेतायामष्टलक्षकम् ।
द्वापरे रविलक्षंस्यात्कलौ षोडश लक्षकम् ॥ —१०

गङ्गा गोदावरीतीरं नर्मदातीर मुत्तमम् ।
तथा सरस्वतीतीरं यमुनातटमप्यथ ॥

कावेरीकृष्णवेण्योश्च तुङ्गा भीमरथीतटम् ।
समुद्रतीरं गोष्ठञ्च सुवर्णमुखरीरितम् ॥

तुलसी वनमध्यञ्च प्रशस्तं जपकर्मसु ।
एतेष्वाचार्यसान्निध्यं विशिष्टं प्राहुरिष्टदम् ॥

कुर्वन् संध्यादिकं कर्म प्रत्यहं विजितेन्द्रियः ।
नक्ताश्येकान्तराशी वा फलमूलाशनोऽपि वा ॥

हविष्यमन्नमश्नन्वा नित्यं त्रिषवणे रतः ।
जपेत् षोडशलक्षाणि श्रीमदष्टाक्षरं मनुम् ॥ —१५

विधिवज्ज्वलिते वह्नौ पद्मैर्गव्यघृतप्लुतैः ।
हुनेत् षोडशसाहस्रं तत आचार्यपादयोः ॥

सर्वस्वमर्पयेद्धीमान् वसुधां सस्यसंकुलाम् ।
गवां द्वादशकं वत्स बहुक्षीरसमन्वितम् ॥

कुण्डलद्वितयंचापि वासोवद्भूषणादिकम् ।
दत्वाचार्यप्रियापुत्रानपि सन्तोष्य वस्तुभिः ॥

ब्राह्मणान् भोजयेत्पश्चाच्छतं साग्रं सुवासिनीः ।
इत्थं कृत्वा पुरश्चर्यां विधिना वसुधापते ॥

श्रीमदष्टाक्षरीविद्या सिद्धिं सद्योव्रजत्यसौ ।
श्रीमदष्टाक्षरीसिद्धा यदा भवति भूपते ॥ —२०

तदैव चक्षुषा साक्षाद्भगवन्तं प्रपश्यति ।
अथ स्वप्नेऽपि वा साक्षाद्ब्रह्मरुद्रादिवन्दितम् ॥

विनतातनयारूढं श्रीभूनीलासमन्वितम् ।
नारायणं परब्रह्मरूपिणं पश्यति ध्रुवम् ॥

मनोरथार्थसंसिद्धिर्दैवतैरपि दुर्लभा ।
भवत्येव न सन्देहस्तस्मिन् वर्षे महीपते ॥

भगवत्कलया पूर्णः किञ्चासौ भवतिध्रुवम् ।
जपहोमार्चनं दानं व्रतं देवद्विजार्चनम् ॥

पुरश्चरण कृत्येन विना न सफलं भवेत् ।
तस्मादवश्यं कर्तव्यं पुरश्चरणमादरात् ॥ –२५

न सिद्धिरन्यथा भूप जपकोटिशतैरपि ।
महतीयं पुरश्चर्या संपूर्णोक्ता मया तव ॥

विद्यासिद्धिरवश्यंस्याद्विधानेन कृता यदि ।
अनायासेन विद्यायास्सिद्धिं गुप्ततरामपि ॥

प्रवक्ष्यामि महीपाल शृणुष्वावहितो भवान् ।
वैशाखे मासि शुक्ले या तृतीयाऽक्षय संज्ञिता ॥

भृगुवासरसंयुक्ता प्राजापत्यर्क्षसंयुता ।
रोहिण्यां संस्थिते जीवे मेषराशिगते रवौ ॥

लक्ष्मीभवानीयोगोऽयं दुर्लभस्सर्वदेहिनाम् ।
योगोऽयं षष्टिभिर्वर्षैर्लभ्यते नान्यथा नृप ॥ –३०

त्रेतायुगाद्यं दिवसमिदमेव वदन्ति हि ।
पितृणामपि सर्वेषामक्षयानन्दकारकम् ॥

तत्र गौरी समुत्पन्ना मेनकायां हिमाचलात् ।
तत्रैव भृगुवारेण सहिते दिसे शुभे ॥

भृगोः ख्यात्यां समुत्पन्ना तपसा तोषितेन्दिरा ।
अस्मिन्नेव दिने भूप रोहिण्यां भगवान् विभुः ॥

बलरामाकृतिर्जातो द्वापरान्ते श्रियःपतिः ।
किञ्च धर्मस्य तपसा तोषितो वसुधापते ॥

दाक्षायण्यां समुत्पन्नो नाम्ना नारायणोऽस्म्यहम् ।
प्राजापत्यर्क्षसहिते भृगुवासर संयुते ॥ −३५

प्राजापत्यर्क्षगे जीवे मेषराशिस्थिते रवौ ।
वैशाखे शुक्लपक्षेऽहमुत्पन्नोऽस्मिन् दिने नृप ॥

हिताय सर्वजगतां धर्मस्थापनसिद्धये ।
धर्मस्यतपसा तुष्टो दाक्षायण्यामहं नृप ॥

आविर्भूतोऽस्मि विश्वात्मा नाम्ना नारायणो मुनिः ।
अस्मिन्नेव दिने पूर्वं रोहिण्यां भृगुवासरे ॥

उपयेमे हरिः साक्षाद्भगवानिन्दिरां हरिः ।
किञ्चास्मिन्नेव दिवसे रोहिण्यां शशिशेखरः ॥

उपयेमे विधानेन देवीं हिमवतः सुताम् ।
तस्मादक्षय नाम्नीय तृतीया सर्वसिद्धिदा ॥ −४०

दिनमात्रमपिप्रोक्तमक्षयाभीष्टसिद्धिदम् ।
एतैः समन्वितो योगैरलभ्यो योग ईरितः ॥

अक्षयाख्यतृतीयेयं तिथिरुक्तामहीपते ।
रोहिणी भृगुवारेण सहितात्रभनेद्यदि ॥

श्रीगौरीयोग इत्याख्यां गतोऽसौ सर्वसिद्धिदः ।
रोहिणीसंस्थिते जीवे मेषराशिगतेरवौ ॥

लक्ष्मीनारायणो योगो भवानीशङ्करोऽपि च ।
अक्षयाख्यतृतीयेयं महत्पर्व ममेरितम् ॥

कार्तिके पौर्णमीं शुक्लामारभ्यामरनायकाः ।
ऋषयस्सिद्धसंघाश्च प्रत्यहं पूजयन्ति माम् ॥ –४५

एतद्दिवसपर्यन्तं दिनेऽस्मिन् वसुधापते ।
मत्तोऽक्षयफलंप्राप्य गच्छन्ति त्रिदिवं सुराः ॥

दिवसेऽस्मिन् हुतं जप्तं दत्तमक्षयसिद्धिदम् ।
मत्प्रसादाद्भवत्येव दिनमेतत्तथाक्षयम् ॥

बदरीवनमध्यस्थो नाम्ना नारायणोऽस्म्यहम् ।
नारायणाश्रमो नाम्ना तन्मयस्थानमुच्यते ॥

अत्राश्रमेऽस्मिन्दिवसे धर्मस्यतनयं विभुम् ।
दाक्षायणीसुतं नाम्ना ख्यातं नारायणं मुनिम् ॥

नरेण सहितं दृष्ट्वा मामेव जगतीपतिम् ।
कोटिजन्मार्जितैः पापसंघैरपि सुदारुणैः ॥ –५०

विमुक्तः सङ्कटेभ्योऽपि देहान्ते मत्स्वरूपभाक् ।
अक्षयेऽस्मिन् दिने तस्मादुक्तयोगो भवेद्यदि ॥

योगोऽयं षष्टिभिर्वर्षैरलभ्यो लभ्यते नृप ।
अलभ्ययोगे संप्राप्ते दिवसेऽक्षय संज्ञिके ॥

प्रातरुत्थाय मद्रूपं प्रणम्याचार्यमादरात् ।
नैत्यकं कर्म कृत्वाथ मदनुज्ञा पुरस्सरम् ॥

सह पञ्चदशन्यासैः श्रीमदष्टाक्षरं जपेत् ।
त्रिशताधिकसाहस्रं श्रीमन्त्रान्यतमं शतम् ॥

प्रजप्त्वा विधिवद्वह्नौ संस्कृते वैदिकेऽपि वा ।
बिल्वपत्रैर्घृताभ्यक्तैश्श्रीमदष्टार्णविद्यया ॥ —५५

त्रिशतं जुहुयात्पश्चाद्द्रव्येनाज्येन वा नृप ।
श्रीमन्त्रान्यतमेनाथ हुत्वा द्वादशधाघृतम् ॥

रश्मिमन्त्रैः सकृध्दुत्वा प्रायश्चित्ताहुतीर्हुनेत् ।
उत्पलैर्बिल्वपत्रैर्वा पद्मैर्वा करवीरकैः ॥

त्रिशतं पूजयेत् पश्चाद् ब्रह्मविद्यां समुच्चरन् ।
साङ्गावरणपूजाञ्च कृत्वादौ नियतव्रतः ॥

पूर्वोपदिष्टाप्याचार्य वदनाब्जान्महीपते ।
अध्येतव्या रश्मिमाला शिष्येण नियतात्मना ॥

भूयोऽपि सकलन्यासा अध्येतव्याः प्रयत्नतः ।
अवश्यमस्मिन् दिवसे श्रीमदष्टाक्षरी शुभा ॥ —६०

उपदिष्टाथ भूयोऽपि स्वाचार्यवदनाम्बुजात् ।
अध्येतव्या प्रयत्नेन सर्वन्यासपुरस्सरा ॥

नारायणी सहस्राणा प्राप्तव्याथ पुनर्नृप ।
तत आचार्यपादाब्जे धैर्यगाम्भीर्यसंयुतः ॥

सर्वस्वं दक्षिणां दद्यात् तदर्धं वा तदर्धकम् ।
वर्षाशनमितं द्रव्यमथवावश्यमर्पयेत् ॥

कुण्डलद्वितयंरम्यं तप्तकाञ्चननिर्मितम् ।
आचार्यकर्णयोर्देयमवश्यंरत्नसंयुतम् ॥

सालग्रामशिलामेकां दद्याद्दक्षिणयान्वितम् ।
पीताम्बरयुगं दद्यात्सूक्ष्मकार्पासकं तु वा ॥ —६५

विभवे सति भूदानं कुर्याद्गोदानमप्यथ ।
अवश्यं गुरवे देयं पानसं फलपञ्चकम् ॥

पनसत्रितयं वापि विद्यासिध्यर्थमादरात् ।
दद्यात् फलानि चान्यानि धनाढयो भूमिपोयदि ॥

मुक्तारत्नमयीं राशिं धनराशिं समर्पयेत् ।
धान्यराशिमथाश्वांश्च गजानान्दोलिकादिकम् ॥

समर्पयेद्भगवतः प्रसादार्थं महीपते ।
तत्तदक्षयमेव स्यात् यद्यदस्मिन् दिने कृतम् ॥

कुण्डलद्वितयं देयमवश्यं वसुधापते ।
अवश्यं पानसफलं पञ्चकं त्रितयन्तु वा ॥ –७८

सालग्रामशिलैकापि दातव्या दक्षिणान्विता ।
वर्षाशनमितं द्रव्यं देयमावश्यकं बुधैः ॥

अथ द्वादशनिष्कं वा षण्णिष्कं वा त्रिनिष्ककम् ।
दरिद्रो धनहीनोऽपि दक्षिणां गुरवेऽर्पयेत् ॥
वासोभिस्समलंकृत्य गन्धपुष्पाक्षतादिभिः ॥

अवश्यं गुरवे देयं दरिद्रैरपि साधकैः ।
अक्षयां सिद्धिमन्विच्छन्नक्षयाञ्छ्रियमूर्जिताम् ॥

अक्षयां पुत्रपौत्रादि समृद्धिं ज्ञानमक्षयम् ।
अक्षयायां तृतीयायामित्थं कृत्वा यतव्रतः ॥

आकल्पमक्षयासिद्धिः श्रीमदष्टार्णजापिभिः ।
दुर्लभाप्यमरादीनां लभ्यते नात्रसंशयः ॥
आचार्यालिङ्गनं प्राप्य तदाशीभिः कृतादरः ॥ –७५

आचार्यपत्नीं सम्पूज्य विशेषेणाक्षये दिने ।
भोजयेद्विप्रवर्यांश्च सुवासिन्योऽष्टभूपते ॥

आचार्यचरणांभोजनिर्णेजनजलं शुभम् ।
पीत्वा कृतार्थतां प्राप्य भुञ्जीयाद्बन्धुभिस्सह ॥

अक्षयायां तृतीयायां पुरश्चर्यामिमां शुभाम् ।
वित्तशाठ्यं परित्यज्य कृत्वोक्तविधिना शुचिः ॥

महतीयं पुरश्चर्या पूर्वमुक्ता मया तव ।
तादृशीनां शतं साग्रं कृत्वा यत्फलमश्नुते ॥
तत्फलं लभते साङ्गमवश्यं नात्र संशयः ॥

श्रिया चिद्रूपयाप्यस्मिन् योगे फल मुदीरितम् ।
सरस्वत्यै जगन्मात्रे पुरा वैकुण्ठमन्दिरे ॥ —८०

वैशाखमासेऽपि च शुक्लपक्षे
विरिञ्चिभेनाथ भृगोःसुनेन ।
युक्ते विरिञ्चिस्थितदेवसद्गुरौ
मेषस्थितेऽर्के दिवसे तृतीये ॥

गौरीरमायोगमुदाहरन्ति
लक्ष्मीशनारायणयोगमाहुः ।
उमामहेशाभिधमाहुरेके
तत्रैव गौरी च रमा च जाता ॥

दक्षप्रजानायक कन्यकायां
धर्मस्य पत्न्यामपि लोकनाथः ।
लक्ष्मीपतिः प्रादुरभूद्धरिञ्यां
नारायणो नाम नरेणयुक्तः ॥

यद्भर्तुरष्टार्णमनुप्रजापी
न्यासैस्समस्तैरपि यो दिनेऽत्र ।
हुत्वा च हव्यं विधिसंस्कृतेऽग्नौ
पूर्वोपदिष्टामपि रश्मिमालाम् ॥

आचार्यवक्त्राम्बुजतो गृहीत्वा
न्यासैस्सहाष्टार्णमनुं च पश्चात् ।
भूयो गृहीत्वा गुरुपादयुग्मे
दत्वा समस्तं च धनं मणिश्च ॥ —८५

रम्यं प्रदद्यादथ कुण्डलद्वयं
वासोयुगं ब्राह्मणभोजनं च ।
फलत्रयं पानस पञ्चकं वा
दत्वा सदाचार्यपदारविन्दे ॥

श्रियं व्रजत्यक्षय रत्नवित्त
हयाश्वधान्यौघ समृद्धियुक्ताम् ।
पुत्राभिवृद्धिं सकलांश्च भोगा-
नायुर्महद्भाग्यमथाक्षयश्च ॥

पितुश्च मातुः कुलकोटियुक्त-
ममैतदक्षय्यपदं प्रयाति ॥

सरस्वत्यै पुरा प्रोक्तमित्थं चिद्रूपया श्रिया ।
दिनमात्रेण कृत्वेत्थं महतीं सिद्धिमश्नुते ॥

किं पुनर्योगसहिते फलं वक्तुं न शक्यते ।
अनेन योगराजेन समो लभ्यो न विद्यते ॥ —९०

अक्षयां सिद्धिमन्विच्छन् न कुर्याद्दिवसं वृथा ।
पुरश्चर्यान्तरं वक्ष्ये शृणुष्वावहितो नृप ॥

यत्कृत्वा श्रीमदष्टार्णसंसिद्धिं लभते पराम् ।
भास्करग्रहणे प्राप्ते चन्द्रस्य दिवसेऽपि वा ॥

एकं कालं मिताहारस्तत्पूर्वदिनपञ्चकम् ।
ग्रहणस्पर्शसमये गत्वा सागरगां नदीम् ॥

स्नात्वा सङ्कल्प्य नामानि केशवादीन् यथोच्चरन् ।
स्नात्वाश्वमेधावभृथस्नानपुण्यसमन्वितः ॥

आचार्यचरणाम्भोजप्रक्षाळनजलं पिबेत् ।
अन्तः समस्त पापेभ्यो मुक्तः स्यात्सद्य एव हि ॥ —९५

स्पर्शकालं समारभ्य विधिवत्संस्कृतेऽनले ।
कृष्णैस्तिलैर्हुनेद्गव्यघृतयुक्तैस्ततः परम् ॥

विना भार्गववारेण तत्रापि जुहुयाद् घृतम् ।
शिष्टेऽर्धनाडिकामात्रे कृत्वा ब्रह्मार्पणाहुतिम् ॥

बहुसस्यसमाकीर्णां चतुर्वृषभसंयुताम् ।
बहुवित्तयुतां भूमिमाचार्याय समर्पयेत् ॥

दक्षिणा विहिता शास्त्रे वर्षाशनमितं धनम् ।
अथ द्वादशनिष्कं वा षण्णिष्कं वा समर्पयेत् ॥

सालग्रामशिलामेकामाचार्याय समर्पयेत् ।
दक्षिणा वसुनिष्कं वा त्रिनिष्कं वाथ दक्षिणाम् ॥ —१००

दरिद्रो मन्दभाग्यश्च भिक्षित्वेत्थं समर्पयेत् ।
ददाति यद्यद्ग्रहणे सवितुश्शशिनोऽपि च ॥

तत्तदक्षयमेवस्या दाचन्द्रार्कं न संशयः ।
ग्रहणे वसुधां दत्वा सप्तद्वीपवतीं महीम् ॥

दत्वा यत्फलमाप्नोति तत्फलं समुदीरितम् ।
सालग्रामशिलामेकां दत्वा पूर्वोक्तदक्षिणाम् ॥

ब्रह्माण्डकोटिदानस्य फलमत्यन्तमश्नुते ।
धनं धान्यं च वासांसि भूषणं कुण्डलादिकम् ॥

श्रोत्रियेभ्यो दधि मधु घृतकुम्भान् समर्प्य च ।
समस्ताभीष्टसंसिद्धिमत्यन्तं महतीं लभेत् ॥ —१०५

जाह्नवीसदृशं तोयं द्वैपायनसमाद्विजाः ।
स्वर्णदानं मेरुसमं प्राहुश्चन्द्रार्कपर्वणि ॥

अग्नेरपत्यं प्रथमं हिरण्यं
गौर्वैष्णवी सूर्यसुताश्च गावः ।
दत्तास्त्रयस्ते न भवन्ति लोके
यः काञ्चनं गां च महीं च दद्यात् ॥

आचार्यानुग्रहात् सद्यश्श्रीमदष्टाक्षरी शुभा ।
ददाति महतीं सिद्धिं दैवतैरपि दुर्लभाम् ॥

इन्दिरारमणस्तस्य भगवान् संप्रसीदति ।
किमसाध्यं भवेत्तस्य प्रसन्ने कमलाधिपे ॥

सिध्यर्थमेव मन्त्राणां नित्यं यत्नपरोभवेत् ।
अष्टाक्षरी महाविद्या सिद्धिर्यस्य यदा भवेत् ॥
तदा तस्य प्रशस्तानि कल्याणानि भवन्ति हि ॥ —११०

आयुष्यमारोग्यमचञ्चलां श्रियं
पुत्राभिवृद्धिं सुखमक्षयं च ।
विद्यास्समस्ताऽपि दिव्यभोगान्
प्राप्नोत्यथान्ते भगवत्पदं च ॥

महानुभावा मुनयः पुरातनाः
न्यासैस्सहाष्टाक्षरमन्त्रसक्ताः ।
सिद्धिं गताः ब्रह्मसरूपतां च
श्रियं परां सर्वगुणोपपन्नाम् ॥

हुत्वा रवीन्दुग्रहणे घृतेन
दत्वा सदाचार्यपदाब्जयुग्मे ।
धनं च दिव्याभरणानि धान्यं
नारायणं पश्यति चक्षुषासौ ॥

दृष्ट्वा हरिं तस्य कलान्वितोऽसौ
पुनाति वंशान् शतसंख्यशोऽपि ।
पितुश्च मातुश्च कुलान्वितोऽसौ
परं पदं याति न संशयोऽत्र ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे षड्विंशोऽध्यायः ॥

## ॥ अथ सप्तविंशोऽध्यायः ॥

**श्री भगवानुवाच –**

भूयोऽप्यष्टार्णविद्यायाः सिध्यर्थं संप्रवक्ष्यते ।
यच्छ्रुत्वापि नरो धीमान् नाज्ञानतिमिरं विशेत् ॥

वैशाखे मासि या शुक्ला तृतीयाक्षयसंज्ञिता ।
पूर्वोक्तयागसहिता सर्वसिद्धिप्रदेरिता ॥

महाबुद्धिप्रदं सद्यो विद्यानान्तरमप्यथ ।
अतिगुप्ततरं वक्ष्ये सावधानमनाः शृणु ॥

प्रातरुत्थाय सुस्नातो नत्वा स्वाचार्यमीश्वरम् ।
तदाज्ञया समाप्याथ वैदिकं कर्म नैत्यकम् ॥

अलङ्कृत्य गृहं सम्यक् सुवितानाम्रपल्लवैः ।
नदत्सु पञ्चवाद्येषु नत्वादौ गणनायकम् ॥ —५

सुवर्णैरपि रत्नौघैर्वासोभिर्भूषणैरपि ।
अलङ्कृत्य सदाचार्यं पुनर्नत्वाथ दण्डवत् ॥

आचार्यचरणद्वन्द्वे करयुग्मं समर्प्य च ।
श्रीमन्नाचार्य सर्वज्ञ यावज्जीवमहं तव ॥

प्राणैरर्थैर्धिया वाचा करोमि चरणार्चनम् ।
त्वदाज्ञोल्लङ्घनं नाहं करोमि करुणानिधे ॥

अत्र लक्ष्मीपतिः साक्षी तवैव चरणद्वयम् ।
शरणं मम सर्वज्ञ गतिर्नान्यास्ति मे सदा ॥

तवैव चरणद्वन्द्वमाश्रयेऽहं पुनः पुनः ।
पिता मातापि भगवन् त्वमेव मम दैवतम् ॥ —१०

दुस्तराद्भवदुःखौघान्मुक्तं मां कुरु सन्ततम् ।
प्रार्थयित्वेत्थमाचार्यं प्रार्थयित्वा महीपते ॥

न्यासान् पूर्वोपदिष्टांश्च समस्तानपि साधकः ।
आचार्यवदनाम्भोजाद्गृह्णीयाद्वसुधापते ॥

ततस्समस्तविद्यानां राज्ञीं सकलसिद्धिदाम् ।
उपदिष्टां च भूयोऽपि स्वाचार्यवदनाम्बुजात् ॥

श्रीमदष्टाक्षरीं विद्यां गृह्णीयाद्वसुधापते ।
इत्थं मन्त्रमयीं दीक्षां सर्वन्यासमयीमपि ॥

संप्राप्य कृतकृत्योऽहमित्यात्मानं विचिन्तयेत् ।
स्वतो ज्योतिर्मयीं विद्यां गच्छन्तीं भावयेद्गुरुः ॥ –१५

आगतां भावयेच्छिष्यो धन्योऽस्मीति पुनः पुनः ।
शरीरमर्थं प्राणांश्च स्वाचार्यचरणद्वये ॥

समर्प्य कृतकृत्योऽहं धन्योऽस्मीति विचिन्तयेत् ।
अक्षयायां तृतीयायामिदं दीक्षाद्वयं शुभम् ॥

गृहीत्वा कृतकृत्यस्स्याद्यावज्जीवं न संशयः ।
अवश्यं भगवांस्तस्य तस्मिन् मासि प्रसीदति ॥

आचार्यानुग्रहाद्दीक्षा द्वयमेतदनुत्तमम् ।
गृहीत्वाचार्यसान्निध्ये प्रतिष्ठाप्याथ पावकम् ॥

इक्षुखण्डैर्गव्यघृताभ्यक्तैरष्टार्णविद्यया ।
होमं शताधिकं कुर्यादेकसाहस्रमादरात् ॥ –२०

यद्वा शुद्धेन गव्येन सहस्रं जुहुयान्नृप ।
श्रीमन्त्रान्यतमेनापि शतमष्टोत्तरं हुनेत् ॥

होमं कुर्यात्ततस्त्रेधा रश्मिमन्त्रैरपि क्रमात् ।
जयादिभिस्ततोहुत्वा प्रायश्चित्ताहुतीर्हुनेत् ॥

उत्पलैः कमलैर्बिल्वपत्रैर्वा तुलसीदलैः ।
मल्लिकाकुसुमैर्वापि नन्द्यावर्तैरथापि वा ॥

श्री श्रीपत्यर्चयेत्पश्चाद्ब्रह्मविद्यां समुच्चरन् ।
साङ्गावरणपूजाञ्च कृत्वादौ नियतव्रतः ॥

त्रिशतं द्विशतं वापि शतमष्टोत्तरं तु वा ।
तत आचार्यपादाब्जद्वितयं प्रणिपत्य च ॥ –२५

दुकूलयुगळं वापि सूक्ष्मं कार्पासकं तु वा ।
समर्प्य पूर्वमाचार्यमलङ्कृत्य ततः परम् ॥

फलपञ्चकमादाय पानसं त्रितयं तु वा ।
मध्ये फले रन्ध्रमेकं कृत्वा राजतपात्रकम् ॥

कांस्यपात्रमथोवापि फलद्वितयनिर्मितम् ।
सर्वस्वमपि रत्नौघं धनौघं मन्दिरस्थितम् ॥

संस्थाप्य फलसान्निध्ये किञ्चित्पात्रेऽपि निक्षिपेत् ।
फलस्योपरि तत्पात्रं रन्ध्रमध्ये निधाय च ॥

लक्ष्मीनारायणप्रीत्यै भवत्पूर्णकृपाप्तये ।
त्वद्रश्मिविद्यासंसिद्ध्यै मन्त्रराजस्य सिद्धये ॥ –३०

समर्पयिष्ये वस्तूनि तर्तुकामो भवार्णवम् ।
सिद्धिर्भवतु मे स्वाभिन्नाचार्य करुणानिधे ॥

इमं मन्त्रद्वयं प्रोच्य स्वाचार्यचरणाम्बुजे ।
अर्पयेत्सकलं वस्तु धनधान्यौघसङ्कुलम् ॥

अक्षयायां तृतीयायामक्षयां सिद्धिमिच्छता ।
सर्वस्वं दक्षिणा देया तदर्धं वा तदर्धकम् ॥

वर्षाशनमितद्रव्यमथवा देयमादरात् ।
अथवा कुण्डलयुगं तप्तकाञ्चननिर्मितम् ॥

आचार्यकर्णयुगले प्रदत्वावश्यकं नृप ।
निष्कद्वादशकस्वर्णं सूक्ष्मवासो युगान्वितम् ॥ —३५

फलपञ्चकसंयुक्तं निक्षिप्तं पात्रमध्यतः ।
प्रदत्वा महतीं सिद्धिमक्षयां प्राप्नुयादसौ ॥

मन्दभाग्यो दरिद्रश्चेद्याचित्वा सकलानपि ।
षण्णिष्कमथवा दद्यात्त्रिनिष्कं वा प्रयत्नतः ॥

अक्षयायां तृतीयायामाचार्यश्रोत्रयोर्नृप ।
कुण्डलद्वितयं दत्वा महेन्द्रसदृशः श्रिया ॥

निमग्नान्नरकौघेषु पितॄनपि पितामहान् ।
मातामहांश्च शतश उद्धृत्यासौ महीपते ॥

नारायणपदं सद्यः प्रापयत्येव शाश्वतम् ।
अक्षयायां तृतीयायां वर्षाशनमितं धनम् ॥ –४०

प्रदत्वाऽचार्यपादाब्जे शतकोटिमितं धनम् ।
दत्वा यत्फलमाप्नोति तत्फलं समुदीरितम् ॥

कुण्डलाद्वितयं दत्वा निष्कद्वादशकं धनम् ।
फलपञ्चकसंयुक्तं दत्वाचार्यपदाम्बुजे ॥

शतकोटिसुवर्णानां दानस्य फलमश्नुते ।
अक्षयायां तृतीयायां हरिचन्दन मुत्तमम् ॥

चत्वारिंशत्पलंवापि दत्वा विंशत्पलं तु वा ।
कल्पद्रुमगणाकीर्णे सा वसेद्भगवत्पदे ॥

अक्षयायां तृतीयायां शाकसूपघृतादिकम् ।
अन्नं दधियुतं वापि दत्वा विप्रेभ्य आदरात् ॥ –४५

विमुक्तस्सकलापद्भ्यः श्रियमिष्टांश्च दुर्लभान् ।
प्राप्नोत्यत्र न सन्देहः सत्यं सत्यं वदाम्यहम् ॥

महती या पुरश्चर्या साङ्गापूर्वं मयेरिता ।
तादृशीनां शतं साग्रमक्षयायां कृतं भवेत् ॥

इत्थं कृते विधानेन संशयो नात्र विद्यते ।
वाजपेयशतं साग्रं संपूर्णं वरदक्षिणम् ॥

तेनेष्टं नात्र सन्देहो ज्योतिष्टोमसहस्रकम् ।
अस्मिन्राजन्मदिवसे ततुं कामो भवार्णवम् ॥

श्रीमदष्टाक्षरीसिद्धिं महतीं लभते ध्रुवम् ।
मनोरथानां सर्वेषां भवेत्सिद्धिरिहाक्षया ॥ —५०

मनोरथतृतीयेति तेन ख्याते यमादरात् ।
अन्यत्र मुनिभिर्गीतं दक्षिणामूर्तिनापि च ॥
शेषेणापि पुनर्गीतं सर्वमप्यत्रवक्ष्यते ॥

महानुभावा मुनिसिद्धसंघा
ब्रह्मर्षयश्चापि महर्षयश्च ।
वैशाखमासे दिवसेऽक्षयाख्ये
मन्त्रेण नारायणवाचकेन ॥

हुत्वा सहस्रं गुरुपादयुग्मे
समर्प्य वित्तं मणिजालमिष्टम् ।
सन्तप्तहैमं मणिबिन्दुयुक्त
माकल्प्य युग्मं गुरुकर्णयुग्मे ॥

दत्वा कृतार्थाः पितृमातृवंश-
शतैर्युता दिव्यपदं प्रयाताः ।
किंचात्र सिद्धिं च परामवाप्य
प्राप्ताः सुभोगानथ दुर्लभांश्च ॥

आचार्यपादाम्बुजयुग्मसेवारतास्तथाष्टाक्षरमन्त्रसक्ताः ।
वैशाखमासे दिवसेऽक्षयेऽस्मिन् नारायणोक्तव्रतमादरेण ॥ —५५

कृत्वा दरिद्राऽपि लोकनाथं नारायणं दैवतसार्वभौमम् ।
पश्यन्ति साक्षाद्गरुडाधिरूढं दृष्ट्वा कृतार्थाः स्युरनन्तभोगात् ॥

पितुश्चमातुर्नरकेण मग्नं कुलं समुद्धृत्य विमानरत्नम् ।
आरुह्य साक्षात्कमलाधिवासपदं प्रयान्त्येव न संशयोऽत्र ॥

जप्तं हुतं सद्गुरुपादयुग्मे दत्तं तथास्मिन् दिवसेऽक्षयं स्यात् ।
अष्टाक्षरीहोमफलं विशिष्टं समस्तपुण्येषु दिने क्षयेऽस्मिन् ॥

लक्ष्मीपतिर्दैवतसार्वभौमो नारायणस्सर्वजगन्निवासः ।
इत्थं कृतेऽष्टाक्षरहोमकर्मण्यस्य प्रसीदत्यखिलामरेशः ॥

साक्षात्प्रसन्ने जगदेकनाथे किमस्य साध्यं न भवेदभीष्टम् ।
न राजसूयो न च वाजिमेधो न गोसवो वापि दिनेऽक्षयाख्ये ॥–६०

अष्टाक्षरीहोमसमं महीप समं न गोदानसहस्रकं वा ।
अष्टाक्षरीहोमरतं दिनेऽस्मिन् वैशाखमासेऽक्षयसंज्ञितेऽथ ॥

नारायणो दैवतसार्वभौमो रुद्रोविधिर्दक्षमुखप्रजेशाः ।
शक्रादयो दिक्पतयोऽपिसिद्धाः साध्याश्च सर्वे समरुद्गणाश्च ॥

ब्रह्मर्षयः कौशिकगौतमाद्या योगान्विता दत्तकुमारमुख्याः ।
गौरीरमावाङ्मुखशक्तयश्च तुष्टाः प्रसन्नाः वरदाभवन्ति ॥

अवश्यमाचार्यकलत्रमास्मिन्नभ्यर्च्यमत्युत्तमभूषणौघैः ।
वस्त्रैस्सुपुष्पैरपिचन्दनाद्यैर्भक्ष्यैश्च भोज्यैर्विधिनान्यथापि ॥

इत्थंकृतेऽसौ भगवत्प्रसादाद्धन्यः कृतार्थो मुनिसिद्धवन्द्यः ।
प्राप्नोत्यवश्यं सकलांश्चकामान् नारायणं पश्यति चक्षुषैव ॥ —६५

इति शेषादिभिर्गीतमपि पूर्वं महीपते ।
अक्षयायां तृतीयायामित्थं सिध्यर्थमाचरेत् ॥

श्रीमदष्टाक्षरीसिद्धिरक्षयास्यान्नसंशयः ।
श्रियःपतेः प्रसादोऽपि भवत्येवाक्षयो नृप ॥

आचार्यचरणाम्भोजे दत्तमप्यक्षयं भवेत् ।
भगवत्सन्निधावन्ते भवेद्गतिरथाक्षया ॥

श्रीमदष्टार्णविद्याया विशिष्टं साधनान्तरम् ।
भूयोऽपि संप्रवक्ष्यामि समाहितमनाः शृणु ॥

मासि भाद्रपदे प्राप्ते शुक्लेह्येकादशीदिने ।
अतिगण्डेन योगेन यद्वा युक्ते सुकर्मणा ॥ —७०

वैष्णवर्क्षसमायुक्ते सोमवासरसंयुते ।
सौम्यवासरयुक्ते वा द्वादशीदिवसेऽपि वा ॥

पञ्चाननस्थितेभानौ लक्ष्मीनारायणाभिधः ।
योगराजो महानुक्तो रविपर्वशतप्रभः ॥

अक्षयायां तृतीयायां यो महान् योग ईरितः ।
लक्ष्मीनारायणो योगस्तेनैव सम उच्यते ॥

अत्र जप्तं हुतं दत्तं सर्वमक्षयसिद्धिदम् ।
वर्षैर्द्वादशभिर्भूमौ लभ्यतेऽयं महीपते ॥

लक्ष्मीनारायणः साक्षाद्भक्तानां सर्वसिद्धिदः ।
जपहोमादिकर्तॄणां ददात्यक्षयमीप्सितन् ॥ –७५

अश्वमेधसहस्रं वा राजसूयशतं तु वा ।
महादानसहस्रं वा वाजपेयायुतं तु वा ॥

लक्ष्मीनारायणे योगे नाम्नि दानेन तत्समम् ।
अलभ्यो नाम योगोऽयं सर्वयोगोत्तमोत्तमः ॥

अलभ्ययोगे संप्राप्ते लक्ष्मीनारायणाभिधे ।
स्नात्वा नद्यां विधानेन देवानृषिपितॄनपि ॥

तर्पयित्वा मनोरम्यं यागमन्दिरमाविशेत् ।
आचार्यचरणाम्भोजयुग्मं नत्वा ततःपरम् ॥

सम्पूज्य देवं विघ्नेशं कृत्वा पुण्यहवाचनम् ।
त्रिशताधिकसाहस्रं समस्तन्याससंयुताम् ॥ –८०

श्रीमदष्टाक्षरीं जप्त्वा द्वादशार्णं श्रियस्ततः ।
साम्राज्यलक्ष्मीविद्यां वा षडर्णमथवा श्रियः ॥

अष्टाक्षरं वा प्रजपेच्छतत्रयमथादरात् ।
यथारुचि जपेद्विद्यां कोमलैस्तुलसीदलैः ॥

केतकीसहितैर्बिल्बपत्रैर्वाथ समर्चयेत् ।
लक्ष्मीनारायणौ पश्चात् त्रिशतं ब्रह्मविद्यया ॥

साङ्गावरणपूजां च कृत्वादौ नियतव्रतः ।
विधिवत्संस्कृते वह्नौ तिलैर्गव्यघृतप्लुतैः ॥

त्रिशतं जुहुयादग्नौ श्रीमदष्टार्णविद्यया ।
अष्टोत्तरशतं हुत्वा श्रीमन्त्रेणाज्यमादरात् ॥ –८५

त्रेधा भगवतो रश्मिमन्त्रैराज्यमथोहुनेत् ।
प्रायश्चित्ताहुतीर्हुत्वा ब्रह्मार्पणमथाहुतिम् ॥

सन्तप्तहेमरचितं पद्मरागविनिर्मितम् ।
आचार्यकर्णयोर्दत्वा कुण्डलद्वयमादरात् ॥

अलंकृत्य तथाचार्यं मुद्रिकाद्यैश्चभूषणैः ।
सूक्ष्मं वासोयुगं दत्वा सालग्रामशिलां शुभाम् ॥

वर्षाशनमितद्रव्यदक्षिणासहितामघ ।
प्रार्थयित्वापि वहुशस्तिलानपि समर्पयेत् ॥

प्रतिगृह्णाति वा मा वा तिलद्रोणचतुष्टयम् ।
तदर्धं वा तदाचार्यमन्दिरे स्थापयेद्बुधः ॥ –९०

गोदानं तिलदानं च शुभकार्येषु सन्ततम् ।
प्रतिगृह्याणुमात्रं वा पातकं न लभेत् क्वचित् ॥

तीर्थेषु शुभकार्येषु तिलराशिप्रतिग्रही ।
महापातकमाप्नोति तन्निवृत्तिरथोच्यते ॥

स्वगृहीतार्धवित्तस्य दानेन सहितांस्तिलाम् ।
श्रोत्रियाय तथान्यस्मै दत्वा मुच्येत पातकात् ॥

वर्षाशनधनाभावे निष्कद्वादशकं तु वा ।
आचार्यचरणांभोजे देयमावश्यकं धनम् ॥

एकां सवत्सां गां दद्यान्निष्कदक्षिणयान्विताम् ।
धेनुप्रतिनिधिद्रव्यं यद्वा दद्यात्सदक्षिणाम् ॥ —९५

विभवे सति भूदानं दद्याद्दानमथापरम् ।
लक्ष्मीनारायणे नाम्नि योगेऽस्मिन्सर्वसिद्धिदे ॥

यद्यत्करोति तत्सर्वमनन्तंस्यान्नसंशयः ।
ब्राह्मणान् भोजयेत्पश्चाद्भोजयेच्च सुवासिनीः ॥

आचार्यानुज्ञया पश्चात् स्वयं भुञ्जीत वाग्यतः ।
लक्ष्मीनारायणे योगे श्रीमदष्टाक्षरं मनुम् ॥

इत्थं जप्त्वा ततो हुत्वा दत्वाचाचार्यदक्षिणाम् ।
श्रीमदष्टाक्षरीसिद्धिमवश्यं महतीमपि ॥

दुर्लभां देवसंघैश्च संप्राप्यावश्यमक्षयाम् ।
प्राप्नोत्यत्र न सन्देहस्सत्यं नात्र विचारणा ॥ —१००

महतीया पुरश्चर्या साङ्गा पूर्वं मयेरिता ।
तादृग्द्वादशकं तेन कृतं स्यान्नात्र संशयः ॥

लक्ष्मीनारायणे योगे तिलैर्गव्यघृतप्लुतैः ।
एकामप्याहुतिं कृत्वा लक्षहोमफलं स्मृतम् ॥

लक्ष्मीनारायणे योगे सालग्रामशिलां शुभाम् ।
एकां सदक्षिणां दत्वा कोटिब्रह्माण्डदानतः ॥

फलमाप्नोति भूपाल विद्यते नात्र संशयः ।
लक्ष्मीनारायणे योगे निष्कं वा काञ्चनं शुभम् ॥

दत्वा मेरुसमस्वर्णदानस्य फलमश्नुते ।
आचार्यकर्णयुगले कुण्डलद्वयदानतः ॥ —१०५

दिव्यालंकारकोटीनां दानस्यफलमश्नुते ।
लक्ष्मीनारायणे योगे सहस्रजपमात्रतः ॥

श्रीमदष्टाक्षरीं विद्यां जप्त्वा लक्षसहस्रकम् ।
यत्फलं समवाप्नोति तदेव फलमीरितम् ॥

लक्ष्मीनारायणे योगे पुरश्चरणमादरात् ।
कृत्वेत्थं नात्र सन्देहो भगवन्तं प्रपश्यति ॥

अथवा गरुडारूढं ब्रह्मरुद्रादिवन्दितम् ।
स्वप्ने पश्यत्यसौ सर्वकामदं भक्तवत्सलम् ॥

तदारभ्येन्दिरावासे कृत्वा पूर्णशरीरवान् ।
विमुक्तः पापराशिभ्यः कल्याणानि दिने दिने ॥ –११०

अचलां श्रियमासाद्य धनधान्यादि संकुलाम् ।
वंशाभिवृद्धिमतुलां पुत्रपौत्रादिसंकुलाम् ॥

सम्प्राप्य सकलान् भोगान् दिव्यानपि च मानुषान् ।
दिव्यं विमानमारुह्य कुलविंशति संयुतः ॥

अक्षयं परमं याति शाश्वतं भगवत्पदम् ।
श्रीमदष्टार्णविद्यायाः सिद्ध्यर्थं साधनं परम् ॥
एकेन दिवसेनोक्तं पुनरन्यत्प्रवक्ष्यते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सप्तविंशोऽध्यायः ॥

## ॥ अथाष्टाविंशोऽध्यायः ॥

श्री भगवानुवाच –

सद्यस्सिद्धिपदं श्रीमदष्टार्णस्य महामनोः ।
भूयोऽपि संप्रवक्ष्यामि शृणुष्व वसुधापते ॥

ग्रहणं सवितुश्चेन्दोर्महत्पर्व समीरितम् ।
तत्रोक्ता श्रीमदष्टार्णपुरश्चर्या मया तव ॥

विशेषमपि वक्ष्यामि ग्रहणे शशिसूर्ययोः ।
श्रावणे मासि पौर्णम्यां चन्द्रस्य ग्रहणं यदि ॥

सोमवासरसंयुक्तं वैष्णवर्क्षं समन्वितम् ।
वसुनक्षत्रयुक्तं वा योगोऽलभ्यो महानयम् ॥

चन्द्रचूडामणिर्नाम्ना दैवतैरपि दुर्लभः ।
सर्वासामपि विद्यानामवश्यं सिद्धिरुत्तमा ॥

जायते जपहोमाद्यै रक्षयाभीष्टसिद्धिदा ।
श्रीमदष्टार्णविद्यायास्सिद्धिर्वक्तुं न शक्यते ॥

एककालं मिताहारस्तत्पूर्वदिवसत्रयम् ।
प्रातस्तस्मिन् दिने स्नात्वा स्वाचार्यचरणद्वयम् ॥

प्रणम्य श्रीमदष्टार्णां समस्तन्याससंयुताम् ।
त्रिशताधिकसाहस्रं प्रजपेन्नियतव्रतः ॥

श्रीमन्त्रान्यतमं जप्त्वा शतत्रितयमादरात् ।
पञ्चधा भगवद्रश्मिविद्यासूक्तं ततो जपेत् ॥

ग्रहणे स्पर्शसमये स्नात्वा नद्यां ततःपरम् ।
केशवादीनि नामानि मौनेन मनसोच्चरन् ॥

चतुर्विंशतिधा स्नात्वा विमुक्तः सर्वपातकैः ।
वाससी परिधायाथ त्रिराचम्य यतव्रतः ॥

आचार्यचरणाम्भोजप्रक्षालितजलं शुभम् ।
पीत्वा विमुक्तः पापौघैर्बहिरन्तःस्थितैरपि ॥

प्राणानायम्य संकल्प्य विधिवत्संस्कृतेऽनले ।
हुनेद्गव्याज्यसंमिश्रैस्तिलैः कृष्णैस्ततःपरम् ॥

शताधिकसहस्रं वा श्रीमदष्टार्णविद्यया ।
हुनेत्पञ्चशतं वापि चतुःशतमथापि वा ॥

श्रीमन्त्रान्यतमेनाथ हुनेद्गव्यं घृतं शतम् ।
एकधा वा द्विधा त्रेधा रश्मिमन्त्रैर्हुनेत्ततः ॥

प्रायश्चित्ताहुतीर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
प्रदक्षिणं नमस्कृत्य जातवेदसमादरात् ॥

आचार्यचरणाम्भोजयुगलं प्रणिपत्य च ।
सर्वस्वमर्पयेद्धीमान् यद्वा वर्षाशनं धनम् ॥

कुण्डलद्वितयं दत्वा निष्कद्वादशकं तु वा ।
षण्णिष्कं वा त्रिनिष्कं वा तन्न्यूनं न समर्पयेत् ॥

वित्तशाठ्यसमायुक्तो न विद्यासिद्धिमश्नुते ।
सालग्रामशिलामेकामवश्यं गुरवेऽर्पयेत् ॥

पुराणं धर्मशास्त्रं वा पुस्तकं च समर्पयेत् ।
विभवे सति भूदानं गोद्वयं च समर्पयेत् ॥

अन्यान्यपि च दानानि दद्यादाचार्यपादयोः ।
श्रीमदष्टाक्षरी विद्या सिद्धिं सुमहतीमपि ॥

प्राप्नोत्यत्र न सन्देहस्सद्य एव महीयते ।
चन्द्रचूडामणिर्योगस्त्रिंशद्वत्सरतो भवेत् ॥

चन्द्रचूडामणौ योगे कृत्वैकां च तिलाहुतिम् ।
कोटिशस्तिलहोमस्य फलमाप्नोत्यनुत्तमम् ॥

चन्द्रचूडामणौ योगे दानमाचार्यपादयोः ।
तुलापुरुषकोटीनामवश्यं लभते फलम् ॥

इत्थं कृत्वा पुरश्चर्यां चन्द्रचूडामणौ नृप ।
श्रीमदष्टाक्षरीविद्या पुरश्चर्याशतात्फलम् ॥ —२५

अवश्यं प्राप्नुयात्सद्यः पश्यत्यपि रमापतिम् ।
तस्मिन्नेव दिने स्वप्ने यद्वा साक्षाच्छ्रियःपतिम् ॥

विनता तनयारूढं ब्रह्मरुद्रादिवन्दितम् ।
दृष्ट्वा समस्तभाग्यानामाश्रयोऽसौ भवेद्ध्रुवम् ॥

भगवत्कलया युक्तः श्रियमष्टगुणान्विताम् ।
चिरायुष्यमथारोग्यं वाचां सिद्धिं च दुर्लभाम् ॥

वंशाभिवृद्धिमतुलामाचन्द्रार्कं महीपते ।
संप्राप्य सकलान् भोगान् दिव्यानपि च मानुषान् ॥

पितुर्मातुश्च वंशानां सहस्रेण समन्वितः ।
विमानवरमारूढो लभते भगवत्पदम् ॥ —३०

आश्वयुग्मासि संप्राप्ते प्रतिपद्दिनमादितः ।
नवरात्रमिति प्रोक्तं नवम्यन्तं महीपते ॥

तत्रैकैकं च दिवसं रविपर्वसमप्रभम् ।
दिवसे दिवसे जप्तं हुतं दत्तं च भूपते ॥

अनन्तफलदं प्रोक्तमक्षयब्रह्मसौख्यदम् ।
या महानवमी प्रोक्ता नवरात्रे तथाश्विने ॥

चन्द्रार्कपर्वसाहस्रसन्निभा सा समीरिता ।
सकृज्जपं हुतमपि तत्रानन्तफलप्रदम् ॥

भृगुवासरसंयुक्ता वैश्वदैवत्यसंयुता ।
परेद्युर्वैष्णवं तारं यदि सा नवमीरिता ॥ —३५

साम्राज्यलक्ष्मीयोगोऽयं दुर्लभोऽयं महीतले ।
वर्षमध्यास्थितमिदं पर्वरत्नं महर्धितम् ॥

नवरात्रव्रतं भूप समस्तेप्सित सिद्धिदम् ।
नवरात्रे प्रतिपदि स्वाचार्याज्ञा पुरस्सरम् ॥

प्रातःस्नात्वा विशुद्धात्मा नित्यकर्म समाप्य च ।
संपूज्यादौ गणाधीशमभ्यर्च्याचार्यमादरात् ॥

अलङ्कारैश्च वासोभिर्गन्धपुष्पाक्षतैरपि ।
स्वाचार्यचरणाम्भोज सन्निधौ शंसितव्रतः ॥

प्राणानायम्य संकल्प्य समस्तन्याससंयुताम् ।
श्रीमदष्टाक्षरीं विद्यां सहस्रं च चतुःशतम् ॥ —४०

दिने दिने जपेन्मौनी श्रीमन्त्र द्वादशाक्षरम् ।
साम्राज्यलक्ष्मीमन्त्रं वा श्रीषडर्णमथापि वा ॥

अष्टाक्षरं श्रियो यद्वा जपेदर्कसहस्रकम् ।
चतुःशताधिकं यद्वा सहस्रन्त्वन्वहं जपेत् ॥

श्रीमदष्टाक्षरीं विद्यामपि भानुसहस्रकम् ।
नवरात्रव्रते यद्वा कोमलैस्तुलसीदलैः ॥

सपुष्पैर्विल्वपत्रैर्वा त्रिशतं ब्रह्मविद्यया ।
श्री श्रीपती समभ्यर्च्य साङ्गावरण पूर्वकम् ॥

अष्टोत्तरशतश्लोकमन्त्रात्मकमनुत्तमम् ।
आथर्वणमहासूक्तं लक्ष्मीहृदयनामकम् ॥ —४५

नवरात्रे जपेदेकोत्तरवृद्धिक्रमान्नृप ।
पञ्चाधिकं वा चत्वारिंशदावृत्तिं जपेत्तु वा ॥

महानवम्यां प्राप्तायामाचार्याज्ञापुरस्सरम् ।
प्राणानायम्य संकल्प्य ज्वलिते जातवेदसि ॥

अङ्गावरणमन्त्रैश्च घृतमेकैकशो हुनेत् ।
श्रीमदष्टाक्षरेणाथ सहस्रं त्रिशताधिकम् ॥

गव्याज्यं जुहुयादग्नौ पायसेन ततःपरम् ।
मधुत्रितययुक्तेन द्वादशार्णश्रिया हुनेत् ॥

अष्टाक्षरेण वा लक्ष्म्याः श्रीषडर्णेन वा हुनेत् ।
अथ साम्राज्यलक्ष्म्या वा शताधिकसहस्रकम् ॥ —५०

हुत्वा भगवतो रश्मिमन्त्रै रेकैकशो घृतम् ।
लक्ष्मीहृदयमन्त्रैश्च श्लोकरूपैरतःपरम् ॥

प्रतिश्लोकेन होतव्यं पायसं त्रिमधुप्लुतम् ।
जयादिहोमं कृत्वाऽथ प्रायश्चित्ताहुतीर्हुनेत् ॥

ब्रह्मार्पणाहुतिं कृत्वा प्रणम्याग्निमतःपरम् ।
श्री श्रीपती समभ्यर्च्य पूर्ववद्ब्रह्मविद्यया ॥

अथाचार्यपदाम्भोजद्वयं साष्टाङ्गमादरात् ।
नमस्कृत्यार्पयेद्धीमान् कुण्डलद्वितयं शुभम् ॥

भूषणैरप्यलङ्कृत्य मुद्रिकाद्यैर्मनोहरैः ।
वासोभिर्गन्धपुष्पाद्यैर्बहुसस्यौघ सङ्कुलाम् ॥ —५५

गोचर्मसम्मितां भूमिं निवर्तनमितां तु वा ।
भगवत्सन्निधौ दद्यादाचार्याय महात्मने ॥

वर्षांशनमितद्रव्यमुत्तमा दक्षिणा स्मृता ।
निष्कद्वादशकं मध्यदक्षिणाऽत्र विनिर्मिता ॥

अधमा वसुनिष्कं स्यात् षण्णिष्कमधमाधमा ।
दद्यादवश्यमाचार्यकराब्जे दक्षिणान्विताम् ॥

सालग्रामशिलां शुद्धां शुद्धचक्रसमन्विताम् ।
एकां सोपस्करां शय्यामपि दक्षिणयान्विताम् ॥

दद्यादाचार्यपादाब्जे ग्रामेकां च सदक्षिणाम् ।
चतुर्वृषभसंयुक्ता दातव्या सततं मही ॥ —६०

महीप्रतिनिधिद्रव्यमथवाचार्यपादयोः ।
पञ्चविंशतिनिष्कं वा तदर्धं वा तदर्धकम् ॥

वृषप्रतिनिधिद्रव्यं निष्कद्वयमुदाहृतम् ।
एकनिष्कसुवर्णं वा वित्तलोभं विवर्जयेत् ॥

धेनुप्रतिनिधिद्रव्यं निष्कमेकमुदाहृतम् ।
निष्कार्धमथवादेयं धेनुमूल्यं महीपते ॥

सालग्रामशिलादानमुक्तं चानुक्तमेव वा ।
श्रीमदष्टार्णसिद्ध्यर्थं कार्यमावश्यकं बुधैः ॥

महानवम्यां प्राप्तायां श्रीमदष्टार्णविद्यया ।
हुत्वैकामाहुतिमपि कोटिहोमफलं लभेत् ॥ —६५

वहुसस्यसमायुक्तमहीं गोचर्मसम्मिताम् ।
महानवम्यां दत्वाऽसौ सप्तद्वीपप्रदानतः ॥

यत्फलं समवाप्नोति तत्कोटिगुणमश्नुते ।
महानवम्यां प्राप्तायां कुण्डलद्वितयं शुभम् ॥

दिव्यालङ्कारकोटीनां दत्वा तत्फलमश्नुते ।
किञ्चास्य पितरो मग्ना नरकौघेषु कोटिशः ॥

व्रजन्ति वैष्णवं धाम दिव्याभरणभूषिताः ।
महानवम्यां भगवत्सालग्रामशिलां शुभाम् ॥

दत्वा दक्षिणया युक्तां ब्रह्माण्डार्बुददानतः ।
फलमासाद्य शुद्धात्मा भगवन्तं प्रपश्यति ॥ —७०

महानवम्यां प्राप्तायां दत्वा वृपचतुष्टयम् ।
तन्मूल्य स्वर्णमथवा लक्षगोदानजं फलम् ॥

संप्राप्य पितृवंशानां सहस्रेण समन्वितः ।
प्राप्नोति भगवद्धाम शाश्वतं दिव्यमक्षयम् ॥

कुर्वीत तस्मिन्दिवसे धनाढ्यो भूमिपोऽथवा ।
तुलापुरुषमुख्यानि दानानि वसुधापते ॥

इत्थं साङ्गव्रतं कृत्वा तन्महानवमीदिने ।
श्रीमदष्टाक्षरी विद्या पुरश्चर्या सहस्रजम् ॥

अवश्यं फलमासाद्य भगवत्कलत्रान्वितः ।
प्राप्नोति महतीं लक्ष्मीं धनरत्नौघसङ्कुलाम् ॥ –७५

आयुरारोग्यसहितां गजाश्वरथसङ्कुलाम् ।
विद्यासिद्धिं च महतीं निग्रहानुग्रहक्षमाम् ॥

पुत्रपौत्रवतीमृद्धिं भोगानपि सुदुर्लभान् ।
अवाप्यैतच्छरीरान्ते प्राप्नोति हरिसन्निधिम् ॥

नवरात्रव्रतसमं व्रतमन्यन्न विद्यते ।
श्रीमदष्टाक्षरीसिद्धिर्यादृशी नवरात्रके ॥

न तादृशी महासिद्धिर्व्रतेष्वन्येषु भूपते ।
नवरात्रव्रते यावत्प्रसादः स्याच्छ्रियःपतेः ॥

व्रतेष्वन्येषु भगवत्प्रसादस्तादृशो न हि ।
नवरात्रव्रतं साङ्गं कृत्वेत्थं विधिनादरात् ॥ –८०

श्रीमदष्टाक्षरी सिद्धिं देवानामपि दुर्लभाम् ।
अवाप्य ब्रह्मरुद्राद्यैः शक्राद्यैरपि पूजितः ॥

महतीं सिद्धिमासाद्य शाश्वतीमनपायिनीम् ।
प्राप्नोति भगवद्धाम कुलानां शतसंयुतः ॥

नवरात्रव्रते नित्यसर्वकल्याण सिद्धिदे ।
आचार्यतोषणात्तुष्टा ब्रह्मविष्णुमहेश्वराः ॥

प्रदद्युर्महतीं सिद्धिमपि दैवतदुर्लभाम् ।
शक्राद्या अपि दिक्पालाः कैङ्कर्यं प्राप्नुवन्ति हि ॥

कपिलाद्या महासिद्धा वरदाःस्युर्न संशयः ।
नवरात्रव्रतमिदं यावज्जीवं समाचरेत् ॥ —८५

संकटेऽपि च संप्राप्ते बहुविघ्नेषु सत्स्वपि ।
नवरात्रव्रतं कुर्याच्छ्रेयस्कामो द्विजोत्तमः ॥

व्रतभंगो भवेद्यस्य सकृदप्यवनीपते ।
अरिष्टं जायते तस्य तस्मिन् वर्षे न संशयः ॥

इच्छन्समस्तकल्याणराशिं श्रेयःपरम्पराम् ।
नवरात्रव्रतं कुर्याच्छ्रीमदष्टार्णसिद्धये ॥

सर्वासामपि विद्यानां नवरात्रव्रते शुभे ।
उदीरिता महासिद्धिर्ब्रह्मविद्भिस्समीरिता ॥

सारात्सारतमं पुण्यं गुह्याद्गुह्यतमं शुभम् ।
नवरात्रव्रतमिदं समस्ताघौघभञ्जनम् ॥ —९०

वासन्ते नवरात्रेऽपि संप्राप्ते वसुधापते ।
आचार्यानुज्ञया प्रातः स्नात्वा प्रतिपदादितः ॥

समस्तन्याससहितां श्रीमदष्टाक्षरीं शुभम् ।
संकल्प्यार्कसहस्राणि प्रजपेन्नवरात्रके ॥

श्रीमन्त्रान्यतमं पश्चाज्जपेदर्कसहस्रकम् ।
प्रजपेदष्टसाहस्रं पञ्चसाहस्रकं तु वा ॥

नक्ताश्येकान्तराशी वा हविष्याशी दिने दिने ।
श्रीरामजन्मनवमी दिवसे सर्वसिद्धिदे ॥

प्रातःस्नात्वा विशुद्धात्मा स्वाचार्यस्यैव सन्निधौ ।
विधिवत्संस्कृते वह्नाविक्षुखण्डैर्घृतप्लुतैः ॥ —९५

श्रीमदष्टार्णमन्त्रेण शताधिकसहस्रकम् ।
जुहुयाद्बिल्वपत्रैर्वा गव्याज्यत्रिमधुप्लुतैः ॥

मधुत्रितयसंमिश्रहविषा वा हुनेन्नृप ।
अथवा शुद्धगव्येन घृतेन जुहुयाच्छुचिः ॥

श्रीमन्त्रेण हुनेत्पश्चात् त्रिशतं केवलं घृतम् ।
पुरतो जुहुयान्मन्त्रैर्बृहदावरणोदितैः ॥

श्रीहोमानन्तरं रश्मिमन्त्रैस्त्रेधा हुनेद्धृतम् ।
जपादिहोमं कृत्वाथ कृत्वा ब्रह्मार्पणाहुतिम् ॥

अग्निं प्रदक्षिणीकृत्य नमस्कृत्य ततः परम् ।
आचार्यचरणाम्भोजद्वयं साष्टाङ्गमादरात् ॥ —१००

नमस्कृत्यार्पयेद्धीमान् वर्षाशनमितं धनम् ।
सालग्रामशिलां शुद्धां निक्षिप्तां कांस्यपात्रके ॥

कांस्यपात्रेऽथवाकृत्वा श्री श्रीशात्रह्मविद्यया ।
निष्कैर्द्वादशभिस्स्वर्णैर्वसुनिष्कैरथापि वा ॥

पञ्चनिष्कसुवर्णैर्वा संपूज्य श्रीजगत्पती ।
प्रीणातु भगवान् साक्षाच्छ्रीरामात्मा श्रियःपतिः ॥

कौसल्यागर्भसंभूतो व्रतेनानेन सन्ततम् ।
श्रीमदष्टाक्षरीविद्यासंसिद्धिं महतीमपि ॥

श्रीभूनीलापतिःस्वामी दत्वा तरतु मां सदा ।
इति मन्त्रद्वयेनाथ सालग्रमशिलां शुभाम् ॥ —१०५

यथोक्तदक्षिणायुक्तामाचार्याय निवेदयेत् ।
सूक्ष्मवासोयुगं दत्वा हरिचन्दनमुत्तमम् ॥

विभवेसत्यलङ्कारान् दद्यात्काञ्चननिर्मितान् ।
अथाचार्यकलत्रस्य कर्णालङ्करणादिकम् ॥

अर्पयित्वा रमाबुद्ध्या परेद्युर्ब्राह्मणा नव ।
नव भोज्यासुवासिन्यो वासोभिर्दक्षिणादिभिः ॥

सन्तोष्य बंधुभिःसार्धं भुञ्जीयादन्नमादरात् ।
वासन्ते नवरात्रेऽपि व्रतं कृत्वेत्थमादरात् ॥

श्रीमदष्टाक्षरीसिद्धिं सद्यः स लभते ध्रुवम् ।
श्रीरामजन्मदिवसे श्रीमदष्टार्णविद्यया ॥ —११०

होमं कृत्वा विधानेन कोटिहोमफलं लभेत् ।
श्रीरामजन्मदिवसे सालग्रामशिलां शुभाम् ॥

यथोक्तदक्षिणायुक्तां दत्वाचार्याय साधकः ।
ब्रह्माण्डकोटिदानस्य फलमत्यन्तमश्नुते ॥

वासन्ते नवरात्रेऽपि श्रीमदष्टाक्षरं जपन् ।
पुरश्चर्याशतफलं प्राप्नोत्यत्र न संशयः ॥

श्रीमदष्टार्णविद्याया दैवतैरपि दुर्लभाम् ।
अवश्यं महतीं सिद्धिमिहैव प्राप्य साधकः ॥

चिरायुष्यमथारोग्यं धनरत्नादिसङ्कुलाम् ।
संप्राप्य महतीं लक्ष्मीं वाक्सिद्धिं वातुलां शुभाम् ॥ –११५

पुत्रपौत्रादिकामृद्धिं दिव्यान् भोगांश्चमानुषान् ।
संप्राप्य कुलसाहस्रसहितो भगवत्पदे ॥

रमते नात्रसन्देहो दिव्यकन्या शतान्वितः ।
अथापरं प्रवक्ष्यामि विशिष्टं सर्वसिद्धिदम् ॥

श्रीमदष्टार्णविद्यायास्सिद्धिदं याममात्रतः ।
अमार्कवासरयुता सोमेन सहितापि वा ॥

भास्करग्रहणं तत्र जायते यदि भूपते ।
रविचूडामणिर्नाम्ना योगोऽयं समुदाहृतः ॥

संवत्सरैर्द्वादशभिर्लभ्यते योगराडयम् ।
अत्र जप्तं सकृद्वापि कोटिशो जप्तमेव हि ॥ –१२०

अत्रैकयापि वाहुत्याकोटिहोमसमो न हि ।
अत्रैकनिष्कस्वर्णं वा दत्वाचार्यपदाम्बुजे ॥

शतमेरुप्रदानस्य फलमाप्नोति शास्वतम् ।
रविपर्वणि संप्राप्ते तत्पूर्वदिवसत्रयम् ॥

एकवारं हविर्भुञ्जन्ननश्नन् नक्तमप्यथ ।
भास्करग्रहणे स्पर्शकाले प्राप्ते ततःपरम् ॥

केशवादिचतुर्विंशन्नामान्युच्चार्य यत्नतः ।
स्नात्वा समस्तपापौघैर्विमुक्तः सद्य एव हि ॥

गुरुपादोदकं पीत्वा त्वेधान्तः शुद्धचित्तवान् ।
आचार्यसन्निधावग्निं प्रतिष्ठाप्य विधानतः ॥ –१२५

पुरतो जुहुयान्मन्त्री बृहदावरणादितैः ।
मन्त्रैराज्येन गव्येन ततस्त्रिमधुसंप्लुतैः ॥

घृताभ्यक्तैस्तिलैर्होमं मोक्षकालान्तमादरात् ।
कृत्वा श्रीमनुनापश्चाच्छतमष्टोत्तरं हुनेत् ॥

भगवद्रश्मिविद्याभिरपि हुत्वा घृतं सकृत् ।
प्रायश्चित्ताहुतीर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥

आचार्यचरणद्वन्द्वं नत्वा साष्टाङ्गमादरात् ।
दत्वा वस्त्राणि सूक्ष्मणि स्वर्णनिष्कसहस्रकम् ॥

दद्यात् सस्यौघसहितां महीं गां च सदक्षिणाम् ।
यावच्छक्यमलङ्कारं दत्वा श्रीगुरवेऽथवा ॥ —१३०

वर्षाशनमितं द्रव्यमर्कनिष्कमथापि वा ।
पञ्चनिष्कसुवर्णं वा निष्कत्रययुतं तु वा ॥

अवश्यं गुरवे दद्याद्वित्तशाठ्यविवर्जितः ।
श्रोत्रियेभ्यः प्रदेयानि दशदानान्यतः परम् ॥

अशक्तः सद्गुरोः पादकमलद्वयमेव हि ।
अभ्यर्चयेत् त्रिनिष्कादियावच्छक्यमितैर्धनैः ॥

द्विजातिवर्याः संभोज्याः सुवासिन्योऽपि पञ्चधा ।
इत्थं कृत्वा विधानेन ग्रहणे साङ्गमादरात् ॥

महती या पुरश्चर्या मया प्रोक्ता पुरा तव ।
श्रीमदष्टार्णविद्यायास्ततोऽपि महतीं पराम् ॥ —१३५

अवश्यं सिद्धिमाप्नोति दैवतैरपि दुर्लभाम् ।
आयुरारोग्यसहितः श्रियाधनदसन्निभः ॥

वाचस्पतिसमः सर्वविद्याभिरपि सन्ततम् ।
प्राप्य वंशाभिवृद्धिञ्च कल्पान्तं वसुधापते ॥

मानुषानपि दिव्यांश्च भुक्त्वा भोगान् मनोरमान् ।
कुलसाहस्रमादाय वसेद्विष्णुपुरे सुखी ॥

रवीन्दुग्रहणे प्राप्ते नाशौचं नापि सूतकम् ।
स्पर्शमारभ्य मोक्षान्ते शुद्धा एव द्विजातयः ॥

**॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे ऽष्टाविंशोऽध्यायः ॥**

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

पुनरन्यत्प्रवक्ष्यामि श्रीमदष्टार्णसाधनम् ।
एकेन दिवसेनैव समाहितमनाः शृणु ॥

या पूर्वा अक्षयानाम्ना तृतीया समुदीरिता ।
पूर्वोक्तयोगसहिता दैवतैरपिदुर्लभा ॥

श्रीमदष्टार्णविद्यायाः सद्यःसिद्धिकरं परम् ।
भूयोऽपिसंप्रवक्ष्यामि विशेषाद्वसुधापते म ॥

अक्षयायां तृतीयायां यत्रोत्पन्नोऽस्म्यहं नृप ।
यत्राविरासीत्कमला भृगोः ख्यात्यां त्रयीमयो ॥

यत्रोत्पन्ना जगन्माता गिरिजा शङ्करप्रिया ।
यत्रोपयेमे भगवानच्युतः श्रियमीश्वरीम् ॥ –५

यत्राभूच्छङ्करस्यापि गौरीपाणिग्रहः शुभः ।
तत्राक्षयतृतीयायां श्रीमदष्टाक्षरं मनुम् ॥

समस्तन्याससहितं स्मृत्वा त्रिशतमादरात् ।
श्रीमदष्टाक्षरीसिद्धिरवश्यं भवति ध्रुवम् ॥

व्यतीपातो महायोगः सर्वयोगोत्तमः स्मृतः ।
अमावास्या पूर्णिमाच तद्द्वादशसमा स्मृता ॥

तद्द्वादशसमं पर्वरविसङ्क्रमणं विदुः ।
रविवारे सङ्क्रमणं तद्द्वादशसमं स्मृतम् ॥

तद्द्वादश समः प्रोक्तो वासरो भार्गवोस्मृतः ।
चन्द्रचूडामणिसमो योगश्चार्धोदयः स्मृतः ॥ -१०

तद्द्वादशसमोयोगो लक्ष्मीनारायणाभिधः ।
वैशाखे मासि या शुक्ला तृतीयाक्षयसंज्ञिता ॥

तत्सहस्र समाज्ञेया महासिद्धिकरी शुभा ।
अक्षयायां तृतीयायामुक्तं योगत्रयं शुभम् ॥

लभ्यते षष्टिभिर्वर्षैर्नान्यथा वसुधापते ।
अक्षयायां तृतीयायामुक्तो योगो भवेद्यदि ॥

होमादिकर्मणां सिद्धिर्महती स्यात्तदेव हि ।
विद्यानामुपदिष्टानामपि तस्मिन् दिने शुभे ॥

आचार्यवदनाम्भोजात्पुनरध्ययनं यदि ।
अवश्यं महती सिद्धिः सद्य एवाक्षया भवेत् ॥ –१५

कुब्जा मत्ताश्च वृद्धाश्च बालाः काणाश्च पङ्गवः ।
नपुंसकाश्च पुंमन्त्राः स्त्रीमन्त्रा वैरिणस्तथा ॥

अरिमित्रविवेकादिविशोधनविवर्जिताः ।
निषिद्धमासताराासु लब्धाश्च शुभसिद्धिदाः ॥

दीक्षासंस्कार रहिता जपहोमविवर्जिताः ।
पुरश्चरणहीनाश्च न्यासहीनाश्च सन्ततम् ॥

आचार्यदक्षिणाहीना आचार्यवदनाम्बुजात् ।
प्राप्ता अवश्यं भूयोऽपि सच्छिष्यैर्दिवसेऽक्षये ॥

सद्यः सिद्धाभवन्त्येव लक्ष्मीशानुग्रहप्रदाः ।
तत्र प्रातः समुत्थाय नत्वाचार्यपदाम्बुजम् ॥ –२०

ब्रह्मविद्यां प्रजप्त्वादौ त्रिशतं वा चतुश्शतम् ।
अवश्यं भगवद्रश्मिमालिकां पञ्चधा स्मरेत् ॥

स्नात्वा सहस्रं गायत्रीं जपेत् पञ्चशतं तु वा ।
त्रिशतं वा जपेच्छुद्धो नान्यथा सिद्धिभागसौ ॥

नित्यहोमं समाप्याथ गच्छेदाचार्यसन्निधिम् ।
प्रार्थयेद्बहुशः साक्षादाचार्यं भगवन्मयम् ॥

श्रीमन्नाचार्य सर्वज्ञ सद्गुरो करुणानिधे ।
भवत्पादाब्जयुग्मस्य किङ्करोऽस्मि दिने दिने ॥

कायेनमनसावाचा प्राणैरर्थैश्चपुष्कलैः ।
करोमि तव पादाब्जकैङ्कर्यं शाधिमां विभो ॥ –२५

यावज्जीवमहं स्वामिन्नाचार्यकरुणानिधे ।
अवश्यं तव पादाब्जकिंकरोऽस्मि प्रशाधिमाम् ॥

इत्याचार्यं त्रिभिश्श्लोकैः संप्रार्थ्य बहुशो नृप ।
भूयः समस्तविद्यानां ग्रहणाय समाहितः ॥

प्रार्थयेत्सकलैरर्थैः प्राणैरपि महीपते ।
आचार्योऽपि कृपासिन्धुर्वैदिकोऽवैदिकोऽपि वा ॥

श्रीमदष्टार्णया हुत्वा शतमष्टोत्तरं घृतम् ।
भगवद्रश्मिविद्याभिरेकैकामाहुतिं हुनेत् ॥

प्रदक्षिणं परीत्याग्निं नमस्कृत्य ततःपरम् ।
स्ववामभागे संस्थाप्य सच्छिष्यं करुणानिधिः ॥ –३०

स्वगुरून् मनसा नत्वा भूयोभूयो गणाधिपम् ।
दत्तात्रेयं महात्मानं कृष्णद्वैपायनं मुनिम् ॥

गायत्रीमादितः कृत्वा भगवद्रश्मिमालिकाम् ।
शिष्यस्य दक्षिणे कर्णे प्रदद्याद्वसुधापते ॥

निधाय शिष्यशिरसि दक्षिणं हस्तमादरात् ।
शिष्यस्य दक्षिणेकर्णे प्रदद्याद्रस्मिमालिकाम् ॥

तस्मै कृतार्थतां दत्वा शिष्यायाचार्य आदरात् ।
उपदिष्टांश्च भूयोऽपि न्यासानुपदिशेद्बुधः ॥

दत्वा न्यासान् समस्तांश्च न्यस्य प्रत्यङ्गमादरात् ।
राज्ञीं समस्तविद्यानां श्रीमदष्टाक्षरीं शुभाम् ॥

त्रिवारं दक्षिणेकर्णे दद्याच्छिष्यस्य सद्गुरुः ।
कृतार्थोऽस्मीतिनत्वासावन्तेवासी महामतिम् ॥

आचार्यचरणद्वन्द्वं बहुवस्तुभिरर्चयेत् ।
विद्यानां ग्रहणार्थाय सर्वसम्पत्समृद्धये ॥

द्वादशेष्वपिमासेषु वैशाखः सर्वसिद्धिदः ।
यस्मिन्मासे जलमपि दत्तं चुलुकमात्रकम् ॥

सर्वदानफलं प्राहुः किमुद्रव्यप्रदानतः ।
उपानहौ च छत्रं च मधु दध्योदनादिकम् ॥

वैशाखे संप्रदत्तानि प्रदद्युर्भाग्यमक्षयम् ।
यस्मिन् मासि पौर्णमासी विशाख्या सहिता शुभा

सर्वसिद्धिकरीसद्यो भोगस्वर्गापवर्गदा ।
योगा भवन्ति यद्यत्र मया पूर्वमुदीरिताः ॥

किञ्च शोभनयोगा वाह्यतिगण्डोऽपि वा भवेत् ।
राजराजमिमं प्राहुर्लक्ष्मीनारायणाभिधम् ॥

गौरीशङ्करयोगश्च श्री गौरीयोगमप्यथ ।
अवश्वं सर्वविद्यानामाचार्यवदनाम्बुजात् ॥

ग्रहणादेवसिद्धिः स्यात्किमुहोमादिभिर्नृप ।
इत्थं समस्तविद्यानामाचार्यवदनाम्बुजात् ॥

संप्राप्य ग्रहणं शिष्यः कृतार्थोऽस्मीतिचिन्तयेत् ।
आचार्यानुज्ञया तत्र विधिवत्संस्कृतेऽनले ॥ –४५

एकैकामाहुतिं मन्त्रैर्बृहदावरणोदितैः ।
कृत्वाथ श्रीमदष्टार्णमनुना साधकोत्तमः ॥

मधुत्रितयसंयुक्तं पायसं गोघृतप्लुतम् ।
शताधिकं हुनेच्छ्रीमदष्टार्णेन सहस्रकम् ॥

श्रीमन्त्रेण हुनेत्पश्चात् त्रिशतं घृतमादरात् ।
भगवद्रश्मिविद्याभिर्हुनेद् गव्यंघृतं त्रिधा ॥

यद्वेक्षुपर्वभिर्गव्यघृतयुक्तैरथादरात् ।
श्रीमदष्टार्णमन्त्रेण शताधिकसहस्रकम् ॥

हुत्वा गव्यघृतेनाथ त्रिशतं रमया हुनेत् ।
भगवद्रश्मिविद्याभिस्त्रिधाहुत्वाज्यमादरात् ॥ –५०

प्रायश्चित्ताहुतीः कृत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
प्रदक्षिणं नमस्कृत्य जातवेदसमादरात् ॥

त्रिशतं पूजयेत्पश्चाच्छ्री श्रीशब्रह्मविद्यया ।
मल्लिकाकुसुमैर्वापि करवीरैरथापि वा ॥

कमलैरुत्पलैर्वापि नन्द्यावर्तैस्थापि वा ।
अर्चयेद्बिल्वपत्रैर्वा तुलसीदलमिश्रितैः ॥

केतकी कुसुमाद्यैर्वा सुगंधिभिरथार्चयेत् ।
फलपञ्चकमादाय पानसं सुमनोहरम् ॥

यद्वाफलत्रयंरम्यं स्थूलं बहुफलान्वितम् ।
निक्षिप्यभूतले शुद्धे यत्किञ्चित्पात्रमध्यतः ॥ —५५

पात्रं वा राजतं कांस्यं पात्रं वा मध्यमे फले ।
निक्षिप्यभगवन्मूर्तिं सालग्रामशिलां शुभाम् ॥

संस्थाप्य मध्यमे तत्र साङ्गावरणमर्चयेत् ।
अष्टोत्तरशतं निष्कसुवर्णैर्ब्रह्मविद्यया ॥

चतुःपञ्चशतावापि पञ्चविंशतिरेव वा ।
ब्रह्मविद्यां समुच्चार्य लक्ष्मीनारायणौ यजेत् ॥

अन्नसूपाज्यसहितं शाकभक्ष्यसमन्वितम् ।
दध्योदनं ततोदद्याच्छ्री श्रीशाभ्यां महीपते ॥

उपचारैः समभ्यर्च्य ततो नीराजनादिभिः ।
आचार्यं समलङ्कृत्य वस्त्रालङ्करणादिभिः ॥ -६०

अवश्यं कुण्डलयुगं दत्वाचार्यस्य कर्णयोः ।
सूक्ष्मवासोयुगं दत्वा सालग्रामशिलां शुभाम् ॥

संपूजितद्रव्ययुतमिमं मन्त्रं समुच्चरन् ।
समाहितमना दद्याच्छ्रीमदष्टार्णसिद्धये ॥

फलं मनोरथफलं प्रददाति सदा नृणाम् ।
फलस्यास्य प्रदानेन मम सन्तु मनोरथाः ॥

सालग्रामशिलाचक्रे ब्रह्मविष्णु महेश्वराः ।
शक्राद्या अपि दिक्पाला निवसन्ति नराधिप ॥

रमासरस्वतीगौरी शचीमुख्याश्च शक्तयः ।
निवसन्ति सदा सर्व सिद्धयोऽपि जगत्त्रयम् ॥ -६५

तस्मादिमां भगवतः सालग्रामशिलां शुभाम् ।
सर्वदेवमयीं दास्ये पीतोमेऽस्तु श्रियःपतिः ॥

इत्थं फलद्रव्ययुतां सालग्रामशिलां शुभाम् ।
दद्यादाचार्य हस्ताब्जे श्री श्रीशप्रीतिकारिणीम् ॥

फलमध्यस्थिते पात्रे यद्वा भगवतः शुभाम् ।
सालग्रामशिलां शुद्धां सम्पूज्य कुसुमादिभिः ॥

दत्वा दध्योदनं तत्र फलसूपादि संयुतम् ।
तत्सन्निधावथाचार्यकर्णयोः कुण्डलद्वयम् ॥

सूक्ष्मं वासोयुगं दत्वा फलपञ्चक संयुताम् ।
सालग्रामशिलां शुद्धां पूजितां पात्रसंयुताम् ॥ —७०

दद्यादाचार्यहस्ताब्जे दक्षिणासहिता मथ ।
सर्वस्वं दक्षिणाप्रोक्ता वर्षाशनमितं तु वा ॥

वर्षाशनमितं द्रव्यं शतनिष्कमुदाहृतम् ।
तदर्धं वा तदर्धं वा तन्न्यूनं न हि भूपते ॥

अर्कनिष्कं दरिद्रश्चेत् कुण्डलद्वितयान्वितम् ।
समर्प्य श्रीमदष्टार्णसंसिद्धिं प्राप्नुयात्पराम् ॥

अथाचार्यप्रियां साक्षान्महालक्ष्मीधियार्चयेत् ।
वस्त्रैराभरणैर्दिव्यैर्भोजनाद्यैरथादरात् ॥

यथाशक्ति धनं वापि मन्दभाग्यः समर्पयेत् ।
पञ्चविंशतिसंख्याक विप्रेभ्यो दधिसंयुतम् ॥ —७५

भक्ष्यसूपघृतोपेतं दद्यादन्न मथादरात् ।
ततष्षड्रससूपाज्य भक्ष्यभोज्यैः सुवासिनीः ॥

श्रीबुद्ध्याद्द्वादशाभ्यर्च्या दक्षिणाभिश्चतोपयेत् ।
आचार्यचरणाम्भोज प्रक्षालित जलं शुभम् ॥

पीत्वा सद्यो विशुद्धात्मा तच्छेषं भोजयेद्व्रती ।
उपानहौ च छत्राणि व्यञ्जनान्यपि भूपते ॥

उक्तवद्धव्यो द्विजातिभ्यो दद्याद्दक्षिणया सह ।
आचार्यालिङ्गनं प्राप्य तदाशीर्भिः कृतादरः ॥

अक्षयां महतीं सिद्धिं प्राप्नुयाद्दुर्लभां तथा ।
कोटिसाहस्रसङ्ख्याक स्वर्णदक्षिणयान्विताम् ॥ —८०

अश्वमेधशतं कृत्वा यत्फलं पुरुषोऽश्नुते ।
इत्थमेतद्व्रतं साङ्गं कृत्वा तत्फलमश्नुते ॥

महती या पुरश्चर्या साङ्गा पूर्वं मयेरिता ।
तादृशीनां शतं साग्रं कृतं तेन न संशयः ॥

आचार्यानुग्रहात् साक्षात् स्वप्ने वापि श्रियःपतिम् ।
विनतातनयारूढं ब्रह्मरुद्रादिभिर्वृतम् ॥

सर्वसिद्धिप्रदातारं शङ्खचक्रादिचिह्नितम् ।
दृष्ट्वा तदादितो मासि मासि स्वप्ने श्रियःपतिम् ॥

मनोरथप्रदातारं पश्यत्येव महीपते ।
साक्षात्स्वप्नेऽपि वा दृष्ट्वा कमलाधिपतौ हरौ ॥ —८५

किं किं न साध्यते तेन देवैरपि दुर्लभम् ।
चिरायुष्यमथारोग्यं भाग्यं महद्वचञ्चलम् ॥

श्रीरष्टगुणसंयुक्ता धनधान्यादिसङ्कुला ।
सर्वविद्याधिपत्यञ्च जातिस्मरणमुत्तमम् ॥

त्रिकालज्ञानसम्पत्तिः सर्वज्ञत्वं मनोज्ञता ।
परकायप्रवेशादि सामर्थ्यञ्चाक्षयं नृप ॥

सिद्ध्यत्येवहि तस्याशु योगश्चाष्टाङ्ग संयुतः ।
त्रैलोक्यनायकः स्वामी भगवानिन्दिरापतिः ॥

स्वसारूप्यं ददात्यस्मै दुर्लभांश्च मनोरथान् ।
अस्मिन्नर्थे शुभं गीतं दक्षिणामूर्तिना पुरा ॥
पार्वतीनन्दिचण्डीशगणेशेभ्यो महात्मना ॥ —९०

वैशाखमासे दिवसे अक्षयाख्ये
युक्तिकर्मण ... ... ... ।
स शोभनेवा गुरुवारयुक्ते
विरिञ्चिनक्षत्रयुते तथैव ॥

वृषस्थिते दैवगुरौ तथार्के
मेषं गते मेषगते भृगौ च ।
योगं महाराजमुदाहरन्ति
लक्ष्मीपतिं योगमथाहुरन्ये ॥

उमामहेशाभिधमाहुरेके
गौरीरमायोगमुदाहरन्ति ।
अलभ्य एषो वहुवर्षलभ्यो
योगाधिराजो भुविपार्थिवेन्द्र ॥

अधीतविद्या अनधीतविद्या-
श्चावश्यमाचार्य मुखारविन्दान् ।
प्राप्ताः सदैवाक्षयसिद्धिदाःस्यु
रत्राप्यमुत्रापि सदाद्विजानाम् ॥

अनन्तशायी भगवान् मुकुन्दो
लक्ष्मीपतिर्दैवतसार्वभौमः ।
विद्यागृहीतुर्दिवसेऽक्षयेस्मिन्
होमादिकर्तुश्च वरान् ददाति ॥ –९५

वैशाखमासे दिवसेऽक्षयेऽस्मि-
न्नवश्यमाचार्यमुखारविन्दात् ।
सम्प्राप्तविद्या अपिसर्वसिद्धि
समन्वितास्स्युर्नहि संशयोऽत्र ॥

विशेषतः श्रीपतिमन्त्रराज-
मष्टाक्षरंन्यासरहस्ययुक्तम् ।
हुत्वाथ जप्त्वाथ गुरोर्मुखाब्जा-
ल्लब्ध्वापि साक्षाद्भगवन्तमेति ॥

गुरोः प्रसादेन समस्तविद्यां
लब्ध्वापि तस्मिन्दिवसेऽक्षयाख्ये ।
अवाप्यसिद्धिं महतीं पितृणां
शतान्वितो दिव्यपदं प्रयाति ॥

वैशाखमासे दिवसे तृतीये
योगत्रयं स्याद्यदि तत्रभूप ।
अवश्यमाचार्यमुखारविन्दा-
दष्टाक्षरं न्याससमेतमादौ ॥

लब्ध्वाथ हुत्वा हविषा धनेन
स्वाचार्य पादाम्बुजमर्चयित्वा ।
इहापिसिद्धिं महतीमवाप्य
सिद्ध्यष्टकञ्चायुररोगताञ्च ॥ —१००

वंशाभिवृद्धिं सकलार्थसिद्धि-
मन्तेकुलानां शतसंयुतोऽसौ ।
विमानमारुह्य रमाधिवासं
प्रयाति वैकुण्ठपदं महीश ॥

नानेन योगेन समोऽस्तियोगो
लक्ष्मीश साक्षात्कृतिसिद्धिदायी ।
अनेन लक्ष्मीश मनूत्तमेन
हुत्वासकृद्वापि जगत्पतिः स्यात् ॥

आचार्य पादाब्जयुगं प्रपन्नाः
प्राणैश्च रत्नैर्मनसापि वाचा ।
समस्तदेवैरपि पूज्यमानाः
प्रयान्तिसर्वेच्छित सिद्धिमग्र्याम् ॥

मुक्तेश्चमुक्तेश्च मनोरथाना
माचार्यशुश्रूषणमेव मूलम् ।
जानीहिमामेव गुरुं गुरूणा
माचार्यमीशं जगदेकनाथम् ॥

एतावदेवाखिल वेदशास्त्र-
सारं रहस्यं परमंपवित्रम् ।
मयापिरुद्रेण विरिञ्चिमुख्यै
र्निश्चित्यनिश्चित्य च भूय उक्तम् ॥ —१०५

नाचार्यपादाब्जयुगाद्वरिष्ठं
सम्पूज्यमस्तीह जगत्पवित्रम् ।
नानेनयोगेन समोऽस्तियोगः
सत्यं पुनः सत्यमिदं महीश ॥

सद्यो महासिद्धिकरो मनूनां
नानेन योगेन समोऽस्तिलोके ।
विशेषतोऽष्टाक्षरसिद्धिदोय
माचार्यसन्तोषणतो नृपाल ॥

वैशाखमासे दिवसेऽक्षयेऽस्मिन्
न्यासैःसहाष्टाक्षर मन्त्रजापी ।
सहस्रमेकं त्रिशतं शतं वा
सद्यो महासिद्धिमसौ प्रयाति ॥

विशेषतोऽष्टाक्षरविद्यया यो
हविर्हुनेद्गव्यघृतेनयुक्तम् ।
बैल्वैश्चपत्रैस्त्रिमधुप्लुतश्च
स्वाचार्यपादाब्जयुगेऽथभूप ॥

साकल्यवित्तान्वितपानसानि
फलानि वासोयुगळान्वितानि ।
दत्वाम्रसंभूतनवानि सद्यो
रमारमाधीशमहाप्रसादात् ॥ —११०

संप्राप्य सिद्धिं जगदेकनाथं
पश्यत्यसौ नेत्रयुगेनसाक्षात् ।
लक्ष्मीकलापूर्णशरीरधारी
कन्दर्पसाहस्रसमानतेजाः ॥

वाचस्पतिः श्रीपतिरिष्टभोगा-
नवाप्यपुत्रैःसह पौत्रसङ्घैः ।
प्रयाति लक्ष्मीपतिधाम दिव्यं
संप्राप्य दीर्घायुररोगताञ्च ॥

एतावत्सर्ववेदानां सारभूतार्थसङ्ग्रहम् ।
निर्णीतमसकृद्ब्रह्मरुद्रमुख्यैः सुरोत्तमैः ॥

महादरिद्रोऽप्यष्टार्णमन्त्रवानक्षये दिने ।
हुत्वा जप्त्वापि वा विद्यामाचार्यं वाथ तत्सुतान् ॥

गृहसंमार्जनालेपवस्त्रप्रक्षाळनादिभिः ।
संसेव्यवत्सरयुगं पादसंवाहनादिभिः ॥ —२१५

सन्तोषयेदथ स्वस्यपुत्रिकां वा समर्पयेत् ।
विद्यासिद्धिमवाप्यासौ भगवन्तंप्रपश्यति ॥

इतिस्वायं भुवेनापि मनुना पूर्वमीरितम् ।
दक्षिणामूर्तिनाप्येतद्गीतं भृत्येभ्य आदरात् ।

त्वमपि श्रद्धया भूप सर्वयोगसमन्विते ।
अक्षयेऽस्मिन् दिने भूप कुरु व्रतमनुत्तमम् ॥

अवश्यं महतीसिद्धिर्दुर्लभा दैवतैरपि ।
भविष्यति न सन्देहो मा कुरुष्वात्र संशयम् ॥

वैष्णवाः सकलामन्त्रास्सावित्राश्च मनूत्तमाः ।
गाणपत्यमहामन्त्रा रमाया मनवोऽपि च ॥ —१२०

पार्वत्याश्च महामन्त्रास्तथामाहेश्वरा अपि ।
क्षेत्रपालकमन्त्राश्च चांद्रादि मनवोऽपि च ॥

जप्ता हुता अक्षयेऽस्मिन् दिवसे सर्वसिद्धिदे ।
सद्यःसिद्धा भवन्त्येव संशयो नात्रविद्यते ॥

अक्षये दिनमात्रेऽपि कृत्वा होमजपादिकम् ।
अक्षयाभीष्टसंसिद्धिं प्राप्नोत्यत्र न संशयः ॥

इतिदाशरथीयेऽस्मिंस्तन्त्रे वेदार्थसङ्ग्रहे ।
एको न त्रिंश उक्तोऽयमध्यायोऽखिलकामधुक् ॥

**॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे एकोनत्रिंशोऽध्यायः ॥**

## ॥ अथ त्रिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

अथातः श्रीमदष्टार्णासाधनं सर्वसिद्धिदम् ।
भूयोऽपिसंप्रवक्ष्यामिसमाहितमनाःशृणु ॥

हरौस्थितेसुराचार्येसवितर्यपिसिंहगे ।
सार्धत्रिकोटितीर्थानां सान्निध्यं गौतमीतटे ॥

आदौ पुष्करयोगः स्यादन्तेऽपि द्वादशाहकम् ।
महापुष्करयोगेऽत्र देवतामुनिभिस्सह ॥

स्नातुमायान्ति गोदाया जले सिंहस्थिते गुरौ ।
समस्तदेवसान्निध्यं समस्तमुनिसन्निधिः ॥

समस्ततीर्थसान्निध्यं सिंहराशिगते गुरौ ।
आदावन्ते द्वादशाहं पुष्करेण समागमः ॥ —५

महापुष्करयोगोऽत्र गौतमीतट उत्तमे ।
एकैकं दिनमप्यत्र रविपर्वशतप्रभम् ॥

महापुष्करयोगोऽत्र महापापयुतोऽपि वा ।
स्नात्वा जपादिकं कृत्वा मुच्यते सर्वपातकैः ॥

नानेन सदृशः पुण्यकालोऽस्ति वसुधातले ।
सर्वासामपि विद्यानां मन्त्रहोमजपादिभिः ॥

एकैकस्मिन्नपि दिने महतीसिद्धिरीरिता ।
महापुष्करयोगेऽत्र स्नात्वा प्रातरनन्यधीः ॥

परिमृज्याथवा गात्रं कृतकर्मान्वहं बुधः ।
उदितेऽथ सहस्रांशौ नित्यहोमं समाप्य च ॥ —१०

आगत्य गौतमीतीरं गन्धपुष्पाक्षतादिभिः ।
अभ्यर्च्य गौतमीं देवीं सुराचार्यमपि प्रभुम् ॥

गोदावरीजले स्नात्वा विधिना साङ्गमादरात् ।
आचार्यानुज्ञया श्रीमदष्टार्णं न्याससंयुतम् ॥

त्रिशताधिकसाहस्रमेकैकस्मिन् दिने जपेत् ।
दुर्बलो रोगयुक्तस्तु नमस्कृत्यापि गौतमीम् ॥

श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ।
प्रजपेद्गौतमीतीरे स्वाचार्यानुज्ञयान्वहम् ॥

त्रिशतं प्रजपेल्लक्ष्मीमन्त्रेष्विष्टतमं मनुम् ।
त्रिशतं दुहुयादाज्यं मधुत्रितयसंयुतम् ॥ —१५

बिल्वपत्रसमायुक्तं पायसं तिलमिश्रितम् ।
श्रीमदष्टार्णमन्त्रेण श्रीमन्त्रेण शतं हुनेत् ॥

एकैकां भगवद्रश्मिमन्त्रैराज्याहुतिं ततः ।
अयोध्यापुरचक्रेऽथ लक्ष्मीनारायणाभिधौ ॥

श्रीश्रीपतीयजेत्पश्चात्साङ्गावरणपूर्वकम् ।
सालग्रामशिलाचक्रे बृहच्चक्रेऽथवायजेत् ॥

लघुचक्रेऽथवा नित्यं श्रीश्रीपत्यर्चयेत्क्रमात् ।
कुसुमैरर्चयेन्नित्यं बिल्वपत्रविमिश्रितैः ॥

तुलसीदलयुक्तैर्वा श्रीश्रीशब्रह्मविद्यया ।
अर्चयेत्त्रिशतं नित्यमुपचारान् समर्पयेत् ॥ —२०

आचार्यपादुकायुग्ममर्चयेत्तत्सन्निधौ ।
सर्वोपचारैरभ्यर्च्य शतनिष्कं दिने दिने ॥

अर्पयेत् पादुकायुग्मे निष्कद्वादशकन्तु वा ।
आचार्यपादुकायुग्मे निष्कमेकमथापि वा ॥

एकैकस्मिन् दिनेदत्वा स्वाचार्याय समर्पयेत् ।
आचार्यपादुकाभावे पादुकामन्त्रमादरात् ॥

अष्टाविंशतिधा जप्त्वा स्वाचार्यचरणाम्बुजे ।
एकैकस्मिन् दिने दद्याद्धनं लोभविवर्जितः ॥

आचार्यपुत्रा आचार्याभावेऽवश्यं समर्पयेत् ।
अवश्यं तत्कलत्राय तत्पौत्रायापि वार्पयेत् ॥ –२५

आचार्यपत्नी साचार्यसुतपत्नीमथापि वा ।
दिवसे प्रथमे मध्यदिवसेऽन्त्यदिनेपि च ॥

दत्वा वासांसि सूक्ष्माणि शुद्धैराकल्पसञ्चयैः ।
अवश्यमर्चयेद्धीमान् सर्वसम्पत्समृद्धये ॥

एकैकस्मिन् दिनेसिद्धं कृत्वान्त्यदिवसेऽपि च ।
कृत्वापूर्वोदितं होमजपादिकमनुक्रमात् ॥

अष्टाधिकशतैः श्लोकमन्त्रैःश्रीहृदयस्थितैः ।
कापिलाज्यं हुनेत्त्रेधा केवलं गव्यमेव वा ॥

प्रायश्चित्ताहुतीःकृत्वा कुर्याद्ब्रह्मार्पणाहुतिम् ।
ततः श्रीगुरुमभ्यर्च्य स्वाचार्यं हरिरूपिणम् ॥ -३०

वस्त्रैराभरणैर्हेमिमुद्रिकाकुण्डलादिभिः ।
सालग्रामशिलांशुध्दां वज्रकीटविनिर्मिताम् ॥

बहुदक्षिणयायुक्तामाचार्याय समर्पयेत् ।
अभावेबहुळद्रव्यरत्नादीनां महिपते ॥

निष्कद्वादशकं दद्यादवश्यं शुभदक्षिणाम् ।
षण्णिष्कमथवा दद्यात्त्रिनिष्कं वाथ दक्षिणाम् ॥

बहुक्षीरयुता वत्ससहिता दक्षिणान्विता ।
अचार्याय प्रदातव्यात्वेका वापि पयस्विनी ॥

एकैकस्मिन् दिनेऽप्यत्र ब्राह्मणान् भोजयेद्व्रती ।
एकां सुवासिनीं वापि श्रीबुध्द्या नित्यमर्चयेत् ॥ -३५

द्वादशापि सुवासिन्यो द्वादशब्रह्मणा अपि ।
महापुष्करयोगेऽत्र संभोज्याः पश्चिमे दिने ॥

आचार्यचरणाम्भोज प्रक्षालितजलं शुभम् ।
अन्वहं प्रपिबेद्धीमान् ब्रह्मदर्शनसिद्धये ॥

पुष्कराख्यमहायोगे कृत्वेत्थं व्रतमादरात् ।
महापातकसंघैश्च कोटिजन्मकृतैरपि ॥

विमुक्तोऽथ हरिं साक्षात्पश्यत्येव श्रियःपतिम् ।
श्रीमदष्टाक्षरीसिद्धिं दैवतैरपि दुर्लभाम् ॥

प्राप्नोत्येकदिने चापि विश्वासं कुरुभूपते ।
यत्पुरश्चरणं साङ्गं महत्प्रोक्तं मया पुरा ॥ —४०

तद्द्वादशफलं साङ्गं लभ्यते नात्र संशयः ।
श्रीमदष्टाक्षरीसिद्धिर्दैवतैरपि दुर्लभा ॥

अवश्यं लभ्यतेऽनेन व्रतकर्त्रा न संशयः ।
महापुष्करयोगेऽस्मिन् गौतमीतीरवासिभिः ॥

तर्पिता बंधुभिर्वापि निमग्ना नरकेष्वपि ।
प्रयान्तीन्द्रपुरं रम्यं यावच्चन्द्रदिवाकरम् ॥

दक्षिणाभक्ष्यभोज्याद्यैः पितरो यस्यतर्पिताः ।
महापुष्करयोगे ते सत्यलोके वसन्ति हि ॥

आचार्याय महीयेन दीयते दक्षिणान्विता ।
चतुर्वृषभसंयुक्ता वक्तुं शक्यं न तत्फलम् ॥ —४५

सालग्रामशिलादानं स्वर्णदानञ्च भूपते ।
महापुष्करयोगेऽत्र ब्रह्मतादात्म्यसिद्धिदम् ॥

दानं कुण्डलयुग्मस्य मुद्रिकादानमप्यथ ।
सूक्ष्मवस्त्रप्रदानञ्च भगवद्दृष्टिसिद्धिदम् ॥

महापापहरंसद्यो जीवन्मुक्तिफलप्रदम् ।
श्रीमदष्टार्णसंसिद्धिप्रदं सद्यो महीपते ॥

महापुष्करयोगेऽत्र श्रीमदाचार्यतोषणम् ।
यथोक्तविधिना वर्षाज्जातिस्मरणसिद्धिदम् ॥

पितॄणामपि सर्वेषां भगवत्पदसिद्धिदम् ।
भूमिपालो धनाढ्यो वा गुरौ पञ्चाननस्थिते ॥ –५०

महापुष्करयोगेऽत्र दिनद्वादशके शुभे ।
श्वेताश्वदानं कुर्वीत हस्तिदानं महत्फलम् ॥

शिबिकान्दोलिकादानं रत्नदानं च नित्यशः ।
बहुवस्त्रप्रदानञ्च धान्यदानं दिने दिने ॥

सालग्रामशिलादानमपि कुर्वीत नित्यशः ।
न धारापूर्वकं दानमाचार्येभ्यो विधीयते ॥

पूर्वोक्तमन्त्रानुच्चार्य सङ्कल्पभगवत्पुरः ।
आचार्यचरणांभोजे दद्याद्द्रव्यमतःपरम् ॥

आचार्यमन्दिरे धेनुं सवत्सां प्रेषयेन्नृप ।
पारितोषिकमेवास्मै स्वाचार्यायार्पयेद्धनम् ॥ –५५

आचार्यानुज्ञयैवान्यश्रोत्रियेभ्योऽपि भूपते ।
दातव्यं सकलं दानं नान्यथासिद्धिमश्नुते ॥

चणकान् मुद्गमाषांश्च तिलान् पापहरानपि ।
दधिक्षीरं घृतं गव्यं गुडं मधु च शर्कराम् ॥

महापुष्करयोगेऽत्र फलराशिं समर्प्य च ।
समस्तसम्पत्सांराज्य सिद्धियुक्तोऽथ मुक्तिभाक् ॥

श्रीमदष्टार्णविद्यायाः पुरश्चरणमादरात् ।
महापुष्करयोगेऽत्र कृत्वा सिद्धिं व्रजेत्पराम् ॥

अष्टाक्षरे मन्त्रराजे सम्यक् सिद्धे महीपते ।
पश्यत्येव स्वचक्षुर्भ्यां साक्षादेव श्रियःपतिम् ॥ —६८

भगवद्दर्शनेनासौ भगवत्कलयान्वितः ।
स्वच्छन्दमरणो भूत्वा निधिः सकलसम्पदाम् ॥

आधारः सर्वविद्यानां पुत्रपौत्रसुखान्वितः ।
मानुषानपि दिव्यांश्च भुक्त्वाभोगान् मनोरमान् ॥

कुलसाहस्रसहितो वैकुण्ठेवसतिध्रुवम् ।
पुष्येऽमादिवसे विष्णुनक्षत्रेऽर्कसमन्विते ॥

अर्कवासरसंयुक्ते व्यतीपातसमन्विते ।
भानूदये सविज्ञेयो योगोऽर्धोदयनामकः ॥

सहस्रार्कग्रहसमो योगोऽलभ्यो महीपते ।
सोमवासरयुक्तश्चेन्महोदय उदीरितः ॥ —६५

अवश्यं सागरेस्नानं तत्र पातकभञ्जनम् ।
भास्करोदयवेलायां तदा स्नात्वा महोदधौ ॥

आचार्यसन्निधावग्निं प्रतिष्ठाप्य समाहितः ।
लक्ष्मीपतिं समाराध्य संस्कृते जातवेदसि ॥

बृहदावरणैर्मन्त्रैः कृत्वैकैकामथाहुतिम् ।
श्रीमदष्टार्णमन्त्रेण तिलैर्गव्यघृतप्लुतैः ॥

त्रिशताधिकसाहस्रं हुत्वा पश्चान्महीपते ।
श्रीमन्त्रेणहुतेदाज्यं गव्यं त्रिशतमादरात् ॥

भगवद्रश्मिविद्याभिः कृत्वैकैकामथाहुतिम् ।
जयादिहोमं कृत्वाथ प्रायश्चित्ताहुतीस्ततः ॥ —७०

ब्रह्मार्पणाहुतिं कृत्वा नमस्कृत्याग्निमादरात् ।
श्री श्रीपत्यर्चयेत्पश्चात्त्रिशतं ब्रह्मविद्यया ॥

आचार्य चरणांभोजद्वयं साष्टाङ्गमादरात् ।
नमस्कृत्य समभ्यर्च्य वासोऽलङ्करणादिभिः ॥

बहुसस्यसमाकीर्णां चतुर्वृषसमन्विताम् ।
आचार्याय महींदद्याद्बहुदक्षिणयान्विताम् ॥

मयोक्तादक्षिणातुभ्यमुत्तमामध्यमाधमाः ।
भूदाने दक्षिणां दद्यात्तां यथावन्महीपते ॥

सालग्रामशिलांदद्यादवश्यं दक्षिणान्विताम् ।
आचार्यकर्णयोर्दद्यान्मुक्तालंकरणं शुभम् ॥ –७५

रत्नालङ्करणं वापि दद्यादाचार्यकर्णयोः ।
अवश्यं गोद्वयं दद्यात्सवत्सं दक्षिणान्तिम् ॥

महादानानि कुर्वीत विभवे सति साधकः ।
ब्राह्मणान् भोजयेत् पश्चात् भोजयेच्च सुवासिनीः ॥

समर्पयेदथाचार्यपत्न्यै वासोयुगं शुभम् ।
समर्पयेत्कांस्यपात्रं भोजनार्थं सदक्षिणम् ॥

चतुष्षष्टिपलंवापि विंशत्पलयुतं तु वा ।
इत्थमर्धोदये कृत्वा कृत्वापि च महोदये ॥

श्रीमदष्टाक्षरीसिद्धिं सद्य एव व्रजत्यसौ ।
तदारभ्य हरिं मासि स च स्वप्ने प्रपश्यति ॥ –८०

मनोरथार्थसंसिद्धिं दैवतैरपि दुर्लभाम् ।
प्राप्नोत्यवश्यं भूपाल संशयो नात्र विद्यते ॥

अर्धोदये सिंधुतीरे हेमभारसहस्रकम् ।
दत्वा यत्फलमाप्नोति तत्फलं निष्कमात्रकम् ॥

श्रीमदष्टार्णहोमान्ते समर्प्यार्धोदये नृप ।
ततोऽधिकफलं साङ्गं प्राप्नोत्यत्र न संशयः ॥

तदारभ्यमहीपाल महेन्द्राद्यमरा अपि ।
सततं वरदास्तस्य भवन्त्वत्र न संशयः ॥

वैशाखे शुक्लपक्षे या भौमवासरसंयुता ।
चतुर्दशी व्यतीपातसहिता स्वातिसंयुता ॥
लक्ष्मीनृसिंहयोगोऽयं सायङ्काले स उच्यते ॥ —८५

चतुर्विंशतिभिर्वर्षैर्योगोऽयं लभ्यते भुवि ॥

घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेत् ।
वाससी परिधायाथ पितॄन् सन्तर्प्य यत्नतः ॥

कृत्वा सायन्तनीं सन्ध्यामाचार्यं प्रणिपत्य च ।
आचार्यसन्निधौ तस्य पुत्रं पत्नीमथापि वा ॥

नमस्कृत्याथ सङ्कल्प्य प्राणानायम्य वाग्यतः ।
त्रिशताधिकसाहस्रं समस्तन्याससंयुताम् ॥

श्रीमदष्टाक्षरीं विद्यां प्रजपेन्नियतव्रतः ।
लक्ष्मीविद्यासुसर्वासु विद्यामिष्टतमां ततः ॥ —९०

प्रजप्त्वा त्रिशतं पश्चात्त्रिशतं जातवेदसम् ।
संस्कृत्यजगतां नाथं तत्राभ्यर्च्योपचारकैः ॥

श्रीमदष्टार्णमन्त्रेण हुनेत्पञ्चशतं हविः ।
मधुत्रितयसंमिश्रं गव्याज्यप्लुतमादरात् ॥

घृतेन जुहुयादग्नावष्टोत्तरशतं श्रिया ।
भगवद्रश्मिविद्याभि र्घृतमेकैकशोहुनेत् ॥

प्रायश्चित्ताहुतीः कृत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
नमस्कृत्याग्निमाचार्यपादाब्जं दण्डवन्नमेत् ॥

शर्करारससंयुक्तपात्रं पित्तळसंभवम् ।
पञ्चविंशत्पलंवापि विंशत्पलमितं तु वा ॥ –९५

परिधानोत्तरीयार्थं वासोयुग्मं समर्प्य च ।
चत्वारिंशत्पलमितं विंशत्पलमितं तु वा ॥

आचार्यपादयोर्दत्वा हरिचन्दनमुत्तमम् ।
स्थूलं सुमधुरं चूतं फलराशिं समर्प्य च ॥

आचार्यपादयोर्दद्याद्वर्षाशनमितंधनम् ।
निष्कद्वादशकंवापि निष्कषट्कमथापि वा ॥

वैशाखमासेऽप्यथ शुक्लपक्षे
चतुर्दशी मङ्गलवारयुक्ता ।
स्वातीव्यतीपातयुता यदिस्या
लक्ष्मीनृसिंहोऽयमलभ्ययोगः ॥

मन्मन्त्रमष्टाक्षरमत्रजप्त्वा
हुत्वाथसायं गुरुपादयुग्मे ।
समर्प्य मासोत्थफलानि वासो
युग्मञ्च गन्धं गुडनीरपात्रम् ॥ —१००

समर्प्यवित्तं बहुळं च पश्चात्
अष्टाक्षरीसिद्धिमुपैत्यवश्यम् ।
अहं प्रसन्नोऽथसमर्प्य सिद्धिं
ददामि लक्ष्मीमचलाञ्च विद्याम् ॥

सुपुत्रपौत्राद्यवतीं समृद्धिं
दीर्घायुरारोग्यमनन्तसौख्यम् ।
भुक्त्वा च भोगानथ दिव्यमानुषान्
प्रयाति वैकुण्ठपदं ममान्ते ॥

इत्थमष्टाक्षरीविद्या सिद्ध्यर्थं वसुधापते ।
भूत्वा यत्नपरोनित्यमार्जयेद्दक्षिणाधनम् ॥

अत्यल्पदक्षिणोयागो यजमानं विनाशयेत् ।
अग्निष्टोमादयो यागा जपहोमादयोऽपि च ॥

ब्रह्मयज्ञादयो नित्यं यागा अपि महीपते ।
सफला दक्षिणा युक्ता अफला दक्षिणां विना ॥ —१०५

द्रव्याभावे कुतोधर्मो धर्महीने कुतः सुखम् ।
तस्माद्धर्मरतो नित्यमार्जयेद्धनसंचयम् ॥

पिता माता तथाचार्यस्तत्पत्नी तत्सुता अपि ।
कृत्वाऽकार्यशतं वापि पोपणीया दिने दिने ॥

यवनानपि भिक्षित्वा शूद्रानप्यथ पञ्चमान् ।
आचार्यपत्नीपुत्राद्याः पोषणीया दिने दिने ॥

न स्त्रीणां वचनं कार्यं मन्दप्रज्ञा यतःस्त्रियः ।
आचार्यस्याज्ञया नित्यं श्रेयस्कामो वसेन्नृप ॥

वर्षे वर्षे पुरश्चर्यां कृत्वैकामपि साधकः ।
सर्वस्वं दक्षिणां दद्याद्वर्षाशनमितं तु वा ॥ —११०

श्रीमदष्टाक्षरीसिद्धिर्वर्षे वर्षे प्रजायते ।
रवीन्दुग्रहणं वर्षे वर्षेऽपि सततं भवेत् ॥

अवश्यं तत्रकर्तव्यं पुरश्चरणमादरात् ।
तत्रावश्यं पुरश्चर्यां कृत्वा सूर्यस्य पर्वणि ॥

निष्कद्वयधनंवापि दत्वा सिद्धिमवाप्नुयात् ।
उक्तेष्वलभ्य योगेषु संप्राप्तेषु महीपते ॥
तत्रावश्यं पुरश्चर्यां कृत्वा साङ्गां महीपते ॥

वित्तशाठ्यं परित्यज्य दक्षिणामधमां तु वा ।
समर्प्य श्रीमदष्टार्णमहासिद्धिं समश्नुते ॥

कृत्वावश्यं पुरश्चर्यां योगेऽलभ्ये महीपते ।
साङ्गदक्षिणयायुक्तं सद्यः सिद्धिसमन्वितः ॥
भगवत्कलयायुक्तस्सद्य एव भवत्यसौ ॥ –११५

श्रीमदष्टाक्षरीविद्या पुरश्चर्या यशस्करी ।
साङ्गदक्षिणयायुक्ता नवरात्रव्रते कृताः ॥

अश्वमेध सहस्रस्य फलदा सा न संशयः ।
सहस्रकोटिसङ्ख्याक स्वर्णदक्षिणया युतम् ॥

सहस्रं वाजिमेधानां नवरात्रव्रते शुभे ।
पुरश्चरणकृत्येन तेनेष्टं नात्र संशयः ॥

व्रतान्तरं प्रवक्ष्यामि चतुर्वर्गफलप्रदम् ।
गुप्तं समस्तवेदेषु शास्त्रेष्वपि सुगोपितम् ॥

कार्तिके मार्गशीर्षे वा माघे वा फाल्गनेऽथ वा ।
वैशाखे श्रावणे वापि प्रथमे भृगुवासरे ॥ –१२०

व्रतमारभ्य कुर्वीत वर्षं वर्षं त्रयं तु वा ।
वर्षद्वादशकं वापि प्राणान्तं वा महीपते ॥

प्रथमे भार्गवे वारे मासि मासि महीपते ।
श्रीमदष्टाक्षरीं जप्त्वा यथाशक्त्या समाहितः ॥

विधिवत्संस्कृते वह्नौ श्रीमदष्टार्णविद्यया ।
त्रिशतं जुहुयाद्गव्येनाज्येन नियतव्रतः ॥

श्रीमन्त्रेणापि जुहुयादष्टोत्तरशतं घृतम् ।
भगवद्रश्मिविद्याभिरेकैकामाहुतिं हुनेत् ॥

त्रिशतं पूजयेत्पुष्पैर्बिल्वपत्रैरथापि वा ।
जम्बूप्रवाळैरथवा श्री श्रीशब्रह्मविद्यया ॥ —१२५

अष्टोत्तरशतं वापि पूजयेत्तुलसीदलैः ।
अवश्यं भोजयेद्भक्ष्यभोज्यैराचार्यवल्लभाम् ॥

मिथुनद्वितयं भोज्यमेकं मिथुनमेव वा ।
भार्गवे वासरेऽवश्यं निष्कं निष्कार्धमेव वा ॥

समर्पयेद्‌थाचार्य पत्न्यै काञ्चनमुत्तमम् ।
सततं भार्गवेवारे दद्यादित्थं धनादिकम् ॥

प्रथमे भार्गवे वारे मासिमास्यथवार्पयेत् ।
आचार्यपत्नी संभोज्या मासि मास्यथवा दिने ॥

भार्गवे वासरे नित्यं निष्कमानसुवर्णकम् ।
निष्कार्धंवार्पयेद्धीमान् भक्ष्याद्यैरपि तोषयेत् ॥ —१३०

भोजनान्तेऽर्पयेद्धीमान् मिथुनस्यापि दक्षिणाम् ।
गुरुपत्न्या असान्निध्ये लक्ष्मी लक्ष्मीश सन्निधौ ॥

आचार्यपत्नीमुद्दिश्य सङ्कल्प्याप्यथ दक्षिणाम् ।
आदिमे भार्गवे वारे गुरुपादाम्बुजेऽर्पयेत् ॥

तत्पुत्रायाथवा दद्यात् सङ्कल्पितधनं नृप ।
प्रथमेभार्गवेवारे मासि मासीत्थमाचरेत् ॥

मिथुनद्वितयं भोज्यमितरेषु दिनेष्वपि ।
एकं वा मिथुनं दद्याद्यथाशक्त्या च दक्षिणाम् ॥

श्रीमदष्टाक्षरीविद्यासिद्धिं सुमहतीं पराम् ।
इच्छन् व्रतमिदं कुर्यादवश्यं सिद्धिमश्नुते ॥ –१३५

आशौचादियुतोवापि रोगैस्संपीडितोऽथवा ।
भार्गवेवासरे प्राप्ते प्रार्थयित्वा गुरुं विभुम् ॥

कारयेद्गुरुणावापि तत्पुत्रैरथवा व्रतम् ।
द्विगुणा दक्षिणादेया तदाचार्याय धीमता ॥

भृगुवारव्रतमिदं लक्ष्मीनारायणप्रियम् ।
कृत्वावश्यं महासिद्धिं व्रजत्यत्र न संशयः ॥

भृगुवारव्रताद्वर्षादर्वागेव महीपते ।
आचार्यानुग्रहाल्लक्ष्मीधनधान्यादिसङ्कुलाम् ॥

अचलां प्राप्य कन्दर्पसमसौभाग्यसंयुतः ।
आयुष्यं महदारोग्यं श्रियमष्टगुणामपि ॥ –१४०

लभते नात्रसन्देहः पुत्र पौत्रादिसङ्कुलाम् ।
न वियुक्तो भवेत्पत्न्या पुत्रैर्वा पशुभिर्धनैः ॥

नेष्टबन्धुवियुक्तोवा भृगुवारव्रताद्भवेत् ।
इच्छता महतीं सिद्धिं श्रेयश्चाप्यक्षयं परम् ॥

भृगुवारव्रतमिदं कर्तव्यं वसुधापते ।
एतच्छरीरपातान्ते दशपूर्वैर्दशावरैः ॥

सहितः पुष्पकं दिव्यं दिव्यकन्याशतान्वितम् ।
आरुह्य भगवद्धाम प्रयात्यत्र न संशयः ॥

श्रीमदष्टाक्षरीसिद्धिर्बहुधोक्ता मया तव ।
श्रीमदष्टार्णविद्यायाः सिद्धिर्यदि भविष्यति ॥ —१४५

प्रयान्ति भगवद्धाम तस्य वंशोद्भवा अपि ।
अनुत्तरब्रह्मतत्त्वरहस्ये श्रुतिसंग्रहे ॥
इति दाशरथीयेऽस्मिन् त्रिंशोध्याय उदीरितः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे त्रिंशोऽध्यायः ॥

---

## ॥ अथ एकत्रिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

श्रीमदष्टार्णमन्त्रेण सिद्धेनेत्यं महीपते ।
साधयेत्काम्यकर्माणि समस्तानि ततः परम् ॥

विनतातनयारूढमष्टबाहुं श्रियान्वितम् ।
दरारिचर्मासिगदापाशचापेषुधारिणम् ॥

ध्यात्वा नारायणं मन्त्री जप्त्वाष्टार्णं सहस्रकम् ।
स्थावरं जङ्गमं वापि कृत्रिमं वापि यद्विषम् ॥

तच्छरीरमनुप्राप्य सद्य एव विनश्यति ।
रवीन्दुग्रहणे प्रान्ते तद्दिने समुपोषितः ॥

स्पर्शकालं समारभ्य मोक्षकालान्तमादरात् ।
स्पृशन् वारि ब्रह्मविद्यां श्रीमदष्टाक्षरीं जपन् ॥

तत्पीत्वा मन्दबुद्धिर्वा जडो मूकोऽपिवानृप ।
पारगः सर्वविद्यानां मासाभ्यन्तरतो भवेत् ॥

समुद्रतीरे गोष्ठे वा लक्षं जप्त्वा पयोव्रतः ।
पलाशकुसुमैर्हुत्वा दशसाहस्रमादरात् ॥

मन्दबुद्धिरपि प्रज्ञासम्पन्नः कवितानिधिः ।
चतुर्णामपि वेदानां पारगो वाग्विभूतिमान् ॥

प्रवक्ताऽश्रुतशास्त्राणां श्रुतानामिव जायते ।
तुलसीवनमध्यस्थो जप्त्वा लक्षं यतव्रतः ॥

दूर्वाभिरयुतं हुत्वा सर्वरोगविवर्जितः ।
दीर्घायुष्यमवाप्नोति स्वच्छन्दमरणोभवेत् ॥

शनैश्चरदिनेऽवश्यं सम्यगालभ्यपाणिना ।
त्रिशताधिक साहस्रं समस्तन्याससंयुताम् ॥

श्रीमदष्टाक्षरीं जप्त्वा म्रियते नापमृत्युभिः ।
पञ्चविंशतिधा नित्यमभिमन्त्र्य जलं पिबेत् ॥

विमुक्तः स्यान्महापापैरपिरोगैश्च दारुणैः ।
पञ्चविंशतिधा नित्यमभिमन्त्र्यान्नमादरात् ॥

भुञ्जानो लभते जातिस्मरणं ब्रह्मदर्शनम् ।
प्रतिमासं व्यतीपाते योगे लक्ष्मीपतिप्रिये ॥

त्रिशताधिकसाहस्रं समस्तन्याससंयुताम् ।
श्रीमदष्टाक्षरीं जप्त्वा श्रीमन्त्रं त्रिशतं जपेत् ॥ –१५

तिलैर्गव्याज्यसंमिश्रैः केवलेन घृतेन वा ।
श्रीमदष्टार्णमन्त्रेण त्रिशतं जुहुयादथ ॥

अष्टोत्तरशतं पश्चाच्छ्रीमन्त्रेण घृतं हुनेत् ।
भगवद्रश्मिविद्याभिरेकैकामाहुतिं हुनेत् ॥

शतमष्टोत्तरं पुष्पैरर्चयेद्ब्रह्मविद्यया ।
निष्कं निष्कार्धमथवा स्वाचार्याय समर्पयेत् ॥

वर्षमेकं व्यतीपातव्रतमित्थं समाचरन् ।
महापापो पापौघैरपि रोगैर्विमुच्यते ॥

संप्राप्य धनधान्यादि सङ्कुलामचलांश्रियम् ।
भूम्यां समस्तविद्यानां पारगः सुन्दराकृतिः ॥ –२०

देहान्ते भगवद्धाम भजत्यत्र न संशयः ।
बिल्वमूले समासीनो मन्त्रराजं श्रियःपतेः ॥

शतसाहस्रकं जप्त्वा बिल्वपत्रैर्घृतप्लुतैः ।
हुत्वाथ दश साहस्रं राज्यलक्ष्मीमवाप्नुयात् ॥

नदीतीरेऽथ गोष्ठेवा श्रीमदष्टाक्षरीं शुभाम् ।
लक्षमेकं प्रजप्त्वाथ शतपत्रैर्घृतप्लुतैः ॥

हुत्वायुतं राजराजसदृशो भवति श्रिया ।
मार्गशीर्षे पौर्णमास्यामाचार्यानुज्ञया शुचिः ॥

प्रातःस्नात्वा विशुद्धात्मा नित्यकर्म समाप्य च ।
समस्तन्याससहितां श्रीमदष्टाक्षरीं शुभाम् ॥ —२५

त्रिशताधिकसाहस्रं प्रजप्त्वा नियतव्रतः ।
त्रिशतं प्रजपेत्पश्चादिष्टमेकं श्रियो मनुम् ॥

त्रिशतं पूजयेत्पुष्पैः श्रीश्रीशब्रह्मविद्यया ।
सालग्रामशिलाचक्रमयोध्यानगराभिधम् ॥

पतिष्ठाप्यमहच्चक्रमपि गुप्तं श्रियःपतेः ।
एकधैवोभयत्रापि लक्ष्मीनारायणौ विभू ॥

अर्चयित्वोपचारैश्च पूजयेद्ब्रह्म विद्यया ।
पूर्णं निशाकरं दृष्ट्वा सायं सन्ध्यामुपास्य च ॥

मधुत्रितयसंयुक्तं गव्यक्षीरान्नमादरात् ।
त्रिशतं जुहुयादग्नौ श्रीमदष्टार्णविद्यया ॥ —३०

श्रीमन्त्रेण घृतं पश्चादष्टोत्तरशतं हुनेत् ।
भगवद्रश्मिविद्याभिर्घृतमेकैकशो हुनेत् ॥

अर्घ्यत्रयं प्रदायाथ श्री श्रीशाभ्यामथेन्दवे ।
आचार्यचरणाम्भोजे निष्कमानसुवर्णकम् ॥

निष्कार्धं वा प्रदत्वाथ क्षीराहारो भवेद्व्रती ।
हविष्याशी फलाशीवा परेद्युर्मिथुनद्वयम् ॥

भोजयित्वा दक्षिणाञ्च ताम्बूलञ्च समर्पयेत् ।
भुञ्जीत बन्धुभिः सार्धमिष्टमन्नं ततः परम् ॥

एकसंवत्सरं वापि कृत्वेत्थं व्रतमादरात् ।
भगवन्तं श्रियासार्धं पश्यत्येव स्वचक्षुषा ॥ —३५

धनधान्यगजाश्वादि सहितां रत्नसङ्कुलाम् ।
अचलां श्रियमाप्नोति प्रसादादिन्दिरापतेः ॥

निरामयोऽपि दीर्घायुः कान्त्या कन्दर्पसन्निभः ।
महाकविर्महावाग्मी पुत्रपौत्रादि संयुतः ॥

भुक्त्वेहसकलान् भोगान् कुलविंशति संयुतः ।
प्राप्नोतिभगवद्धाम देहान्ते नात्रसंशयः ॥
पौर्णमासीव्रतमिदं वत्सर त्रयमादरात् ॥

यःकरोति विशुद्धात्मा जातिं स्मरति पौर्वकीम् ।
अणिमादिगुणैश्वर्यं खेचरत्वं मनोजवम् ॥

योगमष्टाङ्गसहितमजरामरतामपि ।
प्राप्नोत्यवश्यं भूपाल संशयो नात्रविद्यते ॥ —४०

पौर्णमासीव्रतं पुण्यं विशेषर्क्षदिनान्वितम् ।
प्रवक्ष्यामि समासेन सद्य एवेप्सितप्रदम् ॥

चित्रायुक्तेन्दु वारेण सहिता चैत्रमासि या ।
पौर्णमासी महती ज्ञेया समस्ताघौघभंजिनी ॥

आचार्यानुज्ञया तत्र स्नात्वा प्रातःसमाहितः ।
तर्पयित्वा जलैः कृष्णतिलमिश्रैः पितॄनथ ॥

आसने सम्यगासीनः समस्तन्याससंयुताम् ॥

त्रिशताधिकसाहस्रं श्रीमदष्टाक्षरीं जपेत् ।
त्रिशतं प्रजपेत्पश्चादिष्टं श्रीमनुमादरात् ॥ —४५

जपेच्छ्रीहृदयस्तोत्रं त्वेधाथर्वणमिष्टदम् ।
पूर्णं निशाकरंदृष्ट्वा ज्वलिते जातवेदसि ॥

मधुत्रितयगव्याज्यप्लुतं हविरथादरात् ।
श्रीमदष्टार्णमन्त्रेण त्रिशतं जुहुयादथ ॥

शतमष्टोत्तरंवह्नौ श्रीमन्त्रेण घृतं हुनेत् ।
अष्टोत्तरशतैः पुष्पैः श्री श्रीशद्वादशार्णया ॥

अभ्यर्च्याचार्यपादाब्जे निष्कत्रयमितंधनम् ।
द्विनिष्कमेकनिष्कं वा दक्षिणामर्पयेदथ ॥

क्षीराशी वा हविष्याशी पौर्णमासी दिने शुभे ।
मिथुनत्रितयंभोज्यं परेद्युर्द्वितयं तु वा ॥ —५०

इत्थंकृत्वा पुरश्चर्याफलं प्राप्नोति साधकः ।
इदमेवव्रतंकृत्वा रविसङ्क्रमणान्विते ॥

पुरश्चर्यात्रयफलं प्राप्नोत्यत्र न संशयः ।
एतदेव व्रतं कुर्वन्निन्दुग्रहण संयुते ॥

पुरश्चर्याद्वादशकफलं प्राप्नोति साधकः ।
एकेनदिवसेनेत्थमवश्यं सिद्धिमान् भवेत् ॥

वैशाखे पौर्णमीसौम्य वासरेणसमन्विता ।
विशाखासहितापूर्णा वैशाखी महतीस्मृता ॥

तत्राचार्यं नमस्कृत्वा प्रातःस्नात्वा यतव्रतः ।
नैत्यकं कर्म कृत्वाथ समस्तन्याससंयुताम् ॥ —५५

त्रिशताधिकसाहस्रं श्रीमदष्टाक्षरीं जपेत् ।
त्रिरात्रं प्रजपेत्पश्चादिष्टं श्रीमन्त्रमादरात् ॥

अभ्यर्च्य त्रिशतं पुष्पैः पत्रैर्वा ब्रह्मविद्यया ।
दृष्ट्वा निशाकरं पूर्णं ज्वलिते जातवेदसि ॥

श्रीमदष्टार्णमन्त्रेण त्रिमधुप्लुतपायसम् ।
श्रीमन्त्रेण हुनेद्गव्यमाज्यं त्रिशतमादरात् ॥

एकैकां भगवद्रश्मिमन्त्रैराज्याहुतिं ततः ।
चत्वारिंशत्पलं वापि विंशत्पलमितं तु वा ॥

आचार्यचरणाम्भोजे समर्प्य हरिचन्दनम् ।
शय्यां सोपस्करां दत्वा यथा शक्त्या स दक्षिणाम् ॥ –६०

फलराशिं च चूतस्य पनसस्य फलद्वयम् ।
समर्प्य दक्षिणां दद्यादेकनिष्कधनं तु वा ॥

भक्ष्यभोज्यघृतापूप युतं दध्योदनं शुभम् ।
मिथुनद्वितयं भोज्यं परेद्युर्वसुधापते ॥

भुञ्जीतबन्धुभिः सार्धं स्वयमप्यन्नमादरात् ।
श्रीमदष्टार्णविद्यायाः पुरश्चर्याद्वयं शुभम् ॥

कृतं तेन न सन्देहः सत्यं सत्यं वदाम्यहम् ।
कृतेत्थमेव सवितुः सङ्क्रमेण समन्विते ॥

पुरश्चर्याष्टकस्यासौ प्राप्नोतिफलमक्षयम् ।
यदीन्दुग्रहणं तत्र वैशाखे पौर्णमीदिने ॥ –६५

एतदेव व्रतं कृत्वा दैवतैरपि दुर्लभाम् ।
श्रीमदष्टार्णविद्याया महतीं सिद्धिमश्नुते ॥

द्विगुणा दक्षिणा देया पूर्णिमा रविसंक्रमे ।
त्रिगुणा दक्षिणा देया चन्द्रपर्वसमन्विते ॥

पौर्णमासी ज्येष्ठमासे या भृगुवासरसंयुता ।
ज्येष्ठानक्षत्रसंयुक्ता महती ज्येष्ठपौर्णमी ॥

आचार्याज्ञां समादाय प्रातः स्नात्वा विशुद्धधीः ।
आवश्यकं कर्म कृत्वा समस्तन्याससंयुताम् ॥

त्रिशताधिकसाहस्रं श्रीमदष्टाक्षरीं जपेत् ।
जप्त्वापीष्टमनुं लक्ष्म्याः साधकस्त्रिशतं ततः ॥ –७०

सायं सन्ध्यामुपास्याथ ज्वलिते जातवेदसि ।
त्रिशतं श्रीमदष्टार्णविद्यया त्रिमधुप्लुतम् ॥

पायसं जुहुयात्पश्चाच्छ्रीमन्त्रेण शतं घृतम् ।
भगवद्रश्मिविद्याभिराज्येन जुहुयात्त्रिधा ॥

त्रिशतं पूजयेत्पश्चाच्छ्रीश्रीशद्वादशार्णया ।
आचार्यचरणाम्भोजे निष्कमानधनं तु वा ॥

समर्प्य पानसद्राक्षाफलचूतफलान्वितम् ।
आचार्यपत्न्यै श्रीबुद्ध्या रत्नालङ्कारमर्पयेत् ॥

निष्कमानसुवर्णं वा निष्कार्धं वा महीपते ।
मिथुनत्रितयं भोज्यं तस्मिन्नेव दिने बुधैः ॥ —७५

स्वयमप्यवनीनाथ भुञ्जीयाद्बन्धुभिस्सह ।
पुरश्चर्यात्रयफलं व्रतेनानेन जायते ॥

यदि सङ्क्रमणं तत्र पौर्णमास्यां प्रजायते ।
विशेषहोमं कृत्वाथ श्रीमदष्टार्णविद्यया ॥

त्रिनिष्कदक्षिणां वापि दत्वाचार्यपदाम्बुजे ।
चतुर्विंशत्पुरश्चर्याफलं प्राप्नोति शाश्वतम् ॥

आषाढे पौर्णमासीया वैश्वदेवत्यसंयुता ।
भानुवासरसंयुक्ता महती समुदीरिता ॥

द्वैपायनः पुरा तस्यामभून्मत्कलयान्वितः ।
अवश्यं तत्रकर्तव्यं व्रतं सकलसिद्धिदम् ॥
पौर्णमास्यामथाषाढ्यां प्रातःस्नात्वा विशुद्धधीः ॥ —८०

प्रातः सन्ध्यामुपास्याथ नित्यहोमं समाप्य च ।
तर्पयित्वा पितॄन् पश्चात्समस्तन्याससंयुताम् ॥

त्रिशताधिकसाहस्रं श्रीमदष्टाक्षरीं जपेत् ।
त्रिशतं प्रजपेल्लक्ष्मीमन्त्रमिष्टतमं शुभम् ॥

भगवद्रश्मि सूक्तं च पञ्चधावर्तयेत्ततः ।
सायं सन्ध्यामुपास्यथ मधुत्रितयमिश्रितम् ॥

पायसं जुहुयाच्छ्रीमदष्टार्णेन शतत्रयम् ।
श्रीमन्त्रेण हुनेत्पश्चादष्टोत्तरशतं घृतम् ॥

भगवद्रश्मिविद्याभिश्चाज्यमेकैकशो हुनेत् ।
अर्चयेत्त्रिशतं ब्रह्मविद्यया कुसुमादिभिः ॥ —८५

क्षीराशी वा फलाशी वा दिने तस्मिन् व्रती भवेत् ।
गुरुपादाब्जयुग्मेऽथ दद्यान्निष्कधनं तु वा ॥

परेद्यु र्भोजयेद्भक्ष्यभोज्याद्यै र्मिथुनद्वयम् ।
इत्थं कृत्वा पुरश्चर्याफलं साङ्गमवाप्नुयात् ॥

श्रीमदष्टार्णविद्यायाः सद्यःसिद्धिः प्रजायते ।
यदिसंक्रमणं तत्र कृत्वेत्थं व्रतमादरात् ॥

अवश्यं फलमाप्नोति त्रिपुरश्चरणोद्भवम् ।
ग्रहणं यदि तत्रस्यात् सुधांशोर्वसुधापते ॥

एतदेव व्रतं कुर्वन् पुरश्चरणपञ्चकात् ।
यादृशी जायते सिद्धिस्तामेवाप्नोति शाश्वतीम् ॥ —९०

श्रावणे पौर्णमासीया वैष्णवर्क्षसमन्विता ।
इन्दुवासरसंयुक्ता महती समुदीरिता ॥

तस्यां स्नानादिकं पुण्यमक्षयानन्दसौख्यदम् ।
तत्राचार्यानुज्ञया स्नात्वा कृत्वा कर्माथनैत्यकम् ॥

आसने सम्यगासीनः समस्तन्याससंयुताम् ।
त्रिशताधिकसाहस्रं श्रीमदष्टाक्षरीं जपेत् ॥

त्रिशतं प्रजपेदिष्टं श्रियोमन्त्रमतः परम् ।
सायं सन्ध्यामुपास्याथ ज्वलिते जातवेदसि ॥

श्रीमदष्टार्णमन्त्रेण त्रिशतं त्रिमधुप्लुतम् ।
पायसं जुहुयाल्लक्ष्मीमन्त्रेणाथ घृतं शुभम् ॥ –९५

भगवद्रश्मिविद्याभिः कृत्वैकैकां घृताहुतिम् ।
अर्चयेत्त्रिशतंपुष्पैः पत्रैर्वा ब्रह्मविद्यया ॥

आचार्यपादयोर्दत्वा निष्कमात्रधनं तु वा ।
पुरश्चर्याफलंसाङ्गं सद्य एव लभेद्ध्रुवम् ॥

रविसङ्क्रमणं तत्र जायते यदि भूपते ।
पुरश्चर्यात्रयफलं प्राप्नोत्यत्र न संशयः ॥

सोमस्यग्रहणं तत्र यदिस्याद्वसुधापते ।
चन्द्रचूडामणिर्नाम्ना योगोऽलभ्य उदाहृतः ॥

तत्रावश्यं पुरश्चर्यां कृत्वा पूर्वमुदीरिताम् ।
वर्षाशनमितद्रव्यमथवा गुरवेऽर्पयेत् ॥ –१००

सालग्रामशिलां शुद्धां निष्कत्रितयदक्षिणाम् ।
अथवाचार्यहस्ताब्जे दत्वा सुमहतीं पराम् ॥

सिद्धिमाप्नोति शुद्धात्मा पुरश्चर्याशतोद्भवाम् ।
अजनक्षत्रसहिता पूर्णा भाद्रपदेऽपि वा ॥

सौम्यवासरसंयुक्ता महती समुदीरिता ।
तत्राचार्याज्ञया प्रातर्नित्यकर्म समाप्य च ॥

त्रिशताधिकसाहस्रं समस्तन्याससंयुताम् ।
श्रीमदष्टाक्षरीं जप्त्वा श्रीमन्त्रं त्रिशतं जपेत् ॥

सायं सन्ध्यामुपास्याथ संस्कृते जातवेदसि ।
मधुत्रितयगव्याज्यप्लुतं पायसमादरात् ॥ —१०५

त्रिशतं जुहुयाच्छ्रीमदष्टाक्षर्या ततःपरम् ।
श्रीमन्त्रेण हुनेदाज्यमष्टोत्तरशतं नृप ॥

आज्येनाहुतिमेकैकां कुर्याद्रश्मिभिरादरात् ।
त्रिशतं तुलसीपत्रैरर्चयेद्ब्रह्मविद्यया ॥

निष्कमात्रसुवर्णं हि प्रदत्वाचार्यपादयोः ।
क्षीराशीवा फलाशी वा दिवसेऽत्र ततःपरम् ॥

मिथुनद्वितयं पश्चात्परेद्युर्भोजयेद्व्रती ।
पुरश्चर्याफलं प्राप्य सिद्धिं प्राप्नोति शाश्वतीम् ॥

यदि सङ्क्रमणं तत्र पुरश्चर्यात्रयोद्भवम् ।
फलं प्राप्नोति सोमस्य ग्रहणं जायते यदि ॥ —११०

निष्कत्रयं द्विनिष्कं वा प्रदत्वाचार्यपादयोः ।
एकविंशत्पुरश्चर्याफलं प्राप्नोत्यथाक्षयम् ॥

अश्विनक्षत्रसहिता पौर्णमास्याश्विने यदि ।
गुरुवासरसंयुक्ता महती सा समीरिता ॥

श्रीमदष्टार्णविद्याया जपहोमादिकं शुभम् ।
कृत्वा पूर्ववदारभ्य दत्वाचार्यस्य दक्षिणाम् ॥

परेद्यु र्भोजयेद्युग्मत्रितयं दक्षिणान्वितम् ।
पुरश्चर्यात्रयफलं साङ्गमत्रव्रजत्यसौ ॥

रविसंक्रान्तिसहिते कृत्वेदं व्रतमादरात् ।
पञ्चवारपुरश्चर्या फलं साङ्गमवाप्नुयात् ॥ —११५

ग्रहणं यदितत्रस्याज्जपहोमादिकं शुभम् ।
दत्वाचार्यपादाम्भोजे समर्प्याथ त्रिनिष्ककम् ॥

एकादशपुरश्चर्याफलं प्राप्नोत्यथाक्षयम् ।
कार्तिके पौर्णमासीया वह्निदैवत्यसंयुता ॥

इन्दुवासरसंयुक्ता कार्तिकी महतीस्मृता ।
आचार्यानुज्ञया तत्र नित्यकर्म समाप्य च ॥

त्रिशताधिकसाहस्रं समस्तन्यास संयुताम् ।
श्रीमदष्टाक्षरीं जप्त्वा श्रीमन्त्रं त्रिशतं जपेत् ॥

दिवैव जुहुयादग्नौ पायसं त्रिमधुप्लुतम् ।
श्रीमदष्टार्णमन्त्रेण त्रिशतं साधकोत्तमः ॥ −१२०

श्रीमन्त्रेणाथ जुहुयाच्छतमष्टोत्तरं घृतम् ।
एकैकां भगवद्रश्मिमन्त्रैराज्याहुतिं हुनेत् ॥

धात्रीमूलेऽर्चयेत्पश्चाद्धात्रीभिर्ब्रह्म विद्यया ।
राशिं धात्रीफलानाञ्च संस्थाप्याचार्यसन्निधौ ॥

निष्कषट्कमितंवापि निष्कद्वयमितन्तु वा ।
दक्षिणां गुरुपादाब्जे दत्वा धात्रीफलान्विताम् ॥

तत्रैव भोजयेद्युग्मपञ्चकं भगवद्धिया ।
पूर्णं निशाकरं दृष्ट्वा प्रदत्वार्घ्यं त्रिधेन्दवे ॥

आचार्यं पत्नीमभ्यर्च्य श्रीबुद्ध्या वस्त्रभूषणैः ।
श्रीमदष्टाक्षरीविद्यासिद्धिं सुमहतीमपि ॥ −१२५

प्राप्नोत्यवश्यं देवानां दुर्लभामपि भूपते ।
रविसङ्क्रमणं तत्र यदिस्याद्वसुधापते ॥

जपहोमादिकं कृत्वा श्रीमदष्टार्णविद्यया ।
द्विगुणां दक्षिणां दद्यादाचार्यस्य पदाम्बुजे ॥

पुरश्चर्याद्वादशकफलं साङ्गमवाप्नुयात् ।
सुधांशुग्रहणे तत्र व्रतमेवेदमादरात् ॥

भक्त्याथ पञ्चनिष्काणि प्रदत्वाचार्यपादयोः ।
चतुष्षष्टिपुरश्चर्याफलं साङ्गमवाप्नुयात् ॥

मार्गशीर्षपौर्णमासी सोमदैवत्य संयुता ।
भृगुवासरसंयुक्ता महती सम्प्रकीर्तिता ॥ –१३०

तत्राचार्याज्ञया प्रातर्नित्यकर्मसमाप्य च ।
त्रिशताधिक साहस्रं समस्तन्यास संयुताम् ॥

श्रीमदष्टाक्षरीं जप्त्वा संस्कृते जातवेदसि ।
मधुत्रितयगव्याज्यमिश्रं बिल्वदलान्वितम् ॥

श्रीमदष्टार्णमन्त्रेण त्रिशतं पायसं हुनेत् ।
श्रीमन्त्रेण हुनेदाज्यं शतमष्टोत्तरं बुधः ॥

भगवद्रश्मिभिस्त्रेधाकुर्यादाज्याहुतीस्ततः ।
मिथुनत्रितयं भोज्यं भक्ष्यसूपघृतादिभिः ॥

प्रदद्याद्बहुळं द्रव्यमाचार्यस्य पदाम्बुजे ।
निष्कद्वयं प्रदातव्यं दरिद्रेणापि भूपते ॥ –१३५

निष्कमात्र सुवर्णं वा गुरुपत्न्यै समर्पयेत् ।
सायं सन्ध्यामुपास्याथ जपेच्छ्रीहृदयस्तवम् ॥

पञ्चधा श्रीमदष्टार्णसिद्धिमात्यन्तिकीं पराम् ।
अष्टवारपुरश्चर्यासमुद्भूतां व्रजत्यसौ ॥

तत्रापि रविसङ्क्रान्तिर्यदिस्याद्वसुधापते ।
बिल्वपत्रैःसमभ्यर्च्य त्रिशतं ब्रह्मविद्यया ।
दक्षिणां द्विगुणां दत्वा महासिद्धिमवाप्नुयात् ॥

मृगाङ्कग्रहणं तत्र यदिस्याद्वसुधापते ।
अलभ्योऽसौ महायोगो नाम्ना चिन्तामणिः स्मृतः ॥

चन्द्रचूडामणावुक्तहोमं कृत्वा सदक्षिणाम् ॥ —१४०

पुरश्चर्याशतफलमवाप्य लभते ध्रुवम् ।
पुष्यमास्यर्कवारेण सहिता पौर्णमी यदि ॥
वाचस्पत्यसमायुक्ता महती समुदीरिता ॥

आचार्यानुज्ञयाप्यत्र प्रातः सन्ध्यामवाप्य च ।
नित्यहोमं समाप्याथ समस्तन्याससंयुताम् ॥

त्रिशताधिकसाहस्रं श्रीमदष्टाक्षरीं जपेत् ॥

त्रिशतं प्रजपेत्पश्चादिष्टं श्रीमनुमादरात् ।
आचार्यसन्निधावग्निं संस्कृत्य विधिवत्ततः ॥

श्रीमदष्टार्णमन्त्रेण तिलबिल्वदलान्वितम् ।
त्रिशतं जुहुयादग्नौ पायसं त्रिमधुप्लुतम् ॥ —१४५

श्रीमन्त्रेण हुनेदाज्यमष्टोत्तरशतं ततः ॥
भगवद्रश्मिविद्याभिः कुर्यादाज्याहुतिं त्रिधा ॥

उत्पलैरर्चयेत्पश्चात्त्रिशतं ब्रह्मविद्यया ।
निष्कद्वयसुवर्णं वा दद्यादाचार्यपादयोः ॥

यद्यर्कसङ्क्रमस्तत्र जायते वसुधापते ।
चूडामणिरयं योगो नाम्नालभ्य उदाहृतः ॥

हुत्वा पञ्चशतं वह्नौ तिलमध्वाज्यपायसम् ।
त्रिनिष्कदक्षिणां वापि दत्वाचार्यपदाम्बुजे ॥

चतुर्विंशत्पुरश्चर्याफलं साङ्गमवाप्नुयात् ।
मृगाङ्कग्रहणं पुण्यं यदि तत्र भवेन्नृप ॥ −१५०

श्रीमदष्टार्णमनुना जपहोमादिकं शुभम् ।
शुद्धमण्डलपर्यन्तं कर्तव्यंस्याद्विशेषतः ॥

त्रिनिष्कदक्षिणां वापि सालग्रामशिलां शुभाम् ।
कुण्डलद्वयसंयुक्तां प्रदत्वाचार्य पादयोः ॥

चतुष्षष्टिपुरश्चर्याफलं साङ्गं महीपते ।
प्राप्यावश्यं परां सिद्धिं व्रजत्यत्र न संशयः ॥

युग्मद्वादशकं भोज्यं मिथुनत्रितयं तु वा ।
माघमासे पौर्णमासी पितृनक्षत्र संयुता ॥

इन्दुवासरसंयुक्ता महती संप्रकीर्तिता ।
गुरोरनुज्ञयाप्यत्र समाप्यावश्यकं विधिम् ॥ −१५५

त्रिशताधिकसाहस्रं समस्तन्याससंयुताम् ।
श्रीमदष्टाक्षरीं जप्त्वा श्रीमन्त्रं त्रिशतं तु वा ॥

अष्टोत्तरशतं पश्चाच्छ्रीमन्त्रेण घृतं हुनेत् ।
मिथुनत्रितयं भोज्यं भक्ष्यसूपादिकैरसैः ॥

सायंसन्ध्यामुपास्याथ दत्वा त्वे धार्घ्यमिन्दवे ।
उत्पलैरर्चयेत्पश्चात् त्रिशतं ब्रह्मविद्या ॥
निष्कमानसुवर्णं वा दत्वाचार्यपादाम्बुजे ॥

पुरश्चर्यात्रयफलं साङ्गं प्राप्नोतिशाश्वतम् ।
यदिस्याद्रविसङ्क्रान्तिः कृत्वेदं व्रतमत्र च ॥

द्विगुणा दक्षिणा देया स्वाचार्यपदपङ्कजे ।
पुरश्चरणषट्कस्य लभतेफलमुत्तमम् ॥ —१६०

यदीन्दुग्रहणं तत्र जायते वसुधापते ।
चन्द्रचूडामणिर्नाम्ना योगोऽलभ्योऽप्ययं नृप ॥

चन्द्रचूडामणावुक्तजपादिकमथादरात् ॥

अत्राप्यवश्यंकर्तव्यं महतीं सिद्धिमिच्छता ।
चतुष्षष्टिपुरश्चर्याफलं साङ्गं व्रजत्यसौ ॥

फालगुने पौर्णमासीया भगदैवत्यसंयुता ।
भानुवासरसंयुक्ता महती सा समीरिता ॥

आचार्यानुज्ञयाप्यत्र स्नात्वा कर्म समाप्य च ।
जपहोमादिकं कार्यं माघवद्वसुधापते ॥ –१६५

पुरश्चर्याफलं माघे यादृगुक्तं महीपते ।
तदेवफलमुद्दिष्टमात्रापि न हि संशयः ॥

एकस्यां पूर्णिमायां वा महत्यां वसुधापते ।
यथोक्तमेतत्कृत्वासौ सिद्धविद्यः प्रजायते ॥

तत्तन्नक्षत्रसहिता तत्तद्द्वारसमन्विता ।
तत्तन्मासे पौर्णमासी महतीसा प्रकीर्तिता ॥

श्रीमदष्टार्णविद्याया इच्छन्सिद्धिमनुत्तमाम् ।
एकस्यां पौर्णमास्यां वा व्रतं कर्तव्यमादरात् ॥

साधकोऽसौ भगवतः कलया सहितो भवेत् ।
येषु पर्वसु यत्साङ्गं जपहोमादिकं शुभम् ॥ –१७०

यद्यदुक्तंमथाभूप तत्कृत्वा साङ्गमादरात् ।
स विद्यासिद्धिमाप्नोति तस्य सिध्यति वाञ्छितम् ॥

नानायोनिसहस्रेषु जन्मकर्मविमिश्रितम् ।
नानानरकदुःखानि विचार्य च पुनः पुनः ॥

श्रीमदष्टार्णविद्यायाः सिध्यर्थंयत्नवान् भवेत् ।
श्रीमदष्टाक्षरीसिद्धिर्यदिस्याद्वसुधापते ॥

भगवत्कलया युक्तः स्वच्छन्दमरणो भवेत् ।
अलभ्ययोगे संप्राप्ते भिक्षित्वा शूद्रकानपि ॥

आचार्यदक्षिणां दत्वा जपहोमादिकं चरेत् ।
सद्य एव प्रदातव्यं दानद्रव्यं महीपते ॥ –१७५

ऋणं कृत्वापि भिक्षित्वा विद्यासिद्धिमभीप्सता ।
अन्नं ग्रासमितं वापि याचयेन्न गुरोः कुले ॥

आचार्यात्पितृमातृभ्यां न ग्राह्यं स्वर्णमण्वपि ।
प्रयत्नेनापि सम्पाद्य दातव्यं गुरवे धनम् ॥

मनःसङ्कल्पितं द्रव्यमाचार्यचरणाम्बुजे ।
सद्य एव प्रदातव्यमिच्छता सिद्धिमुत्तमाम् ॥

न वित्तशाठ्यं कुर्वीत सिद्धिकामो द्विजोत्तमः ।
कुण्डलद्वितयाद्यं यदलङ्करणमुत्तमम् ॥

आचार्यकर्णयोर्दत्वा योगेऽलभ्ये यशस्करे ।
सद्यः सिद्धिमवाप्यासौ पितृन् स्वर्गं नयत्यपि ॥ –१८०

उत्तमा दक्षिणा सद्यः प्रदत्ता सर्वसिद्धिदा ।
अर्धसिद्धिप्रदाप्रोक्ता दक्षिणामासमात्रतः ॥

अधमा मासयुग्मेन प्रदत्ता धर्मसिद्धिदा ।
ऊर्ध्वं मासत्रयाद्दत्ता निष्फला नात्र संशयः ॥

येनकेनाप्युपायेन गुरुपादाब्जसन्निधौ ।
प्रदत्ता दक्षिणा सद्यो मासाद्वा फलदायिनी ॥

रमारमेशसम्पूर्णप्रसादार्थं महीपते ।
श्रीमदष्टाक्षरीसिद्धिः कर्तव्या फलदायिनी ॥

अनुत्तरब्रह्मतत्त्वरहस्ये श्रुतिसङ्ग्रहे ।
अध्याय एकत्रिंशोऽयमुक्तोऽभीष्टफलप्रदः ॥ —१८५

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे एकत्रिंशोऽध्यायः ॥

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

**श्री ऋश्यशृङ्ग उवाच —**

एतावदुक्त्वा भगवान् रामो दाशरथिर्विभुः ।
पुनराह महादेवं महर्षीणाञ्च सन्निधौ ॥

**श्री भगवानुवाच –**

शृणुशङ्कर गौरीश भूयोऽप्यष्टार्णसाधनम् ।
यच्छ्रुत्वापि नरो धीमान् सिद्धिमेतिमहत्तराम् ॥

श्रीमदष्टार्णविद्याया यत्पुरश्चरणं महत् ।
लक्षषोडशकं प्रोक्तं यत् सद्यस्सिद्धिहेतुकम् ॥

सततं धर्मचित्तत्वादायुषो बहुळत्वतः ।
तत्पुरश्चरणादेव सिद्धिः कृतयुगादिषु ॥

अस्मिन् कलियुगे घोरे चित्तस्थैर्याद्यभावतः ।
रोगादिदोषबाहुळ्यादायुषोऽल्पतया तथा ॥ −५

एकेन दिवसेनैव सिद्धिः कार्या विचक्षणैः ।
श्रीमदष्टार्णविद्यायामसिद्धायां महीतले ॥

श्रीमदष्टार्णमन्त्रस्य कोटिशोपि जपादिभिः ।
लक्ष्मीपतिप्रसादस्य लेशोऽपि न हि जायते ॥

तस्मादवश्यं कर्तव्यं पुरश्चरणमादरात् ।
अवश्यं सिद्धिमाप्नोति पुरश्चरणकृत्यतः ॥

लक्ष्मीनारायणे योगे रवीन्दुग्रहणे तथा ।
नवरात्रव्रते चापि पुरश्चरणकर्मणा ॥

अवश्यं जायतेसिद्धिर्मन्त्रराजस्य सिद्धिदा ।
नवरात्रव्रते प्राप्ते रवीन्दुग्रहणे तथा ॥ −१०

लक्ष्मीनारायणे योगे वन्ध्यं कुर्वीत न क्वचित् ।
महापुष्करयोगेऽत्र योगेऽप्यर्धोदयाभिधे ॥

न वन्ध्यं दिवसं कुर्यात्सिद्धिकामो द्विजोत्तमः ।
यत्पुरश्चरणं प्रोक्तमादौ षोडशलक्षकम् ॥

अलभ्ययोगे कृत्वेत्यं तादृगेव भवेत्फलम् ।
सर्वेष्वलभ्ययोगेषु पुरश्चर्या यदीरिता ॥

लक्षषोडशकं प्रोक्तं यत्पुरश्चरणं मया ।
अक्षयायां तृतीयायां ततो दश गुणा परा ॥

अवश्यं जायते सिद्धिराचार्यस्य प्रसादतः ।
अक्षये दिनमात्रेऽपि कृत्वा होमजपादिकम् ॥

अपि निष्कत्रयं दत्वा सद्यः सिद्धिमवाप्नुयात् ।
किमूक्तयोगसहिते वैशाखे दिवसेऽक्षये ॥

पुरश्चर्याफलं वक्तुं हरिणापि न शक्यते ।
श्रीमदष्टार्णविद्यायासिद्धिस्त्वेधात्र कथ्यते ॥

जपहोमादिभिर्नित्यमाचार्येण दिने दिने ॥

आर्जितं सुकृतं यत्स्याच्चतुर्वर्गफलप्रदम् ।
सर्वासामपि विद्यानां भूयः शिष्योपदेशतः ॥

तपसाऽर्धं प्रविशति स्वशिष्यस्य कलेबरम् ।
शिष्यस्यदक्षिणेकर्णे यां यां विद्यां ददात्यसौ ॥

जपहोमादिकं पुण्यमर्धं तस्य हि गच्छति ।
उत्तमां दक्षिणां दद्याद्याचार्यपदाम्बुजे ॥

सर्वस्वमुत्तमा प्रोक्ता दक्षिणा मन्त्रसिद्धिदा ।
वर्षाशनमितद्रव्यमथवोत्तमदक्षिणा ॥

महासिद्धिप्रदा सद्यः कुण्डलद्वयसंयुता ।
मध्यदक्षिणया सिद्धिर्मध्यमेव विधीयते ॥

दक्षिणामधमां दत्वा किञ्चित्सिद्धिमवाप्नुयात् ।
तस्मादवश्यमाचार्यपादाब्जयुगळे शुभे ॥

येन केनाप्युपायेन सम्पाद्य द्रव्यमादरात् ।
उत्तमां दक्षिणामेव दत्वाचार्यमुखाम्बुजात् ॥ —२५

गृहीत्वा सकला विद्यास्तत्तपोऽर्धसमन्विताः ।
ग्रहणेनैव विद्यानां सद्य एव महत्तराम् ॥

श्रीमदष्टार्णविद्यादि सिद्धिं प्राप्नोति शाश्वतीम् ।
आचार्येणापि शिष्येभ्यः सम्प्राप्ते दिवसेऽक्षये ॥

पूर्णानुग्रहतो देयं विद्याजालं फलप्रदम् ।
सर्वस्वस्य प्रदात्रे वा प्राणानामपि यत्नतः ॥

विद्या न गुरुणा देया वैशाखे दिवसेऽक्षये ।
आचार्यतपसः सिद्धिर्यतश्शिष्यस्य गच्छति ॥

ददाति यदि सच्छिष्यः प्राणानपि समर्पयेत् ।
तदाप्रभृति सच्छिष्यः आचार्यस्य पदाम्बुजे ॥ –३०

शरीरमर्थं प्राणांश्च दद्यात् पुत्रांश्च पुत्रिकाः ।
ग्रहणादिषु योगेषु न तादृक्सिद्धिरीरिता ॥

अक्षयायां तृतीयायां यादृक्सिद्धिः पुरेरिता ।
होमेनापि महासिद्धिर्वैशाखे दिवसेऽक्षये ॥

आचार्यदक्षिणामिष्टधनंदत्वा ततःपरम् ।
मिथुनानि समभ्यर्च्य तेभ्यो दत्वाथ दक्षिणाम् ॥

न्यासयुक्ता प्रजप्तव्या पुनरष्टाक्षरी शुभा ।
त्रिशताधिकसाहस्रं सहस्रं वा शताधिकम् ॥

शतमात्रं प्रजप्तव्यः श्रीमन्त्रः स्वेष्ट इष्टदः ।
वासुदेवमहाविद्यां वैष्णवीञ्च षडक्षरीम् ॥ –३५

अष्टोत्तरशतं पश्चात्सिद्धिकामोजपेच्छुचिः ।
तस्मिन् दिने फलाशी वा हविष्याशी भवेद्व्रती ॥

जपेच्छ्रीहृदयस्तोत्रं त्रेधा रात्रौ ततःपरम् ।
गुरुप्रसादो भोक्तव्यः परेद्युर्गिरिजापते ॥

आचार्यमन्दिरे शिष्यैः स्वगृहे वाथ साधकैः ।
पुरश्चरणकृत्येषु समाप्तेषु ततःपरम् ॥

शिष्यैः सर्वत्र भोक्तव्यं गुरुशिष्टान्नमादरात् ।
अनेन सर्वपापौघनिवृत्तिस्सिद्धिरुत्तमा ॥

जायते नात्र सन्देहस्सत्यं सत्यं मयोच्यते ।
तपस्सिद्धगुरोर्वक्त्राच्छिष्यैः साधकपुङ्गवैः ॥ —४०

अलभ्ययोगे संप्राप्ते विद्याजालं फलप्रदम् ।
भूयोऽपिसंग्रहीतव्यं प्रदत्वोत्तमदक्षिणाम् ॥

अलभ्ययोगे सम्प्राप्ते प्राणैः कण्ठगतैरपि ।
विद्याजालं न दातव्यं तपो नाशे न धीमता ॥

सततं गुरुपादाब्जे दृढभक्ताय धीमते ।
बहुप्रार्थनया देयं योगेऽलभ्ये यशस्करे ॥

श्रीमदष्टाक्षरी विद्या सिध्यनन्तरमादरात् ।
अष्टोत्तरशतं वापि जप्त्वा नित्यं लभेत्फलम् ॥

अथ होमविधिं वक्ष्ये सद्यः सकलसिद्धिदम् ।
नारायणेन यत्प्रोक्तं जनकाय महात्मने ॥ —४५

सालग्रामशिलाचक्रमयोध्याचक्रमिश्रितम् ।
सम्पूज्य द्वादशाक्षर्या प्रजप्त्वाष्टाक्षरं मनुम् ॥

लक्षमेकं हुनेदाज्यं गव्यं दशसहस्रकम् ।
अणिमादिगुणैश्वर्यं लभते नात्र संशयः ॥

लक्षमेकं शुचिर्जप्त्वा नारङ्गैर्घृतमिश्रितैः ।
दशसाहस्रकं हुत्वा दीर्घायुः स्यान्निरामयः ॥

जम्बीरैरयुतं हुत्वा घृतत्रिमधुमिश्रितैः ।
असौ भाग्येन युक्तोऽपि सुभगः कामवद्भवेत् ॥

नारिकेलफलैर्हुत्वा घृतत्रिमधुमिश्रितैः ।
भगवत्कलयायुक्तः कान्तिमानर्कवद्भवेत् ॥ —५०

हुत्वाफलैश्चखर्जूरैरयुतं त्रिमधुप्लुतैः ।
जडोऽपि सर्वविद्याभिर्वाचस्पति समो भवेत् ॥

स्थूलैः सुमधुरैश्चूतफलैस्त्रिमधुमिश्रितैः ।
दशसाहस्रकं हुत्वा सप्तद्वीप समन्विताम् ॥

महीं शास्ति न सन्देहो दीर्घायुश्च निरामयः ।
पनसस्य फलैर्हुत्वा मधुत्रितयसंप्लुतैः ॥

अयुतं सार्वभौमोऽसौ राजराजोभविष्यति ।
अयुतं कमलैर्गव्यघृतत्रिमधुमिश्रितैः ॥

अक्षयं धनरत्नौघं प्राप्नोत्यत्र न संशयः ।
हुत्वा बिल्वफलैर्गव्यघृतत्रिमधुमिश्रितैः ॥ —५५

राजराजसमोलक्ष्म्या भवत्यत्र न संशयः ।
घृतत्रिमधुसंमिश्रं हुत्वा पायसमादरात् ॥

राजराजसमो लक्ष्म्या विद्यया धिषणायते ।
घृतत्रिमधुरसंमिश्रैर्हुत्वा तु कदलीफलैः ॥

अयुतं सुतमाप्नोति भगवत्कलयान्वितम् ।
तुलसीदलसंमिश्रैर्हुत्वा नीलोत्पलैः शुभैः ॥

अयुतं सुरराजेन सदृशं श्रियमश्नुते ।
द्राक्षाफलैर्गव्यघृतमधुत्रितय मिश्रितैः ॥

हुत्वायुतं निधानानामधिपो जायते ध्रुवम् ।
इक्षुखण्डैर्घृताभ्यक्तैर्मधुत्रितयमिश्रितैः ॥ –३०

हुत्वायुतं स्वचक्षुर्भ्यां पश्यत्येव श्रियःपतिम् ।
क्षीरवृक्षसमुद्भूतैः फलैः षष्टिमितैः शुभैः ॥

गव्याज्यमधुसंमिश्रैर्हुत्वा दशसहस्रकम् ।
अष्टाङ्गयोगमासाद्य खेचरो जायते ध्रुवम् ॥

जुहुयादरुणाम्भोजैर्गव्याज्यत्रिमधुप्लुतैः ।
अयुतं वित्तमाप्नोति वाञ्छितं नात्र संशयः ॥

चम्पकैरयुतं हुत्वा गोघृतत्रिमधुप्लुतैः ।
भवत्यसावथायुष्मान् धनेशो वाक्पतिर्भवेत् ॥

मल्लिकाकुसुमैर्हुत्वा गोघृतत्रिमधुप्लुतैः ।
अयुतद्वितयं स्वर्णशरीरो भवतिध्रुवम् ॥ –६५

जातीपुष्पैस्त्रिमध्वक्तैरयुतं गोघृतप्लुतैः ।
हुत्वाबालरविप्रख्यः कान्त्या भवति साधकः ॥

करवीरैर्हुनेदाज्यमधुत्रितयमिश्रितैः ।
अयुतद्वितयं पश्चात् सुवर्णसदृशः श्रिया ॥

स्थावरं जङ्गमं वापि विषं संहरति ध्रुवम् ।
सर्पिस्त्रिमधु संमिश्रैर्हुत्वा गुग्गुलुभिश्शुचिः ॥

अयुतं सर्वसौभाग्यं प्राप्नोत्यपि च वाञ्छितम् ।
अयुतं शर्कराखण्डैर्गव्याज्यत्रिमधुप्लुतैः ॥

हुत्वा समस्तलोकेषु श्रेयः प्राप्नोत्यनुत्तमम् ।
श्रीमदष्टाक्षरीं विद्यां जप्त्वैकं लक्षमादरात् ॥ —७०

असाध्यैरपि पापौघैर्मुच्यते नात्र संशयः ।
लक्षद्वयं जपेद्यस्तु श्रीमदष्टाक्षरं मनुम् ॥

अश्वमेधसहस्रस्य फलं प्राप्नोति शाश्वतम् ।
चतुर्लक्षजपादाशु महतीं श्रियमक्षयाम् ॥

प्राप्नोति सर्वसौभाग्यं लक्षषट्कप्रजापतः ।
श्रीमदष्टाक्षरं जप्त्वा वसुलक्षं जितेन्द्रियः ॥

अणिमाद्यष्टसिद्धीनां नायको भवतिध्रुवम् ।
लक्षद्वादशकं जप्त्वा श्रीमदष्टाक्षरीं मनुम् ॥

तेजसा रविसङ्काशो वाचा धिषणसन्निभः ।
श्रिया धनदसङ्काशो भवत्येव न संशयः ॥ —७५

लक्षषोडशकं मन्त्रं श्रीमदष्टाक्षरं जपन् ।
शङ्खादीनां निधानानामधिपो जायते ध्रुवम् ॥

एकविंशतिभिर्लक्षैः साक्षात्स्वायंभुवो मनुः ।
स्वसारूप्यं प्रदत्वास्मै कल्यायुष्यमचञ्चलम् ॥

अणिमादिगुणैश्वर्यं प्रददाति न संशयः ।
पञ्चविंशतिलक्षाणि श्रीमदष्टाक्षरं मनुम् ॥

प्रजप्त्वा सर्वलोकेषु शक्राद्यैरपि पूजितः ।
दिव्यदृष्टिं समासाद्य कामरूपी भवत्यसौ ॥

द्वात्रिंशल्लक्षजपतो गन्धर्वाधिपतिर्भवेत् ।
षट्त्रिंशल्लक्षजापेन महाविद्याधरो भवेत् ॥ —८०

चत्वारिंशन्मितैर्लक्षैर्विराड्रूपी भवत्यसौ ।
पञ्चाशल्लक्षजपतः सिद्धानामधिपोभवेत् ॥

षष्टिलक्षजपात् सद्यो विमानं सार्वकामिकम् ।
अधिरोहति तेजस्वी दिव्यकन्याशतान्वितः ॥

जप्त्वा सप्तति लक्षाणि मनोवेगी महामतिः ।
अजरामरणो भूत्वा देवत्वं लभते ध्रुवम् ॥

अशीतिलक्षजपतः स्वर्गसाम्राज्यमक्षयम् ।
प्राप्नोतीन्द्रसमोभूत्वा जरामृत्युविवर्जितः ॥

जप्त्वा नवतिलक्षाणि ब्रह्मर्षिभिरभिष्टुतः ।
अजरामरणो भूत्वा सत्यलोकाधिपो भवेत् ॥ –८५

श्रीमदष्टाक्षरं जप्त्वा शतलक्षमथादरात् ।
दक्षिणामूर्तिसदृशो विद्याभिर्दिव्यदेहभाक् ॥

अजरामरणो भूत्वा पञ्चविंशति वार्षिकः ।
अणिमादिगुणैश्वर्यं पादुकाद्यष्टकं तथा ॥

सर्वज्ञत्वं मनोज्ञत्वं कामरूपित्वमाप्नुयात् ।
अष्टाधिकशतं लक्ष जपेन नियतव्रतः ॥

श्रीमदष्टार्णविद्याया जरामरणवर्जितः ।
ब्रह्मविष्णुमहेशानामपि वन्द्यपदाम्बुजः ॥

साक्षान्नारायणात्मासौ भूत्वा खेचरतामपि ।
अवाप्य योगमष्टाङ्गं सर्वज्ञत्वं मनोज्ञताम् ॥ –९०

परकायप्रवेशादि सामर्थ्यमपि निश्चलम् ।
अवाप्य दिव्यकन्यानां सहस्रेण समन्वितम् ॥

अनेनैव शरीरेण विमानमधिरोहति ।
भृत्यानामग्रगण्योऽसौ भूत्वा भगवतो महान् ॥

मोदते परमे धाम्नि सन्निधाविन्दिरापतेः ।
आचार्यसदृशः पूज्यश्चाष्टाक्षरसमो मनुः ॥

नारायणसमं दैवं नास्ति नास्ति महीपते ॥

वैशाखमासे दिवसेऽक्षयाभिधे
जप्तुर्यथासिद्धिरिह प्रजायते ।
अन्यत्र योगे जपहोमतर्पणै
र्न तादृशीं सिद्धिमुपैति विप्रः ॥

आचार्यपादार्चनसक्तचित्तो
न्यासैः सहाष्टाक्षरमन्त्रजापी ।
स एव नारायणरूपधारी
वन्द्यश्च पूज्यश्च गुरुर्गरीयान् ॥ -९५

नाचार्यपादाब्जयुगात्पवित्र
... .... मष्टार्णमनुप्रजापी ।
... ... ... ... ... ...
वन्ध्यं न कुर्याद्दिवसं मनुष्यः ॥

सर्वैरुपायैः फलमेव साध्यं
फलं सदाष्टार्णमनोः प्रजापात् ।
न्यासैस्सहाष्टाक्षरमन्त्रजापी
नारायणात्मार्चनतः स एव ॥

इत्थं पुरा दाशरथिर्महात्मा
रहस्यमेतद्भगवानुवाच ।
नारायणेनामरनायकेन
राज्ञे यदुक्तं परमं पवित्रम् ॥

इति दाशरथीयेऽस्मिन् तन्त्रे वेदार्थसङ्ग्रहे ।
द्वात्रिंशोऽध्याय उक्तोऽयं वेदवेदान्तगर्भितः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

श्रृणुराजन् महीपाल पितामहसुतः पुरा ।
अपश्यत् सागरे कूर्मं महान्तं दिव्यवर्चसम् ॥

धन्योऽसीत्याह तं दृष्ट्वा नारदो भगवानृषिः ।
नाहं धन्य इति प्राह कूर्मस्तं नारदं मुनिम् ॥

इमा मदाश्रया आपो धन्यास्त्रैलोक्यपावनाः ।
धन्या भवत्य इत्याह ता आपो नारदो मुनिः ॥

आपो न धन्या इत्यूचुः पृथ्वी धन्या मदाश्रया ।
नारदस्तां भुवं प्राह धन्यासीति वसुन्धरे ॥

नाहं धन्येति भूः प्राह तं ब्रह्मतनयं मुनिम् ।
आधारभूता गिरय इमे धन्या महामते ॥ —५

इत्युक्तो भूधरान् प्राह यूयं धन्यतरा इति ।
धन्या न वयमित्याहुर्नारदं भूधरा अपि ॥

अस्मदादिजगत्कर्ता धन्यो देवः पितामहः ।
समीपं ब्रह्मणो गत्वा धन्योसीत्याह तं मुनिः ॥

पितामहोऽपि तं प्राह नाहं धन्य इति प्रभुः ।
सृज्यन्ते सकलालोका वेदैर्नित्यैस्सनातनैः ॥

पाल्यन्ते संह्रियन्ते च वेदा धन्यास्ततो मुने ।
इत्युक्तो नारदो वेदानाह नत्वा च दण्डवत् ॥

धन्या भवन्तः सर्वज्ञाः सृष्टिस्थितिलयाधिपाः ।
वेदाश्च नारदं प्राहुर्धन्या न वयमित्यपि ॥ —१०

वयं हि सृष्टा यज्ञार्थं भगवद्वदनाम्बुजात् ।
यूयं धन्यतरा यज्ञा इति नारद आह तान् ॥

ऊचुस्ते न वयं धन्या अस्माभिरपि सन्ततम् ।
इज्यते भगवान् साक्षाद्देवदेवः श्रियःपतिः ॥

यज्ञेशो यज्ञपुरुषो हरिर्नारायणो विभुः ।
सर्वविद्यामयः स्वामी त्रिजगत्पतिरीश्वरः ॥

स एव धन्यः सततं परमात्मा सनातनः ।
पितामहसुतो गत्वा सान्निध्यं परमात्मनः ॥

धन्योऽसि कृतकृत्योसीत्याह देवं श्रियःपतिम् ।
नारदं प्राहविश्वात्मा दक्षिणाभिस्सहेत्यथ ॥ –१५

तच्छ्रुत्वा भगवद्वाक्यं नारदो ब्रह्मनन्दनः ।
दक्षिणाभिः कथं धन्यो भगवन्निन्दिरापते ॥

इत्युक्तो भगवांस्तत्र नारदं ब्रह्मनन्दनम् ।
उवाच लक्ष्मीसान्निध्ये मूर्तिमद्वेदसन्निधौ ॥

दक्षिणाभिः सहेत्युक्तं मया यद्वचनं मुने ।
एते वक्ष्यन्ति वेदास्ते निश्चितं मन्मुखोद्भवाः ॥

एतावदुक्त्वा भगवान् रमया सहितो विभुः ।
अन्तर्हितोऽसौ भूतात्मा पन्नगाशन वाहनः ॥

वेदा अपि ब्रह्मसुतमूचुस्तत्वं सुनिश्चितम् ।
शृणु नारद वक्ष्यामो यत्तत्त्वं सुविनिश्चितम् ॥ –२०

समाहितमनाभूत्वा शृणुष्व ब्रह्मनन्दन ।
वयं लोकहितार्थाय सृष्टा भगवता मुने ॥

अस्माभिरुच्यते यद्यत् तत्तत्सर्वं द्विजातिभिः ।
अवश्यमपि कर्तव्यमस्मदाज्ञा बलीयसी ॥

असमदाज्ञां समुल्लङ्घ्य यास्तिष्ठति महीतले ।
सोऽवश्यं नरकौघेषु मज्जत्याचन्द्रतारकम् ॥

अध्येतव्याः सदा वेदाः सषडङ्गपदक्रमाः ।
कर्तव्यास्सकला यागाः सम्पूर्णवरदक्षिणाः ॥

नित्यं नैमित्तिकं काम्यं कर्म कर्तव्यमन्वहम् ।
प्रत्यहं दक्षिणायुक्तमेव कार्यं महामते ॥

आचरेद्विहितं नित्यं निषिद्धं परिवर्जयेत् ।
दक्षिणाभिस्सहेत्युक्तं वचो यत्परमात्मना ॥

दक्षिणारहितं सर्वं कर्मस्याद्रैदिकं वृथा ।
स्वल्पदक्षिणयोगोऽपि दक्षिणारहितोऽपि च ॥

यातनादुःखदोनृणामिहामुत्रापि सन्ततम् ।
यज्ञेश्वरो यज्ञभोक्ता साक्षाद्यज्ञपुमान् विभुः ॥

इज्यते सकलैर्यज्ञैर्वेदैः संस्तूयते सदा ।
सकूटस्थोऽचलो व्यक्तः परमात्मा श्रियःपतिः ॥

सर्वदेवमयः सर्वयज्ञरूपी परः पुमान् ।
स यष्टव्यो महायोगैः सम्पूर्णवरदक्षिणैः ॥

सम्पूर्णा दीयते येन महादानेषु दक्षिणा ।
अवश्यं वंशसहितास्स एव लभते गतिम् ॥

संपूर्णा दीयते येन महादानेषु दक्षिणा ।
अवश्यं वंशसहितस्स एव लभते गतिम् ॥

दानहीनं नृणां जन्म नरकक्लेशभाजनम् ।
दरिद्रेणापि देयं स्यान्नित्यं शाकादिकं गुने ॥

भिक्षित्वापि प्रदातव्यं दरिद्रेणापि सन्ततम् ।
विशेषतः कलौ प्राप्ते तारकं दान एव हि ॥

यज्ञेषु जपयज्ञोऽसौ महायाग उदीरितः ।
जपहोमादिकं कर्म कृत्वा प्रत्यहमादरात् ॥ −३५

आचार्यचरणाम्भोजे देयं यत्किञ्चिदप्यथ ।
सङ्कल्प्य मासि मासे वा दातव्यं भूतिमिच्छता ॥

चतुर्वर्गप्रदा बिद्या महाबिद्या इति स्मृताः ।
जपहोमादिकं तासां क्रियते यैस्सदक्षिणम् ॥

तज्जन्म सफलं ज्ञेयं त एव सुखभागिनः ।
तत्रापि श्रीमदष्टार्णो मन्त्रराजो महत्तरः ॥

तदात्मैव परं ब्रह्ममयो नारायणः पुमान् ।
तस्यैव रश्मयस्सर्वे सृजन्ति घ्नन्ति पान्ति च ॥

सर्वविद्यामयः सर्वन्यासरूपी श्रियःपतिः ।
श्रीमदष्टार्णविद्यात्मा हरिर्नारायणो विभुः ॥ −४०

पुरश्चर्यादिभिर्यागैः स यष्टव्यो जगत्पतिः ।
श्रीमदष्टार्णविद्याया जपहोमादिकं शुभम् ॥

अश्वमेधादियागेभ्योऽप्यधिकं सर्वसिद्धिदम् ।
अश्वमेधे महायागे कोटिकोटिमितं धनम् ॥

दक्षिणा विहिता सद्भिर्धर्मशास्त्रे श्रुतिष्वपि ।
संवत्सरमयी दीक्षा हयमेधस्य सिद्धिदा ॥

श्रीमदष्टार्णविद्याया एकस्मिन्नपि वा दिने ।
संपूर्णदक्षिणां दत्वा पुरश्चरणकर्मणि ॥

अश्वमेधसहस्रेभ्योऽप्यधिकं फलमश्नुते ।
नाश्वमेधसहस्रैर्वा न महादानकोटिभिः ॥ —४५

न तीर्थयात्राकोट्या वा नाग्निष्टोमायुतेन वा ।
शक्यते भगवान् द्रष्टुं श्रीमदष्टाक्षरीं विना ॥

आचार्यचरणद्वन्द्वरूढभक्तैर्यतव्रतैः ।
श्रीमदष्टाक्षरी विद्या पुरश्चरणकर्मभिः ॥

साङ्गदक्षिणयायुक्तैरवश्यं दृश्यते विभुः ।
एकेन जन्मनेनैते भवन्ति भगवन्मयाः ॥

संपूर्णदक्षिणा तस्माद्देया सकल कर्मसु ।
सर्वरश्मिमयीं दीक्षां सर्वन्यासमयीमपि ॥

आचार्यसन्निधौ प्राप्य समर्प्याचार्यदक्षिणाम् ।
यज्वासौ भगवद्यागदीक्षितः स्याद्दिने दिने ॥ —५०

भगवद्रश्मि सहितां श्रीमदष्टाक्षरीं शुभाम् ।
समस्तन्याससहितां यो जप्त्वा नियतोऽन्वहम् ॥

यत्किञ्चिदपि वा नित्यमाचार्याय प्रयच्छति ।
साग्निष्टोमेन यष्टासौ प्रत्यहं भवति ध्रुवम् ॥

रवीन्दुग्रहणे प्राप्ते नवरात्रव्रतेऽपि वा ।
लक्ष्मीनारायणे योगे चूडामण्यादिकेषु च ॥

श्रीमदष्टाक्षरीविद्या पुरश्चरणमादरात् ।
साङ्गदक्षिणयायुक्तं यःकरोति महामते ॥

अश्वमेधशतं साग्रं सम्पूर्णवरदक्षिणम् ।
कृतं तेन न सन्देहः पश्यत्यपि रमापतिम् ॥ —५५

दृष्टे नारायणे साक्षादिन्दिरारमणे विभौ ।
ब्रह्मरुद्रादिभिर्देवैरप्यसौ पूज्यते मुने ॥

पौरश्चरणिकं कर्म कृत्वा संपूर्णदक्षिणाम् ।
अदत्वाचार्यपादाब्जे न सिद्धिं महतीं व्रजेत् ॥

स्वार्जितं सकलं द्रव्यमेकस्मिन्नपि वत्सरे ।
सर्वस्वमितियत्प्रोक्तं तदुक्ता पूर्ण दक्षिणा ॥

पत्न्या कल्पादिकमपि पुत्राणामपि भूषणम् ।
वस्त्रादिकं च सकलं सर्वस्वं तत्समीरितम् ॥

उत्तमां दक्षिणामेता माहुर्ब्रह्मैक्य सिद्धिदाम् ।
अथ वर्षाशनमित द्रव्यं चोत्तमदक्षिणम् ॥ –६०

श्रीमदष्टार्णसंसिद्धि दामाहुर्महत्तराम् ।
वर्षाशनमितं द्रव्यं शतनिष्कमिति स्मृतम् ॥

तदर्धं वा तदर्धं वा वित्तलोभं विवर्जयेत् ।
वर्षाशनमितद्रव्यन्यूना या दक्षिणा स्मृता ॥

श्रीमदष्टार्णविद्याया अल्पसिद्धिप्रदा स्मृता ।
भूदानं यत्र संप्रोक्तमाचार्येभ्यो महीपते ॥

संपूर्णदक्षिणायुक्तं तत्सद्यः सिद्धिदं स्मृतम् ।
अश्वमेधसहस्रं वा महादानायुतं तु वा ॥

एकेनापि पुरश्चर्या कृत्येन न समं मुने ।
अक्षयायां तृतीयायां यत्पुरश्चरणं शुभम् ॥ –६५

उक्तं तत्क्रियते येन साङ्गदक्षिणयान्वितम् ।
श्रीमदष्टार्णसंसिद्धिः संपूर्णा भवति ध्रुवम् ॥

अक्षयायां तृतीयायां भाग्योदयवशान्मुने ।
यदि योगा भवन्त्यत्र दीक्षां रश्मिमयीं मुने ॥

सम्प्राप्याचार्यसान्निध्ये दीक्षां न्यासमयीमपि ।
अवश्यं गुरु सान्निध्ये प्राप्य दीक्षाद्वयं शुभम् ॥

श्रीमदष्टार्णविद्याया दीक्षाद्वितयतोऽपि च ।
महतीं सिद्धिमाप्नोति दत्वाचार्यस्य दक्षिणाम् ॥

सर्वयोगयुतो तत्र वैशाखे दिवसेऽक्षये ।
होमकर्तुर्महासिद्धिर्वर्णितुं नैवशक्यते ॥ —७०

आचार्यचरणद्वन्द्वे दातुः संपूर्णदक्षिणाम् ।
श्रीमदष्टार्णविद्यायास्सिद्धिर्वक्तुं न शक्यते ॥

अवश्यं जगतामीशं भगवन्तं श्रियःपतिम् ।
आचार्यानुग्रहात् साक्षात् पश्यत्येव न संशयः ॥

अपि ब्रह्मादिभिः पूज्यः साधकोऽसौ भविष्यति ।
सर्ववेदमयी दीक्षा सर्वयज्ञमयी तथा ॥

श्रीमदष्टार्णदीक्षायास्तुलां नार्हति षोडशीम् ।
अश्वमेधायुतं वापि संपूर्णवरदक्षिणम् ॥

राजसूयायुतं वापि तथा सर्वस्वदक्षिणम् ।
अष्टाक्षरी पुरश्चर्या सदृशं न महामते ॥ —७५

वेदा अपि च वेदान्ता धर्मशास्त्राणि सन्ततम् ।
पुराण जातं सकलं कल्पसूत्रादिकं च यत् ॥

श्रीमदष्टार्णमन्त्रस्य भाष्यं विद्धि महामते ।
भगवद्रश्मिसहिता समस्तन्यास संयुता ॥

श्रीमदष्टाक्षरी विद्या साङ्गदक्षिणयान्विता ।
यस्यसिध्यति तं विद्धि ब्रह्मरूपिणमच्युतम् ॥

तस्मादवश्यं कर्तव्यो यत्नः सिध्यर्थमादरात् ।
श्रीमदष्टार्णविद्यायां सिद्धायां दिवि वा भुवि ॥

रसातले वा नासाध्यं विद्यते ब्रह्मनन्दन ।
अणिमादिगुणैश्वर्यं सम्पूर्णख्याति रक्षया ॥

अचञ्चलं महद्भाग्यमजरामरतापि च ।
अष्टाङ्गसहितो योगो जातिस्मरणमप्यथ ॥

एकेन जन्मनैवास्य संसिध्यति न संशयः ।
आचार्यचरणद्वन्द्वपूजनं नित्यमादरात् ॥

श्रीमदष्टाक्षरीविद्या दुर्लभं द्वितयं भुवि ।
अष्टाक्षरीपुरश्चर्या संपूर्णवरदक्षिणा ॥

तस्मादवश्यं कर्तव्या सद्यः सकलसिद्धिदा ।
एतदेव विजानीहि परब्रह्मैक्यसिद्धिदम् ॥

अष्टाक्षरीपुरश्चर्या कृत्यमेव महत्तपः ।
ब्रह्मदर्शनसंसिद्धिहेतुभूतमुदीरितम् ॥

श्रीमदष्टार्णविद्याया जपहोमादिकं शुभम् ।
धर्मार्थकाममोक्षाणां निदानमिति कथ्यते ॥

नारायणाभिधं ब्रह्म यदस्माभिर्दिने दिने ।
कथ्यते स्तूयते नित्यमर्च्यते ध्यायते तथा ॥

नारायणो महायोगी विज्ञाननिधिरच्युतः ।
शक्यते साधकैः प्राप्तुमष्टाक्षरमनोर्जपात् ॥

भूयो भूयोऽपिवक्ष्यामि प्राप्तेषु शुभपर्वसु ।
श्रीमदष्टार्णसंसिद्ध्यै यत्नः कर्तव्य आदरात् ॥

एतदेव महद्धर्मरहस्यं ब्रह्मनन्दन ।
आचार्यवदनाम्भोजात् संप्राप्याष्टाक्षरं मनुम् ॥ —९०

पुरश्चरणसंसिद्धिं कृत्वा ब्रह्ममयोभवेत् ।
नारायणमनोर्जन्म दिवसेऽक्षय संज्ञिते ॥

अष्टाक्षरस्यसंसिद्धिर्महादानं महत्तपः ।
महान् धर्मो महद्ज्ञानमेतस्मादधिकं न हि ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

**श्री राजोवाच –**

भगवन् भाषिताशेषविशेषकरुणानिधे ।
समस्तलक्ष्मीविद्यानां न्यासध्यानादिकं वद ॥

**श्री भगवानुवाच –**

शृणु राजन् महाभाग भवतापृष्टमादरात् ।
विद्यानामपिसंक्षिप्तं श्रीमन्त्राणां प्रवक्ष्यते ॥

त्रयी बीजं जलेशान्त्यं वामनेत्रविभूषितम् ।
अग्निबिन्दुसमायुक्तं द्वितीयं बीजमुद्धृतम् ॥

स्पर्शान्त्यं व्योमबीजञ्च मुखवृत्तविभूषितम् ।
भू बीजं सर्ववर्णान्त्यं वायुमार्तण्डसंयुतम् ॥

द्वादशस्वर संयुक्तं हृदयेन समन्वितम् ।
अष्टाक्षरीमहाविद्या महालक्ष्म्या उदीरिता ॥ –५

समस्तसम्पत्साम्राज्य महासिंहासनेश्वरी ।
दारिद्र्यदुःखशमनी समस्तैश्वर्यसिद्धिदा ॥

भृगुर्ब्रह्मसुतः प्रोक्तो मुनिरस्या महामते ।
छन्दो गायत्रमित्युक्तं महालक्ष्मीस्त्रयीमयी ॥

देवता कथिता सर्वजगन्माता हरिप्रिया ।
श्रीबीजमित्युक्तं शक्तिर्नतिरुदीरिता ॥
षडङ्गं विन्यसेत्पश्चाच्छ्रिया षड्दीर्घयुक्तया ॥

आताम्रार्कसहस्रसन्निभतनुं सौभाग्यवारां निधिं
पद्मादर्शधरां हिरण्मयघटं विद्यां तथा बिभ्रतीम् ।
मूलेकल्पतरोर्महामणिमये दिव्यासने संस्थितां
दिव्याकल्पविराजितां सुवदनां पीताम्बरालङ्कृताम् ॥

महालक्ष्मीमितिध्यात्वा जपेन्नित्यमिमं मनुम् ॥

सर्वसम्पत्समृद्धिःस्याद्भाग्यराशिः पदे पदे ।
अष्टलक्षं पुरश्चर्या तूत्पलैर्वाथ पङ्कजैः ॥

मधुत्रितयसंमिश्रैर्बिल्वपत्रैरथापिवा ।
हुत्वाचार्यपदाम्भोजे दत्वा बहुलदक्षिणाम् ॥

विद्यासिद्धिमवाप्नोति नात्रकार्या विचारणा ।
वैशाखे फल्गुने वापि माघे वा श्रवणेऽपिवा ॥

कार्तिके मार्गशीर्षे वा प्रथमे भृगुवासरे ।
सङ्कल्प्य पौर्णमास्यन्तं पञ्चविंशत्सहस्रकम् ॥

प्रजप्त्वा जुहुयादाज्यमधुत्रितयमिश्रितैः ।
दशांशं जुहुयात्पद्मैर्बिल्वपत्रैरथापिवा ॥

तत आचार्य पादाब्जे धेनुत्रितयमादरात् ।
दक्षिणासहितं दत्वा काञ्चनेन विनिर्मितम् ॥

यज्ञोपवीतत्रितयं वासोयुगलसंयुतम् ।
दत्वा द्वादश भुञ्जीयादलङ्कृत्य सुवासिनीः ॥

आचार्यपत्नीमभ्यर्च्य वासोऽलङ्कारसञ्चयैः ।
सद्यः सिद्धिमवाप्नोति विद्याया नात्र संशयः ॥

इयमेव महाविद्या दुःखदारिद्र्यभञ्जिनी ।
आधिव्याधिप्रशमनी सर्वसम्पत्समृद्धिदा ॥

अष्टाक्षरी महालक्ष्मीर्जप्यते येन मन्दिरे ।
अलक्ष्मी कलहाधारा तद्गेहे न वसेत् क्वचित् ॥ –२०

आयुरारोग्यसिद्ध्यर्थं पुत्रपौत्रसमृद्धये ।
अष्टाक्षरीं महालक्ष्म्या जपेद्भाग्यसमृद्धये ॥

आश्विने नवरात्रे वा वासन्ते वा समागते ।
प्रतिपद्दिनमारभ्य नवम्यन्तमथादरात् ॥

आचार्यानुज्ञया तत्र श्रीमदाष्टाक्षरं मनुम् ।
जपेद्द्वादशसाहस्रं कृत्वा सङ्कल्पमादरात् ॥

पञ्चविंशत्सहस्राणि जपेदष्टाक्षरीं श्रियः ।
नवम्यां ज्वलिते वह्नौ शुद्धं गव्याज्यमादरात् ॥

हुनेदष्टार्णमन्त्रेण शताधिक सहस्रकी ।
अष्टार्णविद्यया लक्ष्म्या मधुत्रितयमिश्रितम ॥ –२५

त्रिशताधिकसाहस्रं हुनेद्गव्याज्यमिश्रितम् ।
बिल्वपत्रसमायुक्तं हविष्कृष्णतिलान्वितम् ॥

अथाचार्यं नमस्कृत्य कुण्डलद्वितयं शुभम् ।
दत्त्वा तत्कर्णयोः पश्चाद्बहुसस्यौघसङ्कुलाम् ॥

समर्पयेन्महीं विद्वान् बहुदक्षिणयान्विताम् ।
सदक्षिणं ततो दद्याद्धेनुद्वयमलङ्कृतम् ॥

धनाढ्यो राजपुत्रोऽपि दद्याद्वित्तं सहस्रशः ।
अलङ्कारैश्च वासोभिर्दक्षिणाभिश्च भोजनैः ॥

आचार्यवल्लभां पश्चान्महालक्ष्मीधियार्चयेत् ।
विवाहरहिताः कन्या अवश्यं पूजयेन्नरः ॥ —३०

एकवर्षद्विवर्षादि नववर्षादि कन्यकाः ।
अथवा यौवनारूढाः पुत्रवत्यो गुणान्विताः ॥

भोजनाद्यैस्समभ्यर्च्या नवतिर्नव वा नृप ।
विभवे सत्यलङ्कारं तासां वासांसि चार्पयेत् ॥

पञ्चविंशतिसंख्याकब्राह्मणान् वेदपारगान् ।
भोजयित्वाथ मृष्टान्नं दक्षिणाभिश्च तोषयेत् ॥

अथाचार्याशिषः प्राप्य स्वयं भुञ्जीत वन्धुभिः ।
एवं कृते विधानेन नवरात्रव्रते शुभे ॥

इन्दिरासहितस्तस्य भगवानच्युतो विभुः ।
ददाति महतीं सिद्धिं त्रैलोक्ये चापि दुर्लभाम् ॥ —३५

आरोग्यं चिरमायुष्यं धनधान्यादिसङ्कुलम् ।
अचलां गजरत्नौघसङ्कुलां महतीं श्रियम् ॥

मानुषानपि दिव्यांश्च भोगान् पुत्रांश्च पौत्रकान् ।
ददति भगवांस्तस्मै संशयो नात्र विद्यते ॥

जप्त्वा लक्षमिमं मन्त्रं दशांशं तर्पयेच्छुचिः ।
पयसेक्षुरसेनापि गुडमिश्रजलेन वा ॥

तद्दशांशं हुनेत्पद्मैर्मधुत्रितयमिश्रितैः ।
धनदेन समोलक्ष्मा यावज्जीवं भवत्यसौ ॥

श्रीविष्णुमन्दिरे विल्वमूलमध्यास्य मन्त्रवित् ।
अष्टाक्षरीं महालक्ष्म्या जप्त्वा लक्षमतन्द्रितः ॥ —४०

बिल्वपत्रैर्गव्यघृतमधुत्रितयसंप्लुतैः ।
हुत्वासौ लभते वित्तवृद्धिं सद्यो न संशयः ॥

अलक्ष्मीनाशनं नित्यमिच्छता विजितात्मना ।
श्रीमदष्टाक्षरीविद्या जपकर्त्रा दिने दिने ॥

अष्टाक्षरी महालक्ष्म्या जप्तव्यावश्यमादरात् ।
इति दाशरथीयेऽस्मिंस्तन्त्रे वेदार्थसङ्ग्रहे ॥
अध्यायोऽयं चतुस्त्रिंश उक्तो भगवता पुराः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे चतुस्त्रिंशोऽध्यायः ॥

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

श्री भगवानुवाच –

श्रीषडर्णमथोवक्ष्ये त्रयीसारं महोदयम् ।
सिद्ध्यन्ति यस्य जपतो ब्रह्मेन्द्रादिविभूतयः ॥

त्रयी बीजं परं धाम पूर्वमुच्चार्य यत्नतः ।
वान्तं वह्निसमारूढं वामलोचन भूषितम् ॥

बिन्दुयुक्तं ततः सन्ध्याबीजं दक्षाक्षिसंयुतम् ।
विन्दुहीनं वह्नियुतमन्तस्थाद्यमतःपरम् ॥

द्वादशस्वरसंयुक्तं नमस्कारपदान्वितम् ।
श्रीषडक्षरविद्येयमुक्ता पापौघभेदिनी ॥

समस्तयागतीर्थौघफलदा श्री समृद्धिदा ।
धनधान्य गजाश्वौघ मुक्तामाणिक्यवर्षिणी ॥ –५

चिरायुष्यप्रदास्सर्वे महाभाग्य समृद्धिदा ।
श्रीबीजसहिता मंत्रा वैरिणोऽपि महामते ॥

जप्तास्समस्तफलदा जपकर्तुर्न संशयः ।
श्रीयुक्तमेव सकलं पूज्यते जगतीतले ॥

श्रिया विरहितो विद्वानपि ब्रह्मविदुत्तमः ।
न पूज्यते भूतलेऽस्मिन् क्षुप्रयद्वसुधातले ॥

श्रिया विरहितो राजन् सार्वभौम नृपोऽपि च ।
त्रिजगत्स्वपि नार्च्यः स्याद्भवन्यपि च निन्दितः ॥

शालग्राम शिलादीनि श्रिया विरहितानि चेत् ।
श्रिया विरहिता वृक्षा अपि पुष्पफलान्विताः ॥ —१०

न द्रष्टुमपि शक्यन्ते श्मशानमिव भूपते ।
श्रिया युक्तं तृणमपि पूज्यमेव जगत्त्रये ॥

श्रियायुक्तोऽन्त्यजोवापि चतुर्थो यवनोऽपि वा ।
अभ्यर्चितः स्याद्भूपाल देववत्सकलैर्जनैः ॥

अधर्मनिरतोवाऽपि दुराचाररतोऽपि बा ।
संपूज्यते महीपाल श्रियायुक्तो जग-त्त्रये ॥

श्रिया युक्तोऽन्त्यजो वापि स कुलीनः स पण्डितः ।
स एव ब्रह्मविद्विद्वान् स एवार्घ्यो दिने दिने ॥

यत्र श्रीस्तच्छुचि द्रव्यं तत्वधर्मो महानपि ।
श्रिया विरहितः साक्षाद्भगवानपि भूपते ॥ –१५

न पूज्यः स्यात्त्रिलोकेषु किमुतान्ये नरादयः ।
षडक्षरमिदं तस्माच्छ्रियो देव्याः फलप्रदम् ॥

अवश्यमपि जप्तव्यं श्रीसमृद्धिमभीप्सता ।
षडक्षरी श्रियो विद्या सर्गस्थित्यन्तकारिणी ॥

सर्वसंपदधिष्ठात्री सर्वलोकेश्वरेश्वरी ।
भृगुरस्य मुनिच्छन्दो निछृद्गायत्रमीरितम् ॥

त्रयीमयी जगन्माता देवता श्रीर्हरिप्रिया ।
द्वितीयं बीजमुक्तं च शक्तिर्नतिरुदीरिता ॥

षडङ्गानि न्यसेत्पश्चाच्छ्रिया षड्दीर्घयुक्तया ।
कान्त्या काञ्चनसंनिभां हरगिरिप्रख्यैश्चतुर्भिर्गजैः ॥ –२०

हस्तेक्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ।
बिभ्राणां वरमब्ज युग्ममभयं हस्तैः किरीटोज्ज्वलां ॥

क्षौमाबद्धनितंबसंधिललितां वन्देऽरविन्दस्थिताम् ।
लक्षषट्कं जपेन्मन्त्री दीक्षितो विजितेन्द्रियः ॥

श्रियमभ्यर्चयन्नित्यं सुगन्धि कुसुमादिभिः ।
षट्सहस्रं च जुहुयात्कमलैस्त्रिमधुप्लुतैः ॥

जपान्ते जुहुयान्मन्त्री तिलैर्वा मधुनाप्लुतैः ।
बिल्वैः फलैर्वा जुहुयात्पत्रैर्वा साधकोत्तमः ॥

अथवा श्रीमदष्टार्णं चतुर्विंशत्सहस्रकम् ।
तावत्सहस्रं प्रजपेदप्येनं श्रीषडक्षरम् ॥

पायसं जुहुयात्पश्चाच्छ्रीमदष्टार्णविद्यया ।
त्रिसहस्रं विशुद्धात्मा त्रिशताधिकमादरात् ॥

श्रीमन्त्रेणापि जुहुयात्तावदेव घृतं शुभम् ।
आचार्यं कर्णयोर्दत्वा कुण्डलद्वितयं शुभम् ॥

सर्वस्वमर्पयेद्धीमान्तथाचार्यपदाम्बुजे ।
वर्षाशनमितं वापि दक्षिणा द्रव्यमर्पयेत् ॥

अलङ्कारैश्च वासोभिरभ्यर्च्याऽऽचार्यवल्लभाम् ।
चतुर्विंशतिसंख्याक मिथुनान्यपि भोजयेत् ॥

श्रीषडक्षरविद्यायाः श्रीमदष्टाक्षरस्य च ।
प्राप्नोत्यनुत्तमां सिद्धिं देवतैरपि दुर्लभाम् ॥

कार्तिके माघमासे वा मार्गशीर्षेऽथफालगुने ।
विधिनेत्थं पुरश्चर्यां कृत्वा साङ्गां समाहितः ॥

अवश्यं मन्त्रसंसिद्धिं प्राप्नोत्यत्र न संशयः ।
अत्र सम्यग्यजेत्पीठं नवशक्तिसमन्वितम् ॥

विभूतिरुन्नतिः कान्तिः पुष्टिः कीर्तिश्च सन्मतिः ।
व्युष्टिरुत्कृष्टि ऋद्धिश्च संप्रोक्ता नवशक्तयः ॥

अत्रावाप्य यजेद्देवीं परिवारैः समन्विताम् ।
बीजाद्यमासनं दत्त्वा मूर्तिं मूलेन कल्पयेत् ॥

अग्नीश्वरासुरवायव्य मध्यदिक्ष्वङ्गपूजनम् ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥

हेमपीततमालेन्द्र नीलाभान् पीतवाससः ।
चक्रशङ्खगदापद्म धारिणस्तान् चतुर्भुजान् ॥

विदिगादिषु पत्रेषु दमकादीन् यजेदथ ।
दमकं ललितं भूयो गुगुलुर्चकरण्टकम् ॥

यजेच्छङ्खनिधिं देव्या दक्षिणे दयितान्विताम् ।
मुक्तामाणिक्यसंकाशौ किञ्चित्स्मित मुखाम्बुजौ ॥

अन्योन्यालिङ्गनपरौ शङ्खपङ्कजधारिणौ ।
यिगलद्रत्नवर्षाभ्यां शङ्खाभ्यां मूर्ध्नि लांछितौ ॥

तुन्दिलं कम्बुकनिधिं वसुधाराघनस्तनीम् ।
तमतः पङ्कजनिधिं प्रियया सहितं यजेन् ॥

सिन्दूराभौ यजोच्छिष्टौ रक्तपद्मोत्पलान्वितौ ।
निस्सरद्रत्नवर्षाभ्यां पद्माभ्यां मूर्ध्निलांछितौ ॥

तुन्दिलं पङ्कजनिधिं तन्वीं वसुमतीमपि ।
दलाग्रेषु यजेदेता बलाक्याद्याः समन्ततः ॥

बलाकी विमलाचैव कमला नवमालिका ।
विभीषणी मालिका च शाङ्करी वसुमालिका ॥

पङ्कजद्वयधारिण्यो मुक्ताहारसमप्रभाः ।
लोकेशान् पूजयेदन्ते वज्राद्यस्त्राणि तद्बहिः ॥

इत्थं यो भजते देवीं विधिना साधकोत्तमः ।
धनधान्यसमृद्धस्स्याच्छ्रियमाप्नोत्यनिन्दिताम् ॥ —४५

तक्षःप्रमाणे सलिले स्थित्वा मन्त्रमिमं जपेत् ।
त्रिलक्षं संयतो मंत्री देवीं ध्यात्वाऽर्कमण्डले ॥

तस्मिन् वर्षे स लभते महदैश्वर्यमक्षयम् ।
विष्णुगेहस्थ विल्बस्य मूलमध्यास्य मन्त्रवित् ॥

त्रिलक्षं प्रजपेदेतद्दशांशं बिल्वपत्रकैः ।
मधुरत्रयसंयुक्तैर्जुहुयाज्जातवेदसि ॥

अक्षयं धनरत्नौघं प्राप्नोत्यत्र न संशयः ।
अशोकवह्नौ जुहुयात्तत्पुष्पैराज्यतःप्लुतैः ॥

वशयेदचिरादेव त्रैलोक्यमपि मन्त्रवित् ।
जुहुयात्तण्डुलैश्शुद्धैरयुतं त्रिमधुप्लुतैः ॥ —५०

राजश्रियमवाप्नोति दरिद्रोऽपि महीपते ।
जुहुयाद्वैदिके वह्नौ तण्डुलैर्गोघृतप्लुतैः ॥

सौभाग्यैकनिधिर्भूत्वा प्राप्नोति श्रियमूर्जिताम् ।
बिल्वच्छायामधिवसन् बिल्वमिश्रहविष्यभुक् ॥

संवत्सरद्वयं हुत्वा तत्फलैरथवाम्बुजैः ।
अष्टोत्तरशतं नित्यं ब्रह्मरुद्रादिवन्दिताम् ॥

नारायणेन सहितां महालक्ष्मीमचञ्चलाम् ।
पश्यत्येव स्वचक्षुर्भ्यां वत्सरद्वितयाद्ध्रुवम् ॥

मधुत्रितयसंयुक्त पायसेन च सर्पिषा ।
अयुतद्वितयं हुत्वा श्रीषडक्षरविद्यया ॥ —५५

भूयसीं श्रियमाप्नोति धनरत्नौघसङ्कुलाम् ।
मधुसिक्तारुणाम्भोजैरयुतद्वितयं हुनेत् ॥

एवं तदन्वयमपि राज्यश्रीरपि भूयसी ।
आभूतसंप्लवं यावन्नमुञ्चति हरिप्रिया ॥

संप्राप्ते नवरात्रे तु वासन्तेऽश्विनेऽपि वा ।
आचार्याज्ञां पुरस्कृत्य प्रतिपद्दिनमादितः ॥

आरभ्य तन्नवम्यन्तं श्रीमदष्टाक्षरीं शुभाम् ।
जप्त्वा द्वादश साहस्रं श्रीयो विद्यां षडक्षरीम् ॥

चतुर्विंशत्सहस्राणि प्रजपेन्नियतव्रतः ।
त्रिशतं पूजयेन्नित्यं श्री श्रीशौ ब्रह्मविद्यया ॥ –६०

मधुत्रितय संमिश्रं तिलविल्वदलान्वितम् ।
हुत्वाऽथ श्रीषडर्णेन द्विसहस्रं घृतं हुनेत् ॥

भगवद्रश्मिविद्याभिस्त्रेधा हुत्वाज्यमप्यथ ।
प्रदक्षिणं नमस्कृत्य जातवेदस मादरात् ॥

आचार्यं चरणाम्भोजे वहुसस्यसमाकुलाम् ।
सालग्रामशिलायुक्तां बहुदक्षिणयान्विताम् ॥

कुण्डलद्वयसंयुक्तां दद्यात्सिद्ध्यर्थमादरात् ।
आचार्यपत्नीमभ्यर्च्य वासोऽलङ्करणादिभिः ॥

भोजयेद्ब्राह्मणान् शुद्धान् चतुर्विंशत्सुवासिनीः ।
आचार्यादाशिषः प्राप्य तच्छेषं भोजयेद्व्रती ॥ –६५

लभते वत्सरे तस्मिन् धनधान्यसमाकुलम् ।
अचलं महदैश्वर्यं मुक्तारत्नौघसङ्कुलम् ॥

आरोग्यं महदायुष्यं मान्यतां राजसन्निधौ ।
सौभाग्यमपिविज्ञानमृद्धिं पुत्रादिसंयुताम् ॥

अवाप्य जीवन्मुक्तः स्यान्नात्रकार्या विचारणा ।
श्री षडक्षर विद्याया इति ते सिद्धिहेतवः ॥
उक्ता मया महाराज द्वादशार्णस्य वक्ष्यते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे पञ्चत्रिंशोऽध्यायः ॥

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

श्री भगवानुवाच –

द्वादशाक्षर विद्याया महालक्ष्म्यास्ततःपरम् ।
प्रवक्ष्यामि महाराज किञ्चिन्माहात्म्यमिष्टदम् ॥

इन्दिरा द्वादशार्णस्य माहात्म्यं नृपवक्ष्यते ।
यस्य विज्ञानमात्रेण पलायन्ते महापदः ॥

आदौ त्रयीमयीवीजमुद्धृत्याद्य विभेदनम् ।
वान्तं वह्निसमारूढं वामनेत्र विभूषितम् ॥

बिन्दुनादकलाक्रान्तं विन्दुहीनं तदेव च ।
वसुन्धराक्षरं पश्चाद्वायु वैकुण्ठ संयुतम् ॥

द्वादशस्वरसंयुक्तं क्षेत्रपालाक्षरं ततः ।
बिन्दुहीनं रमावर्णं वैकुण्ठवसुधाक्षरम् ॥ –५

मुखवृत्तयुतं व्योम धरित्रीबीजमप्यथ ।
वाणीतन्द्रा वायुयुतं मातृकांत्यर्णमप्यथ ॥

हृदन्वितमियं विद्या द्वादशार्णाश्रियःस्मृता ।
वेदवेदान्तशास्त्रौघसारभूता सनातनी ॥

महापातकसंहर्त्री दारिद्र्याघविभेदिनी ।
सर्वविद्यामयी भक्त महाभाग्य समृद्धिदा ॥

सर्वसौभाग्यजननी सकलापन्निवारिणी ।
सिद्धविद्यामिमां प्राहुर्मुनयो ब्रह्मवादिनः ॥

श्रीमदष्टाक्षरी विद्या जप्तापि शतकोटिशः ।
द्वादशार्णमहालक्ष्मीरहिता निष्फलास्मृता ॥ —१०

ब्रह्मर्षयोऽपि सततं तथा देवर्षयोऽपि च ।
योगिनोऽपि महाभागा जीवन्मुक्ता जितेन्द्रियाः ॥

महालक्ष्मीकलावाप्त्यै द्वादशार्णं जपन्ति हि ।
समस्तापन्निवृत्त्यर्थं सर्वसंपदवाप्तये ॥

द्वादशार्णा महालक्ष्म्या जप्तव्या सर्वसिद्धिदा ।
आयुरारोग्य जननी सर्वोपद्रवनाशिनी ॥

समस्तसंपत्साम्राज्यसिद्धिदा द्वादशाक्षरी ।
विद्यामेनां समाराध्य ब्रह्मरुद्रादयोऽपि च ॥

अचलं महदैश्वर्यं प्राप्तवन्तोऽपि दुर्लभम् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य भृगुर्वा मुनिरुच्यते ॥ —१५

आगतं छन्द इत्युक्तं छन्द आनुष्टुभं तु वा ।
देवता सर्वसंपत्ति महासाम्रज्य नायिका ॥

महालक्ष्मीर्भृगुसुता प्रोक्ता नारायणप्रिया ।
श्रीबीजं बीजमित्युक्तं शक्तिर्नेति रुदीरिता ॥

त्रयीबीजं श्रियोबीजं बीजमन्त्रसमीरितम् ।
शक्तिर्नातः समुद्दिष्टा ततःपश्चात्षडङ्गकम् ॥

षड्दीर्घयुक्तया लक्ष्म्या विन्यसेत्प्रणवाद्यया ।
चतुष्पादैरथ द्वाभ्यां विन्यसेद्वा षडङ्गकम् ॥

आताम्रार्कसहस्रकान्तिमरुणा माकल्पमालोज्ज्वलां
लक्ष्मीशाङ्कसमाश्रितामभयमिष्टान्नाढ्यकुम्भं शुभम् ।
बिभ्राणां कमलंकरैरविरतं पीताम्बरालङ्कृतां
लक्ष्मीं पद्मनिवासिनीं भृगुसुतां वन्दे जगन्मातरम् ॥ –२०

कोटिकन्दर्पलावण्यनिधिं पद्मनिवासिनीम् ।
शुद्धजाम्बूनदाभासां दिव्यालङ्कारशोभिताम् ॥

दिव्यचन्दनलिप्ताङ्गीं दिव्यपुष्पस्रगन्विताम् ।
स्मितवक्त्रां विशालाक्षीं पद्मगर्भसमप्रभाम् ॥

रम्यविद्रुमबिम्बोष्ठीं रक्तकञ्चुकधारिणीम् ।
स्वमूर्ध्नि मुक्तारत्नौघवरछत्रेण शोभिताम् ॥

चामराभ्यां वीज्यमानां सखीभिः परिवारिताम् ।
संतप्तहेमसङ्काश पीताम्बरयुगावृताम् ॥

मूले कल्पतरोर्दिव्यरत्नसिंहासने शुभे ।
लसद्वामाङ्कनिलयामासीनस्य जगत्पतेः ॥ –२५

त्रैलोक्यमातरं वन्दे महालक्ष्मीं त्रयीमयीम् ।
महालक्ष्मीं भगवतः पत्नीं ध्यात्वेत्थमादरात् ॥

श्रीमदष्टाक्षरींविद्या जपहोम परायणः ।
द्वादशार्णं महालक्ष्म्याः शतमष्टाधिकं जपेत् ॥

पूजयेद्भगवद्धाम पार्श्वे नित्यमिमां श्रियम् ।
प्रत्येकमथवा लक्ष्मीं यन्त्रे संपूजयेन्नृपः ॥

त्रिकोणमष्टकोणं च वसुयन्त्रमतः परम् ।
चतुर्द्वार समायुक्तं चतुरस्रमतः परम् ॥

आवाह्यचात्रश्रियं यन्त्रे पूजयेदुपचारकैः ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ —३०

गायत्रीमपि सावित्रीमर्चयेच्च सरस्वतीम् ।
ब्राह्माद्या अष्टकोणेषु दीर्घस्वरविभूषिताः ॥

महेन्द्रप्रमुखानष्टदिक्पालानष्टपत्रके ।
चतुरस्रस्याष्टदिक्षु वज्रादीन्यायुधानि च ॥

इत्थमावरणैर्युक्तां महालक्ष्मीं हरिप्रियाम् ।
अर्चयेद्धूपदीपाद्यैरूपचारैरनुत्तमैः ॥

मन्त्रस्यास्य समृद्ध्यर्थमर्कलक्षं जपेत्पुरः ।
दशांशं तर्पयेदिक्षुरसेन पयसापि वा ॥

हुनेद्द्वादश साहस्रं पङ्कजैस्त्रिमधुप्लुतैः ।
मिथुनानां शतं साग्रमिष्टान्नमपि भोजयेत् ॥ —३५

आचार्यचरणाम्भोजे निष्कसाहस्रमादरात् ।
दद्यान्निष्कशतं वापि सुवर्णं कुण्डलान्वितम् ॥

अथवा नित्यमाचार्य शुश्रूषण पारायणः ।
आचार्य सन्निधौ तिष्ठेद्यावज्जीवमतन्द्रितः ॥

प्राप्नोति महतीं सिद्धिं सुराणामपि दुर्लभाम् ।
सिद्धक्षेत्रेऽथवा रम्यशिखरे पर्वतस्य वा ॥

आचार्यं सन्निधीकृत्य स्वगृहे वा महीपते ।
आश्विनेमासि संप्राप्ते नवरात्रिषु दीक्षितः ॥

सिद्ध्यर्थं द्वादशार्णायाः पुरश्चरण माचरेत् ।
नवरात्राभिधं पर्व वर्षे वर्षे महत्तरम् ॥ —४०

सिद्धिदं सर्वविद्यानां प्राहुरागमपारगाः ।
तत्रापि लक्ष्मीविद्यानां मन्त्रसिद्धिर्विशेषतः ॥

द्वादशार्णमहालक्ष्म्या सिद्धिर्वक्तुं न शक्यते ।
एकैकं दिवसं तत्र रविपर्वसमं विदुः ॥

महती नवमी तत्र चूडामणिशतप्रभा ।
एकैकस्मिन् दिने तत्र जपहोमादिकं कृतम् ॥

अनन्तफलदं ज्ञेयं महासिद्धिप्रदायकम् ।
लक्ष्मी लक्ष्मीशयोस्तत्र विशेषादर्चनादिकम् ॥

तुलापुरुषदानादिफलदं नात्र संशयः ।
प्रतिपद्दिनमारभ्य चाऽष्टम्यन्तमथादरात् ॥ —४५

श्रीमदष्टाक्षरीं विद्यां जपेदर्कसहस्रकम् ।
द्वादशार्णं महालक्ष्म्या अपि तत्र महामते ॥

जपेद् द्वादशसाहस्रं तत्र चाथर्वणेरितम् ।
हृदयं कमलादेव्याः स्तुतिरूपं फलप्रदम् ॥

अवश्यं प्रजपेत्पञ्च चत्वारिंशत्सुसंख्यया ।
अष्टोत्तरशतं नित्यमर्चयेद्ब्रह्मविद्यया ॥

जपस्त्रियामपर्यन्तं पुरश्चरणकर्मणि ।
अतऊर्ध्वं कृते जापे विनाशो भवति ध्रुवम् ॥

निशाया आद्ययामेऽथ पश्चिमेऽपि जपेत्सदा ।
मध्ययामद्वयंत्याज्यं विनाश्रीमन्त्रमन्वहम् ॥ —५०

अर्चयेत्कन्यका एकोत्तरवृद्धिक्रमान्नृप ।
यद्वा मिथुनमेकैकं भोजयेत्प्रत्यहं व्रती ॥

अथ एकोत्तरं भोज्यमन्वहं मिथुनं नृप ।
अथवैकोत्तरा भोज्याः सुवासिन्यः पतिव्रताः ॥

ताम्बूलैर्दक्षिणाभिश्च तोषयेदन्वहं व्रती ।
आचार्यचरणाम्भोजे प्रत्यहं स्वर्णमादरात् ॥

एकोत्तरं प्रदातव्यं निष्कमेकैकशोऽपि वा ।
फलाशी वा हविष्याशी लवणाम्लविवर्जितः ॥

एककालं मिताहारो यद्वाधःशयनान्वितः ।
गन्धपुष्पैरलङ्कृत्य स्वात्मानं भूषणादिभिः ॥

ताम्बूलामोदिवदनो भूत्वा नित्यं जितेन्द्रियः ।
कुर्यान्महोत्सवं नित्यं महालक्ष्म्याः श्रियः पतेः ॥

महानवम्यां ज्वलिते जातवेदसि संस्कृते ।
आदितो जुहुयान्मन्त्रैर्बृहदावरणोदितैः ॥

गव्याज्यतिलसंमिश्रं तिलत्रिमधुसंप्लुतम् ।
श्रीमदष्टार्णमन्त्रेण शताधिकसहस्रकम् ॥

पायसं जुहुयादग्नौ स्वाचार्याज्ञापुरस्सरम् ।
त्रिशताधिकसाहस्रं पश्चाच्छ्रीद्वादशार्णया ॥

तदेव जुहुयादग्नौ पायसं त्रिमधुप्लुतम् ।
त्रेधाऽथ जुहुयादाज्यं रमाहृदयमन्त्रकैः ॥

भगवद्रश्मिविद्याभिर्हुनेद्गव्यघृतं त्रिधा ।
जपादिहोमं कृत्वाऽथ प्रायश्चित्ताहुतीर्हुनेत् ॥

ब्रह्मार्पणाहुतिं कृत्वा प्रणम्याग्निमथादरात् ।
अथपञ्चशतं पुष्पैरर्चयेद्ब्रह्मविद्यया ॥

आचार्यचरणद्वंद्वं भक्त्या साष्टाङ्गमादरात् ।
वर्षद्वयमितस्वर्णनिर्मितं कुण्डलद्वयम् ॥

षष्टिचिह्नकसौवर्णपद्मरागयुतं तु वा ।
कर्षमात्र सुवर्णेन निर्मितं वा सरत्नकम् ॥

कुण्डलद्वितयं रम्यं दद्यादाचार्यकर्णयोः ।
कुण्डलद्वितयाभावे तन्मूल्यमथवाऽर्पयेत् ॥ —६५

गोचर्मसम्मितां भूमिं बहुसस्यसमाकुलाम् ।
आचार्यायार्पयेद्धीमानवश्यं दृढभक्तिमान् ॥

सर्वस्वं दक्षिणां दद्याद्वर्षाशनधनं तु वा ।
सर्वस्वमुत्तमा प्रोक्ता दक्षिणाक्षयसिद्धिदा ॥

वर्षाशनमितद्रव्य दक्षिणापि तथैव हि ।
महासिद्धिप्रदा ज्ञेया तदर्धं मध्यसिद्धिदा ॥

षण्णिष्क दक्षिणा देया दरिद्रेण महीपते ।
धरिण्यभावे तन्मूल्यद्रव्यं श्रीगुरवेऽर्पयेत् ॥

महीप्रतिनिधिद्रव्यं शतनिष्कमुदाहृतम् ।
तदर्धं वा तदर्धं वा वित्तलोभं परित्यजेत् ॥ —७०

सूक्ष्मं वासोयुगं दद्यादङ्गुल्याभरणान्वितम् ।
सालग्रामशिलां शुद्धामेकां दद्यात्सदक्षिणाम् ॥

दद्यात्सदक्षिणां शय्यां परिच्छदसमन्विताम् ।
राजपुत्रो धनाढ्योऽपि निष्कसाहस्रमर्पयेत् ॥

पयस्विनीं सवत्सां च धेनुं दद्यात्सदक्षिणाम् ।
मुक्ताफलानि रत्नानि सन्तिचेद्गुरवेऽर्पयेत् ॥

सालग्रामशिलादानं भूदानं च सदक्षिणम् ।
गोदानमपि शय्याया दानमावश्यकं स्मृतम् ॥

महादरिद्रः कृपणो भवेद्यदि महीपते ।
निष्कत्रयमितं वापि दद्यादाचार्यपादयोः ॥ —७५

तत्राप्यशक्तः पुत्रीं वा दद्याल्लक्षणसंयुताम् ।
पौत्रीं वा कन्यकां दद्यात् सुरूपां च सुलक्षणाम् ॥

तयोरभावे पुत्रैश्च पत्न्याच सहितोऽन्वहम् ।
आचार्यचरणद्वंद्वशुश्रूषणपरोभवेत् ॥

आचार्यपत्नी सम्पूज्या विशेषात्तद्दिने शुभे ।
ताटङ्कहारचिन्ताकाद्यलङ्कारैश्च वाससा ॥

भोज्या नवशतं तत्र सुवासिन्यो दृढव्रताः ।
अथवा नव सम्पूज्या वासोभिर्भोजनादिभिः ॥

महालक्ष्मीधिया साक्षाद्दक्षिणाभिर्विशेषतः ।
आचार्यपत्न्यो बह्वयश्चेत्तत्र पुत्रसमन्विताः ॥ —८०

सैव लक्ष्मीधिया पूज्या वासोऽलङ्करणैः शुभैः ।
आचार्यभावतः सर्वं संकल्प्य मनसा धनम् ॥

भगवत्सन्निधौ कृत्वा तत्सुताय समर्पयेत् ।
आचार्यपत्न्यै दद्याद्वा तत्पौत्रायाथवार्पयेत् ॥

तस्य भ्रात्रेऽथवा दद्यात्सिद्धिकामो महीतले ।
महानवम्यां साम्राज्यलक्ष्मीयोगो भवेद्यदि ॥

महादानान्यथाचार्य चरणद्वितयेऽर्पयेत् ।
महानवम्यामाचार्य चरणद्वितये शुभे ॥

पलद्वयमितं वाऽपि पलमानमथापि वा ।
कृत्वादौ राजतं पात्रं संकल्प्य भगवत्पुरः ॥ —८५

यागद्रव्यं प्रदद्याद्यस्तत्फलं वसुधापते ।
प्रवक्तुमप्यहं शक्तो दातास्याप्यस्म्यहं यतः ॥

इत्थं कृत्वा पुरश्चर्यां नवरात्रे दृढव्रतः ।
उभयोर्विद्ययोः सिद्धिं पुरश्चर्याशतोद्भवाम् ॥

प्राप्नोति सकलां भूप संशयो नाऽत्र विद्यते ।
तेनेष्टमश्वमेधानां सहस्रं दक्षिणान्वितम् ॥

महालक्ष्मीर्भगवता साकं तस्य त्रयीमयी ।
प्रसीदति न संदेहस्सर्वसिद्धिसमन्विता ॥

तस्मिन् संवत्सरे तस्य गृहे रत्नौघ संकुला ।
धनधान्यादि संयुक्ता वसत्येवाचला रमा ॥ —९०

अणिमादिगुणौश्वर्यमपि तस्याशु सिद्ध्यति ।
क्षीणायुः प्राप्तमृत्युश्च महारोगहतोऽपि च ॥

निरामयोऽपि दीर्घायुस्सततं सुखमेधते ।
न धनेन न पत्न्या वा न पुत्रैर्वा वियुज्यते ॥

श्रेयांसि लभते नित्यं कल्याणानि दिने दिने ॥
मुक्ताफलानि रत्नानि धनं धान्यमथाक्षयम् ।

गजाश्वादि समृद्धिश्च नवरात्रव्रताद्भवेत् ।
पुरश्चरण कर्ता यो नवरात्रव्रते शुभे ॥

मामेव तं विजानीहि सिद्धमंत्रं जितेन्द्रियम् ।
इह भुक्त्वाऽखिलान् भोगान् देवतैरपि दुर्लभान् ॥ —९५

दिव्यकन्याशताकीर्णं सर्वभोगसमृद्धिमत् ।
विमानमधिरुह्यान्ते कुलसाहस्रसंयुतः ॥

भगवत्सन्निधौ तिष्ठेत् साक्षाद्भगवदाकृतिः ।
यादृशीजायतेसिद्धिर्विद्यानां नवरात्रके ॥

पुरश्चर्याशतेनाऽपि न सिद्धिस्तादृशी भवेत् ।
साङ्गदक्षिणया युक्तामेकामपि महीपते ॥

नवरात्रव्रते कृत्वा पुरश्चर्यां यतव्रतः ।
विद्यानां महतीं सिद्धिं प्राप्नोत्यपि सुदुर्लभाम् ॥

नवरात्रव्रतसमं नान्यत्सिद्धिप्रदं नृप ।
एकोत्तरं धनं दद्यादथवाचार्यपादयोः ॥ —१००

नवरात्रेऽन्वहं भक्त्या नवम्यां नवनिष्ककम् ।
भूदानसहितं दद्यात्कुण्डलद्वितयान्वितम् ॥

यथेष्टविधिना कृत्वा नवरात्रव्रतं शुभम् ।
वंशाभिवृद्धिसहित आचन्द्रार्कं भवत्यसौ ॥

स्वच्छन्दमरणो भूत्वा श्रियमष्टगुणान्विताम् ।
भुक्त्वेह सकलान्भोगानन्ते याति परांगतिम् ॥

वासन्ते नवरात्रेऽपि कुर्यादित्थं व्रतं शुभम् ।
आचार्यचरणद्वंद्वे पीनां साङ्गां च दक्षिणाम् ॥

निष्कं वा समर्प्याचार्ये दक्षिणां सुदृढव्रतः ।
विद्यासिद्धिमवाप्नोति संशयो नात्र विद्यते ॥ —१०५

नवरात्रव्रतं साङ्गं कृतमाश्विनमासि चेत् ।
नवरात्रव्रतं चैत्रे यथाविभवमाचरेत् ॥

नवरात्रव्रतं साङ्गं क्रियते नाश्विने यदि ।
नवरात्रव्रतं चैत्रे साङ्गं कुर्याद्विधानतः ॥

सूतकेऽपि न सन्त्याज्यं नवरात्रव्रतं शुभम् ।
स्वाचार्यं प्रार्थयित्वाऽपि कारयेन्नवरात्रकम् ॥

आचार्यपुत्रैरथवा कारयेद्विधिना व्रतम् ।
नवरात्रव्रतभ्रंशो यस्य पुंसः प्रजायते ॥

तस्य संवत्सरे हानिर्भविष्यति महीपते ।
आश्विने यदि विघ्नःस्याद्वासन्ते नवरात्रकं ॥ -११०

साङ्गदक्षिणया युक्तमवश्यं व्रतमाचरेत्
सर्वत्रापि महीदानं चतुर्वृषभसंयुतम् ॥

कर्तव्यं श्रेय इच्छद्भिस्साङ्ग दक्षिणयान्वितम् ।
दशमी दिवसे विष्णुनक्षत्रेण समन्विते ॥

तत्रापि श्रीमदष्टार्ण श्रीमन्त्राभ्यां घृतं हुनेत् ।
अष्टोत्तरशतं पश्चाद्विजय श्रीसमृद्धये ॥

आचार्य चरणद्वंद्वे निष्कं वा स्वर्णमर्पयेत् ।
गुरुप्रसादो भोक्तव्य आचार्यस्य गृहेऽपि वा ॥

एकस्मिन् दिवसे वापि सिद्धिदं वसुधापते ।
रहस्यमपि वक्ष्यामि पुरश्चरणमादरात् ॥ -११५

वैशाखे श्रावणेवाऽपि कार्तिके माघमासि वा ।
पुष्ये वा फाल्गुने वापि तत्तन्नक्षत्र संयुता ॥

तत्तद्वासर संयुक्ता पौर्णमासी भवेद्यदि ।
चन्द्रस्य ग्रहणं तत्र महाफलदमीरितम् ॥

विशेषात्सोमवारेण सहितं चन्द्रपर्वचेत् ।
चन्द्रचूडामणिर्नाम्ना योगोऽलभ्योयमीरितः ॥

अमाऽपि सोमसहिता योगः पद्मक उच्यते ।
महापद्मक योगोऽत्र रविपर्व भवेद्यदि ॥

विशेषाच्छ्रावणे मासि वैष्णवर्क्षे समन्वितम् ।
इन्दुवासरसंयुक्तं सोमपर्व भवेद्यदि ॥ —१२०

चन्द्रचूडामणिर्योगोऽलभ्योऽयं भुवि दुर्लभः ।
विपर्वणि च संप्राप्ते चन्द्रपर्वणि वा नृप ॥

एककालं मिताहारस्तत्पूर्वदिवसत्रयम् ।
श्रीमदष्टाक्षरीं विद्यां शताधिक सहस्रकम् ॥

तथैव प्रत्यहं लक्ष्मी द्वादशार्णं जपेदपि ।
पर्वकालेऽथ संप्राप्ते सवितुश्शशिनोऽपि वा ॥

स्नानं कुर्यात्स्पर्शकाले ह्रदेवाऽपि नदीजले ।
केशवादि चतुर्विंशन्नामानि मनसोच्चरन् ॥

चतुर्विंशतिधा स्नात्वा विमुक्तः पापराशिभिः ।
आचार्यं सन्निधीकृत्य विधिवत्संस्कृतेऽनले ॥ —१२५

श्रीमदष्टाक्षरेणादौ त्रिशतं जुहुयात्तिलैः ।
मधुत्रितयसंपृक्तैर्गव्येनाज्येन मिश्रितैः ॥

द्वादशार्णमहालक्ष्म्या शुद्धं गव्याज्यमादरात् ।
मुक्तार्धनाडीपर्यन्तं होमं कुर्याद्विचक्षणः ॥

भगवद्रश्मि विद्याभिरेकैकामाहुतिं हुनेत् ।
प्रदक्षिणीकृत्य ततो ज्वलितं जातवेदसम् ॥

आचार्यचरणद्वंद्वे साष्टाङ्गनतिपूर्वकम ।
सर्वस्वमर्पयेद्धीमान् भगवद्रूपसिद्धये ॥

अथ द्वादशनिष्कं वा पञ्चनिष्कमथापि वा ।
त्रिनिष्कं वार्पयेद्धीमान् वित्तलोभविवर्जितः ॥ —१३०

सालग्रामशिलामेकां पुस्तकं च समर्पयेत् ।
एकालङ्करणं वाऽपि गुरुपत्न्यै समर्पयेत् ॥

सुवर्णं निष्कमात्रं वा तदर्धं वा समर्पयेत् ।
युग्मद्वादशकं भोज्यं मृष्टान्नैर्दक्षिणान्वितैः ॥

आचार्यादाशिषः प्राप्य स्वयं भुञ्जीतवाग्यतः ।
श्रीमदष्टार्णविद्याया द्वादशार्णश्रियोऽपि च ॥

महतीं सिद्धिमाप्नोति देवानामपि दुर्लभाम् ।
रवीन्दुपर्वमात्रेऽपि पुरश्चर्यामिमां शुभाम् ॥

कृत्वा सिद्धिमवाप्नोति शश्वतीं नात्र संशयः ।
चन्द्रचूडामणौ योगे रविचूडामणौ तु वा ॥ —१३५

इत्थं कर्तुः पुरश्चर्यां सिद्धिर्वक्तुं न शक्यते ।
यदि चडामणिर्योगो लभ्यते भूतले नृप ॥

तत्र कर्तुः पुरश्चर्या पुरश्चर्याशतोद्भवा ।
जायते महती सिद्धिर्देवतैरपि दुर्लभा ॥

श्री श्रीशानुग्रहात्तस्य वर्षात्प्रागेव दुर्लभा ।
सिद्ध्यत्येव महालक्ष्मीर्धनधान्यादि सङ्कुला ॥

निरामयमथायुष्यं चिरजीवनहेतुकम् ।
समृद्धिः पुत्रपौत्राद्यैः पशुरत्नादि संयुता ॥

वाचां सिद्धिः कवित्वाद्या सिद्ध्यत्येव न संशयः ।
श्रेयोराशिर्भवत्यस्य निरन्तरमथाक्षयम् ॥ —१४०

भगवत्पदमन्तेस्याद्दशपूर्वैर्दशावरैः ।
भार्गवे वासरे प्राप्ते सततं शंसितव्रतः ॥

प्रातः स्नात्वा विशुद्धात्मा गायत्रीं त्रिशतं जपेत् ।
अष्टाविंशतिधा हुत्वा गायत्र्याऽऽदौ शुभं घृतम् ॥

त्रिशतं जुहुयादाज्यं श्रीमदष्टार्णविद्यया ।
द्वादशार्णश्रिया हुत्वा घृतमष्टोत्तरं शतम् ॥

एकैकामाहुतिं कुर्याद्भगवद्रश्मिभिस्तथा ।
त्रिशतं द्विशतंवाऽपि शतमष्टोत्तरं तु वा ॥

अर्चयेत्पत्रपुष्पैश्च श्रीश्रीशौ ब्रह्मविद्यया ।
मिथुनत्रितयं भोज्यं मिथुनद्वितयं तु वा ॥ —१४५

एकं वा मिथुनं भोज्यं मृष्टान्नैर्दक्षिणान्वितैः ।
आचार्यपत्नीं मासादिभार्गवे वासरे व्रती ॥

समर्चयित्वा विधिना गन्धपुष्पादिभिर्नृप ।
निष्कं निष्कार्धमेकं वा स्वर्णंतस्मै समर्पयेत् ॥

प्रदद्यादपि मृष्टान्नं ताम्बूलं दक्षिणान्वितम् ।
आचार्यपत्न्यसान्निध्ये भगवत्सन्निधौ नृप ॥

संकल्प्य मनसार्यं हस्ते वा स्वर्णमर्पयेत् ।
तत्पुत्रायाऽथवादद्यात्तत्पौत्रायाथवार्पयेत् ॥

अवश्यं मासि मासीत्थमाद्ये भार्गववासरे ।
कृत्वा समस्तवारेषु सम्पूज्य मिथुनान्यथ ॥ —१५०

दक्षिणाभिश्च मृष्टान्नैर्वर्षं वा वर्षपञ्चकम् ।
कुर्याद्दिव्यव्रतं धीमान् यावज्जीवमथापि वा ॥

भृगुवारव्रतसमं व्रतमन्यत्र विद्यते ।
भृगुवारव्रतं कृत्वा रमारमणवल्लभम् ॥

न पत्न्या वा न पुत्रैर्वा न वियुज्येत बन्धुभिः ।
अक्षयं महदैश्वर्यं धनधान्यादि सङ्कुलम् ॥

मुक्तामणिगणाकीर्णं गजवाजिरथाकुलम् ।
सम्प्राप्य चिरमायुष्यं महदारोग्यमक्षयम् ॥

मानुषानपि दिव्यांश्च भोगानाप्नोति शाश्वतान् ।
मन्दभाग्योऽप्यनेनाशु कृतेन जगतीपते ॥ –१५५

कल्याणं लभतेनित्यं नित्यश्रेयः परम्पराम् ।
नित्यानन्दमयः साक्षादन्ते ब्रह्मणि लीयते ॥

श्रावणे पूर्णिमायां च भर्गवेवासरे सदा ।
अक्षयायां तृतीयायां भार्गवे वासरेऽपि च ॥

अष्टार्णद्वादशार्णाभ्यां केशवस्य श्रियोऽपि च ।
प्रत्येकं जुहुयादाज्यं गव्यं त्रिशतमादरात् ॥

भगवद्रश्मिविद्याभि हुत्वैकैकामथाहुतिम् ।
यजेत्पञ्चशतं ब्रह्मविद्यया बिल्वपत्रकैः ॥

सुगान्धिकुसुमैर्वापि भोजयेद्युग्मपञ्चकम् ।
निष्कत्रयं द्विनिष्कं वा निष्कमेक मथापि वा ॥ –१६०

आचार्यपत्न्यै दत्वाऽथ सिद्धिं प्राप्नोत्यथाक्षयाम् ।
भृगुवारव्रतमिदं महदत्यन्तपावनम् ॥

श्रेयस्कामस्सदा कुर्याद्ब्रह्म सायुज्यसिद्धिदम् ।
योगेषु च व्यतीपातो वारेषु भृगुवासरः ॥

द्वावेवतारकौ लोके सर्वापद्भ्यो निरन्तरम् ।
व्यतीपातेऽपि संप्राप्ते स्वाचार्याज्ञापुरस्सरम् ॥

समस्तन्यास सहितां शताधिकसहस्रकम् ।
श्रीमदष्टाक्षरीं जप्त्वा द्वादशार्णमपि श्रियः ॥

शताधिकसहस्रं च प्रजप्त्वा संस्कृतेऽनले ।
त्रिशतं जुहुयादाज्यं श्रीमदष्टार्ण विद्यया ॥ —१६५

श्रीमदष्टार्ण मन्त्रेण शतमष्टोत्तरं हुनेत् ।
आचार्याय तथैकां गां तन्मूल्यं वा समर्पयेत् ॥

निष्कमेकं तदर्धं वा समर्प्याचार्यपादयोः ।
मिथुनत्रितयं भोज्यं पायसान्नसदक्षिणम् ॥

व्यतीपातेऽपि कृत्वेत्थमेकं वा वत्सरं व्रतम् ।
श्रीश्रीशविद्ययोः सिद्धिं प्राप्नोति महतीमपि ॥

विमुच्यते महापापै रूपपापैश्च दारुणैः ।
आयुष्यं महदारोग्यं धनधान्यादि सङ्कुलम् ॥

अचलं महदैश्वर्यं योगं चाष्टाङ्ग संयुतम् ।
अश्रुतानां प्रवक्तृत्वं विद्यानां च महीपते ॥ —१७०

सम्प्राप्य चाक्षयं सौख्यं देहान्ते भगवत्पदम् ।
कुलसाहस्र सहितः संप्राप्नोति न संशयः ॥

श्रीद्वादशार्ण मन्त्रेण जुहुयादरुणाम्बुजैः ।
वसुवृष्टिमवाप्नोति षण्मासाभ्यन्तरे नृप ॥

बैल्वैः फलैर्हुनेद्यस्तु सहस्रत्रितयं शुचिः ।
विद्यानामधिपो भूत्वा संप्राप्नोत्यक्षयां श्रियम् ॥

अक्षयायां तृतीयायामाचार्याज्ञा पुरःसरम् ।
पनसस्य फलैर्बीजरहितैस्त्रिमधुप्लुतैः ॥

स्थूलैर्गव्यघृताभ्यक्तैर्ज्वलिते जातवेदसि ।
त्रिशताधिक साहस्रं श्रीमदष्टार्ण विद्यया ॥ −१७५

हुत्वा श्रीद्वादशार्णेन त्रिशतं जुहुयाद् घृतम् ।
कुर्यादाहुतिमेकैकां भगवद्रश्मिमभिघृतैः ॥

अर्चयेत्त्रिशतं पुष्पैः पत्रैर्वा ब्रह्मविद्यया ।
आचार्यपादयोर्दत्वा निष्कद्वादशकं धनम् ॥

त्रिनिष्कमथवादत्वा गुरुपत्न्यै ततःपरम् ।
ताटङ्काभरणं वाऽपि वालीयुग्ममथापि वा ॥

चिन्ताकाभरणं वापि निष्कं वार्धं तदर्धकम् ।
दत्वा सुवासिनीः पञ्च ब्राह्मणानपि भोजयेत् ॥

आचार्यादाशिषः प्राप्यलक्ष्मी लक्ष्मीशविद्ययोः ।
अक्षयां महतीं सिद्धिं प्राप्नोत्यत्र न संशयः ॥ –१८०

अक्षयं महदैश्वर्यं धनरत्नौघ सङ्कुलम् ।
सौभाग्यमक्षयं दीर्घमायुरारोग्यमक्षयम् ॥

अक्षयं योगमष्टाङ्ग सहितं पुत्रपौत्रकैः ।
सहितामक्षयामृद्धिं प्राप्य भोगांश्च दुर्लभाम् ॥

जातिस्मरश्चिरं भूत्वा याति विष्णोः परं पदम् ।
फलैराम्रोद्भवैः पक्वैर्मधुत्रितयसंप्लुतैः ॥

श्रीमदष्टार्णमन्त्रेण हुत्वा त्रिशतमादरात् ।
अष्टोत्तरशतं हुत्वा द्वादशार्णेन च श्रियः ॥

घृतेनाहुतिमेकैकां कृत्वा श्रीपतिरश्मिभिः ।
वैशाखे मासि कृष्णायामेकादश्यामिदं व्रतम् ॥ –१८५

कृत्वाचार्यपदद्वन्द्वे निष्कत्रितयदक्षिणाम् ।
चूतोत्थफलसाहस्रं द्विशतं त्रिशतं तु वा ॥

समर्प्य तत्परेद्युश्च भोजयेन्मिथुनानि षट् ।
इत्थं कृत्वा महद्भाग्यं प्राप्नोत्यक्षय संपदः ॥

सभासु पूज्यते सर्व भूपालानां च सन्निधौ ।
पुत्रपौत्रवतीमृद्धिं प्राप्यान्ते मुक्तिभाग्भवेत् ॥

श्रीमदष्टार्ण विद्याया विद्या श्री द्वादशाक्षरी ।
इयमेव प्रधानाङ्ग भूतोक्ता परमर्षिभिः ॥

देवता पितृकार्येषु संभोज्याः पङ्क्तिपावनाः ।
साध्व्य एव सुवासिन्यस्संभोज्या वसुधापते ॥ -१९०

पङ्क्तिपावनविप्राग्र्यान्प्रवक्ष्यामि महीपते ।
नित्यं सहस्रगायत्री जपकर्ता महीतले ॥

पुनाति पङ्क्तिसाहस्रं द्विजानामपि जापिनाम् ।
रुद्रजापरतो नित्यं विमुक्तस्सर्वपातकैः ॥
पुनात्यसौ पङ्क्तिशतं पापिनामात्मनां नृप ॥

(कतिपयैर्ग्रन्थैः पूर्णतापेक्ष्यो ऽयमध्यायः)

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे षट्त्रिंशोऽध्यायः ॥



## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

साम्राज्यलक्ष्मी विद्याया माहात्म्यं वसुधापते ।
अतःपरं प्रवक्ष्यामि सावधानमनाःशृणु ॥

त्रयीबीजं समुच्चार्य श्रीरुद्रां भुवनेश्वरीम् ।
व्यञ्जनाद्यमथोद्धृत्य वैकुण्ठाक्षरमप्यथ ॥

भूवर्णं रुद्रसहितं ब्रह्मबीजमतःपरम् ।
ब्रह्मबीजं महीबीजं मुखवृत्तविभूषितम् ॥

आद्यमेकादशयुतं मरुद्बीज मतःपरम् ।
प्रसीदयुगलं पश्चाद्वान्तं वह्निसमन्वितम् ॥

चतुर्थस्वरविन्द्वाख्य मन्तस्थपञ्चमं ततः ।
जातवेदसमारूढं बिन्दुयुक्तमतःपरम् ॥ —५

अन्तस्थाद्यमथोच्चार्य शिवं दीर्घविभूषितम् ।
वसुधां क्षेत्रपालं च वायुवैकुण्ठभूषितम् ॥

सवितृस्वरसंयुक्तं हृदयं च समुद्धरेत् ।
साम्राज्यलक्ष्मीर्हृदये गुप्ता सकलकामधुक् ॥

समस्तापाय संहर्त्री सर्वाधिव्याधि भञ्जिनी ।
महादारिद्र्यदमनी महादुःख विभेदिनी ॥

लक्ष्मीहृदय नाम्नीयं विद्या सकलसिद्धिदा ।
प्रभूणां हृदयज्ञातुर्यथा सौख्यं दिने दिने ॥

तथैव लक्ष्मी हृदयज्ञातुर्नित्यसुखं भवेत् ।
त्रैलोक्यमातुः साम्राज्यश्रियोहृदयमिष्टदम् ॥ —१०

ज्ञात्वैतन्नात्र सन्देहो नित्यं कल्याणभागसौ ।
विद्येयं सर्वसाम्राज्य महासिंहासनेश्वरी ॥

आयुरारोग्यजननी सर्वोपद्रवघातिनी ।
सर्वसंपत्करी सर्वदुःखदारिद्र्य भेदिनी ॥

सततं सुप्रसन्नेयं महालक्ष्मीः फलप्रदा ।
ह्रीश्च लक्ष्मीश्च ते पत्न्याविति पुंसूक्त ईरितम् ॥

तस्मात्रिभुवनेशानी बीजं श्रीबीजमप्यथ ।
यद्विद्यान्तर्गतं साक्षात्प्रसीदेति पदद्वयम् ॥

तस्मादेतत्समा विद्या न दृष्टा कुत्रचित्क्वचित् ।
सौभाग्यजननी लोके समस्तैश्वर्य नायिका ॥ –१५

अणिमादि गुणैश्वर्यप्रदा कैवल्यसिद्धिदा ।
दुर्वाससः पुरा शापहतः सर्वामरप्रभुः ॥

विद्यामेतां समाराध्य प्राप्तवानचलांश्रियम् ।
कुबेरोऽपि पुराराध्य पुलस्त्यस्योपदेशतः ॥

अभूत्समस्तवित्तानां नायकः प्रभुरीश्वरः ।
सृष्टिस्थित्युपसंहारकार्येषु जगतामपि ॥

ब्रह्मविष्णुमहेशाद्यैरपि सर्वत्र पूजिता ।
देवाधिपत्यमिन्द्रेण प्राप्तमस्य जपात् पुरा ॥

अग्निना दाहशक्तित्वं नियन्तृत्वं यमेन च ।
तोयैश्वर्यं वारुणेन वायव्यं वायुना पदम् ॥ –२०

अस्या एवोपासनया प्राप्तं पूर्वं महात्मभिः ।
यस्य नो पश्चिमं जन्म स्वयं नारायणो न चेत् ॥

लक्ष्मीहृदयनाम्नीयं महाविद्या न लभ्यते ।
स्वान्वयव्यापिनीं लक्ष्मीमाचन्द्रार्कमभीप्सता ॥

लक्ष्मीहृदयविद्येयं जप्तव्याऽवश्यमन्वहम् ।
आचार्यचरणद्वन्द्वं देहप्राणधनैरपि ॥

सेव्यं तत्रान्वहं पश्चाद्विद्याश्रीहृदयाभिधा ।
आदरेणैव जप्तव्या सततं श्रेय इच्छता ॥

अल्प श्रीकामिभिर्विप्रैर्न जप्येयं महीपते ।
महेन्द्रपुर साम्राज्य श्रियमिच्छन्यतव्रतः ॥ —२५

जपेदेतां महाविद्यां महासिंहासनेश्वरीम् ।
अलकापुरसाम्राज्य लक्ष्मीमिच्छद्भिरादरात् ॥

लक्ष्मीहृदयविद्येयं जप्तव्याऽवश्यमन्वहम् ।
किमत्रबहुनोक्तेन सार्वभौमत्वमिच्छता ॥

जप्तव्या बहुशो नित्यं विद्येयं च दिने दिने ।
साम्राज्यलक्ष्मीविद्येयं जप्यते येन नित्यशः ॥

अलक्ष्मीः कलहाधारा तद्ग्रामेऽपि न संवसेत् ।
भूमौ समस्तभूपानां सन्निधामतिमान्यताम् ॥

इच्छता नित्यशो जप्या साधकेन यतात्मना ।
योजनानां सहस्रं वा गत्वाऽऽचार्यं पदद्वये ॥ —३०

सर्वस्वमपि दत्वा वा शरीरमपि कन्यकाम् ।
संसेव्य बहुवर्षं च विद्यामेनां श्रियो नृप ॥

गृह्णीयाद्भगवद्रूपसिद्धये श्रीसमृद्धये ।
राज्यलक्ष्मीमहाविद्या प्रदातैव महान् पिता ॥

माता पिता गुरुः स्वामी स्वाचार्यो भगवानपि ।
एतत्कलेबरान्तेऽपि तमाचार्यं न हि त्यजेत् ॥

लक्ष्मीहृदयविद्यायाः प्रभावं वर्णितुं मया ।
न शक्यते महीपाल सहस्रवदनैरपि ॥

लक्ष्मीहृदयविद्यायाः प्रदातारं गुरुं विभुम् ।
साक्षान्मामेवजानीहि सर्वज्ञत्वादिलक्षणम् ॥ —३५

त्यक्त्वा स्वपितरौ पत्नीपुत्रभ्रात्रादिकानपि ।
आचार्यमेव सततं पूजयेत्सर्ववस्तुभिः ॥

आचार्यतोषणान्नित्यं यथा तुष्टो भवाम्यहम् ।
न तथा वाजिमेधानां सहस्रेणापि भूपते ॥

आचार्य एव भगवान् ब्रह्मा विष्णुर्महेश्वरः ।
तत्तोषणेन सन्तुष्टं त्रैलोक्यं सचराचरम् ॥

आचार्याराधनं नित्यं भोगस्वर्गापवर्गदम् ।
आचार्याराधनं कृत्वा मनोवाक्काय कर्मभिः ॥

लक्ष्मीहृदयविद्येयं जप्यते येन भूतले ।
तस्य लक्ष्मीपतिर्लक्ष्म्या सह नित्यं प्रसीदति ॥ —४०

पादुकासिद्धिवेतालगुलिकाञ्जनसिद्धयः ।
अस्या आराधनेनाशु संसिद्ध्यन्ति महीतले ॥

सिद्धयोऽष्टाणिमाद्यश्च शङ्खादिनिधयोऽपि च ।
तद्गृहद्वारे तिष्ठन्ति सततं किङ्करा इव ॥

दक्षः प्रजापतिः पूर्वं भगवान् ब्रह्मनन्दनः ।
रुद्रक्रोधाग्निना दग्धः पुनः प्राचेतसोऽभवत् ॥

आचार्याराधनां कृत्वा विद्यामेनामवाप्य च ।
त्रैलोक्यसर्गकरणसामर्थ्यं च परां श्रियम् ॥

अवाप्य सुमहद्भाग्यं मन्त्रस्यास्य प्रभावतः ।
इयमेव त्रिलोकानां माता सर्व त्रयीमयी ॥ —४५

समस्तविद्यासम्राज्ञी सर्वसंपत्समृद्धिदा ।
योगिनोऽपि महाभागा मुनयोऽपि यतव्रताः ॥

जपन्तीमां महाविद्यामष्टैश्वर्यसमृद्धये ।
अश्वमेधसमोयागो विद्यते चेज्जगत्त्रये ॥

लक्ष्मीहृदयमन्त्रेण सदृशोऽन्यो मनुर्भवेत् ।
पारिजातेन सदृशो विद्यते यदि भूरुहः ॥

लक्ष्मीहृदयमन्त्रेण समोऽस्त्यन्यो मनुर्नृप ।
गङ्गास्नानसहस्राणि वाजिमेधशतानि च ॥

अस्याः सकृज्जपफलमपि दातुं न शक्नुयुः ।
सर्वलोकस्य साम्राज्यमप्ययोध्या पुरश्रियम् ॥ —५०

शक्ता प्रदातुं विद्यैषा जापकस्य न संशयः ।
चिन्तामणिमयं गेहमपिरत्नौघसङ्कुलम् ॥

शक्ता प्रदातुं विद्यैषा हृदयाख्या श्रियो नृप ।
कल्पद्रुमगणान्वापि पारिजातवनान्यपि ॥

कामधेनुसहस्रं वा जापकस्य प्रयच्छति ।
यद्याचार्ये दृढाभक्तिर्यावज्जीवं महीपते ॥

कन्दर्पशतसौभाग्यमजरामरतापि च ।
अस्या आराधनेनाशु सिद्ध्यत्यस्य न संशयः ॥

आचार्यवर्यस्य कृपामवाप्य साम्राज्यलक्ष्मीहृदयप्रजापी ।
कन्दर्पसाहस्र समानकीर्तिं तेजस्वितां धार्मिकतां च नित्यम् ॥ —५५

आयुष्यमारोग्य यशोऽभिवृद्धिं धनं च धान्यं गजवाजियुक्तम् ।
अवाप्य दिव्यानपि मानुषांश्च भोगानथान्ते भगवन्मयः स्यात् ॥

जातिस्मरस्याज्जरया विहीनः स्वच्छन्दमृत्युः सुभगो धरित्र्याम् ।
भूत्वा महेन्द्र प्रतिमोऽथ लक्ष्मीमवाप्य युक्तोऽथभवत्यवश्यम् ॥

आचार्य पादाब्जयुगार्चनेन निरन्तरं श्रीहृदयप्रजापात् ।
समस्तसिद्धैरपि पूजितोऽसौ प्राप्नोत्यशेषानपिवांछितार्थान् ॥

साम्राज्यलक्ष्मी हृदयाख्य विद्या समस्त दुःखौघ विमुक्तिहेतुः ।
समस्तसंपत्समवाप्ति हेतुनाऽन्यास्ति वेदेषु पुराणसंघे ॥

वसिष्ठभृग्वत्रिमहर्षिमुख्याः सुरेश वित्तेश मुखाश्च देवाः ।
साम्राज्यलक्ष्मीहृदयं प्रजप्त्वा कृतार्थतामापुरनुत्तमां च ॥ –६०

साम्राज्यलक्ष्मीहृदयप्रजापी सिद्धाधिपश्चापि भवेत्स एव ।
स एव साक्षाज्जगतां विधाता नारायणोऽसौ भगवान् शिवात्मा ॥

साम्राज्यलक्ष्मीहृदयज्ञमिन्द्रवित्तेशतोयेशमुखाश्च देवाः ।
आचार्यवत्तं परिपूजयन्ति दत्वा समस्तानपि वांछितार्थान् ॥

साम्राज्यलक्ष्मीहृदयप्रजापी गजाश्वरत्नौघयुतं समृद्धम् ।
ऐश्वर्यमक्षय्यमवाप्य पश्चान्नारायणात्मा भगवत्वमेति ॥

साम्राज्य लक्ष्मी विद्याया माहात्म्यमपि भूपते ।
दक्षिणामूर्तिना गीतं महर्षीणां च सन्निधौ ॥

आपत्समुद्रं दुर्वारं तर्तुमिच्छन्महीतले ।
जपेत्साम्राज्यकमलाहृदयाख्यं महामनुम् ॥ –६५

गङ्गाप्रवाहवद्वाक्यमैश्वर्यं कवितादिकम् ।
पुत्रपौत्रादिसहिता समृद्धिर्धनसङ्कुला ॥

अनेककोटिमातङ्गतुरङ्गरथसङ्कुला ।
जरामरणराहित्यं महदारोग्यमक्षयम् ॥

लक्ष्मीहृदयविद्याया जपेनैवाशु सिद्ध्यति ।
लक्ष्मीहृदयविद्या जपहोमरतात्मभिः ॥

आचार्यपत्नी संपूज्या विशेषदिवसे नृप ।
भृगुवारे च पुष्यार्के ग्रहणादिषु पर्वसु ॥

व्यतीपाते महायोगे नवरात्रव्रतादिषु ।
वासोभिरप्यलङ्कारैर्गुरुपत्नीसमर्चनात् ॥ —७०

लक्ष्मीहृदयविद्याया भवेत्सिद्धिरनुत्तमा ।
चन्द्रचूडामणौ योगे रविचूडामणावपि ॥

लक्ष्मीनारायणे योगे योगे पुष्कर नामके ।
अर्द्धोदयाभिधेयोगे जपहोमादिकं शुभम् ॥

प्रसन्नलक्ष्मीविद्याया विशेषेण यतव्रतः ।
कृत्वाचार्यप्रियां पश्चादर्चयित्वा विभूषणैः ॥

महतीं सिद्धिमाप्नोति देवानामपि दुर्लभाम् ।
राज्यप्रदाय राज्ञे वा प्राणदायापि बन्धवे ॥

लक्ष्मीहृदयविद्येयं न देया वसुधापते ।
लक्ष्मीहृदयविद्यायां सिद्धायां वसुधापते ॥ —७५

महेन्द्राद्यष्टदिक्पाल श्रीरप्यस्य गृहे वसेत् ॥
यदिच्छेदात्मनश्श्रेयस्सिद्धिमत्यन्त दुर्लभाम् ॥

नास्तिकाय च मूर्खाय लुब्धाय पिशुनाय च ।
पितृमातृगुरुद्रोह कारिणे वाऽपकारिणे ॥

श्रौताचार विहीनाय भ्रष्टायापि स्वबन्धवे ।
प्रसन्नलक्ष्मीविद्येयं न दातव्या महीपते ॥

यदीदृशाय दुष्टाय विद्यामेतां प्रदास्यति ।
पराङ्मुखोऽस्य भगवान् महालक्ष्मी समन्वितः ।

वेदाः सकलमन्त्राश्च भवन्त्यस्य पराङ्मुखाः ।
अत्यन्तदारुणं शापं प्रदास्यतिजगत्पतिः ॥ —८०

तस्मात्परीक्ष्य शिष्याय विद्यारत्नमिदं श्रियः ।
आचार्येण प्रदातव्यं शुभे मासि शुभे दिने ॥

परस्त्रीनिरतो दुष्टः परद्रव्यापहारकः ।
आचार्यस्य सकृद्वापि मिथ्याभाषणतत्परः ॥

वेदनिन्दापरो नित्यं यागनिन्दापरस्तथा ।
पितृनिन्दापरो नित्यं मूर्ख आचार्यनिन्दकः ॥

अर्थलुब्धः क्रोधशीलः कामुकः श्रुतिवर्जितः ।
परित्यजेदमून् शिष्यानपि सर्वस्वदायकान् ॥

परीक्ष्य सुचिरं कालं शीलं सर्वगुणानपि ।
प्रसन्नलक्ष्मीविद्येयं दातव्याऽतः परं शुभा ॥ –८५

नवभागशिरोरत्नद्विगुणीकृतरोचिषः ।
प्रसन्नलक्ष्मीविद्याया जपकर्तारमन्वहम् ॥

प्रयच्छन्तोऽपि सर्वस्वं तं सेवन्ते नरेश्वराः ।
असुराणां च राज्यश्रीः शत्रूणां च दुरात्मनाम् ॥

प्रसन्नलक्ष्मीकृपया विनायासं च सिद्ध्यति ।
वेदवेदान्ततत्वज्ञो धर्मशास्त्रेषु निष्ठितः ॥

प्रसन्नलक्ष्मीकृपया भवत्याशु न संशयः ।
इयं समस्तविद्यानां साम्राज्ञी सर्वसिद्धिदा ॥

सत्यमेव मयोक्तं ते विश्वासं कुरुभूपते ।
इति दाशरथीयेऽस्मिन् तन्त्रे वेदार्थसङ्ग्रहे ॥ –९०

सप्तत्रिंशमयोऽध्याय उक्तोऽयं श्रीसमृद्धिदः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सप्तत्रिंशोऽध्यायः ॥



## ॥ अथाष्टत्रिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

प्रसन्नलक्ष्मीविद्यायास्साधनं सर्वसिद्धिदम् ।
शृणुराजन्महीपाल यच्छ्रुत्वा मुच्यते नृप ॥

ब्राह्मे मुहूर्त उत्थाय संस्मृत्याचार्यपादुकाम् ।
सन्ध्योपास्तिं ततः कृत्वा नित्यहोमं समाप्य च ॥

पुनः प्रणम्य स्वाचार्यं भगवद्रूपिणं विभुम् ।
प्राणानायम्य मूलेन गायत्र्या वा त्रिधा नृप ॥

कुर्वीत जपसङ्कल्पं श्रीश्रीशप्रीतये ततः ।
ऋषिर्ब्रह्मास्य मन्त्रस्य त्रैलोक्याधिपतिर्विभुः ॥

दक्षः प्रजापतिः कैश्चिदृषिरुक्तो महर्षिभिः ।
छन्दो गायत्रमित्युक्तं महासिह्मासनेश्वरी ॥ –५

समस्तसंपत्साम्राज्यनायिका भगवत्प्रिया ।
देवतोक्ता जगन्माता महालक्ष्मीस्त्रयीमयी ॥

द्वितीयं च तृतीयं च बीजशक्ती क्रमान्नृप ।
प्रणवं कीलकं प्राहुरथाङ्गानि प्रविन्यसेत् ॥

कमले हृदयं प्रोक्तं शिरः पञ्चाक्षरैरथ ।
शिखायां च प्रसीदेति कवचं त्रिभिर्न्यसेत् ॥

नेत्रमस्त्रं न्यसेत्पश्चात् त्रिबीजसहितैः पृथक् ।
अङ्गुलीन्यासमप्येवं कुर्याद्भूपाल साधकः ॥

अमृताम्बुनिधौमध्ये रत्नद्वीपे मनोहरे ।
कल्पद्रुमसमाकीर्णे पारिजातवनावृते ॥ −१०

तन्मध्ये मण्डपे स्वर्ण दिव्यरत्नमये शुभे ।
पारिजाततरोर्मूले नवरत्नविनिर्मिते ॥

दिव्यसिंहासने रम्ये समासीनं जगत्पतिम् ।
दिव्याकल्पशताकीर्णं कालाम्भोधरसन्निभम् ॥

शङ्खचक्रगदापद्मलसद्बाहुचतुष्टयम् ।
श्रीवत्सवक्षसं दिव्य पीताम्बरधरं विभुम् ॥

प्रसन्नवदनं शान्तं पद्मपत्रनिभेक्षणम् ।
तस्योत्सङ्गे समासीनां तप्तजाम्बूनदप्रभाम् ॥

बालार्कायुतसङ्काशां जपाकुसुमसन्निभाम् ।
विलसत्पद्मरागादि दिव्यरत्न विनिर्मितम् ॥ −१५

मुकुटं बिभ्रतीं मूर्ध्नि बालार्कशतसन्निभम् ।
अथ सीमन्तसिन्दूर सहितां चञ्चलालकाम् ॥

प्रसन्नवदनां कर्णताटङ्काभरणान्विताम् ।
मुक्तारत्नसमायुक्तवालीयुगलशोभिताम् ॥

पद्मपत्रविशालाक्षीमञ्जनाञ्चितलोचनाम् ।
कामकोदण्डसङ्काशभ्रूद्वयेन विराजिताम् ॥

ललाटपट्टसंराजत्संतप्ततिलकाङ्किताम् ।
मुक्तामणीगणाकीर्ण नासाभरणशोभिताम् ॥

पक्वबिम्बफलाभोष्ठीं शरच्चन्द्रनिभाननाम् ।
दाडिमीबीजविलसद्दन्तावलिविराजिताम् ॥ —२०

स्मितवक्त्रां विशालाक्षीं विकसत्कमलाननाम् ।
सुवर्णमयचिन्ताकमुक्ताहारविभूषिताम् ॥

एकावलीसमायुक्तां पदकादिविभूषिताम् ।
मुक्तामणिगणाकीर्णकञ्चुकेन विराजिताम् ॥

बालारुणसमप्रख्य दिव्यवस्त्रविराजिताम् ।
कल्पभूरुहसम्भूत कुसुमस्रग्विभूषिताम् ॥

दिव्यचन्दनलिप्ताङ्गीं देवर्षिगणवन्दिताम् ।
सुवर्णकलशाकारपीनोन्नतघनस्तनीम् ॥

मुक्तामाणिक्यविलसत्स्वर्णकाञ्चीगुणान्विताम् ।
शातोदरीं पृथुश्रोणीं निम्ननाभिसमन्विताम् ॥ —२५

कदलीललितस्तम्भसमानोरुद्वयान्विताम् ।
कदलीफलसङ्काशजङ्घायुगल भूषिताम् ॥

गूढगुल्फां च रक्ताब्जनिभपादतलान्विताम् ।
सुवर्णरत्नखचितहस्तपादाङ्गुलीयकाम् ॥

विलसत्कङ्कणकेयूरविलसत्करपल्लवाम् ।
मुक्तामाणिक्यरत्नौघपूरितं वसुपात्रकम् ॥

कमलद्वितयं रम्यमादर्शं दधतीमपि ।
चतुर्भुजां स्फुरद्रत्ननूपुरां भूषणोज्ज्वलाम् ॥

ब्रह्मेशशक्रवित्तेशमकुटोद्भूतकान्तिभिः ।
विराजितपदद्वन्द्वां भक्तत्राणपरायणाम् ॥ –३०

ऋषिभिर्देवतासंघैः कुसुमस्रग्भिरर्चिताम् ।
रत्नौघवर्षिणामूर्ध्नि धृतच्छत्रेण धीमता ॥

वरुणेन समायुक्तां दिक्पालैरष्टभिर्वृताम् ।
धृतचामरवर्येण कामेन च सुतेन च ॥

पार्श्वयोरुभयोर्नित्यं वीज्यमानां त्रयीमयीम् ।
सरस्वत्या गिरिजया शचीमुख्याभिरर्चिताम् ॥

अरुन्धत्यनुसूयादि मुनिपत्निभिरर्चिताम् ।
पुरतो नृत्यमानाभिर्दिव्यकन्याभिरावृताम् ॥

सर्वविद्यामयीं सर्वसंपत्साम्राज्यनायिकाम् ।
सर्वसौभाग्यजननीमणिमादिभिरावृताम् ॥ —३५

शङ्खपद्मादिनिधिभिस्समर्चितपदाम्बुजाम् ।
समस्तसम्पदाधारां सर्वविद्याधिनायिकाम् ॥

समस्तमुक्तारत्नौघवर्षिणीं वेदमातरम् ।
करुणारससम्पूर्णलोचनां परमेश्वरीम् ॥

सर्वपुष्टिकरीमम्बां सर्वरञ्जनकारिणीम् ।
सर्वसम्मोहनकरीं सर्वाकर्षणकारिणीम् ॥

समस्तसिद्धिदां सर्वलोकत्रयवशङ्करीम् ।
समस्तैश्वर्यसंसिद्धिहेतुभूतां सनातनीम् ॥

विजयश्रीकरीं नित्यं साम्राज्यश्रीप्रदायिनीम् ।
सर्वतत्वमयीं भोगयोगस्वर्गापवर्गदाम् ॥ —४०

सर्वयोगमयीं सर्व धर्मशास्त्रस्वरूपिणीम् ।
सर्वधर्ममयीं सर्व तीर्थदैवतरूपिणीम् ॥

सर्वज्ञानमयीं सर्व जगद्रक्षणतत्पराम् ।
नारायणाङ्कनिलयां महालक्ष्मीमुपास्महे ॥

इत्थं चित्ताम्बुजे ध्यायेन्महालक्ष्मीं हरिप्रियाम् ।
अथवाऽऽधारचक्रादिब्रह्मरन्ध्रान्तमीश्वरीम् ॥

ज्वलन्तीं बालसूर्यौघशतसाहस्रसन्निभाम् ।
तेजोमयीं दुराधर्षां ब्रह्माण्डव्यापिनीं पराम् ॥

शुद्धज्ञानमयीं सर्वं तमोहन्त्रीं त्रयीमयीम् ।
अथवा भगवद्रूपमाचार्यं भावयेद्धिया ॥ —४५

आचार्यपत्नीं श्रीरूपां ध्यायेत्साक्षादनन्यधीः ।
साक्षादाचार्यपत्नीं वा महालक्ष्मीधिया ऽन्वहम् ॥

अभ्यर्च्य प्रजपेद्विद्या रत्नश्रीहृदयं नृप ।
अनेनैव प्रमाणेन साक्षादाचार्यमीश्वरम् ॥

मद्रूपिणं विजानीहि तत्पत्नीमपि च श्रियम् ।
तस्मादवश्यमाचार्यं पत्नीपुत्रादिभिर्वृतम् ॥

अर्चयेत्सकलैरर्थैर्मत्प्रसादस्य सिद्धये ।
त्यक्त्वा स्वपितरौ पत्नीपुत्रभ्रात्रादिकानपि ॥

आचार्यं पूजयेदर्थैर्यदीच्छेच्छ्रेय आत्मनः ।
रत्नहेमतुरङ्गौघसङ्कुलां श्रियमिच्छता ॥ —५०

आचार्यानुज्ञया विद्यारत्नं जप्तव्यमादरात् ।
ध्यात्वेत्थमन्वहं विप्रो विद्यारत्नमभीष्टदम् ॥

अष्टोत्तरशतं जप्त्वा लक्ष्मीहृदयमादरात् ।
सौभाग्यं परमं प्राप्य धनं प्राप्नोति वांछितम् ॥

द्विशतं यो जपेन्नित्यं लक्ष्मीहृदयमिष्टदम् ।
अचलां लभते शीघ्रं धनधान्याकुलां श्रियम् ॥

त्रिशतं प्रजपेद्यस्तु लक्ष्मीहृदयमादरात् ।
धनधान्यादिसंपूर्णां मुक्तारत्नसमाकुलाम् ॥

महदैश्वर्यमाप्नोति धनधान्यादि सङ्कुलम् ।
असौभाग्यविनिर्मुक्तः कामवस्तुभगो भवेत् ॥ —५५

चतुश्शतं जपेद्यस्तु लक्ष्मीहृदयमादरात् ।
धनधान्यादि सम्पूर्णां मुक्तारत्नसमाकुलाम् ॥

अचलां लभते लक्ष्मीमायुरारोग्यमक्षयम् ।
कन्दर्पसदृशः कान्त्या भवत्येव न संशयः ॥

जपेत्पञ्चशतं यस्तु लक्ष्मीहृदयमन्वहम् ।
गव्याज्यमनले हुत्वा नित्यं द्वादशधापि वा ॥

मुक्तारत्नगणाकीर्णं धनधान्यादि सङ्कुलम् ।
सहस्रवाजिसहितं महदैश्वर्यमश्नुते ॥

कामवस्तुभगो लोके दीर्घमायुरवाप्य च ।
पुत्रपौत्रवतीमृद्धिं प्राप्य भोगमथाक्षयम् ॥ —६०

वशीकरोति भूपालानथ राजाङ्गना अपि ।
सभासु पूज्यते नित्यं वाक्सिद्धिंचातुलां लभेत् ॥

नियमेन जपेद्यस्तु नित्यं पञ्चशतं नृप ।
अष्टाविंशतिधा हुत्वा गव्याज्यं ज्वलितेऽनले ॥

दीर्घायुष्यमथारोग्यं प्राप्य कन्दर्प सन्निभः ।
भूत्वा राजसहस्राणां नारीणामपि वल्लभः ॥

हेमरत्नतुरङ्गौघगजसंघसमाकुलाम् ।
प्राप्नोत्याशु महालक्ष्मीमचलां रथसङ्कुलाम् ॥

न मन्दभाग्यस्तद्वंशे दरिद्रो वा प्रजायते ।
गङ्गाप्रवाहवत्तस्य वाग्विभूतिर्विजृम्भते ॥ –६५

आभूतसंप्लवं लक्ष्मीस्तद्वंशं न विमुञ्चति ।
वैकुण्ठे रमतेऽन्तेपि दिव्यकन्याशतान्वितः ॥

सहस्रं प्रजपेद्यस्तु प्रसन्नश्रीमहामनुम् ।
सम्प्राप्य चिरजीवत्वं महदारोग्यमक्षयम् ॥

अजरामरणो भूत्वा श्रियमष्टगुणान्विताम् ।
सम्प्राप्य शङ्खपद्मादि निधीनामधिपो भवेत् ॥

महेन्द्रसदृशः श्रीमान् सार्वभौमो भवत्यसौ ।
कल्पान्तमपि राज्यश्रीस्तद्गृहं न विमुञ्चति ॥

प्रसन्नलक्ष्मीहृदयं विद्यारत्नमिदं शुभम् ।
दुर्लभं भुवि मर्त्यानां सर्वकल्याणसिद्धिदम् ॥ –७०

आचार्यचरणद्वन्द्वदृढभक्तो यतव्रतः ।
वैदिकाचारनिरतो विद्यारत्नमिदं जपेत् ॥

मातृवद्भगिनीवच्च परनारीषु सन्ततम् ।
जातस्य निग्रहं कुर्यात्कामस्यान्तर्गतस्य च ॥

आत्मानं गन्धपुष्पाद्यैरलङ्कुर्याद्दिने दिने ।
शयीत शुद्धशय्यायां तरुण्या सह भार्यया ॥

पश्चिमाभिमुखो नित्यं भुञ्जीयादन्नमादरात् ।
आचार्यपत्नीं श्रीबुद्ध्या पूजयेद्धनसंचयैः ॥

नवरात्र व्यतीपात भृगुवार व्रतादिषु ।
श्रीश्रीपतिधिया भूप मिथुनान्येव भोजयेत् ॥ —७५

जम्बूप्रवालं दृष्टं चेच्छिरसा धार्यमेव हि ।
कमलं बिल्वपत्रं च तुलसीदलमप्यथ ॥

न मूर्ध्नि धारयेद्धीमान् श्रेयस्कामो द्विजोत्तमः ।
अवश्यं नित्यकर्माणि कुर्यादेवान्वहं गृही ॥

मुक्ताफलानि रम्याणि कुण्डलादि विभूषणम् ।
आचार्यायार्पयेद्धीमान् नित्यसंपत्समृद्धये ॥

सुवासिन्यस्समभ्यर्च्या वासोऽलङ्कारभोजनैः ।
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्ततः परम् ॥

त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्चेष्टसिद्धिदा ।
खण्डत्रितयसंयुक्ता विद्या पञ्चदशाक्षरी ॥ —८०

मायात्रितयसंयुक्ता श्रीविद्येति प्रकीर्तिता ।
एकाक्षरी सदालक्ष्मीर्महासाम्राज्यदायिनी ॥

लक्ष्मीहृदयविद्येयं सप्तविंशाक्षरी शुभा ।
महालक्ष्मीति विख्याता सर्वसाम्राज्यनायिका ॥

त्र्यक्षराथ त्रिशक्त्याख्यलक्ष्मीः साम्राज्यसिद्धिदा ।
आदावन्ते श्रियोबीजसहिताष्टाक्षरी शुभा ॥

साम्राज्यलक्ष्मीर्विख्याता महासाम्राज्य सिद्धिदा ।
इच्छता सर्वसाम्राज्यलक्ष्मीं त्रैलोक्यदुर्लभाम् ॥

चक्रराजे जगन्मातुरयोध्या नगराभिधे ।
कर्तव्या विधिना पूजा नवरात्रव्रतादिषु ॥ —८५

न स्त्रीनिन्दां प्रकुर्वीत नान्यस्त्रीषु समागमम् ।
ताम्बूलं न त्यजेद्धीमान् त्यजेद्धासश्च कुत्सितम् ॥

रात्रौ दधि न भोक्तव्यं न कपित्थफलं तथा ।
आचार्यपुत्रेऽप्याचार्यधिया पूजनमाचरेत् ॥

आचार्याज्ञां समुल्लंघ्य यत्रकुत्रापि वा नृप ।
श्वानयोनि शतं गत्वा चण्डालेष्वभिजायते ॥

आचार्यनिन्दाश्रवणं गृहेऽन्यस्य तु भोजनम् ।
परनारीषु संसर्गः कुले पतनहेतवः ॥

आचार्योक्तं सदाकार्यमकार्यमपि भूपते ।
तुलसीं बिल्वपत्रं च दृष्ट्वा प्रणतिमाचरेत् ॥ –९०

न भक्षयेत्फलं बैल्वं प्राणान्तेऽपि महीपते ।
इत्थमाचार्यनिरतो विष्णुपूजनतत्परः ॥

श्रियमाप्नोति महतीं देवानामपि दुर्लभाम् ।
प्रसन्नलक्ष्मीं प्रजपन् श्रीसूक्तमपि संजपेत् ॥

आथर्वणं जपेद्वापि लक्ष्मीहृदयमिष्टदम् ।
भार्गवेण पुरा दृष्टं श्लोकरूपं यशस्करम् ॥

लक्ष्मीसहस्रनामाख्यस्तोत्रं वा प्रत्यहं जपेत् ।
कोल्हापुरमहालक्ष्मी श्लोकाष्टकमथापि वा ॥

श्रीमदष्टाक्षरीं विद्यामवश्यं प्रत्यहं जपेत् ।
अष्टादशाक्षरीं विद्यामथवा प्रत्यहं जपेत् ॥ –९५

नित्यहोमं द्विजः कुर्यात्सायं प्रातर्दिने दिने ।
लक्ष्मीहृदयविद्यायाः सिद्धिकामो दिने दिने ॥
कृत्वेत्थं महतींसिद्धिं प्राप्नोत्यत्र न संशयः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे अष्टत्रिंशोऽध्यायः ॥



## ॥ अथैकोन चत्वारिंशोऽध्यायः ॥

श्री भगवानुवाच –

पूजाविधानं वक्ष्यामि यन्त्रोद्धारपुरस्सरम् ।
यच्छ्रुत्वाऽपि नरो धीमान् सर्वापद्भ्यो विमुच्यते ॥

वेदादिस्थितसाध्यनामयुगलश्रीशक्तिमायान्वितं
किञ्जल्केषु दिनेशपत्रविलसन्मन्त्राक्षरं तद्बहिः ।
पद्मव्यञ्जनकेसरं स्वरलसत्पत्राष्टयुग्मं धरा-
बिंबाभ्यां षडन्तया त्वरितया यन्त्रं लिखेद्वेष्टितम् ॥

भूपुरद्वयकोणेषु हक्षौ लेख्यौ पुनःपुनः ।
महालक्ष्मीयन्त्रमिदं सर्वैश्वर्यफलप्रदम् ॥

सर्वदुःखप्रशमनं सर्वापद्विनिवारणम् ।
किमत्रबहुनोक्तेनापरं यस्मान्न विद्यते ॥

अस्मिन् यन्त्रे महालक्ष्मीमर्चयेद्भगवत्प्रियाम् ।
आदावङ्गानि सम्पूज्य वह्नीशासुरदिक्षु च ॥ –५

श्रीधरं च हृषीकेशं वैकुण्ठं विश्वरूपकम् ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥

पत्रमूलेषु सम्पूज्य पत्रमध्ये ततःपरम् ।
गायत्रीं पार्वतीं चान्द्रीं शचीं दिक्षु प्रपूजयेत् ॥

श्रीधरश्च हृषीकेशो वैकुण्ठो विश्वरूपभृत् ।
विदिक्षु पूजयेदेतान् सर्वकामार्थसिद्धये ॥

तदग्रेष्वर्चयेद्वार्णान् महालक्ष्म्याः क्रमादमून् ।
अनुरागो विसंवादो विजयो वल्लभो मदः ॥

हर्षो बलश्च तेजस्वी पुर आरभ्य पूजयेत् ।
शक्रादीनष्टदिक्पालान् चतुरस्राष्ट दिक्षु च ॥

तदायुधानि तद्बाह्ये क्रमेण परिपूजयेत् ।
अर्चाक्रमान्तरमथो वक्ष्यामि शृणुभूपते ॥

श्रीबीजेनासनं दत्वा मूर्तिं मूलेन कल्पयेत् ।
पूजयेद्दक्षिणे पार्श्वे देव्याश्शङ्करनन्दनम् ॥

अन्यत्र पुष्पधन्वानं पुष्पाञ्जलिकरं यजेत् ।
अङ्गानि पूर्वमुक्तेषु स्थानेषु विधिवद्यजेत् ॥

उमाद्याः पत्र मध्यस्था अष्टौ शक्तीर्यजेत् क्रमात् ।
उमा भूः श्रीसरस्वत्यौ दुर्गादेवी रतिस्ततः ॥

गायत्रीदेव्युषाचेति पद्महस्ताः सुभूषणाः ।
जह्नुसूर्यसुतेऽभ्यर्च्ये पादप्रक्षालनोद्यते ॥

शङ्खपद्मनिधीपूज्यौ पार्श्वयोर्धृत चामरौ ।
धृतातपत्रं वरुणमर्चयेत्पश्चिमे ततः ॥

मेषादिराशीन् परितो यजेदथ नवग्रहान् ।
अर्चयेद्दिग्गजान् दिक्षु चतुर्दन्तविभूषितान् ॥

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्यदन्तः सार्वभौमः सुप्रतीकश्चते क्रमात् ॥

शक्रादीनर्चयेत्पश्चाद्वज्रादीनपि तद्बहिः ।
आगमोक्तेन विधिना सुगन्धैः सुमनोहरैः ॥

अर्चयेद्गन्धपुष्पाद्यैर्देवीमन्वहमादरात् ।
इत्थमभ्यर्च्य विधिवत् प्रसन्नां कमलालयाम् ॥ –२०

विमुक्तः सकलापद्भ्यः सम्प्राप्य महतीं श्रियम् ।
आयुष्यं महदारोग्यं प्राप्य कैवल्यमश्नुते ॥

वेदान्तेष्वपि वेदेषु पुराणेष्वखिलेष्वपि ।
सुगुप्तमपि वक्ष्यामि यन्त्रराजं महीपते ॥

बिन्दुचक्रं विलिख्यादौ त्रिकोणं विलिखेदथ ।
अष्टमं च ततो लेख्यं दशारद्वितयं ततः ॥

मन्वस्रं विलिखेत्पश्चाद्वृत्तमष्टदलान्वितम् ।
षोडशारं ततो लेख्यं पुनर्वृत्तसमन्वितम् ॥

चतुरस्रत्रयं पश्चाच्चतुर्द्वारविभूषितम् ।
अयोध्यापुरनामेदं लक्ष्मीनारायणाभिधम् ॥ –२५

शिवशक्तिमयं प्राहुरेतच्छ्रीचक्रमित्यपि ।
मातृकालेखनं कुर्याद्विधानेनात्र भूपते ॥

एतद्गुप्ततरं चक्रमागमेषु श्रुतिष्वपि ।
अयोध्यानगरं नाम्ना महासाम्राज्यसिद्धिदम् ॥

शिवशक्त्यात्मकं प्रोक्तं लक्ष्मीनारायणाभिधम् ।
नवयोन्यात्मकं चक्रं श्रीचक्रं चेति कथ्यते ॥

श्रीदेवी या जगन्माता चित्कलोक्ता त्रयीमयी ।
त्रिपुरा ललिता नाम्ना महालक्ष्मीर्निगद्यते ॥

साऽत्रपूज्या भगवती भगवत्सहिता नृप ।
नवचक्रात्मकमिदं संवत्सरमयं शुभम् ॥ —३०

श्रीश्रीपती समभ्यर्च्यावथोमाशङ्करावपि ।
त्रैलोक्यमोहनं चक्रं चतुरस्रत्रयं स्मृतम् ॥

सर्वाशापूरकं चक्रं षोडशारमिति स्मृतम् ।
सर्वसंक्षोभणं चक्रमष्टपत्रद्वयं विदुः ॥

चतुर्दशारं प्रथितं सर्वसौभाग्यदायकम् ।
अन्तर्दशारमत्रोक्तं सर्वरक्षाकरं परम् ॥
सर्वरोगहरं चक्रमष्टारमिति कथ्यते ॥

सर्वसिद्धिप्रदं चक्रं त्रिकोणं सुमनोहरम् ।
सर्वानन्दमयं चक्रं बैन्दवं पारमैश्वरम् ॥

चक्रमेतन्महीपाल नवचक्रात्मकं शुभम् ।
त्रैलोक्याकर्षणकरं जगद्रञ्जनकारकम् ॥ −३५

घरापवादभीतिघ्नमल्पमृत्युनिवारणम् ।
सर्वसौभाग्यदं भद्रं समस्तैश्वर्यसिद्धिदम् ॥

सर्वविद्याप्रदं सर्वमहाकल्याण सिद्धिदम् ।
सर्वसंग्रामजयदं सर्वशत्रुविमर्दनम् ॥

सर्वारिष्टप्रशमनं महादारिद्र्यभञ्जनम् ।
सर्वदुःखप्रशमनं सर्वाधिव्याधिनाशनम् ॥

समस्तसंपत्साम्राज्यसिद्धिदं मुक्तिसिद्धिदम् ।
अत्र सा ललिता साक्षात्पूज्यते कमलालया ॥

भगवत्सहिता नित्यं महानित्या सनातनी ।
पूजाऽत्र त्रिविधा प्रोक्ता वेदवेदान्त वेदिभिः ॥ −४०

पीठपूजादिमात्रोक्ता लयाङ्गाख्या ततः परम् ।
भोगाङ्गाख्या तृतीयास्यादिति पूजा त्रिधा स्मृता ॥

अवश्यमत्र कर्तव्या लयाङ्गार्चा दिने दिने ।
त्रिविधार्चाऽत्र कर्तव्या नवरात्रव्रतादिषु ॥

अमृताम्बुधिमारभ्य विशेषार्घ्यान्तमन्वहम् ।
कथिता पीठपूजेयं नित्यसौभाग्यसिद्धिदा ॥

उपचारैश्चतुष्षष्टि संख्याकैर्भगवत्प्रियाम् ।
उपचर्य षडङ्गानां नित्यमपि प्रपूजनम् ॥

गुरुपङ्क्त्यर्चनं पश्चाल्लयाङ्गेति प्रकीर्तिता ।
अणिमासिद्धिमारभ्य श्रीदेवीपूजनान्तिमम् ॥ –४५

भोगपूजनं प्रोक्तं महासाम्राज्यसिद्धिदम् ।
त्रिविधार्चां तु कुर्वाणो मासमेकं तु वा नृप ॥

साक्षात्पश्यति चक्षुर्भ्यां श्रीदेवीं नात्र संशयः ।
चतुर्विंशति संख्याकैरूपचारैरथादितः ॥

अभ्यर्च्य लक्ष्मीलक्ष्मीशौ युग्ममालाख्यविद्यया ।
लक्ष्मीनारायणौ सर्वमिथुनावरणान्वितौ ॥

अर्चयेद्गन्धपुष्पाद्यैर्भोगमोक्ष समृद्धये ।
अस्मिन् तन्त्रे मयाप्रोक्ते वेदसारार्थसंग्रहे ॥

साम्राज्यलक्ष्मीविद्यानां पञ्चानामपि साधनम् ।
चक्रस्य पूजाविस्तारो द्वितीयेऽर्धे प्रवक्ष्यते ॥ –५०

या सप्तविंशदर्णेयं साम्राज्यश्रिय इष्टदा ।
अत्र सा कथ्यते विद्या चतुर्वर्गफलप्रदा ॥

साम्राज्यश्रीमहाविद्यां चक्रराजस्य संनिधौ ।
दशधाऽपि स्मरन् भूप नित्यां सिद्धिमवाप्नुयात् ॥

कालात्मकमिदं चक्रं प्रपञ्चात्मक मुच्यते ।
सर्ववेदमयं प्रोक्तं सर्वदेवमयं तथा ॥

अयोध्यानगरंचक्रं शालग्रामशिलान्वितम् ।
येन प्रपूज्यते नित्यं स एव भगवन्मयः ॥

जाह्नवी सरितां श्रेष्ठा यमुना च सरस्वती ।
गोदावरी भीमरथी कावेरी कृष्णवेणिका ॥ —५५

शतद्रुर्नर्मदा सिन्धुर्विपाशा च पयोष्णिका ।
चक्रराजस्य सान्निध्ये निवसन्ति न संशयः ॥

वैदिकाचारनिरतो वेदाध्ययन तत्परः ।
आचार्यचरणद्वन्द्वदृढभक्तो यतव्रतः ॥

चक्रमभ्यर्चयेद्धीमान् सर्वसाम्राज्यसिद्धिदम् ।
लघुचक्रं बृहच्चक्रमयोध्यानगरं तु वा ॥

रमाया यन्त्रमथवा स्वाचार्याज्ञापुरस्सरम् ।
लिखितं काञ्चने रौप्ये ताम्रे वा भूर्जपत्रके ॥

पूजयित्वा जपेदेतां विद्यां साम्राज्य सिद्धिदाम् ।
एतादृशी महाविद्या सर्वसाम्राज्यसिद्धिदा ॥ —६०

श्रुता दृष्टाऽपि वा वेदवेदान्तेषु न कुत्रचित् ।
सम्पदस्सर्वदेवानामपि योगरतात्मनाम् ॥

रक्षसामपि यक्षाणां गन्धर्वाणां च सम्पदः ।
किन्नराणां च सिद्धानामसुराणां च भूपते ॥

प्रसन्नलक्ष्मीजपतस्सर्वास्सिद्ध्यन्ति सिद्धयः ।
सप्तद्वीपपतित्वं वा गजाश्वरथसङ्कुलम् ॥

समस्त वाक्पतित्वं च भोगाश्चामरदुर्लभाः ।
सिद्ध्यन्त्यस्य न सन्देहः प्रसन्नश्रीप्रसादतः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे एकोनचत्वारिंशोऽध्यायः ॥



## ॥ अथ चत्वारिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

प्रसन्नलक्ष्मी विद्यायास्साधनं सर्वसिद्धिदम् ।
शृणु राजन् प्रवक्ष्यामि समाहितमनाःशृणु ॥

विद्यानामपि सर्वासां पुरश्चर्यां विना नृप ।
न सिध्दिः कथ्यते लोके सिध्दिं कुर्यात्ततः पुमान् ॥

पुरश्चर्यां विना होम जपकोटिशतैरपि ।
न सिध्दिस्सर्वमन्त्राणां कथ्यतेपुरुषर्षभ ॥

पुरश्चर्या कृता येन साङ्गहोमजपान्विता ।
पूर्णदक्षिणया युक्ता स सद्यस्सिध्दिमश्नुते ॥

देवतोपासना यादृक् फलमिष्टं प्रयच्छति ।
न तादृशफलं दानसहस्रेणाऽपि लभ्यते ॥ –५

नारायणस्समस्तस्य प्रपञ्चस्यास्य नायकः ।
विश्वात्मा यज्ञपुरुष एक एवेति कथ्यते ॥

एकैव जगतां माता महालक्ष्मीस्त्रयीमयी ।
पत्नी भगवतः सर्गस्थितिसंहारकारिणी ॥

तस्माद्भगवतीयुक्तं भगवन्तं जगत्पतिम् ।
उपास्य भगवद्रूपं संप्राप्नोति हि नान्यथा ॥

न दानैर्नतपोभिर्वा न यागैरखिलैरपि ।
ब्रह्मतादात्म्यसंसिद्धिः श्रीश्रीशोपासनां विना ॥

तस्मादवश्यमष्टार्णविद्या वाच्यं सनातनम् ।
नारायणं त्रिजगतां पतिमच्युतमीश्वरम् ॥ –१०

उपास्यादौ त्रयीरूपां पत्नीमपि जगत्पतेः ।
महालक्ष्मीमुपास्याथ ब्रह्मतादात्म्यसिद्धिभाक् ॥

बलीयसी पितुरपि माता स्वसुतरक्षणे ।
भक्ताः पुत्रा इति ज्ञेयाः श्रियश्च कमलापतेः ॥

भक्तसंरक्षणे लक्ष्मीस्तस्माद्भगवतोऽधिका ।
मातरं सर्वजगतां महालक्ष्मीं हरिप्रियाम् ॥

ये भजन्ति कृतार्थास्ते भगवद्रूपधारिणः ।
त एव भगवत्पुत्रा महालक्ष्म्याः सुता अपि ॥

तस्मादवश्यं विद्यायाः सिद्ध्यर्थं यत्नवान् भवेत् ।
प्रसन्नकमलाविद्या सिद्धा यस्य महीतले ॥ –१५

भगवत्सहिता लक्ष्मीस्तं पालयति पुत्रवत् ।
प्रसन्नलक्ष्मीविद्यायास्सिद्ध्यर्थं नियतव्रतः ॥

पुरश्चर्यां नरं कृत्वा साङ्गदक्षिणयाऽन्विताम् ।
सद्यस्सिद्धिमवाप्नोति महतीं नात्र संशयः ॥

पूर्णदक्षिणया युक्ता साङ्गहोमजपान्विता ।
पुरश्चर्या कृता येन गुर्वी लघ्वी च वा नृप ॥

स विद्यासिद्धिमासाद्य भवत्येव हरिः स्वयम् ।
आचार्यः पूज्यते यत्र पुरश्चरणकर्मणि ॥

रत्नैर्वासोभिरर्थैश्च पूर्णदक्षिणयान्वितैः ।
तत्पुरश्चरणं साङ्गं सद्यः सिद्धिप्रदं भवेत् ॥ –२०

वित्तशाठ्येन यस्मात्तु किञ्चिल्लोपो भवेद्यदि ।
कोटिशोऽपि पुरश्चर्या निष्फला सा प्रकीर्तिता ॥

आचार्यपुत्रमाचार्यसन्निधौ तद्विधयार्चयेत् ।
आचार्यपत्नीमथवा तत्पौत्रमथवार्चयेत् ॥

पौत्राभावे दुहितरं दौहित्रं वा प्रपूजयेत् ।
अर्चयेद्भ्रातरं तस्य पौत्राभावे महीपते ॥

तदभावे भागिनेयं सर्वाभावेश्रियःपतेः ।
सन्निधावर्पयित्वाऽथ सत्पात्राय समर्पयेत् ॥

कुर्याद्देवालयं वापि गुरुदक्षिणया नृप ।
विधिनाऽपि कृतानीह महादानानि भूरिशः ॥ –२५

आचार्यनिष्कदानस्य कलां नार्हन्ति षोडशीम् ।
शुद्धेऽतिपावने देशे पुरश्चरणमाचरेत् ॥

भूवैकुण्ठमिति प्रोक्तं ममेदं बदरीवनम् ।
यत्र साऽलक नन्दा च निर्गता हिमवद्गिरेः ॥

ततो वाराणसी पुण्या महासिद्धिप्रदायिनी ।
तीर्थराजः प्रयागोऽत्र महासिद्धिकरः स्मृतः ॥

जगन्नाथपदं पुण्यं क्षेत्रं श्रीपुरुषोत्तमम् ।
अयोध्या मथुरा माया काञ्चिकाऽवन्तिकापुरी ॥

द्वारका सिद्धिदा एता मुक्तिपुर्यो महीतले ।
गोकर्णं नैमिषं पुण्यं कुरुक्षेत्रमतःपरम् ॥ –३०

गङ्गासागरसंयोगः पुण्यो रामगिरिस्तथा ।
प्रभासं सिन्धुतीरं च पद्मनाभमतःपरम् ॥

वशिष्टसिन्धुसंयोगः पर्वतोऽथत्रियम्बकः ।
सह्याचलो महेन्द्रश्च मलयः श्रीगिरिस्तथा ॥

शेषाचलो रङ्गधाम क्षेत्रमत्यन्तपावनम् ।
कुम्भकोणं सेतुबन्धो दक्षिणे मदुरैपुरी ॥

पाण्डुरङ्गं सिद्धवटमहोबलमनुत्तमम् ।
अथ सिह्माचलादीनि पुण्यक्षेत्राणि भूतले ॥

बहूनि सन्ति मर्त्यानां सद्यः सिद्धिकराण्यपि ।
गङ्गातीरं सरस्वत्या यमुनायास्तटं परम् ॥ —३५

अथ गोदावरी तीरं नर्मदातीरमप्यथ ।
सुवर्णमुखरीतीरं सप्त गोदावरीतटम् ॥

अथ भीमरथीतीरं तुङ्गभद्रातटं शुभम् ।
कृष्णवेणीतटं शुद्धं सद्यस्सिद्धि प्रदायकम् ॥

सर्वासामपि विद्यानां पुरश्चरणसिद्धये ।
उक्तान्येतानि लोकेषु सद्यस्सिद्धिकराणि हि ॥

सर्वत्राचार्यसान्निध्यं विशिष्टं मङ्गलप्रदम् ।
अन्यथाऽपि न सिद्धिः स्याद्विनाचार्यसन्निधेः ॥

त्रिकलिङ्गेऽपि देशे वा यद्याचार्यस्य सन्निधिः ।
तदेव सर्वविद्यानां सिद्धिदं क्षेत्रमीरितम् ॥ —४०

आचार्यसन्निधौ पुण्यक्षेत्रे सिद्धिप्रदायके ।
प्रसन्नलक्ष्मीविद्यायाः पुरश्चरणमाचरेत् ॥

असत्यभाषणं जैह्मञ्च परनारीरतिं तथा ।
विप्रद्रोहमसूयां च निषिद्धान्नस्य भक्षणम् ॥

असत्यभाषणं नित्यं दूरतः परिवर्जयेत् ।
आचार्यनिन्दा यत्रस्यात् तद्देशं च परित्यजेत् ॥

आचार्यनिन्दाकर्तारं पितरं मातरं तु वा ।
भ्रातरं स्वसुतं वापि पत्नीं पुत्रीमथापि वा ॥

अवश्यं दण्डयेत्तत्र न दोषोऽस्ति महीपते ।
आचार्यनिन्दाकर्तारं यदि शक्तो न दण्डयेत् ॥ –४५

आचन्द्रार्कमसौ घोरनरकेषु निमज्जति ।
किञ्चानेनकृतं यागशतं सम्पूर्णदक्षिणम् ॥

अवश्यं निष्फलं प्रोक्तं पूर्वाचार्यैर्महर्षिभिः ।
ब्रह्महत्यादि पापानां मन्वाद्यैः परमर्षिभिः ॥

निष्कृतिः कथिता शास्त्रे न गुरुद्रोहकारिणः ।
आचार्यनिन्दा यत्र स्यात् तं त्यजेदन्त्यजं यथा ॥

कर्णौ पिधाय वाऽन्यत्र गन्तव्यं बलवर्जितैः ।
सप्तद्वीपवतीं पृथ्वीं धनधान्यौघसङ्कुलाम् ॥

ऋणवानेव दत्वाऽपि स्वाचार्याय दिने दिने ।
निष्कमात्रं प्रतिज्ञातमप्याचार्याय भूपते ॥ –५०

ब्रह्माण्डकोटिसदृशमृणं मासान्न संशयः ।
ब्रह्माण्डकोटिदानाद्वा पात्रभूतेभ्य आदरात् ॥

अपि सर्वस्वदानेन तदृणं न विनश्यति ।
मासान्मासद्वयाद्वापि त्रिभिर्मासैरथापि वा ॥

तदृणं वृद्धिसहितमाचार्याय समर्पयेत् ।
समर्प्य मेरुतुल्यं वा तदूर्ध्वं स्वर्णमादरात् ॥

तदृणान्न विमुक्तः स्यादिति शास्त्रेषु निश्चितम् ।
अश्वमेधसहस्रस्य कर्ता दानशतस्य वा ॥

आचार्यचरणद्वन्द्वदृढभक्तसमो न हि ।
तस्मादाचार्यपादाब्ज दृढभक्तो यतव्रतः ॥ –५५

विद्यां प्रसन्नलक्ष्म्याख्यां श्रेयस्कामः सदा जपेत् ।
सिद्ध्यर्थं यत्नवानादौ पुरश्चरणमाचरेत् ॥

साङ्गदक्षिणयायुक्तपुरश्चरणकृद्द्विजः ।
देवतैरपि पूज्यः स्याद्विद्यासिद्धो महीतले ॥

फलाश्येकान्तराशी वा लवणान्नविवर्जितः ।
भुञ्जानो वा हविष्यान्नमेकभक्ताशनोऽपि वा ॥

प्राजापत्यव्रती वा स्याद्यद्वा चान्द्रायणव्रती ।
पञ्चगव्याशनोवाऽपि नित्यस्नायी जितेन्द्रियः ॥

वैदिकाचारसहितो दुष्टसंसर्गवर्जितः ।
अधःशायी ब्रह्मचारी सद्गोष्ठीनिरतस्सदा ॥ —६०

तुलसीवनमध्ये वा वने वा बिल्वमूलगः ।
आचार्यं सन्निधीकृत्य साधयेद्भगवत्प्रियाम् ॥

पुरश्चर्याजपो लक्षसंख्यया स्यात्कृतेयुगे ।
लक्षद्वयं स्यात्त्रेतायां त्रिलक्षं द्वापरेयुगे ॥

कलौयुगे चतुर्लक्षजपं प्राहुर्महर्षयः ।
कृतयुगे सदा विप्रा वेदाध्ययनतत्पराः ॥

आपत्कालेऽपि सततं न वदन्त्यनृतं वचः ।
गुर्वर्थमेव सततमर्जयन्ति धनं नृप ॥

अहोरात्रं सदाचार्यशुश्रूषानिरताः कृते ।
अग्निहोत्रे रता नित्यं यज्वानो भूरिदक्षिणाः ॥ —६५

योजनानां सहस्रं वा गत्वाऽऽचार्यपदाम्बुजम् ।
प्राणैरर्थैर्धियाचापि स्वाचार्यार्चन तत्पराः ॥

त्रेतायां पादधर्मोऽत्र लुप्यते वसुधापते ।
तस्माल्लक्षद्वयं प्रोक्तं त्रेतायां सिद्धये श्रियः ॥

अत्रोक्तधर्मः पादाभ्यां लुप्तः स्याद्द्वापरे युगे ।
तस्माल्लक्षत्रयं प्रोक्तं युगे द्वापरनामके ॥

कलावधर्मनिरता वेदाध्ययन वर्जिताः ।
श्रौताचारविहीनाश्च मिथ्याभाषणतत्पराः ॥

आचार्यनिन्दाश्रवणमपि कुर्वन्त्यमी सकृत् ।
कामक्रोधसमायुक्ता लुब्धा अप्यजितेन्द्रियाः ॥ —७०

कुत्राऽस्ति परलोको वा मन्त्रः को देवताच का ।
असूयामत्सरग्रस्ता इत्थं संभाषणे रताः ॥

स्वबुद्ध्या कल्पयन्तीह कुशास्त्राणि महीतले ।
स्वयं नष्टाः परांस्तूष्णीं नाशयन्ति प्रतारकाः ॥

यवनान्त्यजान् वित्तधान्यरत्नौघसंयुतान् ।
दृष्ट्वाचार्यं विनिन्दन्ति मन्त्रो नास्त्यपि दैवतम् ॥

मन्दप्रज्ञा मन्दभाग्याः परनारी रतोत्सुकाः ।
भगवन्मयमाचार्यं भोगस्वर्गापवर्गदम् ॥

त्यक्त्वा स्वपत्नीपुत्रादिनित्यपोषणतत्पराः ।
पितरं मातरमपि त्यजन्त्येव कलौ युगे ॥ —७५

असत्यभाषणं जैह्ममसूया मत्सरो मदः ।
प्राप्ते कलियुगे घोरे युगधर्मो महीपते ॥

आचार्यवदनाम्भोजाद्गृहीत्वापि मनूत्तमान् ।
त्यजन्ति मत्सरग्रस्ता आचार्यद्रोहकारिणः ॥

आचार्यनाम्नैवाह्वानं कुर्वन्त्यस्मिन् कलौयुगे ।
त्यजन्ति वैदिकाचारं तान्त्रिकाचारतत्पराः ॥

अल्पदक्षिणयागानां कर्तारः स्युः कलौ युगे ।
स्वपूजार्थमर्थाचार्या अपिशास्त्रेष्वपारगाः ॥

मन्त्रमात्रं प्रदास्यन्नि शिष्येभ्यः साङ्गवर्जितम् ।
न्यासयन्त्रध्यानसूक्तमज्ञात्वाऽपि महामनून् ॥ –८०

वित्तलुब्धाः प्रदास्यन्ति शिष्येभ्यो वसुधापते ।
इत्थं कलियुगे घोरे महापातकसङ्कुले ॥

आचार्यचरणद्वन्द्वभक्तो नरसहस्रके ।
एकोऽस्ति भगवच्चिन्ता तत्परो विजितेन्द्रियः ॥

तस्याचार्यकृपा लभ्धा विद्याः सकलसिद्धिदाः ।
आचार्यचरणद्वन्द्वशुश्रूषा क्षीणकल्मषाः ॥

ये सन्ति तेषामाचार्यकृपया सिद्धिरिष्यते ।
कलेः पातकबाहुल्यात् प्रसन्नश्रीमहामनोः ॥

चतुर्लक्षजपःप्रोक्तः पुरश्चर्यार्थमादरात् ।
चतुर्लक्षजपं कृत्वा पूर्वोक्तविधिना शुचिः ॥ –८५

दशांशं तर्पयेद्धीमान् पयसेक्षुरसेन वा ।
तद्दशांशं हुनेदाज्यमधुत्रितयमिश्रितैः ॥

कमलैर्बिल्वपत्रैर्वा हविर्भिर्वा महीपते ।
सुवासिनीशतं भोज्यं विप्राणां शतमप्यथ ॥

कुण्डलद्वितयं दत्वा पूर्वमाचार्यकर्णयोः ।
आचार्यचरणद्वन्द्वे धनराशिं समर्पयेत् ॥

इत्थं कृत्वा पुरश्चर्यां प्रसन्नायाः श्रियो नृप ।
अमरैरपि पूज्यःस्याच्छ्रियं पश्यति चक्षुषा ॥

प्रसन्नायां जगद्धात्र्यां किमसाध्यं जगत्त्रये ।
श्रूयते दूरतो वार्ता शतयोजनगाऽपि च ॥ —९०

पश्यत्यपि स्वचक्षुर्भ्यां शतसाहस्रयोजनम् ।
कैङ्कर्यं तस्य कुर्वन्ति महेन्द्राद्यमरा अपि ॥

अनधीतं च वेदादि विद्याजालं मनोहरम् ।
स्वयमेवास्य वक्त्राब्जान्निर्गच्छति न संशयः ॥

निधीनामधिपः साक्षात्कुबेरोऽसौ दिने दिने ।
ददाति बहुलं द्रव्यं यावदीप्सितमक्षयम् ॥

चिकित्सको भवत्यस्य धर्मराणमन्दिरे स्वयम् ।
नाष्टाक्षरी समा विद्या सदृशी रमयाऽनया ॥

नास्ति नास्त्येव नास्त्येव सत्यं सत्यं महीपते ।
महतीयं पुरश्चर्या लघ्वीमन्यां कलौ युगे ॥ -९५

कृता येन न सन्देहस्ततो धन्यतरो न हि ।
अल्पायुष्यान्मनुष्याणां चाञ्चल्यान्मनसोऽपि च ॥

प्रवक्ष्यामि पुरश्चर्यां लघ्वीमन्यां कलौ युगे ।
इन्दुवासरसंयुक्ता पौर्णमासी यदा भवेत् ॥

अमावास्यैन्दुवारेण सहिता वा भवेद्यदि ।
रविवारयुताऽमावा योगोऽयं पद्मकः स्मृतः ॥

सोमस्य पर्वपूर्णायाममायां रविपर्व वा ।
चन्द्रचूडामणिः प्रोक्तो रवि चूडामणिस्तथा ॥

आचार्यं सन्निधीकृत्य तत्पूर्वदिवसत्रयम् ।
एक भक्ताशनो नित्यमधःशायी जितेन्द्रियः ॥ -१००

श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ।
वर्णन्यासयुतां वापि शताधिकसहस्रकम् ॥

प्रजप्त्वादौ महालक्ष्मीविद्यामिष्टफलप्रदाम् ।
त्रिशताधिकसाहस्रं जप्त्वा श्रीहृदयस्तवम् ॥

त्रिवारं प्रजपेद्धीमानथ प्रज्वलितेऽनले ।
अष्टाविंशतिधा हुत्वा वेदमात्रा घृतं गवाम् ॥

अष्टाविंशतिधा पश्चाद्धुनेदष्टार्णविद्यया ।
प्रसन्नभगवत्पत्नी विद्ययाऽष्टोत्तरं शतम् ॥

गव्यमाज्यं हुनेदग्नौ नित्यमाचार्यसेवकः ।
चन्द्रपर्वणि संप्राप्ते विपर्वणि च वाप्यथ ॥ —१०५

स्पर्शकाले ततः स्नात्वा नत्वाऽऽचार्यमादरात् ।
विधिवत्संस्कृते वह्नौ वेदमात्रा घृतं गवाम् ॥

अष्टाविंशतिधा हुत्वा श्रीमदष्टार्णविद्यया ।
अष्टोत्तरशतं हुत्वा बिल्वपत्रैर्घृतप्लुतैः ॥

मधुत्रितयसंमिश्रैस्तिलैः कृष्णैरथापि वा ।
लक्ष्मीहृदयमन्त्रेण शताधिकसहस्रकम् ॥

जुहुयादनले शुद्धे केवलेन घृतेन वा ।
प्रायश्चित्ताहुतीः कृत्वा प्रणम्याग्निमतःपरम् ॥

आचार्यचरणद्वन्द्वं नत्वा साष्टाङ्गमादरात् ।
अर्पयेत्सकलं द्रव्यमपि स्वगृहसंस्थितम् ॥ —११०

बर्षाशनमितद्रव्यमाचार्यायाथवाऽर्पयेत् ।
अथवा कुण्डलयुगं निष्कद्वादश संयुतम् ॥

समर्पयेदथाचार्यचरणद्वितये नृप ।
कर्णालङ्कारमन्यं वा यावच्छक्यं समर्प्य च ॥

सूक्ष्मं वासोयुगं दत्वा रविनिष्कमितं धनम् ।
षण्णिष्कमथवा द्रव्यं निष्कत्रयमितं तु वा ॥

समर्प्याचार्यपादाब्जे तत आचार्यवल्लभाम् ।
यथाशक्त्या समभ्यर्च्य वासोऽलङ्करणादिभिः ॥

भोजयेद्विप्रवर्यांश्च द्वादशाऽथ सुवासिनीः ।
अनन्तरमथाचार्यपूजाया वसुधापते ॥ —११५

प्रसर्पकेभ्यो विप्रेभ्यो यथाशक्त्या च दक्षिणाम् ।
दत्वा भुक्तेषु विप्रेषु दक्षिणां च समर्पयेत् ॥

भोजनानन्तरं शक्त्या तोषयेच्च सुवासिनीः ।
आचार्यानुग्रहात्सद्यः सिद्धिमाप्नोत्यनुत्तमाम् ॥

राजा वा राजपुत्रो वा बहुवित्तयुतो यदि ।
आचार्याय महीं दद्याद्बहुसस्यसमन्विताम् ॥

वहुदक्षिणया युक्तां चतुर्वृषभ संयुताम् ।
प्रसन्नलक्ष्मी विद्यायास्सिद्ध्यर्थमथवा नृप ॥

सालग्रामशिलां दत्वा यथाशक्त्या सदक्षिणाम् ।
पूर्वोक्तदक्षिणां दद्याद्वासोऽलङ्कारसंयुताम् ॥ —१२०

चूडामणिमहायोगे यद्यद्वस्तु प्रदीयते ।
आचार्यचरणद्वन्द्वे तत्तदक्षयतां व्रजेत् ॥

पुरश्चर्यामिमां कृत्वा योगे चूडामणौ नृप ।
प्रसन्नलक्ष्मीविद्यायास्सिद्धिं स लभते पराम् ॥

तस्मिन् संवत्सरेऽवश्यं धनरत्नौघसङ्कुलाम् ।
अचलां श्रियमाप्नोति शाश्वतीमनपायिनीम् ॥

स्वच्छन्दमरणो भूत्वा दीर्घमायुरनुत्तमम् ।
सौभाग्यं महदासाद्य समृद्धिं पुत्रपौत्रकैः ॥

शाश्वतीं मुक्तिमाप्नोति देहान्ते दुर्लभामपि ।
इत्थं कृत्वा पुरश्चर्यां ग्रहणे रविचन्द्रयोः ॥ −१२५

त्रिधा वा पञ्चधा वापि शत द्वादशधापि वा ।
जातिस्मरश्चिरं भूत्वा धनधान्यगजाकुलाम् ॥

रत्नाश्वरथसम्पूर्णां प्राप्यश्रियमचञ्चलाम् ।
पुत्रपौत्रवतीमृद्धिं विद्यां सुमहतीमपि ॥

योगमष्टाङ्गमासाद्य भुक्त्वा भोगांश्च दुर्लभान् ।
अन्ते वसति वैकुण्ठे कुलसाहस्रसंयुतः ॥

यद्वाश्विनाभिधे मासि संप्राप्ते नवरात्रके ।
एकैक दिवसं तत्र चूडामणिसमप्रभम् ॥

कथितं सुमहत्पर्व समस्तैर्ब्रह्मवादिभिः ।
प्रसन्नलक्ष्मीविद्येयं तत्रावश्यं फलप्रदा ॥ −१३०

दिवसे दिवसे तत्र फलं शतगुणोत्तरम् ।
महती नवमी तत्र या प्रोक्ता परमर्षिभिः ॥

रविचूडामणिशतसदृशी सा तिथिः स्मृता ।
भृगुवासरसंयुक्ता वैश्वदैवत्यसंयुता ॥

साम्राज्यलक्ष्मीयोगोऽयं तत्रोक्तः परमर्षिभः ।
आचार्याज्ञामनुप्राप्य प्रथमे प्रतिपद्दिने ॥

प्रातःस्नात्वा विशुद्धात्मा सहस्रं वेदमातरम् ।
अभ्यस्य त्रिशतं वापि विधिवज्ज्वलितेऽनले ॥

अष्टाविंशतिधा हुत्वा गायत्र्याज्या गवां शुभम् ।
श्रीमदष्टार्णया पश्चादष्टाविंशतिधा हुनेत् ॥ —१३५

हुनेदष्टोत्तरशतं लक्ष्मीहृदयविद्यया ।
दिवसे दिवसेपीत्थं होमकर्म समाप्य च ॥

यथाशक्त्या प्रजप्त्वादौ श्रीमदष्टाक्षरं मनुम् ।
साम्राज्य श्री महाविद्या मनोः पञ्चशताधिकम् ॥

सहस्रं प्रजपेन्नित्यं सावधानमनाःशुचिः ।
यद्वा द्वादशसाहस्रं सङ्कल्प्य नवरात्रके ॥

प्रसन्न श्री महाविद्यां नित्यमेतां जपेद्बुधः ।
आथर्वणं महद्गुह्यं लक्ष्मीहृदयमिष्टदम् ॥

चत्वारिंशता च नित्यं जपेत्पश्चाधिकं शुचिः ।
नित्यं भोज्याः सुवासिन्यो महालक्ष्मीधिया नृप ॥ —१४०

महानवम्यां प्राप्तायां विधिवत्संस्कृतेऽनले ।
अष्टाविंशतिधा हुत्वा वेदमात्रा पुरो घृतम् ॥

अष्टोत्तरशतं हुत्वा श्रीमदष्टार्णविद्यया ।
साम्राज्यलक्ष्मीमावाह्य समभ्यर्च्योपचारकैः ॥

कुशेशयैर्घृतयुतैर्मधुत्रितयसंयुतैः ।
त्रिशताधिकसाहस्रमिन्दिराविद्यया हुनेत् ॥

अथवा पायसं गव्यघृतत्रिमधुसंप्लुतम् ।
बिल्वपत्रसमायुक्तं तिलैः कृष्णैः समन्वितम् ॥

त्रिशताधिकसाहस्रं जुहुयान्मनुना श्रियः ।
लक्ष्मीहृदयमन्त्रैश्च श्लोकरूपैरतःपरम् ॥ —१४५

पञ्चधा वा त्रिधा वह्नौ जुहुयाद्धविरादरात् ।
अष्टादशार्णमन्त्रेण यथाशक्त्या ततःपरम् ॥

अष्टोत्तरशतं वापि जुहुयाद्गोघृतं शुभम् ।
जयादिहोमं कृत्वाऽथ प्रायश्चित्ताहुतीस्ततः ॥

ब्रह्मार्पणाहुतिं कृत्वा प्रणम्याग्निमतःपरम् ।
आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ॥

गन्धाक्षतैरलङ्कारैर्वासोभिश्च समर्पयेत् ।
गोद्वयं दक्षिणायुक्तं समर्प्याचार्यपादयोः ॥

आचार्यचरणद्वन्द्वे बहुलं द्रव्यमर्पयेत् ।
सहस्रं शतनिष्कं वा तदर्धं वा तदर्धकम् ॥ –१५०

निष्कद्वादशकं वापि निष्कषट्कमथापि वा ।
पञ्चनिष्क सुवर्णं वा त्रिनिष्कं वाथ सद्गुरोः ॥

चरणाम्बुरुहद्वन्द्वे वित्तलोभविवर्जितः ।
समर्प्याचार्यपत्न्यै च वास आकल्पसंचयम् ॥

समर्चयेद्यथाशक्त्या श्रीधियाभ्यर्च्य सादरम् ।
आचार्यसन्निधौ तस्य पत्नीपुत्राद्यसंनिधौ ॥

भगवत्संनिधौ सर्वं दक्षिणाद्रव्यमर्पयेत् ।
आचार्यपत्नी पुत्राणां दत्तं तत्प्रेषयेद्धनम् ॥

विभवे सति भूदानं बहुदक्षिणयाऽन्वितम् ।
चतुर्वृषभसंयुक्तं कुण्डलद्वितयान्वितम् ॥ –१५५

अवश्यमर्पयेद्धीमानिच्छन् श्रेयः परम्पराम् ।
भोज्या अथ सुवासिन्यो द्वादशब्राह्मणा अपि ॥

आचार्यालिङ्गनं प्राप्य तदाशीर्भिः कृतादरः ।
प्रसन्नलक्ष्मीविद्याया महतीं सिद्धिमश्नुते ॥

साम्राज्यलक्ष्मीयोगस्तु लभ्यते दशवत्सरैः ।
कृत्वाऽकार्यशतं वापि द्रव्यं सम्पाद्य यत्नतः ॥

अलङ्कारैरलङ्कृत्य स्वाचार्यं भगवन्मयम् ।
सम्पूर्णदक्षिणादानं कार्यसिद्धिमभीप्सता ॥

नवरात्रव्रतं कृत्वा महदत्यन्तपावनम् ।
पुरश्चर्याशतफलं साङ्गमाप्नोति निश्चितम् ॥ —१६०

नवरात्रव्रतसमं व्रतमन्यन्नविद्यते ।
यादृशी जायते शुद्धिर्नवरात्रव्रते शुभे ॥

पुरश्चर्यासहस्रैर्वा न सिद्धिस्तादृशी भवेत् ।
नवरात्रव्रतभ्रंशो यस्य पुंसः प्रजायते ॥

तस्य संवत्सरेऽरिष्टं जायते नात्र संशयः ।
नवरात्रव्रतं कृत्वा विधिना साङ्गमादरात् ॥

महतीं सिद्धिमासाद्य दीर्घमायुरथाक्षयम् ।
महदारोग्यमासाद्य धनधान्यौघसंकुलाम् ॥

गजाश्वरथसम्पूर्णां सात्विकीं पुण्यहेतुकीम् ।
अचलां लभते लक्ष्मीं त्रैलोक्येऽपि सुदुर्लभाम् ॥ १६५

आचन्द्रार्कं न सन्देहस्तद्वंशव्यापिनी रमा ।
वसत्येव न सन्देहो धनधान्यादिसङ्कुला ॥

इत्थं कृत्वा पुरश्चर्यां प्रसन्न श्री महामनुम् ।
जप्त्वा पञ्चशतं प्रातरष्टाविंशतिधा घृतम् ॥

हुत्वाऽथ सायं भूयोऽपि जपेदष्टोत्तरं शतम् ।
इत्थमाचरतः पुंसो भाग्यराशिर्दिने दिने ॥

जयश्रीरक्षया तस्य महत्सौभाग्यमुत्तमम् ।
जायते धनधान्याढ्यगजरत्नसमाकुला ॥

तद्वंशव्यापिनी लक्ष्मीः पुत्रपौत्रादिसङ्कुला ।
कैङ्कर्यं प्राप्नुवन्त्यस्य सर्वे नृपवरा अपि ॥ —१७०

राजविद्वत्सभास्वग्रे पूज्यतेऽसौ दिने दिने ।
इत्थं कृत्वा पुरश्चर्यामन्वहं प्रातरादरात् ॥

जप्त्वा पञ्चशतं लक्ष्मीं यत्र यत्र हि गच्छति ।
तत्राचला जयश्रीःस्यात् सन्मानं पौरुषं यशः ॥

मन्दिरेऽस्य महालक्ष्मीर्वृद्धिं याति दिने दिने ।
वंशाभिवृद्धिराचन्द्रमार्कमस्य भवेद्ध्रुवम् ॥

पदे पदेऽस्य कल्याणमन्वहं भवति ध्रुवम् ।
असाध्यमपि देवानामपि द्वीपान्तरस्थितम् ॥

साधयत्येव सकलमीप्सितं नात्र संशयः ।
कुलसाहस्रमुद्धृत्य मग्नं च नरकार्णवे ॥ —१७५

याति विष्णोः परंधाम देहान्ते नात्र संशयः ।
वासन्ते नवरात्रस्य पुरश्चरणमादरात् ॥

कृत्वेत्थमेव महतीं सिद्धिमाप्नोत्यनुत्तमाम् ।
अथ वक्ष्यामि भूपाल साधनान्तरमुत्तमम् ॥

भृगुवारव्रतं नाम्ना लक्ष्मीहृदयसाधनम् ।
श्रावणे कार्तिके वाऽपि मार्गशीर्षे तथाऽऽश्विने ॥

माघे वा फाल्गुने वापि वैशाखे वा भृगोर्दिने ।
प्रथमे शुक्लपक्षस्य स्वाचार्याज्ञा पुरस्सरम् ॥

प्रातःस्नात्वा विशुद्धात्मा सहस्रं वेदमातरम् ।
प्रजप्त्वा त्रिशतं वापि ज्वलिते जातवेदसि ॥ —१८०

अष्टाविंशतिधा हुत्वा वेदमात्रा गवां घृतम् ।
श्रीमदष्टार्ण मन्त्रेणाप्यष्टाविंशतिधा हुनेत् ॥

लक्ष्मीहृदयमन्त्रेण शतमष्टोत्तरं ततः ।
हुत्वा गव्यघृतं शुद्धं लक्ष्मीनारायणौ यजेत् ॥

सुगन्धिकुसुमैर्बिल्वपत्रैर्वा ब्रह्मविद्यया ।
त्रिशताधिकसाहस्रमिन्दिराहृदयं जपेत् ॥

श्री श्रीपतिधियाभ्यर्च्य मिथुनत्रयमादरात् ।
मिथुनद्वितयं वापि युग्ममेकमथापि वा ॥

अभुक्त्वाप्यथ भुक्त्वा वा सायं भूयोऽपि सादरम् ।
प्रसन्नश्रीमहाविद्यामष्टोत्तरशतं जपेत् ॥ –१८५

आथर्वणं श्रीहृदयं पञ्चधा वा त्रिधा ततः ।
श्रेयस्कामो जपेच्छुद्धः प्रतिभार्गववासरम् ॥

इत्थं कृत्वा जपं होममारभ्यादिमभार्गवम् ।
श्रावणे पूर्णिमायान्तभार्गवे वासरे शुभे ॥

वरलक्ष्मीदिने नाम्ना लक्ष्मीहृदयविद्यया ।
हुत्वा त्रिशतमाज्येन पूर्ववत्प्रजपेत्ततः ॥

तस्मिन् दिने गुरोः पत्न्यै गुरुपादाम्बुजेऽपिवा ।
निष्कत्रयं द्विनिष्कं वा निष्कमेकमथापि वा ॥

समर्प्य कार्तिके शुक्ले द्वादश्यामुदिते रवौ ।
तत्रापि त्रिशतं हुत्वा लक्ष्मीहृदयविद्यया ॥ –१९०

तत्रापि पूर्ववद्दत्वा गुरवे दक्षिणाधनम् ।
मार्गशीर्षे पौर्णमास्यां लक्ष्मीहृदयविद्यया ॥

तत्रापि त्रिशतं हुत्वा गव्येनाज्येन साधकः ।
पूर्ववद्दक्षिणां दद्यात्स्वाचार्यचरणद्वये ॥

गुरोरभावे तत्पत्न्यै तत्सुताय समर्पयेत् ।
इत्थं कृत्वा भृगोर्वारे व्रतमत्यन्तपावनम् ॥

प्रसन्नलक्ष्मीविद्यायास्सिद्धिं प्राप्नोति वर्षतः ।
प्राप्नोति चिरमायुष्यं समस्तास्सम्पदोऽपि च ॥

आरोग्यं महदासाद्य गजाश्वरथसङ्कुलाम् ।
अवाप्य महतीं लक्ष्मीं सन्ततिव्यापिनीमपि ॥ —१९५

अणिमादिगुणैश्वर्यमपि त्रैलोक्यदुर्लभम् ।
दिव्याञ्जनमवाप्नोति सिद्धिदर्शनहेतुकम् ॥

वक्त्राब्जात्तस्य निर्यान्ति विद्याः सर्वाः सनातनाः ।
न धनेन वियुज्येत न कलत्रेण पुत्रकैः ॥

न रत्नैः पशुभिर्वापि न वियुज्येत बन्धुभिः ।
भोगानष्टविधांश्चापि समासाद्याति दुर्लभान् ॥

वैकुण्ठे रमतेन्तेऽसौ कुलसाहस्रसंयुतः ।
इहामुत्रापि संसिद्धिमिच्छता नियतात्मना ॥

कर्तव्यं सततं भूप भार्गवे वासरे व्रतम् ।
अनुत्तमं यशोलाभं जयलक्ष्मीमचञ्चलाम् ॥ —२००

भगवत्पदमिच्छद्भिरवश्यं भार्गवे दिने ।
विशेषेण व्रतं कार्यं श्रेयो वृद्धिकरं नृप ॥

लक्ष्मीहृदयविद्यायाः सिद्ध्यर्थं साधकोत्तमः ।
शक्तश्च नवरात्रादिव्रतं सकलमाचरेत् ॥

भगवत्सहिता साक्षान्महालक्ष्मीस्त्रयीमयी ।
प्रसीदति न सन्देहस्सत्यं सत्यं वदाम्यहम् ॥

महती या पुरश्चर्या साङ्गा सम्पूर्णदक्षिणा ।
पूर्वमुक्ता मया भूप सा महासिद्धिदायिनी ॥

तया देव्या महालक्ष्म्याः साक्षात्कारः प्रजायते ।
ईप्सितानामसाध्यानामपि सिद्धिस्ततो भवेत् ॥ –२०५

तुच्छीकरोति देवेन्द्रपदमप्यनया नृप ।
ग्रहणेन समः पुण्यकालो नास्ति जगत्त्रये ॥

जपहोमादिकं सर्वमाशौचे सूतकेऽपि च ।
न सन्त्याज्यमिति प्राहुर्मुनयो ब्रह्मवादिनः ॥

यावद्ग्रहणमोक्षः स्यात्तावन्नैवास्य सूतकम् ।
समस्तदानसंघानां महान् कालः स एव हि ॥

यदि चूडामणिर्योगो लभ्यते तत्र भूतले ।
जपहोमादिकं सर्वं तत्राक्षयफलप्रदम् ॥

सर्वासामपि विद्यानां सिद्धिमिच्छद्भिरादरात् ।
ग्रहणेषु पुरश्चर्या कार्या साङ्गा सदक्षिणा ॥ –२१०

नवरात्रव्रतं सर्वमहापातकभञ्जनम् ।
समस्तारिष्टशमनं वर्षे वर्षे न संशयः ॥

इहामुत्रापि सकलश्रेयस्करमनुत्तमम् ।
भृगुवारव्रतं प्रोक्तमवश्यं सर्वसिद्धिदम् ॥

सर्वासामपि विद्यानां महती सिद्धिरक्षया ।
नवरात्रव्रतेऽवश्यं भवत्येव न संशयः ॥

अनुत्तरब्रह्मतत्वरहस्ये श्रुतिसंग्रहे ।
चत्वारिंशोऽयमध्याय उक्तस्सर्वयशस्करः ॥ -२२५

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे चत्वारिंशोऽध्यायः ॥

## ॥ अथैकचत्वारिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

प्रसन्नाया महालक्ष्म्या विद्यया सिद्धमानया ।
साधयेत्काम्य कर्माणि समस्तानि महीपते ॥

ब्रह्मचारी हविष्याशी विल्वमूलं समाश्रितः ।
लक्षमेकं प्रजप्त्वेमां विद्यां सकलसिद्धिदाम् ॥

बिल्वपत्रैर्घृताभ्यक्तैर्मधुत्रितयसंप्लुतैः ।
हुत्वा तत्र समाप्नोति धनरत्नौघमक्षयम् ॥

हुत्वा रम्भाफलैर्नित्यमष्टोत्तरशतं शुचिः ।
मधुत्रितय गव्याज्य संप्लुतैर्मण्डलद्वयम् ॥

मण्डलद्वितयान्तेऽसौ दिवसे भगवत्प्रियाम् ।
साक्षात्स्वप्नेऽपि वा पश्येदसौ विग्रहधारिणीम् ॥ —५

गजरत्नधनाश्वादि सङ्कुला श्रीरथाक्षया ।
जायते तद्गृहे सद्यो महती दुर्लभापि च ॥

भगवत्कलयायुक्तमवश्यं पुत्रमाप्नुयात् ।
अरुणाम्भोरुहैर्नित्यमष्टोत्तरशतत्रयम् ॥

मधुत्रितयगव्याज्य संप्लुतैः पूर्ववच्छुचिः ।
मण्डलेन न सन्देहः कन्दर्प सम कान्तिमान् ॥

वशीकरोति भूपालानपि दुष्टान् महीतले ।
राज्यलक्ष्मीमवाप्नोति स्वान्वयव्यापिनीं नृप ॥

कुसुमैः किंशुकोद्भूतैर्मधुत्रितयसंप्लुतैः ।
मण्डलं ज्वलिते वह्नौ हुत्वा त्रिशतमादरात् ॥ —१०

सर्वासामपि विद्यानामधिपोऽसौ भविष्यति ।
साङ्गास्समस्तविद्याश्च निर्गच्छन्ति मुखाम्बुजात् ॥

दूर्वाभिराज्यसिक्ताभिर्हुत्वा शतसहस्रकम् ।
निरामयोऽसौ दीर्घायुर्भवत्येव न संशयः ॥

हुत्वा नीलोत्पलैरम्भावयुतं त्रिमधुप्लुतैः ।
वशीकरोति भूपालानथ तत्किङ्करानपि ॥

मधुत्रितयगव्याज्य प्लुतंपायसमादरात् ।
हुत्वाऽयुतद्वयं विप्रः पश्यत्येव हरिप्रियाम् ॥

महदायुष्यमासाद्य धनवृष्टिमवाप्नुयात् ।
गडूचीत्वाज्यसंसिक्ता जुहुयात्सप्तवासरम् ॥ - १५

अष्टोत्तरशतसहस्रं यस्य जीवेच्छरदां शतम् ।
हुत्वा तिलैर्घृताभ्यक्तैर्दीर्घमायुरवाप्नुयात् ॥

आरोग्यं लभते मन्त्री वांछितान्यपि मन्त्रवित् ।
शालीभिर्जुहुतो नित्यमष्टोत्तरशतत्रयम् ॥

मण्डलादेव महती लक्ष्मीस्संजायते ध्रुवम् ।
प्रसूनैर्जुहुयान्मन्त्री लक्ष्मीवल्लीसमुद्भवैः ॥

नन्द्यावर्तसमुत्थैर्वा सिद्धार्थैश्च घृतप्लुतैः ।
महतीं श्रियमाप्नोति मान्यते सर्वजन्तुभिः ॥

मरीचजीरकोन्मिश्रैर्वारि सिन्धुरजोयुतैः ।
समृद्धै राज्यसंयुक्तैरपूर्वैराज्यतोन्नतैः ॥ −२०

जुहुयात्पायसाहारो मन्त्रविद्विजितेन्द्रियः ।
अष्टोत्तरशतं नित्यं मण्डलाद्धनदो भवेत् ॥

हविषा गुडमिश्रेण जुहुयादन्नवान् भवेत् ।
जपापुष्पाणि जुहुयादष्टोत्तरसहस्रकम् ॥

गृहीत्वा प्रजपेद्भस्म नागवल्लीसमन्वितम् ।
तिलकं तनुयात्तेन सर्ववश्यकरं परम् ॥

ब्रह्मवृक्षसमित्पुष्पैर्ब्राह्मणान् वशयेद्वशी ।
जातीपुष्पैर्भूमिपालान् वैश्यान् रक्तोत्पलैः शुभैः ॥

शूद्रान्नीलोत्पलैर्हुत्वा वशयेन्मन्त्रवित्तमः ।
पुष्पैर्मनोहरैर्हुत्वा वशमानयति स्त्रियः ॥ —२५

कृत्वा नवपदात्मानं मण्डलं यन्त्रभूषितम् ।
अभिषेकं प्रकुर्वीत विधिना सर्वसिद्धये ॥

कलशान् स्थापयेत्तेषु पदेषु शुभलक्षणान् ।
चन्दनालिप्तसर्वाङ्गान् कूर्चाक्षरसमन्वितान् ॥

दुकूलवेष्टितान् शुक्लवस्त्रैरावेष्टितांस्तु वा ।
तीर्थवारिभिरापूर्य सुगन्धिभिरतः परम् ॥

नवरत्नसमाबद्धं कर्षकाञ्चनकल्पितम् ।
मध्यकुम्भे क्षिपेत्पद्मं यन्त्रादयं देशिकोत्तमः ॥

चन्दनोशीरकर्पूरजात्यङ्कोलककुङ्कुमम् ।
कुष्ठागुरु तमालैलाभागं संघृष्य भागतः ॥ —३०

विलोड्य सर्वकुम्भेषु रत्नान्यपि विनिक्षिपेत् ।
लक्ष्मीदूर्वा सदा भद्रा सहदेवी मधुव्रता ॥

मुशली चक्रवल्ली च कान्तापामार्गपद्मजम् ।
प्रियङ्गुमुग्धगोधूमव्रीहींश्चैव तिलान् यवान् ॥

शालीतण्डुलमाषांश्च प्रक्षाल्यैतेषु निक्षिपेत् ।
धात्रीलिकुचबिल्वानां कदलीनारिकेलयोः ॥

फलान्यपि विनिक्षिप्य पुष्पाण्येतानि विन्यसेत् ।
पद्मसौगन्धिकं जातिमल्लिकावकुलं तथा ॥

चम्पकाशोकपुन्नागतुलसीकेतकोद्भवम् ।
पल्लवानि वटाश्वत्थप्लक्षोदुम्बरशाखिनाम् ॥ —३५

ब्रह्मकूर्चं च निक्षिप्य चम्पकैः सफलाक्षतैः ।
पिधाय कुम्भवक्त्राणि वस्त्रैराच्छादयेत्ततः ॥

आवाह्य मध्यकलशे महालक्ष्मीं प्रपूजयेत् ।
यजेदुमाद्याः शिष्टेषु कलशेष्वष्टसु क्रमात् ॥

गन्धैर्मनोहरैः पुष्पैर्धूपदीपसमन्वितैः ।
नैवेद्यभक्ष्यभोज्याद्यैस्तां स्पृष्ट्वा प्रजपेन्मनुम् ॥

मध्यमं कलशं स्पृष्ट्वा त्रिसहस्रं प्रजपेच्छ्रियम् ।
त्रिसहस्रजपस्यान्ते साध्यमानीय देशिकः ॥

संस्थाप्य स्थण्डिले पीठं तस्मिंस्तद्विनिवेशयेत् ।
रम्यैराभरणैर्वस्त्रैरलङ्कृत्य तमादरात् ॥ —४०

सुमङ्गलाभिर्नारीभिः क्षिप्तपुष्पाक्षतान्वितः ।
अर्चितानां द्विजातीनामाशीर्वादपुरःसरम् ॥

नदत्सुपञ्चवाद्येषु मुहूर्ते शोभने सुधीः ।
मध्यस्थं कुम्भमुद्धृत्य महालक्ष्मीमनुस्मरन् ॥

अभिषिञ्चेत्क्रमादन्यैः कलशैरपि देशिकः ।
पुंसूक्तेन च वाक्सूक्तमुख्यैः सूक्तैश्च वैष्णवैः ॥

पवमानादिसूक्तैश्चाभिषिच्याथ देशिकः ।
करेणास्य शिरःस्पृष्ट्वा प्रयुञ्जीताशिषं गुरुः ॥

भद्रमस्तु शिवंचास्तु महालक्ष्मीः प्रसीदतु ।
रक्षतु त्वां सदा देवी सम्पदस्सन्तु सर्वदा ॥ —४५

शान्तिनामकसूक्तैश्चाप्यभिषिञ्चेत्ततः परम् ।
अथोत्थायाभिषिक्तःसन् वाससी परिधाय च ॥

यथाविधि समाचम्य प्रणमेद्दण्डवद्गुरुम् ।
गन्धाद्यैरप्यलङ्कृत्य स्वात्मानं साधकस्ततः ॥

वस्त्रैराभरणैर्धान्यैर्धनैर्गोमहिषादिभिः ।
दासीदासैश्च विधिवत्तोषयेदिन्दिराधिया ॥

ब्राह्मणान् भोजयेत्पश्चाद्दीनारपणकैस्सह ।
तदा कृतार्थमात्मानं भावयेद्गुर्वनुग्रहात् ॥

अभिषिक्तो नरपतिः परान्विजयते चिरात् ।
पदेच्छुः पदमाप्नोति राजपुत्रो न संशयः ॥ –५०

अभिषिक्ता सती वन्ध्या सूते पुत्रं महामतिम् ।
महारोगेषु जातेषु कृत्या द्रोहेषु देशिकः ॥

भूतेषु दुर्निमित्तादौ विदध्यादभिषेचनम् ।
सर्वसंपत्करं पुंसां सर्वसौभाग्य सिद्धिदम् ॥

सर्वरोगप्रशमनं सर्वोपद्रवनाशनम् ।
अभिषेकमिमं प्राहुरागमार्थविशारदाः ॥

विधिनायोऽभिषिक्तःस्यात्सराज्यश्रियमक्षयाम् ।
महदारोग्यमायुष्यं गजान् रत्नानि वाजिनः ॥

महत्सौभाग्यमाप्नोति धनानि सुबहून्यपि ।
अथापरं महालक्ष्मी हृदयस्यास्य साधनम् ॥ –५५

महासिद्धिप्रदं वक्ष्ये समाहितमनाःशृणु ।
वैशाखेमासि संप्राप्ते समस्तफलसिद्धिदे ॥

अक्षयायां तृतीयायां पौर्णमास्यामथापि वा ।
आचार्यस्याज्ञया प्रातःस्नात्वा सन्ध्यापुरस्सरम् ॥

समाप्य नैत्यकं कर्म विधिवत्संस्कृतेऽनले ।
अष्टाविंशतिधा हुत्वा वेदमात्रा घृतं गवाम् ॥

श्रीमदष्टाक्षरेणाथ शतमष्टोत्तरं घृतम् ।
प्रसन्नराज्यलक्ष्म्याऽथ पनसस्य फलैः शुभैः ॥

तद्बीजरहितैराज्यमधुत्रितयमिश्रितैः ।
त्रिशताधिक साहस्रं जुहुयान्नियतव्रतः ॥ —६०

साम्राज्यलक्ष्मीविद्याभिश्चतुर्भिश्च ततःपरम् ।
प्रत्येकं पानसैर्हुत्वा शतमष्टोत्तरं फलैः ॥

आथर्वणमहामन्त्रैर्लक्ष्मीहृदयसंस्थितैः ।
एकैकशस्ततोहुत्वा प्रायश्चित्ताहुतीस्ततः ॥

ब्रह्मार्पणाहुतिं कृत्वा प्रणम्याग्निमतःपरम् ।
आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ॥

कुण्डलद्वितयं रम्यं तप्पतहेमविनिर्मितम् ।
पद्मरागसमायुक्तं प्रदत्वाऽऽचार्यकर्णयोः ॥

असन्निधौ गुरावत्र तत्पुत्रस्याथवार्पयेत् ।
अथवा कर्षमानेन तप्तहेम्ना विनिर्मितम् ॥ —६५

ताटङ्काभरणं वापि वालीयुग्ममथापि वा ।
आचार्यवल्लभाकर्णयुग्मे दद्यान्महीपते ॥

गन्धपुष्पैरलङ्कृत्य स्वाचार्यं भगवन्मयम् ।
दत्वा श्रीचन्दनं सूक्ष्मवासोयुगसमन्वितम् ॥

स्थूलं बहुफलोपेतं पानसं फलपञ्चकम् ।
दद्यादाचार्यसान्निध्ये बहुदक्षिणयान्वितम् ॥

फलत्रयं वा सस्थूलं दद्याद्दक्षिणयान्वितम् ।
पञ्चविंशतिनिष्कं वा निष्कद्वादशकं तु वा ॥

अशक्तः पञ्चनिस्कं वा त्रिनिष्कं वा समर्पयेत् ।
ब्राह्मणान् भोजयेत्पश्चात् पञ्च वापि सुवासिनीः ॥ –७०

दध्योदनैश्च तफलैरुपानद्व्यजनादिभिः ।
तोषयेद्दक्षिणाभिश्च ब्राह्मणान् वसुधापते ॥

बन्धुभिस्सह भुञ्जीत स्वयं पश्चाद्यतव्रतः ।
आचार्यालिङ्गनं प्राप्य तदाशीर्भिः कृतादरः ॥

पश्यत्येव श्रियं साक्षान्नारायणसमन्विताम् ।
मासादर्वाङ् न सन्देहो ब्रह्मरुद्रादिवन्दिताम् ॥

तदादिमन्दभाग्योऽपि महदायुष्यमक्षयम् ।
अणिमादिगुणैश्वर्यं जातिस्मरणमुत्तमम् ॥

गजाश्वरथसम्पूर्णां धनरत्नौघसङ्कुलाम् ।
महतीं श्रियमासाद्य भुक्त्वा भोगांश्च दुर्लभान् ॥ –७५

भगवत्सन्निधावन्ते तिष्ठत्येव न संशयः ।
भूयोऽपि साधनं वक्ष्ये महासिद्धिप्रदायकम् ॥

यच्छ्रुत्वाऽपि नरो धीमानापत्संघैर्विमुच्यते ।
पुरा देवासुरास्सर्वे सम्भूय च परस्परम् ॥

प्रतिपद्दिनमारभ्य नारायणसमन्विताः ।
शापाद्दुर्वाससो नष्टश्रियो भाग्यविवर्जिताः ॥

दर्शनाय महालक्ष्म्या मुकुन्दस्याज्ञया नृप ।
समुद्रमथनं चक्रुरमृतोद्भवनाय ते ॥

कालकूटादिकं सर्वमुत्पन्नं नामृतं ततः ।
अपि यत्नवतां तेषां नाविरासीत्त्रयीमयी ॥ -८०

एकादशी दिने तत्र कार्तिके शुक्लपक्षके ।
सुरासुरा निराहारा लक्ष्मीहृदयनामकम् ॥

जपन्तो मनुमेकाग्राः श्रीमदष्टाक्षरं शुभम् ।
समुद्रमथनं चक्रुर्दर्शनाय महाश्रियः ॥

भानूदयेऽथ द्वादश्यां दिव्याभरणभूषिता ।
आविरासीन्महालक्ष्मीस्समुद्राज्जगदम्बिका ॥

किरीटहारकेयूरताटङ्कादिविभूषिता ।
सहस्रपत्रकमलमाल्ययुक्ता त्रयीमयी ॥

नारायणं च ब्रह्माणमीशं शक्रमुखानपि ।
दृष्ट्वा भगवतो वक्षःस्थलं प्राप्य सनातनी ॥ —८५

तया निरीक्षितास्सद्यः शक्राद्याः समरुद्गणाः ।
समस्तसंपदाधारा अभवन् वसुधापते ॥

तदा भगवती लक्ष्मीः प्राह सर्वसुरानपि ।
शृणुध्वं ब्रह्मरुद्राद्याः शक्राद्याश्च महर्षयः ॥

श्रेयसे सर्वलोकानां प्रवदामि यशस्करम् ।
नाम्ना कार्तिकमासेऽस्मिन् यो मां भर्तृसमन्विताम् ॥

यजन्ति मनुजा भक्त्या ते सर्वे भाग्यभागिनः ।
योऽस्मिन् जन्मदिवसे मामर्चयति सुव्रतः ॥

मत्प्रीतये सुवर्णानि गुरवे यः प्रयच्छति ।
वसामि मन्दिरे तस्य धनरत्नौघ सङ्कुला ॥ —९०

समस्तवेदवेदान्तसारभूतं सनातनम् ।
रहस्यमपि वक्ष्यामि सर्वसिद्धिकरं परम् ॥

कार्तिके मासि संप्राप्ते प्रतिपद्दिनमादितः ।
आरभ्याचार्यपादाब्जद्वितयं प्रणिपत्य च ॥

आचार्यानुज्ञया प्रातः स्नात्वा प्रतिदिनं शुचिः ।
सहस्रं त्रिशतं वापि पजप्त्वा वेदमातरम् ॥

नित्यहोमं समाप्याथ ज्वलिते जातवेदसि ।
अष्टाविंशतिधा हुत्वा श्रीमदष्टार्णविद्यया ॥

आज्यं प्रसन्नरमया हुनेदष्टोत्तरं शतम् ।
श्रीमदष्टाक्षरीविंद्यामर्कसाहस्रमादरात् ॥ –९५

संकल्प्य तद्दशम्यन्तं जपेदेकाग्रमानसः ।
ततःपरं महालक्ष्मीहृदयाख्यं महामनुम् ॥

संकल्प्यार्कसहस्राणि दशम्यन्ते जपेच्छुचिः ।
हविष्यमथभुञ्जीत लवणाम्लविवर्जितम् ॥

द्वादशाक्षरलक्ष्मीं वा श्रीषडर्णमथापि वा ।
भक्तियुक्तो जपेद्विद्वान् अर्कसाहस्रमादरात् ॥

एकादशी दिने पश्चादाचार्याज्ञापुरस्सरम् ।
प्रातः स्नात्वा विधानेन नित्यकर्म समाप्य च ॥

आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ।
विधिवत्संस्कृते वह्नौ वेदमाताऽऽज्यमादितः ॥ –१००

अष्टोत्तरशतं हुत्वा श्रीमदष्टार्णविद्यया ।
गव्यमाज्यं हुनेत्पश्चाच्छताधिकसहस्रकम् ॥

त्रिशताधिकसाहस्रं कमलैर्वा कुशेशयैः ।
मधुत्रितयसंपृक्तैर्गव्येनाज्येन मिश्रितैः ॥

लक्ष्मीहृदयमन्त्रेण जुहुयात्साधकोत्तमः ।
द्वादशाक्षरलक्ष्म्या वा षडक्षर्याथ वा हुनेत् ॥

पद्माभावे विल्वदलैर्गव्याज्यमधुमिश्रितैः ।
जुहुयाज्ज्वलिते वह्नौ संस्कृते विधिवच्छुचिः ॥

तुलसीमिश्रितैर्विल्वदलैश्च कुसुमैः शुभैः ।
बृहदावरणोपेतौ श्रीश्रीशावर्चयेत्सुराः ॥ —१०५

त्रिशताधिकसाहस्रमावां तद्ब्रह्मविद्यया ।
रात्रावभ्यर्च्य यत्नेन दीपान्नीराजयेत्ततः ॥

ब्राह्मे मुहूर्त उत्थाय स्नात्वाऽथ द्वादशीदिने ।
सावित्रीं त्रिशतं जप्त्वा ज्वलिते जातवेदसि ॥

अष्टोत्तरशतं हुत्वा गायत्र्या घृतमादरात् ।
श्रीमदष्टार्णमन्त्रेणाप्यष्टोत्तरशतं हुनेत् ॥

अष्टोत्तरशतं पश्चात्पद्मैर्मद्विद्यया हुनेत् ।
पद्माभावे घृतं गव्यं जुहुयाद्विद्यया मम ॥

भगवद्रश्मिभिः पश्चादेकैकामाहुतिं हुनेत् ।
पूर्वद्युरपि हुत्वाथ भगवद्रश्मिभिस्त्रिधा ॥ —११०

अथाचार्यपदद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ।
गन्धपुष्पैरलङ्कृत्य षष्टिचिह्नकहेमजम् ॥

पद्मरागसमायुक्तं कुण्डलद्वयमर्पयेत् ।
प्रत्याम्नायसुवर्णं वा दत्वाचार्यपदाम्बुजे ॥

वासोयुगं समर्प्याथ क्षौमं कार्पासमेव च ।
सालग्रामशिलां शुद्धां वज्रकीटविनिर्मिताम् ॥

सवत्सगोद्वययुतां बहुदक्षिणयान्विताम् ।
समर्पयेदथाचार्यहस्ताब्जे देशिकोत्तमः ॥

धनाढ्यो राजपुत्रश्च दद्यात्साहस्रदक्षिणाम् ।
शतं तदर्धमथवा तदर्धार्धमथापि वा ॥ -११५

पञ्चनिष्कं चतुर्निष्कं निष्कद्वयमितं तु वा ।
आचार्याय धनं दद्याद्वित्तलोभविवर्जितः ॥

आचार्यपत्नीमभ्यर्च्य वासोऽलङ्करणादिभिः ।
द्वादशाथ सुवासिन्यो भोज्या विप्राश्च तद्दिने ॥

दक्षिणाभिश्च ताम्बूलैस्तोषयेद्देवताधिया ।
आचार्यादाशिषः प्राप्य सहभुञ्जीत बन्धुभिः ॥

कार्तिके मासि कृत्वेत्थं व्रतमत्यन्तपावनम् ।
श्रीमदष्टार्णमन्त्रस्य मद्विद्यायाश्च शाश्वतीम् ॥

महतीं सिद्धिमाप्नोति सद्य एव न संशयः ।
पुत्रवत्तमहं नित्यं पालयामि न संशयः ॥ -१२०

अवश्यं मन्दभाग्यस्य सन्निधौ तस्य सन्ततम् ।
स्थित्वा समस्तमैश्वर्यं ददाम्यष्टगुणान्वितम् ॥

शङ्खादीनां निधानानां आधिपत्यं च शाश्वतम् ।
अक्षयं धनरत्नौघं गजाश्वरथसङ्कुलम् ॥

अक्षयं महदारोग्यमक्षयां पुष्टिमप्यथ ।
अक्षयान् सकलान् भोगान् दिव्यानपि च मानुषान् ॥

अक्षयं सर्वगौभाग्यं ददाम्यस्य न संशयः ।
मद्विद्यायाः प्रसन्नायास्साङ्गसम्पूर्णदक्षिणा ॥

महती या पुरश्चर्या महासिद्धिप्रदायिनी ।
तद्द्वादशफलं तस्य भवत्येव न संशयः ॥ -१२५

इत्थं कृत्वा पुरश्चर्यां कार्तिके मासि सिद्धिदे ।
असाध्यमपि देवानां साधयत्येव वांछितम् ॥

आचार्यानुग्रहात्तस्य वंश्यानामपि शाश्वतीम् ।
ददाति महतीं लक्ष्मीमन्तेऽपि परमंपदम् ॥

आचार्यपत्नीपुत्रादि पोषणार्थं दिने दिने ।
कृत्वा धनार्जनं नित्यं दत्वाचार्यपदाम्बुजे ॥

साङ्गदक्षिणयायुक्तवाजिमेधशतोद्भवम् ।
अवश्यं फलमाप्नोति संशयो नात्रविद्यते ॥

आचार्यार्थं विवाहार्थं यागार्थं च दिने दिने ।
धनार्जनं महत्पुण्यमाहुर्दिव्या महर्षयः ॥ —१३०

आचार्यचरणद्वंद्वे पुरश्चरणकर्मणि ।
बहुलां दक्षिणां दत्वा ब्रह्म प्राप्नोति शाश्वतम् ॥

श्रोत्रियाय दरिद्राय विवाहार्थं धनं मितम् ।
याचित्वाऽपि प्रदायाऽथ ब्रह्म प्राप्नोति शाश्वतम् ॥

आचार्यस्याथवा स्वस्य यागार्थं जगतीतले ।
कृत्वा धनार्जनं नित्यं निमग्नैरपि कोटिशः ॥

पितृभिः पुत्र पौत्राद्यैस्सहितोऽसौ परं पदम् ।
मम पत्युर्भगवतस्तद्धाम समवाप्नुयात् ॥

मज्जन्मदिवसे योऽस्मिन्नाचार्यपदाम्बुजे ।
दक्षिणामपि यत्किञ्चिद्दत्वा सिद्धिं परां व्रजेत् ॥ —१३५

तदारभ्य प्रतिदिनं सप्तविंशाक्षरीमिमाम् ।
जप्त्वा पञ्चशतं प्रातः सायमष्टोत्तरं शतम् ॥

सौभाग्यं परमं दीर्घमायुरारोग्यमुत्तमम् ।
सम्प्राप्य सप्तद्वीपानामचिरादधिपो भवेत् ॥

भगीरथाम्बरीषादिसदृशो राज्यसंपदा ।
देहान्ते भगवद्धाम याति वंशसमन्वितः ॥

यद्यत्रवसुधादानं साङ्गदक्षिणमाचरेत् ।
तस्य पुण्यफलं वक्तुं नाहं शक्ताऽस्मि वाऽमराः ॥

शुक्लतृतीया वैशाखे महासिद्धिप्रदायिनी ।
पौर्णमासी च वैशाखी महासिद्धिकरा मता ॥ —१४०

उत्थानद्वादशीमासे सर्वा सिद्धिकरी स्मृता ।
सिद्ध्यर्थं यत्नवानित्थं पत्युर्मम च भक्तिमान् ॥

मज्जन्मदिवसेऽवश्यं कुर्याद्व्रतमतन्द्रितः ।
प्रतिपद्दिनमारभ्य द्वादश्यन्तं दिने दिने ॥

कार्तिके मासि कृत्वेत्थं वर्षे वर्षे व्रतं शुभम् ।
इहापि साक्षाद्भगवत्तेजसः कलयान्वितः ॥

मन्त्रमूर्तिर्विशुद्धात्मा स्वात्मानं ब्रह्मरूपिणम् ।
पश्यत्येव स्वचक्षुर्भ्यां चिदानन्दरसात्मकम् ॥

श्रूयते दूरगा वार्ता खेचरानपि पश्यति ।
पक्षे पक्षेऽथवा मासि मासि वा मां त्रयीमयीम् ॥ —१४५

पश्यत्येव स्वचक्षुर्भ्यां नारायणसमन्विताम् ।
मत्प्रसादकरीं विद्यामिमां पञ्चशतं जपन् ॥

स्वकटाक्षेक्षणेनान्यान् श्रीसमृद्धा करोत्यपि ।
ऐश्वर्यमपि माहेन्द्रमासुरीमपि सम्पदम् ॥

तृणीकरोति मद्भक्तः स्वश्रिया नात्र संशयः ।
इत्युक्त्वा सा महालक्ष्मीर्नारायणसमन्विता ॥

पश्यतां सर्वदेवानामपि चान्तर्हिताऽभवत् ।
भूयोपि संप्रवक्ष्यामि भार्गवे वासरे व्रतम् ॥

यत्कृत्वा साधको लोके महतीं सिद्धिमश्नुते ।
कार्तिके मार्गशीर्षे वा माघेवा फाल्गुनेऽपि वा ॥ –१५०

समारभ्य द्विजः कुर्याद्भार्गवे वासरे व्रतम् ।
समस्तसंपत्साम्राज्यकारणं भुक्तिमुक्तिदम् ॥

भृगुवारव्रतं पुण्यमनायासफलप्रदम् ।
उक्तेषु शुभमासेषु प्रथमे भार्गवे दिने ॥

समारभ्य द्विजः कुर्याद्भार्गवे वासरे व्रतम् ।
नित्यं पञ्चशतं जप्त्वा स्वाचार्याज्ञापुरस्सरम् ॥

भार्गवेऽपि दिने जप्त्वा तथा पञ्चशतं श्रियम् ।
अष्टाविंशतिधा हुत्वा गायत्र्यादौ गवां घृतम् ॥

श्रीमदष्टाक्षरेणाऽथ शतमष्टोत्तरं हुनेत् ।
प्रसन्नलक्ष्मीमन्त्रेण त्रिशतं जुहुयाद्घृतम् ॥ –१५५

सुवासिनीत्रयं विप्रत्रितयं चापि भोजयेत् ।
आचार्यपत्नी सम्पूज्या सततं भार्गवे दिने ॥

आचार्यवल्लभां यद्वा मासाद्ये भार्गवे दिने ।
अभ्यर्च्य गन्धपुष्पाद्यैर्वासोऽलङ्कारमर्पयेत् ॥

कर्षस्वर्णं तदर्धं वा निष्कस्वर्णं तदर्धकम् ।
समर्प्य स्वगुरोः पत्न्यै महालक्ष्मीधिया नृप ॥

एकं वा मिथुनं लक्ष्मीलक्ष्मीपतिधियार्चयेत् ।
गुरुपत्न्या असान्निध्ये दद्यादाचार्यपादयोः ॥

गुरुपुत्राय वा दद्यात्तत्पौत्रायाऽथवार्पयेत् ।
सर्वेषामप्यसान्निध्ये भगवत्सन्निधौ नृप ॥ —१६०

संकल्प्य दक्षिणाद्रव्यं प्रेषयेच्च ततःपरम् ।
अथवाचार्यपादाब्जारूढश्रीपादुकायुगे ॥

समर्प्य प्रेषयेत्पश्चादाचार्याय ततोव्रती ।
भार्गवे वासरे कुर्वन् विशिष्टं व्रतमुत्तमम् ॥

जप्त्वा पञ्चशतं नित्यं सायमष्टोत्तरं शतम् ।
लभते मन्दभाग्योऽपि स्वर्णरत्नसमाकुलाम् ॥

गजाश्वरथसम्पूर्तां महालक्ष्मीमचञ्चलाम् ।
न पुत्रैर्न कलत्रेण न रत्नैर्न धनैरपि ॥

न वियुज्येत पशुभिः कुत्रचित्क्वापि भूपते ।
आयुष्यस्याऽथ वृद्धिः स्यादारोग्यस्य च सन्ततम् ॥ —१६५

ऋग्यजुस्सामवेदानामपि पारगतो भवेत् ।
मीमांसाद्वयतर्कादिशास्त्रपारगतोऽपि च ॥

भूत्वा सर्वगुणोपेतान् प्राप्य पुत्राननुत्तमान् ।
योगमष्टाङ्गमासाद्य भुक्त्वा भोगांश्च दुर्लभान् ॥

यात्यन्ते भगवद्धाम कुलानां शतसंयुतः ।
महासिद्धिप्रदान्यस्यास्सन्त्यन्यानि श्रुतौ स्मृतौ ॥

अवश्यं साधयेदेनां सिद्धिमिच्छन्ननुत्तमाम् ।
दुर्लभामपि मनुष्याणाममराणां च दुर्लभाम् ॥

अनया सर्वश्रेयस्सिद्धिर्महीपते साध्यते ।
दीक्षायुक्तश्शुचिर्नित्यं विद्यां राज्यश्रियो जपेत् ॥ —१७०

श्रीमदष्टाक्षरीं जप्त्वा लभेच्छ्रेयःपरम्पराम् ।
साम्राज्यलक्ष्मीविद्याया माहात्म्यमघनाशनम् ॥
किञ्चिदुक्तं मया तुभ्यं किं पुनः श्रोतुमिच्छसि ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे एकचत्वारिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥



**राजोवाच –**

दीक्षाभिषेक इत्युक्तस्त्वया सर्वजगत्पते ।
तद्विधानं वदस्वाद्य मम नारायण प्रभो ॥

**श्री भगवानुवाच –**

अथाभिषेकं वक्ष्यामि दीक्षाविधिमनुत्तमम् ।
उपासना शतेनापि विना येन न सिद्धयति ॥

अन्तेवासी विशुद्धात्मा स्वाचार्यं यत्नतोऽन्वहम् ।
तोषयेन्सकलैरर्थैर्भक्तिश्रद्धासमन्वितः ॥

यदा ददाति सन्तुष्टः प्रसन्नो वरदो मनुम् ।
स्वयमेव तथा कुर्यादिति कर्तव्यता क्रमम् ॥

विशुद्धदेशकालेषु शुद्धात्मा नियतोऽन्वहम् ।
शुश्रूषितश्च सततं भक्त्या शिष्येण सादरम् ॥ –५

संकल्प्योपोष्य कर्तव्यमङ्कुरारोपणं नृप ।
कुर्यान्नान्दीमुखश्राद्धमादौ च स्वस्तिवाचनम् ॥

स्वगृह्योक्तविधानेन तदेतद्विदधीत वै ।
मधुमासे भवेद्दुःखं माधवे रत्न संपदः ॥

अशुभं भवति ज्येष्ठे आषाढे बन्धुनाशनम् ।
समृद्धिः श्रावणे नूनं वीर्याणां सम्पदामपि ॥

पीडा भाद्रपदे मासि सर्वसम्पद आश्विने ।
ज्ञानं स्यात्कार्तिके सौख्यं मार्गशीर्षे भवत्यपि ॥

पौषे ज्ञानक्षयो माघे भवेत्संदर्शनं मम ।
समस्ताभीष्टसिद्धिः स्यात्फाल्गुने मासि सन्ततम् ॥

रवौ गुरौ बुधे शुक्रे कर्तव्यं भानुवासरे ।
अश्विनी रोहिणी स्वाती विशाखा हस्तभेषु च ॥

ज्येष्ठोत्तरात्रयेष्वेव कुर्यान्मन्त्राभिषेचनम् ।
पूर्णिमा पञ्चमी चैव तृतीया सप्तमी तथा ॥

त्रयोदशी च दशमी प्रशस्ता सर्वकामदाः ।
पञ्चाङ्गशुद्धदिवसे वलवत्यपि वाक्पतौ ॥

गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोधिते ।
चन्द्रतारानुकूले च शस्यते सर्वकर्मसु ॥

न वारमासदोषः स्याद्ग्रहणे चन्द्रसूर्ययोः ।
तत्र यद्यत्कृतं सर्वं तदनन्तफलप्रदम् ॥

नान्यदन्वेषणं चन्द्ररविपर्वणि भूपते ।
सवितुर्ग्रहणं श्रेष्ठं सौभाग्य ग्रहणादपि ॥

यदि चूडामणिस्तत्र ग्रहणद्वितये भवेत् ।
कृतस्य कर्मजातस्य फलं वक्तुं न शक्यते ॥

यो यो मन्त्रो गृहीतोऽत्र सद्यस्सिद्धिमान् भवेत् ।
गृहीतापि पुनर्विद्या तत्र दीक्षापुरस्सरा ॥

आचार्यवदनाल्लब्धमहासिद्धिप्रदायिनी ।
भूयोऽपि सर्वविद्यानां ग्रहणे चन्द्रसूर्ययोः ॥

दीक्षापुरस्सराप्राप्तिराचार्यवदनाद्यदि ।
अनायासेन सिद्धिःस्यात्सद्य एव फलप्रदा ॥

सिद्धये सर्वविद्यानां तत्र तीर्थाभिषेचनम् ।
कर्तव्यं सर्वयत्नेन शिष्याणां फलसिद्धये ॥

चतुर्भिर्वर्णकैस्सम्यग्रक्तपीतसितासितैः ।
सुरम्यं मण्डलं कृत्वा तत्र धान्याञ्जलिद्वयम् ॥

निधाय कलशं तत्र तीर्थतोयेन पूरितम् ।
वेष्टितं वस्त्रयुग्मेन पञ्चरत्न समन्वितम् ॥

आम्राश्वत्थ प्रसूनैश्च शाखाभिरुपशोभितम् ।
नालिकेरफलोपेतं मङ्गलैः परितोज्ज्वलम् ॥

सर्वोत्सवसमायुक्तं कृत्वा तत्रार्चयेद्धरिम् ।
श्रिया चित्कलया युक्तं यन्त्रेष्टाक्षरसिद्धिदे ॥

ऋग्यजुस्सामसूक्तैश्च स्तोत्रैः पौराणिकैरपि ।
मन्त्रैरागमिकैश्चैव वैष्णवैर्नाथमर्चयेत् ॥

वरयेद्वैष्णवान् विप्रानुत्तमाभरणान्वितान् ।
श्रावयेत्तैश्च सूक्तानि मन्त्रान् विष्णूत्सवे तदा ॥

आचार्यः पूर्वविधिना न्यासजातं समाचरेत् ।
अथवा मातृकां शुद्धां मातृकां वैष्णवीमपि ॥

तन्मूर्तिपञ्जरन्यासं तत्वन्यासमतःपरम् ।
वर्णन्यासं दशविधं चिन्मयीमातृकामपि ॥

पञ्चाङ्गं पुरतो न्यस्य न्यासं कृत्वेत्थमादरात् ।
न्यासजालमिति न्यस्य पूजयेत्तत्र पूर्ववत् ॥ —३०

पूजनीयैश्च पूर्वोक्त साधनैः श्रीपतिं विभुम् ।
उत्तमं कारयेन्नृत्यगीतवाद्यैर्मनोहरैः ॥

पुण्यस्त्रीभ्यो गृहस्थेभ्यो दद्याद्वसु सुविस्तरम् ।
गन्धपुष्पाम्बुताम्बूलसुवासो भूषणादिकम् ॥

भोजनं चान्नपानीयमन्येभ्योऽपि तपोधन ।
एवं तत्रोत्सवं कृत्वा त्रिकालमपि पूजयेत् ॥

रात्रावपि समभ्यर्च्य त्रिकालं विजितेन्द्रियः ।
निराहारः फलाशी वा पूर्वेद्युस्त्रिसहस्रकम् ॥

श्रीमदष्टाक्षरीं जप्त्वा शताधिकसहस्रकम् ।
लक्ष्मीहृदयविद्यां वा द्वादशार्णमथापि वा ॥ —३५

अष्टाक्षरीं महालक्ष्म्याः प्रजपेद्वा षडक्षरीम् ।
परेऽहनि तथा प्रातः पूर्ववत्सर्वमाचरेत् ॥

सम्पूज्य विधिवत्साक्षाल्लक्ष्मीनारायणौ विभू ।
कुण्डं निर्माय विधिवत् कृत्वा तत्राग्नि मण्डलम् ॥

तत्र वह्निं प्रतिष्ठाप्य गृह्योक्तविधिना शुचिः ।
साङ्गावरणमावाह्य तत्राभ्यर्च्य श्रियःपतिम् ॥

श्रीमदष्टाक्षरेणाथ मन्त्ररत्नेन भूपते ।
दधिदुग्धाज्यसहितैः सहस्रं जुहुयात्तिलैः ॥

श्रीमन्त्रान्यतमेनाथ त्रिशतं जुहुयाद्घृतम् ।
कृत्वा पूर्णाहुतिं तत्र ततस्तं कलशेऽर्चयेत् ॥ —४०

ततो दिक्षुबलिं दत्वा पार्षदेभ्यस्समाहितः ।
शिष्यवर्यमथाहूय भक्तिनम्रमकल्मषम् ॥

प्राणानायम्य विधिवदभिषेकं समाचरेत् ।
पावमानेन सूक्तेन सुरास्त्वामिति मन्त्रकैः ॥

अभिषिञ्चेच्च तन्मूर्ध्नि तदेतत्कलशोदकम् ।
नारायणं स्वयं विष्णुं संनिदधाति वै ॥

सर्वगस्सर्वतोऽप्यस्मिन् प्रसीदति दयानिधिः ।
इति संस्मृत्य संस्मृत्य तज्जलैरभिषेचयेत् ॥

परिधाप्य च वासश्च चन्दनान्यनुलिप्य च ।
धारयित्वाङ्गुलीयादि भूषणान्यपि सर्वशः ॥ –४५

वैष्णवीं मातृकां न्यस्य तत्वन्यास मतः परम् ।
तन्मूर्तिपञ्जरन्यासमृष्यादिन्यासपूर्वकम् ॥

आत्मवद्विधिवच्छिष्यतनावेवं प्रविन्यसेत् ।
ततस्तच्छिरसि स्वस्य दत्वा हस्तं च दक्षिणम् ॥

श्रीमदष्टाक्षरीं विद्यामष्टोत्तरशतं जपेत् ।
श्रीमन्त्रान्यतमं पश्चाच्छतमष्टोत्तरं जपेत् ॥

रश्मिमालामनुस्मृत्य सकृदेव ततःपरम् ।
आचार्योऽसौ प्रसन्नोऽस्मै शिष्यायोदकपूर्वकम् ॥

तद्दक्षिणकरे दद्यान्मन्त्रराजं महीपते ।
श्रीमन्त्रान्यतमेनाथ स्वेष्टमन्त्रेण संयुतम् ॥ –५०

स्वतोज्योतिर्मयीं विद्यां गच्छन्तीं भावयेद्गुरुः ।
आगतां भावयेच्छिष्यो धन्योऽस्मीति पुनःपुनः ॥

शिष्यस्य दक्षिणे कर्णे श्रीश्रीशद्वादशाक्षरीम् ।
दत्वाऽथ श्रीमदष्टार्णयन्त्रराजं समर्पयेत् ॥

महालक्ष्मीमनुं दद्यादेतेष्विष्टतरं ततः ।
शिष्यस्य दक्षिणे कर्णे तत इष्टमनूनपि ॥

दत्वाघ्राय शिरः पश्चात्कुर्यादालिङ्गनं नृप ।
कृतकृत्यस्ततः शिष्यस्तस्मै सर्वं निवेदयेत् ॥

यच्च यावच्च तद्भक्त्या गुरवे हृष्टमानसः ।
गोभूहिरण्याभरणगृहक्षेत्रादिकं नृप ॥ —५५

नोचेदर्धं तदर्धं वा चतुर्थांशमथापि वा ।
अक्लेशादन्नवस्त्रादि दद्याद्वित्तानुसारतः ॥

राजावापि धनाढ्यो वा ग्रामाणां शतमर्पयेत् ।
सहस्रदक्षिणायुक्तमाचार्याय प्रसन्नधीः ॥

सप्तरात्रं पञ्चरात्रं त्रिरात्रं वैकरात्रकम् ।
आदौ दीक्षाविधिं कृत्वा विद्यां दद्याद्गुरुस्ततः ॥

ग्रहणे समनुप्राप्ते दीक्षां कृत्वैकवासरम् ।
कलशस्थापनादीनि कृत्वा पूर्वोदितानि च ॥

श्रीमदष्टाक्षरीं जप्त्वा त्रिसहस्रं समाहितः ।
त्रिशताधिकसाहस्रं श्रीमन्त्रान्यतमं जपेत् ॥ —६०

ग्रहणस्पर्शसमये स्नात्वा नद्यां स्वयं गुरुः ।
श्रीमदष्टाक्षरेणाथ सहस्रं त्रिशताधिकम् ॥

दधिदुग्धाज्यसहितैर्हुत्वा कृष्णतिलैः शुभैः ।
श्रीमन्त्रान्यतमेनाऽथ शतमष्टोत्तरं हुनेत् ॥

ब्रह्मार्पणाहुतिं कृत्वा नूतनोदकपूरिते ।
पूर्ववत्पूजयेत्कुम्भे लक्ष्मीनारायणावुभौ ॥

दृढभक्तियुतं शिष्यमभिषिच्योदकेन च ।
परिधाप्य च वासश्च धारयित्वाऽथ भूषणम् ॥

श्रीमदष्टाक्षरीं तस्य शिरःस्पृष्ट्वा शतंजपेत् ।
ततो देहेऽपि विन्यस्य वैष्णवीमातृकां तु वा ॥ —६५

पञ्चाङ्गन्यासमात्रं वा कारयित्वा महीपते ।
श्रीमदष्टाक्षरीं विद्यां ब्रह्मविद्यापुरस्सराम् ॥

दत्वास्य दक्षिणेकर्णे दद्यादिष्टं श्रियो मनुम् ।
पश्चादिष्टमनून्दत्वा कारयेदाशिषस्ततः ॥

शिष्योऽपि कृतकृत्यात्मा स्वाचार्यचरणद्वये ।
सर्वस्वं वा तदर्धं वा तदर्धार्धं समर्पयेत् ॥

यद्वा धेनुद्वयं भूमिं पक्वसस्यसमन्विताम् ।
पञ्चविंशति निष्कं वा तदर्धं वा सुवर्णकम् ॥

कुण्डलद्वितयं दत्वा नूतनं गृहमर्पयेत् ।
दत्वा बहूनि वासांसि धान्यराशिमथाक्षयम् ॥ —७०

प्रकारान्तरमालम्ब्य स्वाचार्यं मत्स्वरूपिणम् ।
अवश्यं बहुभिर्वित्तैस्तोषयेन्मन्त्रसिद्धये ॥

गुरुपुत्रकलत्रादीनपि सन्तोषयेत्ततः ।
अर्हणाभिश्च बहुधा वासोऽलङ्करणादिभिः ॥

वित्तशाठ्यं परित्यज्ज गुरवे दत्तदक्षिणः ।
कृतकृत्यो भवेत्सद्यस्सिद्धमन्त्रो न संशयः ॥

दीक्षाभिषेकविधिना य आचार्यमुखाम्बुजात् ।
उपदिष्टांश्च भूयोऽपि यो गृह्णाति मनूत्तमान् ॥

अवश्यं महतीं सिद्धिं प्राप्नुयात्सद्य एव हि ।
तावत्कालकृतं होमजपादिफलमक्षयम् ॥ —७५

प्रविशत्यस्य शिष्यस्य शरीरे नात्र संशयः ।
तस्मादाचार्यपादाब्जे दातव्या पूर्णदक्षिणा ॥

सम्पूर्णदक्षिणाभावे समस्तं निष्फलं भवेत् ।
विद्यास्समस्ता दत्वाऽपि रहस्यमुपदिश्य च ॥

अन्तेवासिनमाचार्यो बहुकालं परीक्ष्य च ।
उपदिष्टं च भूयोऽपि मन्त्ररत्नमिदं शुभम् ॥

जपहोमादिभिस्सिद्धं दद्याद्दीक्षापुरस्सरम् ।
रवीन्दुग्रहणे पुण्ये यदि दीक्षाभिषेचनम् ॥

प्राप्तमाचार्यसान्निध्यात्सद्यस्सिद्धमनुर्भवेत् ।
एतत्कलेबरान्तेऽसौ वैकुण्ठं भगवत्पदे ॥

सुरसाम्राज्यलक्ष्म्याऽसावभिषिक्तो भवेद्ध्रुवम् ।
अविज्ञाय कालं मासवारचन्द्रादिसंभवम् ॥

मन्त्रमात्रं स्वशिष्याय यो दद्यात्स हि घातुकः ।
तस्मात्सर्वज्ञमाचार्यमाश्रयेद्भगवद्धिया ॥

अष्टाक्षरोपदेशान्ते श्रीमन्त्रान्सकलानपि ।
वासुदेवादिकान्मन्त्रान् ब्रह्मनारायणादिकान् ॥

शिष्यस्य दक्षिणे कर्णे दद्याद्वा रश्मिमालिकाम् ।
इयं भागवती प्रोक्ता दीक्षा नारायणी शुभा ॥

न नास्तिकाय दातव्या नाशिष्याय कदाचन ।
न संदिग्धाय मूर्खाय वेदनिन्दापराय च ॥

दीक्षाविधिमविज्ञाय मासादिबलमप्यथ ।
यो ददाति महाविद्यां शिष्यं चात्मानमप्यसौ ।

प्रापयत्येव नरकं यमलोके सुदारुणम् ॥
अज्ञात्वा मासवारादिबलमाचार्यवक्त्रतः ।

यो गृह्णाति महाविद्यां न स सद्गतिमश्नुते ।
किञ्चास्य विपदस्सर्वा भवन्तीह दिने दिने ॥

तादृशेनोपदिष्टांश्च भूयोऽपि सुशुभे दिने ।
सर्ववित्सद्गुरोर्वक्त्राद्गृहीत्वा सिद्धिमश्नुते ॥

इयं नारायणी दीक्षा वैष्णवी सिद्धिदायिनी ।
दीक्षितेष्वपि सर्वेषु दीक्षितो वैष्णवोऽधिकः ॥ –९०

अश्वमेधादि यागेषु दीक्षितेभ्योप्यसौ महान् ।
एकेन जन्मनैवासौ मुक्त इत्यभिधीयते ॥

दीक्षाभिषेकं संप्राप्य स्वाचार्यकरुणावशात् ।
श्रीमदष्टाक्षरीं विद्यां सकृत्स्मृत्वापि मुच्यते ॥

दीक्षाभिषेकयुक्तो यः श्रीमदष्टाक्षरीं जपेत् ।
अष्टादशाक्षरींवापि ब्रह्मविद्यापुरस्सराम् ॥

साम्राज्य श्रीमहाविद्यां श्रीमन्त्रान्वाथ वैष्णवान् ।
इहापि सिद्धविद्योऽसौ मुक्तःसंसारसागरात् ॥

अनन्तमक्षरं साक्षात्परं ब्रह्म प्रपश्यति ।
दीक्षाभिषेचनं लब्ध्वा पञ्चधा वा त्रिधैकधा ॥ –९५

सिद्धिमासाद्य महतीं ब्रह्म तादात्म्यसिद्धिभाक् ।
नाष्टाङ्गयोगाभ्यासेन न यागैः पूर्णदक्षिणैः ॥

तादृशीं गतिमाप्नोति यादृशीं विष्णुविद्यया ।
भूयो भूयः प्रवक्ष्यामि भगवद्दीक्षयान्विताः ॥

श्रीमदष्टाक्षरीं जप्त्वा सिद्धिं पाश्यथं (प्राश्नुत) शाश्वतीम् ।
दीक्षाभिषेचनं प्रोक्तमिति युष्मभ्यमादरात् ॥

इतः परं द्विजश्रेष्ठाः किं पुनः श्रोतुमिच्छथ ।

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे द्विचत्वारिंशोऽध्यायः ॥



## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

ऋषय ऊचुः –

ऋष्यशृङ्ग महाभाग भवद्वदनपङ्कजात् ।
श्रुतमस्माभिरत्यन्तरहस्यमपि सिद्धिदम् ॥

कृतकृत्या वयं सर्वे भूयो धन्यतरा वयम् ।
भगवच्छास्त्रमस्माभिः श्रुतं त्वद्वदनाम्बुजात् ॥

भूयोऽपि तव वक्त्राब्जाच्छ्रोतुकामा जगद्धितम् ।
योगस्वरूपं पृच्छामस्तदस्माकं वद प्रभो ॥

योगो नाम किमेतस्य स्वरूपं कीदृशं परम् ।
अङ्गान्यष्टाविति प्रोक्तमस्य तत्सकलं वद ॥

**श्री ऋष्यशृङ्ग उवाच —**

शृणुध्वं ब्राह्मणश्रेष्ठा यथा दाशरथिः पुरा ।
वसिष्ठादि महर्षीणां सन्निधौ जानकीपतिः ॥

कथयामास योगस्य स्वरूपं शम्भवे विभुः ।
यथा नारायणो योगी जनकाय महात्मने ॥

कथयामास योगस्य स्वरूपं ब्रह्मसाधनम् ।

**श्री भगवानुवाच –**

शृणु राजन् प्रवक्ष्यामि योगमष्टाङ्गसंयुतम् ॥

यदभ्यासान्नरो याति तत्परं ब्रह्म शाश्वतम् ।
नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ॥

योगाभ्यासरतो भूयात्तत्साधनमथोच्यते ।
त्यज दुर्जनसंसर्गं भज साधुसमागमम् ॥

कुरु पुण्यमहोरात्रं स्मरविष्णुं सनातनम् ।
अष्टावङ्गानि वक्ष्यामि योगस्य वसुधापते ॥

पातकेभ्यो विमुक्तः स्याद्येषां श्रवणतोऽपि च ।
यमश्च नियमः पश्चादासनं च तृतीयकम् ॥

प्राणायामश्चतुर्थः स्यात् प्रत्याहारस्तु पञ्चमः ।
धारणा च तथा ध्यानं समाधिरिति चाष्टमम् ॥

प्रत्येकमेषां वक्ष्यामि लक्षणान्यपि सुव्रत ।
तद्विभज्य प्रवक्ष्यामि तत्वस्य लक्षणमप्यथ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ॥

सर्वेषामपि भूतानामक्लेशजननं हि यत् ।
वाङ्मनःकर्मभिर्नूनमहिंसेत्यभिधीयते ॥ -१५

यथादृष्टश्रुतार्थानां स्वरूपकथनं पुनः ।
सत्यमित्युच्यते धीरैस्तद्ब्रह्म प्राप्तिसाधनम् ॥

तृणादेरप्यनादानं परेषां वसुधापते ।
अस्तेयमेतदप्यङ्गं ब्रह्मप्राप्तेः सनातनम् ॥

अवस्थास्वपि सर्वासु कर्मणा मनसा गिरा ।
स्त्रीसङ्गतिपरित्यागो ब्रह्मचर्यं प्रवक्ष्यते ॥

परेषां दुःखमालोक्य स्वस्यैवालोक्य यत्नतः ।
उत्सादनानुसन्धानं दयेति प्रोच्यते बुधैः ॥

व्यवहारेषु सर्वेषु मनोवाक्कायकर्मभिः ।
सर्वेषामपि कौटिल्यराहित्यं ह्यार्जवं भवेत् ॥ -२०

सर्वात्मना सर्वदापि सर्वत्राप्यपकारिषु ।
बन्धुष्विव समाचारः क्षमास्याद्ब्रह्मवित्तम ॥

इच्छा प्रयत्नराहित्यं ज्ञातेषु विषयेष्वपि ।
लोभवत्सु धृतिं धीराः प्रवदन्ति सतां वर ॥

भोज्यस्यैव चतुर्थांशभोजनं स्वस्थचेतसः ।
अत्युग्रकटुतिक्ताम्ललवणादिविवर्जितम् ॥

हितं मेध्यं महीपाल मिताहारं प्रचक्षते ।
निर्गतं नवरन्ध्रेभ्यो रोमकूपेभ्य एव च ॥

मलं वदन्ति तद्द्वारा क्षालनं शौचमुच्यते ।
मृज्जलाभ्यां बहिस्सम्यङ्निर्मलीकरणं तथा ॥ –२५

मनस्स्थैर्यं बहिः शौचमन्तः शौचं विबुधाः ।
एते दश यमा भूप ब्रह्मताप्राप्तिहेतवः ॥

तपश्च तुष्टिरास्तिक्यमीश्वराराधनं तथा ।
सिद्धान्तालोचनं चैव लज्जा दानं मतिस्तथा ॥

जपो व्रतं दशैतानि सुतीक्ष्णनियमाः स्मृताः ।
प्रत्येकमेषां वक्ष्यामि लक्षणानि महीपते ॥

तपस्त्वनशनं नाम विधिपूर्वकमिष्यते ।
अनायासोपपन्नेन तृप्त्यर्थेनैव जीवनम् ॥

तुष्टिरेषाऽमृता येन तत्प्राप्तिर्नानया विना ।
श्रुत्याद्युक्तेषु विश्वासमास्तिक्यं प्रवदन्तिहि ॥ –३०

इष्टदेवार्चनं सम्यग्विधिपूर्वकमन्वहम् ।
त्रिसन्ध्यमेकसंध्यं वा भवत्येवेश्वरार्चनम् ॥

वैष्णवागमसिद्धान्तश्रवणं मननं तथा ।
श्रुतिस्मृतिपुराणादि मध्यान्तोक्तार्थदर्शनम् ॥

सिद्धान्तश्रवणं ह्येतत्प्रोच्यते तत्वदर्शिभिः ।
श्रुत्यादिभिर्लौकिकैश्च यद्यदत्यन्तनिन्दितम् ॥

तत्राप्रवर्तनं लज्जा वाङ्मनःकर्मणामपि ।
यदिष्टदेवतां ध्यात्वा तदर्पणधियाऽन्वहम् ॥

सत्पात्रे दीयतेऽन्नादि तद्दानमभिधीयते ।
तर्केणाप्यनुसन्धानं सम्यक् सदसतोरपि ॥ –३५

शास्त्रयोर्मतिरियं तत्वविद्भिरुदीर्यते ।
गुरोर्लब्धस्य मन्त्रस्य शश्वदावर्तनं हि यत् ॥

अन्तरङ्गाक्षराणां च न्यासपूर्वं जपो भवेत् ।
कर्तव्यस्य समस्तस्य नियमग्रहणं व्रतम् ॥

नियमव्यतिरेकेण सर्वं भवति निष्फलम् ।
यमैश्च नियमैर्यद्यत् कृतं तत्सफलं भवेत् ॥

एकमन्त्रे स्थिरीभावः पूर्वोक्तैर्नियमैः सह ।
आचार्यार्पितदेहस्य चैतदासनमुच्यते ॥

बहुविद्यावतोऽप्येक विद्यायां स्थिरचित्तता ।
अङ्गत्वेनान्यविद्यानां जप आसनमुच्यते ॥

प्राणायामानथो वक्ष्ये मुमुक्षोरुपकारकान् ।
यैः कृतैर्दह्यतेऽघौघः शुष्केन्धनमिवाग्निना ॥

इन्द्रियेष्वपि ये दोषा वातपित्तकफोद्भवाः ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रादिसंभवाः ॥

एते सर्वेऽपि दह्यन्ते प्राणस्यान्तर्निरोधनात् ।
प्रायश्चित्तमघौघानां मुख्यमेतद्वदन्त्यपि ॥

पुनरावृत्तिरहितशाश्वतब्रह्मकाङ्क्षिभिः ।
प्राणायामश्च सततं कर्तव्यो विधिवन्मुने ॥

सम्यङ् निरुध्य च प्राणानन्तःकरणमात्मनि ।
स्वयमेवावशिष्टः सन् ब्रह्मभूयाय कल्पते ॥

जानुद्वयं कराग्रेण त्रिःपरामृश्य सत्वरम् ।
प्रदद्याच्छोटिकामेकामियं मात्रा कनीयसी ॥

दश प्रणवसंयुक्तां गायत्रीं शिरसा सह ।
त्रिर्जपेदायतप्राणः प्राणायामोऽयमुच्यते ॥

अधमो मध्यमश्चैव प्राणायामस्तथोत्तमः ।
अधमः पञ्चदशभिः श्रीमदष्टाक्षरीजपैः ॥

मध्यमः पञ्चविंशद्भिः श्रीमदष्टाक्षरीजपैः ।
पञ्चाधिकैश्च चत्वारिंशद्भिरष्टाक्षरीजपैः ॥

प्राणायामोऽयमुक्तोऽसावुत्तमो ब्रह्मवादिभिः ।
पूरकेऽथ त्रिधोच्चार्य कुम्भके पूर्ववन्नृप ॥ —५०

रेचके त्रिशउच्चार्य प्राणायामोऽयमुच्यते ।
प्राणायामैः कृतैः शश्वन्नित्यं षोडशिभिर्नृप ॥

संवत्सरकृतैः पापैस्सद्य एव विमुच्यते ।
परोपसन्तापजं पापं परद्रव्यापहारजम् ॥

परस्त्रीमैथुनोत्पन्नं प्राणायामशतं दहेत् ।
महापातकजं पापं शतावृत्त्योपपातकम् ॥

अन्यानि शतधावृत्तान्युपपापानि भूपते ।
सर्वाण्यपि प्रदह्यन्ते प्राणायामैः चतुःशतैः ॥

आदावन्ते च यत्नेन प्राणायामान् समाचरेत् ।
कर्मस्वपि च सर्वेषु शुभेषु ह्यशुभेषु च ॥ —५५

प्राणायामैर्विना यद्यत्कृतं कर्म निरर्थकम् ।
अतो यत्नेन कर्तव्याः प्राणायामाः शुभार्थिभिः ॥

यावच्छ्वयं नियम्यासून् मनसैव जपेन्मनुम् ।
नारायणं हृदा ध्यायन्मुहुर्मुहुरनन्यधीः ॥

धारयन्नन्तरेवासून्नेत्रे किञ्चिन्निमील्य च ।
परं ज्योतिः परं ध्यायन्नन्तरेव मनुं जपेत् ॥

समस्तकर्मणां साक्षी प्राणायामो महीपते ।
दशप्रणवसंयुक्तं गायत्र्या सर्वकर्मसु ॥

आदावन्ते च कर्तव्यः प्राणायामः फलप्रदः ।
श्रीमदष्टार्णविद्यादि जपहोमादिकर्मसु ॥ —६०

तत्तन्मन्त्रेण कर्तव्यः प्राणायामो महीपते ।
श्रीरामरूपिणं वाऽपि नरसिंहाकृतिं तु वा ॥

गोपाल रूपिणं वाऽपि यद्वा शङ्कररूपिणम् ।
मद्रूपिणं वा सततं स्मरन्नारायणं विभुम् ॥

श्रीमदष्टाक्षरीं विद्यां मनसैव जपन् शुचिः ।
नियम्य वायुं कर्तव्यः प्राणायामोऽघनाशनः ॥

प्राणायामैर्विना सर्वजपहोमार्चनक्रियाः ।
न फलन्त्येव ताः सर्वा यत्नेनापि कृतास्तथा ॥

इन्द्रियाणां हृदा सार्धं विषयेभ्यो निवर्तनम् ।
प्रत्याहारो भवत्येतत्सम्यगिन्द्रियनिग्रहः ॥ —६५

जीवस्य ब्रह्मरूपेण निर्धारो न्याययुक्तिभिः ।
पूर्वोक्तोत्तममात्राश्च प्राणायामत्रयोद्भवाः ॥

आत्मन्यपि स्थिरीभावः चित्तस्यैवात्र धारणा ।
सम्यगालोकनं ध्यानं निधाय हृदये विभुम् ॥

अङ्गानि भूषणैः सार्धं वाहनावरणैरपि ।
सत्यज्ञानसुखैकत्वप्राप्तये प्राप्तिसाधकः ॥

समाधिर्धर्मचिन्तास्याद्भवान्तरशतेष्वपि ।
समाधिरथवा जीवब्रह्मणो जीवचिन्तितम् ॥

ब्रह्मीभूतः स्वयंजीवो निरुद्धासुर्विलीनहृत् ।
स्वतोऽप्यनन्यसद्भावात् स्वयमेवावशिष्यते ॥ —७०

मुहूर्तावस्थितो वापि समाधिरप्यथोच्यते ।
एवमष्टाङ्गसंपन्नयोगयुक्तस्सुसंयतः ॥

सूर्यस्य मण्डलं भित्त्वा याति ब्रह्म सनातनम् ।
य एवमभ्यसेन्नित्यं विनीतः शान्तमानसः ॥

वशीकृतेन्द्रियग्रामः सोऽमृतत्वाय कल्पते ।
निरस्ताशेषदुरितः कामक्रोधादिवर्जितः ॥

एवमभ्यासयोगेन स याति परमां गतिम् ।
कर्मयोगेन वा ज्ञानयोगेनाथोभयेन वा ॥

प्राप्यते पुनरावृत्तिरहितं ब्रह्म शाश्वतम् ।
करोत्यनुदिनं यस्तु तत्फले विगतस्पृहः ॥ –७५

जपहोमादिकं कर्म स मुनिर्याति तत्पदम् ।
सगुणं निर्गुणंवापि नारायणमजं विभुम् ॥

लक्ष्मीपतिं रघुपतिं कृष्णं विष्णुं हरिं शिवम् ।
ध्यात्वा कर्मानवेक्ष्याऽथ यान्त्येव परमं पदम् ॥

ध्यानेन कर्मणा चैव योऽभ्यसेद्योगमन्वहम् ।
स यात्येवोत्तमस्थानं यद्गत्वा न निवर्तते ॥

तस्मात्सकलयत्नेन योगेन भव तपोनिधे ।
व्रतोपवासनियमैर्जन्मकोटिष्वनुष्ठितैः ॥

यत्नैश्च विविधैस्सम्यग्भक्तिर्नारायणे दृढा ।
संसारसागरस्यास्य पारं प्राप्तुं यदीच्छसि ॥ –८०

कर्मयोगेऽथवा ज्ञानयोगे प्रविश सत्वरम् ।
सर्वदुःखाभिभूतानां भ्रान्तानां हतचेतसाम् ॥

त्राता स एक एवात्र संसारे श्रीपतिः स्वयम् ।
स एव जानकीनाथो ब्रह्मरूपी जगत्पतिः ॥

त्राता संसारमग्नानां तारको नान्य उच्यते ।
प्रक्षीणाशेषपापानां ज्ञानयोगः प्रशस्यते ॥

कर्मयोगस्तु सर्वेषां भवेन्निर्वाण साधनम् ।
ज्ञानैककर्मणा वापि देवं नारायणं विभुम् ॥

आदिमध्यान्तरहितं रामं सम्यगिहार्चय ।
जनकैतच्छरीरं हि क्षयिष्ण्वपि पतिष्णु च ॥ —८५

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रमयं नृप ।
शास्त्रोपपादितं सम्यगनुतिष्ठार्तिनाशनम् ॥

कर्मयोगं तथा ज्ञानयोगं वा योगवित्तमः ।
करिष्यामि न कर्तव्यमिति कश्चिद्विचिन्तयेत् ॥

स्वस्यास्ये स्वयमेवार्य मन्दो धूलीं हतः क्षिपेत् ।
श्वः कार्यमद्य कुर्वीत मध्याह्ने चापराह्णिकम् ॥

सायन्तनं च मध्याह्ने विघ्नबाहुल्यतो नृप ।
सम्यग्वैराग्यनिष्ठस्य परतत्वस्थचेतसः ॥

छर्दितान्ननिभाः सर्वे दृश्यन्ते विषयाः स्वयम् ।
शरीरित्वमपिप्रायो विरक्तस्यैव शोभयेत् ॥ —९०

विरक्तस्य तदप्याशु त्याज्यं सर्वात्मना भवेत् ।
अत्यमेध्यं शरीरस्थं विष्टामध्यगतादपि ॥

तत्वनिष्ठो विशेषेण प्राणिनं मनुते हतम् ।
शरीरेऽस्मिन्नमेध्यत्वमीदृशं नाम देहिनाम् ॥

त्वगाद्येकैकसंस्पर्शे ज्ञानमेव विशोधनम् ।
शृगालैरपि गृध्रैश्च नीयते यद्यहो विधिः ॥

विधत्ते चर्मणा क्लेशं शरीराणि शरीरिणाम् ।
एतत्प्रतिपदं सम्यगापदां पदमीदृशम् ॥

ततः शरीरं विश्वस्य य उदास्ते स मूढधीः ।
दुःखैकानुभवार्थाय विधिनैतत्कृतं पुनः ॥ —९५

परमार्थविदप्येतद्वीक्षमाणो न वीक्ष्यते ।
व्यामोहितो जगत्यस्मिन् माययैव महात्मनः ॥

विष्णोस्तत्वविदप्याशु देहान्तरमुपैन्यहो ।
सुखं मिथ्या दुःखमेव भूयोऽप्यनुभवत्ययम् ॥

आपद्यकिञ्चनो भूत्वा कुटुम्बभरणाकुलः ।
भ्रमत्येवातुरो भूत्वा दुःखावर्ते पुनः पुनः ॥

दुःखमित्यपि जानाति दुःखं नैव महीपते ।
सर्वात्मना परित्याज्ये सर्वेषामपि दुःखदे ॥

प्रविशेत्को भवेन्मन्दो हताप्याशु पुनर्हतः ।
न किञ्चिदपि कर्मात्र निष्फलं विद्यते मुने ॥ —१००

तच्चेत्पुनः प्रवेशाय भवेन्मुक्तोऽपि बध्यते ।
ततो न कर्म कर्तव्यं फलार्थित्वेन सूरिभिः ॥

यदि कुर्युः फलं तत्तदनपेक्ष्यार्चनादिकम् ।
न सञ्चरन्ति संसारे दुःखावर्तविमोहिताः ॥

ईश्वरोऽपि समुद्धर्तुं शक्तो भवति नान्यथा ।
योगाभ्यासरतो वापि गुरुशुश्रूषणेरतः ॥
श्रीमदष्टाक्षरेणैव ब्रह्म प्राप्नोति शाश्वतम् ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे त्रिचत्वारिंशोऽध्यायः ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

राजोवाच —

श्रुतिस्मृतिपुराणार्थनिश्चयज्ञानवित्तम ।
संशयं छिन्धि पृच्छामि त्वतात्वानुग्रहं कुरु ॥

आत्मानुभवरूपेण साक्षात्कारेण केवलम् ।
पुनरावृत्तिरहितं शाश्वतं ब्रह्म यात्यपि ॥

इत्यादि श्रुतितत्वज्ञाः प्रवदन्ति मनीषिणः ।
श्रीमताभिहितं ब्रह्मविद्यानुष्ठानतत्पराः ॥

भुक्तिं मुक्तिं च विन्दन्ति कथमेतन्निबोधय ।
निवृत्तिरेव मुक्तिस्तु प्रवृत्तिर्भुक्तिरुच्यते ॥

उभयोरप्येक एव कथं मार्गो भवेद्वद ।

**श्री भगवानुवाच —**

त्वयाऽऽर्येण यदुक्तं तत्सत्यं सत्यविदांवर ॥

सर्वजन्यसुखोच्छित्तिर्दुःखोच्छित्तिश्च तत्वतः ।
निवृत्तिलक्षणाह्येषा मुक्तिरित्यभिधीयते ॥

विषयान्तरसंसर्गः करणानां हृदा सह ।
भुक्तिः प्रचक्ष्यते लोके वैषम्यमुभयोरपि ॥

तथाप्यात्मानुसन्धानमुभयत्रापि दृश्यते ।
मुक्तिरात्मानुसंधानेनात्मावस्थानमेव हि ॥

एतदस्त्येव सर्वत्र सर्वतत्वविदां वर ।
प्रवृत्तौ च निवृत्तौ च सर्वदात्मानुभाविनाम् ॥

ब्रह्मैवाहमिति ध्यात्वा किञ्च रामोऽहमित्यपि ।
येऽनुस्मरन्ति सततं ते संसारिणो नृप ॥

साक्षाद्भगवदात्मानस्त एव जगतीतले ।
भोक्ताऽत्र भगवानेव भोज्यमर्थभुजिक्रिया ॥

एकस्मिन्नवशिष्टे तु किमसत्सत्प्रयोजनम् ।
अतो न मुक्तिमार्गस्य रोधिनी भुक्तिरिष्यते ॥

अनेन विधिना नित्यं देवं नारायणं विभुम् ।
श्रीराममिन्दिरानाथं य एव मनुतिष्ठति ॥

स भुक्तिमपि मुक्तिं च लभते नात्र संशयः ।
यथा विधिनिषेधौ तु मुक्तं नैवोपसर्पतः ॥

तथा न सर्पतो ब्रह्मोपासकं विधिपूर्वकम् ।
ब्रह्मैव सत्यं तदहं भगवानहमीश्वरः ॥ —१५

नारायणोऽहं रामोऽहं वासुदेवोऽस्म्यहं हरिः ।
इति येऽनुस्मरन्तीह चिन्तयन्ति दिने दिने ॥

तेषां न विहितं लोके निषिद्धमपि वर्तते ।
यथा घटश्च कलश एकार्थस्याभिधायकः ॥

तथा ब्रह्म च रामश्च नूनमेकार्थतत्त्वतः ।
अतो रामोऽहमित्येवं ब्रह्मैवाहमथापि वा ॥

येऽनुस्मरन्ति सततं मन्त्रमानुष्टुभं तु वा ।
वदन्ति तत्त्वतः साक्षात्ते सर्वे ब्रह्मरूपिणः ॥

विहितं वा निषिद्धं वा न तेषां विद्यते क्वचित् ।
मन्त्रत्रयस्य छन्दो वा मुनिध्यानादिकं तु वा ॥ —२०

नास्त्येव ब्रह्मतादात्म्यसिद्धिदा मनवः स्मृताः ।
अत्रान्यतममाचार्यान्मन्त्रं ब्रह्मैक्यसिद्धिदम् ॥

शुभलग्ने शुभे मासि सम्प्राप्यावश्यमन्वहम् ।
गच्छंस्तिष्ठन् स्वपन् भुञ्जन् जाग्रन्नपि हसन्नपि ॥

आसीनो वा शयानो वा संस्मरन्मन्त्रमादरात् ।
ब्रह्मभूतमथात्मानं स्वयमेव प्रपश्यति ॥

न होमो न पुरश्चर्या न जपो नार्चनादिकम् ।
ब्रह्मतादात्म्यविद्यायाः स्मरणेनैव सिद्धिभाक् ॥

कलेबरमपि प्राणानपि सर्वस्वमीप्सितम् ।
आचार्यायार्पयेद्धीमानेतद्विद्याप्रदायिने ॥ -२५

विचार्यैतादृशान् ब्रह्मभूतान्विप्रवरान्नृप ।
उदकौदनवस्त्रादि किञ्चिद्दत्वापि वान्वहम् ॥

ब्रह्मार्पणधिया नित्यं ब्रह्मभूता भवन्ति ते ।
अतो ब्रह्मविदे दत्तमानन्त्याय प्रकल्पते ॥

ये द्विषन्त्यपि निन्दन्ति तत्पापफलभाजनाः ।
कुटुम्बिनो दरिद्राश्च दुःखिनः स्युर्न संशयः ॥

स्वतः सुतान् समुत्पाद्य स्वयमेव दहेदपि ।
कारागृहेषु सर्वेषु स्वयमेव निगृह्यते ॥

अहोऽस्य मन्दभाग्यस्य यद्यावत्तत्क्षयं भवेत् ।
अतो ब्रह्मविदां द्वेषो न कर्तव्यः शुभे शुचिः ॥ -३०

निन्दापि नैव कर्तव्या हितमेव समाचरेत् ।
ये स्तुवन्त्यनुमोदन्ते वदन्त्यपि मनीषिणः ॥

तत्पुण्यमखिलं लब्ध्वा तद्गतिं प्राप्नुवन्त्यपि ।
ज्ञात्वा तमेव विश्वेशं कृत्यं कुरु निरन्तरम् ॥

अनेनैव तवाभीष्टं भविष्यति न संशयः ।
सहस्रकृत्वो गायत्र्या जपः प्रत्यहमादरात् ॥

आचार्यचरणद्वन्द्वशुश्रूषणमथान्वहम् ।
श्रीमदष्टाक्षरीविद्या जपोऽथ सरहस्यकः ॥

एकेन जन्मना साक्षात् ब्रह्मप्राप्तिप्रदं त्रयम् ।
गुरुदैवतमन्त्राणामैक्यं संभावयेत्सदा ॥ −३५

दृष्टे ब्रह्मणि कर्माणि क्षीयन्ते सद्य एव हि ।
भिद्यते हृदयग्रन्थिर्विनश्यन्त्यपि संशयाः ॥

साक्षात्कारनिदानानि पञ्चैव ब्रह्मणो नृप ।
आचार्यचरणाम्भोजशुश्रूषा प्रत्यहं शुभा ॥

सहस्रकृत्वो गायत्री जपश्च प्रत्यहं ततः ।
श्रुत्योक्ताचारसंपत्तिः प्रत्यहं समये कृता ॥

श्रीमदष्टार्णविद्याया जपोऽपि सरहस्यकः ।
नियमव्यतिरिक्तेषु समयेषु निरन्तरम् ॥

ब्रह्मतादात्म्यविद्यायाः स्मरणं चेतिपञ्चधा ।
ब्रह्मप्राप्तिकराण्याहुर्नैतस्माद्द्वियते परम् ॥ −४०

गुह्यमेतन्मया प्रोक्तं सर्ववेदान्तसंग्रहम् ।
नास्तिकानां न वक्तव्यं कृतघ्नानां दुरात्मनाम् ॥

त्रिशतं वापि गायत्र्या जपो द्वादशधा हुतम् ।
श्रीमदष्टाक्षरीविद्या जपः पञ्चशतं तु वा ॥

आचार्यानुग्रहादेव द्वयं ब्रह्मैक्यसिद्धिदम् ।
नारायणधिया नित्यमाचार्यं परितोषयन् ॥

वैदिकाचारनिरतो गायत्रीं बहुशो जपन् ।
श्रीमदष्टाक्षरीं जप्त्वा ब्रह्मविद्यापुरस्सराम् ॥

श्रीमन्त्रसहितां नित्यं रश्मिविद्यासमन्विताम् ।
महाकालं दुराधर्षमपि जित्वा भयङ्करम् ॥ —४५

महासिद्ध्यष्टकं प्राप्य जरामृत्युविवर्जितः ।
नारायणमयो भूत्वा याति तद्ब्रह्म शाश्वतम् ॥

ब्रह्मरूपिणमात्मानं ध्यात्वा तस्मिन् दिने दिने ।
ब्रह्मदर्शनपर्यन्तं जपेन्मन्त्रं समर्चयेत् ॥

आराधनेन साङ्गेन गन्धपुष्पाक्षतादिभिः ।
सालग्रामशिलाचक्रे चक्रराजसमन्विते ॥

आराध्य जगतां नाथं श्रीदेवीसहितं विभुम् ।
इहामुत्राऽपि महतीं सिद्धिमाप्नोत्यनुत्तमाम् ॥

न गृही ज्ञानमात्रेण परत्रेह च मङ्गलम् ।
प्राप्नोति वसुधापाल दानहोमादिभिर्विना ॥ —५०

गृहस्थो दक्षिणादीनि न दद्याज्जुहुयान्न चेत् ।
न पूजयेद्यो विधिना गतिं व्रजति दारुणाम् ॥

न ब्रह्मचारिणो दातुमधिकारोऽस्ति भूपते ।
आचार्येभ्यो विनान्यत्र दत्वा नो गतिमाप्नुयात् ॥

नारण्यवासिनां शक्तिर्न ते सन्ति कलौयुगे ।
परिव्राड् ज्ञानमात्रेण दानहोमादिभिर्विना ॥

सर्वदुःखपिशाचेभ्यो मुक्तो भवति नान्यथा ।
परिव्राडविरक्तश्च विरक्तश्च गृही तथा ॥

कुम्भीपाके निमज्जेते तावुभौ वसुधापते ।
पुण्यस्त्रियो गृहस्थाश्च मङ्गलैर्मङ्गलार्थिभिः ॥ —५५

पूजोपकरणैः कुर्युर्दद्युर्दानानि चान्वहम् ।
चन्दनागरुकस्तूरीलवङ्गसहिताम्बुभिः ॥

पञ्चामृताभिषेकैश्च पुष्पैस्तामरसैरपि ।
पुष्पमाल्यैश्च बहुभिर्दूर्वाभिर्धवलाक्षतैः ॥

नीलोत्पलैर्मल्लिकाभिः करवीरैश्च चम्पकैः
जातीप्रसूनैर्विल्वैश्च पुंनागैर्वकुलैरपि ॥

कदम्बकेतकीपुष्पैररुणाशोककिंशुकैः ।
नागवाणादिपुष्पैश्च गन्धवद्भिर्मनोहरैः ॥

प्रत्यग्रैः कोमलैश्चैव पूजयेयुः प्रयत्नतः ।
फलैश्च वहुभिः पत्रैर्जलस्थलसमुद्भवैः ॥ —६०

एवमादिभिरन्यैश्च पुष्पैर्बहुभिरन्वहम् ।
सम्यक्सम्पाद्ययत्नेनशक्त्याभक्त्याश्रियःपतिम् ॥

त्रिकालमेककालं च पूजयेयुरहर्निशम् ।
उत्पादितैर्बहुविधैः पिष्टकैरिष्टसिद्धये ॥

क्षीरनीराज्यपक्वैश्च फलापूपवटादिभिः ।
दध्योदनान्नपानादि सूपादिव्यञ्जनादिभिः ॥

पटीपटोपदंशादि पदार्थैर्बहुभिश्चिरम् ।
आवर्तकैर्धूपदीपैः षडावृत्त्युपकल्पितैः ॥

शङ्खचक्रगदापद्मगरुडाकारकल्पितैः ।
वह्नीभिर्दीपमालाभिरर्चयेयुरहर्निशम् ॥ —६५

तत्कालसम्भवैः पुष्पैस्तथा जातीफलैरपि ।
कर्पूरचूर्णसहितैस्ताम्बूलैश्च सुवासितैः ॥

महार्हैरर्हणां कुर्युः कल्याणार्थितयान्वहम् ।
स्वस्य शक्त्यनुसारेण सर्वं सम्पाद्य यत्नतः ॥

गृहस्थानां विधिरयं नेतरेषां कदाचन ।
दद्युर्दानानि जुहुयुरर्चितेऽग्नौ शुभार्थिनः ॥

कल्याण्यश्च वरारोहा रामार्पणधियाऽन्वहम् ।
एवं गृहस्थनियमस्तथैव ब्रह्मचारिणाम् ॥

विधिमप्यनतिक्रम्य यथाशक्त्यनुसारतः ।
यदिकुर्युः प्रयत्नेन पूजां तत्साधनैरिह ॥ —७०

सर्वं सम्पद्यते तेषामपि दैवतदुर्लभम् ।
एतेनैव महीपाल कल्याणं तव सर्वदा ॥

पुण्यस्त्रियो गृहस्थाश्च तथैव ब्रह्मचारिणः ।
सगुणं विष्णुमाराध्य पूर्वोक्तैस्साधनैरिह ॥

शक्त्या सम्पादितैः कैश्चित्पूजयेयुरहर्निशम् ।
तेषां भुक्तिश्च मुक्तिश्च भवत एव हि नान्यथा ॥

वानप्रस्थाश्च यतयो यद्येवं कुर्युरन्वहम् ।
संसारान्न निवर्तन्ते विध्यन्ति क्रमदोषतः ॥

आरूढपतिताह्येते भजेयुर्दुःखभाजनाः ।
अहिंसा परमो धर्मस्तेषामेव महीपते ॥ —७५

न हिंसाव्यतिरेकेण लभ्यन्ते कुसुमानि हि ।
भावनाकल्पितैर्द्रव्यैर्यतीनां पूजनं स्मृतम् ॥

उपचारार्चनं मन्दधियामेव प्रशस्यते ।
सेव्यसेवकरूपत्वाद्गृहिणामीश्वरस्य च ॥

आत्मनस्तत्वचिन्तैव पूजासु महती स्मृता ।
जीवब्रह्मैक्यचिन्तातु पुनरावृत्तिवर्जिता ॥

आत्मानं सततं ब्रह्म सम्भाव्य विचरन्ति ये ।
न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः ॥

रहस्यमपि वक्ष्यामि शृणु ब्रह्मविदां वर ।
यज्ज्ञात्वा मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ –८०

अपाणिपादो जवनो गृहीता वीक्षतेप्यदृक् ।
अकर्णः स शृणोत्येतच्छब्दरूपं परं महः ॥

वेत्ति वेद्यं स सर्वज्ञैरवेद्यो विद्यते प्रभुः ।
स महापुरुषः पुंसां स्त्रीणां व्यक्तिविलक्षणः ॥

स्त्रीपुंनपुंसकाकाररहितं ब्रह्मतत्परम् ।
सर्वेश्वरस्सर्वरूपस्सर्वदेवमयो हरिः ॥

सत्यज्ञानमयोऽनन्तोऽनादिरानन्द उच्यते ।
अजः स्मरणमात्रेण जन्मादिक्लेशभञ्जनः ॥

तस्यात्मताधीः सर्वेषां पुनरावृत्तिकर्तरी ।
नियमेनैव सर्वेषां स्वाश्रमोक्तेन स प्रभुः ॥ –८५

ध्येयः संसारनाशाय न भेदो वर्तते पुनः ।
स्वाश्रमोक्तं परित्यज्य य आत्मानमुपासते ॥

तद्रूपेण न ते भूप मुच्यन्ते भवबन्धनात् ।
श्रुतिस्मृतिपुराणेषु यो यो नियम उच्यते ॥

यस्य यस्याश्रमस्यायं न त्यक्तव्यो मुमुक्षुभिः ।
अतो नियममाहत्य कुर्याद्ध्यानमनन्यधीः ॥

एतच्चराचरं सर्वं स्वप्नप्रत्ययवत् सुधीः ।
मिथ्या दृग्व्यतिरिक्तं यद्दृश्यत्वात्ततथा नृप ॥

दृग्रूपेणात्मना ज्ञानं सत्यानन्दात्मना स्वयम् ।
एकाकी यतचित्तात्मा चिन्तयेत्तदनन्यधीः ॥ –९०

सोऽहमित्यात्मना ज्ञानं स्वाज्ञानपरिकल्पितम् ।
एतत्स्वव्यतिरिक्तं यद्यतः स्वेनैव कल्प्यते ॥

न पारमार्थिकं भूप यद्यद्बालो हि कल्पयेत् ।
बालाज्ञयोर्वा को भेदः कल्प्यतेऽपक्वचक्षुषा ॥

अथं पन्थाः पुराणः स्यादनुविद्धः पुरातनैः ।
अध्यात्मविद्भिरर्वाक् च ज्ञापितः सर्वगः स्मृतः ॥

आब्रह्मणः शुद्धवंश्यो मातापित्रोः कुलोच्चये ।
न स्त्रियो व्यभिचारिण्यः पुरुषश्चैव धार्मिकः ॥

यज्ञाश्च वेदाध्ययनमेधते प्रतिपूरुषम् ।
पूज्यन्तेऽतिथयो यत्र गुरुशिष्यपरम्पराः ॥ —९५

स्वप्नेऽपि स्खलनं नास्ति नारीषु ब्रह्मचारिणः ।
नियमोऽप्याश्रमस्तेषां न कदाचिन्निवर्तते ॥

तत्तत्कालेषु दानानि तदर्थिभ्यः प्रदीयते ।
येषु वंशेषु सर्वेषां तेषामेव प्रकाशते ॥

ब्रह्म ब्रह्मविदां भूप गुरुशिष्योक्तशिक्षया ।
स्वयमेव परंब्रह्म ततोऽन्यन्नास्ति किञ्चन ॥

तदेतदखिलं ब्रह्म सत्यं सत्यं प्रकाशते ।
जन्मकोटिसहस्रेषु प्रक्षीणाशेषदुष्कृतैः ॥

कैश्चिदेव नियम्यासूनपरोक्षं निरीक्ष्यते ।
सुखामृतरसास्वादसत्यैकज्ञानरूपता ॥ —१००

भागधेयेन विदुषा स्वयमेवानुभूयते ।
अहो पुण्यमहोधर्मो नातः परतरं प्रियः ॥

अकृत्येष्वपि सर्वेषु प्रायश्चित्तमिदं परम् ।
अष्टाक्षरानुसन्धानमाचार्यचरणार्चनम् ॥

बहुजन्मार्जिततपःफलमेतद्द्वयं स्मृतम् ।
आचार्यचरणद्वन्द्वशुश्रूषान्वहमादरात् ॥

अष्टाक्षरजपो नाल्पतपःफलमिदं द्वयम् ।
त्वं धन्योऽसि महाराज त्वमेव ब्रह्मविद्यकः ॥

त्वमेवाचार्यभक्तानामग्रगण्योऽसि भूतले ।
भवद्भाग्योदयेनैव परब्रह्ममयो हरिः ॥ –१०५

नारायणोऽसौ भगवान् भूत्वा दशरथात्मजः ।
रामाभिधानस्सर्वेषामात्मारामः श्रियः पतिः ॥

अवश्यं तव जामाता भविष्यति महीपते ।
येयं चिद्रूपिणी साक्षान्महालक्ष्मीस्त्रयीमयी ॥

भूतलादुत्थिता साक्षात्तव पुत्री भविष्यति ।
जानकीत्यभिविख्याता दिव्यकान्तिसमन्विता ॥

अहोभाग्यमहोपुण्यं तवैव मिथिलापते ।
नमस्करोति भगवान् तव पादाम्बुजद्वयम् ॥

गुप्तमेतन्महच्छास्त्रं योगसारं विमुक्तिदम् ।
गृहीत्वा मिथिलाधीश न वाच्यमपि कुत्रचित् ॥ –११०

नारायणीयमेतत्ते मयाशास्त्रं पुरातनम् ।
तुभ्यमुक्तं महाराज वेदसारार्थसङ्ग्रहम् ॥

संसारतरणोपायं यदि वाञ्छसि सुव्रत ।
श्रीमदष्टाक्षरीं साङ्गां जप्त्वा मुक्तो भविष्यसि ॥

नित्यमाचार्यशुश्रूषा श्रीमदष्टाक्षरीरतिः ।
नाल्पेन तपसा लभ्या सत्यं सत्यं महीपते ॥

इति दाशरथीयेऽस्मिन् तन्त्रे वेदार्थसङ्ग्रहे ।
अध्यायोऽयं चतुश्चत्वारिंशो योऽघविनाशनः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे चतुश्चत्वारिंशोऽध्यायः ॥



## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥



**राजोवाच** —

नारायण जगन्नाथ भगवन् करुणानिधे ।
भूयोऽपि श्रीमदष्टार्णसाधनं सर्वसिद्धिदम् ॥

श्रोतुमिच्छामि विश्वेश भवसागरतारकम् ।

**श्री भगवानुवाच** –

श्रीमदष्टाक्षरीविद्यासाधनं मिथिलापते ॥

भूयोऽपि संप्रवक्ष्यामि समाहितमनाः शृणु ।
साम्राज्ञी सर्वविद्यानां श्रीमदष्टाक्षरी परा ॥

यस्य सिद्धा भवत्यस्य देवत्वं न च दुर्लभम् ।
वैशाखे मासि या शुक्लतृतीयाऽक्षयसंज्ञिता ॥

अक्षयेष्टप्रदातृत्वात्स्वभावादेव साऽक्षया ।
तस्याः प्रातः शुचिर्भूत्वा स्नात्वा सन्ध्यामुपास्य च ॥ –५

आचार्याज्ञां गृहीत्वाऽथ विधिवत्संस्कृतेऽनले ।
पनसैर्बीजरहितैर्मधुत्रितयमिश्रितैः ॥

गव्याज्यसहितैर्हुत्वा श्रीमदष्टार्णविद्यया ।
त्रिशताधिकसाहस्रं श्रीमन्त्रान्यतमेन च ॥

त्रिशतं जुहुयादाज्यं भगवद्रश्मिभिस्ततः ।
गव्याज्येन त्रिधा हुत्वा कृत्वा होमं जयादिभिः ॥

प्रायश्चित्ताहुतीः कृत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
प्रदक्षिणं नमस्कृत्य जातवेदसमादरात् ॥

आचार्यचरणाम्भोजद्वितयं प्रणिपत्य च ।
वासोभिरप्यलङ्कारैरलङ्कृत्य ततःपरम् ॥ –१०

वर्षाशनमितं द्रव्यं दद्यादाचार्यपादयोः ।
अथ द्वादशनिष्कं वा पञ्चनिष्कमथापि वा ॥

समर्प्याचार्यपत्न्यै च दत्वा भूषणमीप्सितम् ।
ब्राह्मणान् भोजयेत्पश्चाद्द्वादशाऽथ सुवासिनीः ॥

आचार्यादाशिषः प्राप्य दत्वा चोक्तां च दक्षिणाम् ।
तद्दिने पानसादीनि फलानि गुरवेऽर्पयेत् ॥

प्रतिवर्षं तृतीयायामक्षयायां महीपते ।
कृत्वेत्थं महतीं सिद्धिं देवतैरपि दुर्लभाम् ॥

अक्षयाः सम्पदः प्राप्य विद्यामपि तथाऽक्षयाम् ।
अक्षयं सौख्यमत्यन्तमारोग्यं च तथाऽक्षयम् ॥ —१५

अक्षयां पुत्रपौत्रादिसमृद्धिं योगमक्षयम् ।
अवाप्याक्षयभोगांश्च मोदते भगवत्पदे ॥

व्रतमन्यत्प्रवक्ष्यामि महदत्यन्तपावनम् ।
कृतेन येन राजेन्द्र सर्वसिद्धिः प्रजायते ॥

आश्विनं नवरात्राख्यं व्रतमस्ति महत्तरम् ।
सर्वासामपि विद्यानां सिद्ध्यर्थं क्रियते भुवि ॥

दैवतैर्मुनिसंघैश्च योगिभिर्ब्रह्मवादिभिः ।
सिद्ध्यर्थं क्रियते यत्नान्नवरात्रव्रतं शुभम् ॥

प्रतिसंवत्सरं वर्षचूडामण्यभिधं व्रतम् ।
क्रियते सततं सिद्धैस्समस्त फलसिद्धये ॥ —२०

तत्रैकैकं दिनं प्रोक्तमनन्तफलसिद्धिदम् ।
पूर्वपूर्वदिनात्पुण्यमुत्तरे दिवसेऽक्षयम् ॥

आयुरारोग्यदं पुत्रपौत्रवृद्धिकरं परम् ।
धनधान्यगजाश्वादि महासंपत्समृद्धिदम् ॥

समस्तापद्गणहरं मेधाजनन मुत्तमम् ।
चिन्तितार्थप्रदं श्रेयस्करं सद्योऽघनाशनम् ॥

समस्ततीर्थफलदं ब्रह्मसायुज्यकारणम् ।
अत्रावश्यं प्रकर्तव्यं पुरश्चरणमादरात् ॥

नवरात्रव्रतं येन क्रियते प्रतिवत्सरम् ।
सततं विजयी भूत्वा दुःखसंघैर्विमुच्यते ॥ –२५

भगवत्कलयायुक्तो भवत्येव न संशयः ।
चैत्रमासव्रतमपि नवरात्राभिधं तथा ॥

सर्वश्रेयस्करं सद्यो महापातकभञ्जनम् ।
शक्तश्चेदुभयं कुर्यादेकं वा नवरात्रकम् ॥

तद्विधानं प्रवक्ष्यामि समाहितमनाः शृणु ।
प्रतिपद्दिनमारभ्य तन्नवम्यन्तमादरात् ॥

नवरात्रव्रतं प्रोक्तं महासिद्धिकरं नृप ।
प्रतिपद्दिवसे तत्र प्रातरुत्थाय वाग्यतः ॥

द्वादशार्णां ब्रह्मविद्यां जप्त्वा ब्राह्मे मुहूर्तके ।
रश्मिमालामनुस्मृत्य पञ्चधा वा त्रिधा ततः ॥ –३०

स्नात्वा सन्ध्यामुपास्याथ गायत्रीं बहुशो जपन् ।
समस्तन्याससहितां श्रीमदष्टाक्षरीं शुभाम् ॥

यावच्छक्यन्यासयुतामथवाष्टाक्षरीं शुभाम् ।
संकल्प्यार्कसहस्राणि व्रती नित्यं जपेद्बुधः ॥

द्वादशार्णां श्रियो विद्यामथवा श्रीषडक्षरीम् ।
प्रसन्नलक्ष्मीमथवा संकल्प्यार्कसहस्रकम् ॥

जप्त्वा श्रीहृदयं पश्चाज्जपेदेकोत्तरं नृप ।
यद्वा पञ्चाधिकां चत्वारिंशदावृत्तिमभ्यसेत् ॥

भोजयेन्मिथुनं नित्यमेकोत्तरमतःपरम् ।
यथाशक्त्याऽथवा भोज्यं मिथुनं भगवद्धिया ॥ —३५

बृहदावरणोपेतं कुर्याच्छ्री श्रीशपूजनम् ।
पत्रैः पुष्पैर्यजेत्पश्चात्त्रिशतं ब्रह्मविद्यया ॥

फलाशी वा हविष्याशी नित्यमेकाशनोऽपि वा ।
आत्मानं गन्धपुष्पाद्यैरलङ्कुर्याद्दिने दिने ॥

ताम्बूलचर्वणं कुर्याद्व्रतेऽस्मिन् श्रीसमृद्धये ।
कुर्याद्दिने दिनेऽवश्यं महोत्सवमतन्द्रितः ॥

श्रीश्रीशयोर्नित्यमथ मङ्गलारत्तिकं शुभम् ।
सुवासिनीभिर्दातव्यं सायङ्काले महीपते ॥

अष्टोत्तरशतं नित्यं श्रीमदष्टार्णविद्यया ।
गव्याज्यं जुहुयादग्नौ अष्टाविंशतिधा श्रिया ॥ —४०

महती नवमी याऽत्र सर्वेप्सितफलप्रदा ।
सद्यस्समस्तविपदां हर्त्री संपत्करी शुभा ॥

तस्यां नवम्यां प्राप्तायां प्रातरुत्थाय वाग्यतः ।
आचार्यानुज्ञया स्नात्वा नित्यकर्म समाप्य च ॥

विधिवत्संस्कृते वह्नौ श्रीमदष्टार्णविद्यया ।
एकैकबिल्वपत्रेण सहितं त्रिमधुप्लुतम् ॥

गव्याज्यतिलसंयुक्तं सहस्रं त्रिशताधिकम् ।
हुत्वा श्रीमनुना पश्चाच्छताधिकसहस्रकम् ॥

तथैव पायसं हुत्वा कमलैर्वा घृतप्लुतैः ।
लक्ष्मीहृदयमन्त्रैश्च त्रिधा गव्यघृतं हुनेत् ॥ —४५

पञ्चधा रश्मिभिर्हुत्वा कृत्वा होमं जयादिभिः ।
प्रायश्चित्ताहुतीः कृत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥

अग्निं प्रदक्षिणीकृत्य सहस्रं ब्रह्मविद्यया ।
अर्चयेत्पुष्पसहितैर्बिल्वैर्वा तुलसीदलैः ॥

अर्चयित्वा पञ्चशतमथवा ब्रह्मविद्यया ।
आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ॥

कर्षद्वयसुवर्णेन निर्मितं कुण्डलद्वयम् ।
सुरम्यपद्मरागाख्यमणिभिस्सहितं शुभम् ॥

आचार्यकर्णयोर्दद्यात्सिद्धिमिच्छन्नथाक्षयाम् ।
षष्टिचिह्नक सौवर्णमथवा कुण्डलद्वयम् ॥ -५०

कर्षमान सुवर्णेन निर्मितं वा सरत्नकम् ।
कुण्डलद्वितयं दद्याद्वित्तलोभविवर्जितः ॥

दुकूलं वाऽथ कार्पासं वस्त्रद्वितयमर्पयेत् ।
कुण्डलद्वितयाभावे तन्मानस्वर्णमर्पयेत् ॥

मुद्रिकोदरबन्धाद्यैरलङ्कृत्य ततःपरम् ।
बहुसस्यसमायुक्तां वसुधां दक्षिणान्विताम् ॥

चतुर्वृषभसंयुक्तां शालग्रामशिलान्विताम् ।
दत्वा गोद्वितयं पश्चाद्बहुदक्षिणयान्वितम् ॥

प्रदद्याद्वसुधाभावे तत्प्रत्याम्नायहेम वा ।
प्रशस्ता वसुधादाने शताढकमिता मही ॥ -५५

तदर्धभूमिर्विहिता तदभावे महीपते ।
महीप्रतिनिधिद्रव्यं पञ्चाशन्निष्कमुत्तमम् ॥

तदर्धं मध्यमं प्रोक्तं तदर्धमधमं स्मृतम् ।
अधमाधममेवोक्तं तत्राप्यर्धं महीपते ॥

यच्च यावच्च सर्वस्वं भूदाने दक्षिणोत्तमा ।
वर्षाशनमितं द्रव्यमथवोत्तमदक्षिणा ॥

वर्षाशनमितं द्रव्यं शतनिष्कमुदाहृतम् ।
तदर्धं वा तदर्धं वा वित्तलोभं परित्यजेत् ॥

हैमं चिन्ताकताटङ्काद्यलङ्कारैः सुशोभनैः ।
आचार्यपत्नीं श्रीबुद्ध्या पूजयेच्च ततःपरम् ॥ —६०

दुकूलं वाऽथकार्पासं सूक्ष्मं वासस्समर्पयेत् ।
पञ्चविंशतिसंख्याकमिथुनान्यथ भोजयेत् ॥

युग्मानि पञ्चदश वा नव वा भोजयेद्व्रती ।
वासोभिर्दक्षिणाभिश्च ताम्बूलैरपि तोषयेत् ॥

आलिङ्गितोऽथ गुरुणा तदाशीर्भिः कृतादरः ।
सद्यस्सिद्धिमवाप्नोति महतीं दुर्लभामपि ॥

अथवा नवरात्रेऽस्मिन् प्रथमे दिवसे शुभे ।
आचार्याय प्रदातव्यं निष्कमेकसुवर्णकम् ॥

द्वितीयायां द्विनिष्कं वा तृतीयायां त्रिनिष्ककम् ।
चतुर्निष्कं चतुर्थ्यां च पञ्चम्यां पञ्चनिष्ककम् ॥ —६५

निष्कषट्कं ततः षष्ठ्यां सप्तम्यां सप्तनिष्ककम् ।
दत्वाऽथ वसुधां दद्यात्सालग्रामशिलान्विताम् ॥

कुण्डलद्वितयं दत्वा गोद्वयं दक्षिणान्वितम् ।
शय्यां सोपस्करां दत्वा सूक्ष्मं वासोयुगं शुभम् ॥

आचार्यादाशिषः प्राप्य सिद्धिं प्राप्नोत्यनुत्तमाम् ।
सुवासिन्यस्ततोभोज्या नव पञ्चदशाथवा ॥

पञ्चविंशतिसंख्या वा सहस्रं विभवे सति ।
राजा वा राजपुत्रो वा धनाढयो वा यतव्रतः ॥

सहस्रदक्षिणायुक्तानष्टौ ग्रामान् समर्पयेत् ।
गोशतं च प्रदातव्यं वहुदक्षिणयान्वितम् ॥ –७०

यावतीं दक्षिणां दद्यात्स्वाचार्यचरणद्वये ।
तावत्येव भवेत्सिद्धिरष्टार्णाया महीपते ॥

वित्तशाठ्यं त्यजेद्धीमान् शक्तः सम्पूर्णदक्षिणाम् ।
दद्यादर्धमशक्तश्चेन्नान्यथा सिद्धिरिष्यते ॥

महादरिद्रोऽकृपणो यद्यसौ स्वसुतां शुभाम् ।
दत्वा स्वपत्नी पुत्रादि सहितो नियतव्रतः ॥

आचार्यपत्नीपुत्राणां नित्यशुश्रूषको भवेत् ।
पुरश्चर्याविधानं वा यतीनां न हि विद्यते ॥

गुरुशुश्रूषणादेव नित्यं सिद्धिर्दिने दिने ।
एकदापि समुल्लङ्घ्य स्वाचार्याज्ञां विमूढधीः ॥ –७५

आचन्द्रार्कमहाघोरे नरकेऽसौ निमज्जति ।
कृत्वाकार्यसहस्रं वा भिक्षित्वा शूद्रकानपि ॥

आचार्यदक्षिणा देया पुरश्चर्यादि कर्मसु ।
नाचार्यः पूज्यते यत्र शुभकर्मसु साधकैः ॥

तत्कर्म निष्फलं प्रोक्तं पश्चान्नरकदुःखदम् ।
आचार्यः पूज्यते यत्र भूषणैर्दक्षिणादिभिः ॥

तत्कर्म सफलं प्रोक्तं सर्वकल्याणसिद्धिदम् ।
संसारसागरे घोरे बहुदुःखसमाकुले ॥

श्रीमदष्टाक्षरी विद्या जपस्तारक उच्यते ।
आचार्यचरणद्वन्द्वशुश्रूषणमहर्निशम् ॥ —८०

श्रीमदष्टाक्षरी सिद्धिर्द्वयमेव विमुक्तिदम् ।
नवरालव्रतसमं सिद्धिदं नान्यदुच्यते ॥

महती या पुरश्चर्या मया पूर्वमुदीरिता ।
सम्पूर्णदक्षिणादानादाचार्यचरणद्वये ॥

नवरात्रव्रते तादृक् पुरश्चर्या व्रतोद्भवम् ।
अवश्यं फलमाप्नोति सत्यं सत्यं मयोच्यते ॥

नवरात्रव्रते कृत्वा पुरश्चर्यामिमां शुभम् ।
अकार्याणां शतेनापि बहुदक्षिणयान्विताम् ॥

निरामयश्चिरायुष्यं प्राप्याष्टगुणसंयुताम् ।
अक्षयां श्रियमाप्नोति धनधान्यादिसङ्कुलाम् ॥

गजाश्वरत्नसंपूर्णां सन्ततिव्यापिनीमपि ।
अवाप्य सकला विद्या गङ्गोर्मिसदृशाः शुभाः ॥

सौभाग्यं महदासाद्य सर्वलोक वशङ्करम् ।
स्वच्छन्दमृत्युः पुत्रादि समृद्धिं च महत्तराम् ॥

भुक्त्वाऽपि सकलान् भोगान् महायोगी महामतिः ।
तद्विष्णोः परमे धाम्नि दशपूर्वैर्दशापरैः ॥

मोदतेनात्रसन्देहो दिव्यकन्याशतान्वितः ।
कन्याभावे दरिद्रोऽस्य स्वपत्नीसहितो गुरोः ॥

कुर्याच्छुश्रूषणं नित्यं यावद्देहावसानकम् ।
अथापरं महासिद्धिप्रदं योगं वदाम्यहम् ॥

श्रवणाद्यस्य विप्राणां पलायन्ते महापदः ।
पौर्णमासी पुष्यमासे भानुवासरसंयुता ॥

पुष्यनक्षत्रसहिता तत्र चन्द्रस्य पर्वचेत् ।
महाचूडामणिर्नाम्ना योगोऽलभ्य उदाहृतः ॥

भानुवासरसंयुक्ता व्यतीपातसमन्विता ।
वैष्णवर्क्षसमायुक्ता तन्नामा यदि भूपते ॥

अलभ्योऽसौ महानुक्तो योगोऽर्धोदयनामकः ।
तत्रैव ग्रहणं पुण्यं सवितुर्यदि जायते ॥

त्रैलोक्यचिन्तामणियोग उक्तस्समस्तविद्या फलसिद्धिदाता ।
सहस्रवर्षैरपि योगराजो न लभ्यतेऽसौ भुवि लोकनाथ ॥ –९५

किञ्चाथ श्रावणे मासि श्रावणर्क्षसमन्विता ।
इन्दुवासरसंयुक्ता योगोऽयं पद्मकः स्मृतः ॥

सोमस्य ग्रहणं तत्र जायते यदि भूपते ।
महानलभ्ययोगोऽसौ चन्द्रचूडामणिः स्मृतः ॥

तस्मिन्मासेप्यमावास्या सोमवासरसंयुता ।
भानुवासरयुक्ता वा पितृनक्षत्र संयुता ॥

महापद्मकनामाऽयं योगोऽक्षयफलप्रदः ।
सवितुर्ग्रहणं तत्र लभ्यते यदि भूपते ॥

रविचूडामणिर्नाम्ना योगोऽलभ्योऽयमीरितः ।
पर्वस्वेतेषु च त्रिषु यद्येकमपि लभ्यते ॥ –१००

अत्र जप्तं हुतं दत्तमनन्तफलसिद्धिदम् ।
विधानमेकमेवात्र पुरश्चरणकर्मणि ॥

उच्यते मिथिलानाथ समाहितमनाः शृणु ।
चतुर्ष्वेतेषु योगेषु पर्वैकं वा भवेद्यदि ॥

एककालं मिताहारस्तत्पूर्वदिवसत्रयम् ।
त्रिशताधिकसाहस्रं समस्तन्याससंयुताम् ॥

यावच्छ्क्यन्यासयुतामथवाष्टाक्षरीं शुभाम् ।
जप्त्वा साम्राज्यलक्ष्मीं वा द्वादशार्णां श्रियोऽथवा ॥

श्रीषडक्षरविद्यां वा वसुवर्णमथापि वा ।
जप्त्वा समाहितो नित्यं शताधिकसहस्रकम् ॥ –१०५

अष्टोत्तरशतं नित्यं श्रीमदष्टार्णविद्यया ।
गव्याज्यं जुहुयादग्नौ श्रियाप्यष्टोत्तरं शतम् ॥

एकैकशो रश्मिमन्त्रैर्हुनेद्गोघृतमप्यथ ।
अष्टोत्तरशतं नित्यमर्चयेद्ब्रह्मविद्यया ॥

तस्मिन् पर्वणि संप्राप्ते स्पर्शकाले समाहितः ।
स्नात्वा नद्यां विशुद्धात्मा केशवाद्यैश्च नामभिः ॥

चतुर्विंशतिधा स्नात्वा विमुक्तः पापराशिभिः ।
अचार्यचरणद्वन्द्वजलं पीत्वा ततः परम् ॥

अन्तश्शुद्धो बहिः शुद्धः स्वाचार्यचरणद्वयम् ।
साष्टाङ्गं प्रणिपत्याऽथ तदाज्ञां मूर्ध्नि धारयन् ॥ –११०

मधुत्रितयसंपृक्तैः कपिलाज्येन संप्लुतैः ।
त्रिशताधिकसाहस्रं श्रीमदष्टार्णविद्यया ॥

शताधिकसहस्रं वा संस्कृतेऽग्नौ हुनेत्तिलैः ।
प्रसन्नरमया वापि द्वादशार्णश्रियापि वा ॥

षडक्षरश्रिया वापि वस्वर्णरमयाऽपि वा ।
अष्टोत्तरशतं हुत्वा वासुदेवेन वाप्यथ ॥

वैष्णवेन षडर्णेनाप्यष्टाविंशतिधा हुनेत् ।
एकैकशो भगवतो रश्मिभिर्जुहुयाद्घृतम् ॥

जयादिहोमं हुत्वाऽथ प्रायश्चित्ताहुतीस्ततः ।
महाव्याहृतिभिर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥ —११५

साष्टाङ्गं प्रणिपत्याऽथ ज्वलितं जातवेदसम् ।
आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ॥

सूक्ष्मं वासोयुगं दत्वा कुण्डलद्वितयं शुभम् ।
महीं सस्यसमायुक्तां दद्याद्बहुलदक्षिणाम् ॥

धेनुद्वयं सवत्सं च बहुदक्षिणयान्वितम् ।
दत्वासिद्धिमवाप्नोति देवानामपि दुर्लभाम् ॥

महादानानि कुर्वीत धनाढ्योऽपि महीपतिः ।
आचार्याय प्रदातव्या सालग्रामशिला शुभा ॥

अवश्यं दक्षिणा युक्ता ग्रहणे चन्द्रसूर्ययोः ।
दातव्यान्यपि विप्रेभ्यो दानान्यन्यानि भूपते ॥ —१२०

आचार्यपत्न्यै दद्याच्च स्वर्णालङ्कारमुत्तमम् ।
भगवत्सन्निधौ दत्वा स्वाचार्यासन्निधौ नृप ॥

तद्द्रव्यं प्रेषयेद्धीमान् गुरवे तत्सुताय वा ।
सवितुर्ग्रहणे चेन्दोर्यद्द्रव्यं तु प्रदीयते ॥

ब्रह्माण्डप्लयेप्येतदक्षयानन्दसिद्धिदम् ।
चूडामण्यादियोगेषु दत्तद्रव्यस्य भूपते ॥

फलं न शक्यते वक्तुं मया धात्रा शिवेन वा ।
एकाहुतिफलं सूर्यसोमयोर्ग्रहणे कृतम् ॥

कोटिहोमफलं प्राहुर्ब्रह्माद्यास्समरुद्गणाः ।
विशेषाच्छ्रीमदष्टार्णहोमादिजनितं फलम् ॥ —१२५

वक्तुं न शक्यते सूर्यसोमपर्वणि भूपते ।
चूडामण्यादियोगेषु को वा वर्णयितुं क्षमः ॥

तत्राऽऽचार्यपादाब्जे दक्षिणादानजं फलम् ।
हिमवन्मेरुसदृशं प्राहुरागमपारगाः ॥

कुण्डलद्वितयं दत्वा स्वाचार्यायेन्दुपर्वणि ।
रविपर्वणि वा कोटि भूषणानां प्रदानजम् ॥

फलमासाद्य शुद्धात्मा पितृवंशसमुद्भवान् ।
मातुरन्वयसम्भूतान् शतशोऽपि सहस्रशः ॥

उद्धृत्य नरके मग्नान् ब्रह्मलोकं नयत्यसौ ।
दत्वाऽथ वसुधां पक्वबहुसस्यसमन्विताम् ॥ —१३०

आचार्यपादयुगले सप्तद्वीपवतीं महीम् ।
दत्वा यत्फलमुद्दिष्टं तत्स्यात्सूर्येन्दुपर्वणि ॥

सालग्रामशिलां दत्वा बहुदक्षिणयान्विताम् ।
आचार्याय व्रती धीमान् कोटिब्रह्माण्डदानजम् ॥

अवश्यं फलमाप्नोति सिद्धिश्चाप्नोत्यनुत्तमाम् ।
इत्थमाचार्यपादाब्जे प्रदत्वा बहुदक्षिणाम् ॥

प्रसर्पकेभ्यो विप्रेभ्यश्शक्त्या दद्याच्च दक्षिणाम् ।
श्रोत्रियाय दरिद्राय वेदाभ्यास रताय च ॥

यो ददाति विवाहार्थं धनं सूर्येन्दुपर्वणि ।
क्षीयन्ते सलिलान्यब्धे भौमाश्च त्रसरेणवः ॥ —१३५

ब्रह्मलोकेऽपि कल्पान्ते तत्फलस्य न हि क्षयः ।
शक्यन्ते पांसवो भूमेर्गणितुं वृष्टिबिन्दवः ॥

ब्रह्मस्थापनजं पुण्यं ब्रह्मणापि न शक्यते ।
विवाहार्थं धनं दत्वा ग्रहणे चन्द्रसूर्ययोः ॥

श्रोत्रियाणां सहस्रेभ्यो यावज्जीवनकं धनम् ।
दत्वा यत्फलमाप्नोति तदेकस्मिन् विवाहिते ॥

आचार्यचरणद्वन्द्वे साधको नियतव्रतः ।
ग्रहणेषु पुरश्चर्यां कृत्वा सम्पूर्णदक्षिणाम् ॥

कृत्वाश्वमेधसाहस्रं दत्वा सम्पूर्णदक्षिणम् ।
कृत्वा यत्फलमाप्नोति ततोऽप्यधिकमश्नुते ॥ —१४०

सहस्रकोटिशो हुत्वा सप्तकोटिमनूत्तमैः ।
यत्फलं समवाप्नोति श्रीमदष्टार्णविद्यया ॥

हुत्वासहस्रं सवितुर्ग्रहणे शशिनोऽपिवा ।
तत्फलं समवाप्नोति भगवद्वचनं यथा ॥

अविच्छिन्नां वसोर्धारां हुत्वा द्वादशवार्षिकम् ।
यत्फलं समवाप्नोति ग्रहणे चन्द्रसूर्ययोः ॥

श्रीमदष्टार्णया हुत्वा तदेव फलमाप्नुयात् ।
कोटिसहस्रसंख्याकदक्षिणासहितं नृप ॥

सहस्रं वाजिमेधानां कृत्वा वर्षसहस्रकम् ।
साङ्गदक्षिणया युक्तां ग्रहणे चन्द्रसूर्ययोः ॥ —१४५

पुरश्चर्यामिमां कृत्वा श्रीमदष्टार्णसन्मनोः ।
तत्फलं समवाप्नोति वाजिमेधसहस्रजम् ॥

पुरश्चरणसाहस्रं महत्संपूर्णदक्षिणम् ।
कृत्वा यत्फलमाप्नोति चूडामण्याख्यपर्वणि ॥

एकामपि पुरश्चार्यां कृत्वा सम्पूर्णदक्षिणाम् ।
अवश्यं तत्फलं भूप प्राप्नोत्यत्र न संशयः ॥

अशक्तो मन्दभाग्योऽपि दरिद्रः कृपणोऽपि वा ।
सालग्रामशिलां दत्वा सुवर्णं निष्कपञ्चकम् ॥

निष्कत्रयसुवर्णं वा दत्वाचार्यस्य दक्षिणाम् ।
श्रीमदष्टार्णविद्यायास्सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ —१५०

ग्रहणेषु पुरश्चर्यामवश्यं यः करोति हि ।
तस्य लक्ष्मीपतिस्सक्षात् प्रसीदति न संशयः ॥

श्रूयते दूरगावार्ताऽऽश्रयेत बहुयोजनम् ।
परदेहप्रवेशादिसामर्थ्यं चाणिमादिकम् ॥

लभ्यते साधकेनाशु पुरश्चरण कृत्यतः ।
भूयोऽपि भार्गवे वारे विशेषः संप्रवक्ष्यते ॥

यच्छ्रुत्वा साधको धीमान् सर्वापद्भ्यो विमुच्यते ।
भार्गवे वासरे प्राप्ते स्वाचार्याज्ञापुरस्सरम् ॥

प्रातः स्नात्वा विशुद्धात्मा नित्यकर्म समाप्य च ।
विधिवत्संस्कृते वह्नौ श्रीमदष्टार्णविद्यया ॥ —१५५

हुत्वा पञ्चशतं गव्यघृतेनादौ समाहितः ।
प्रसन्नलक्ष्मीमन्त्रेण द्वादशार्णश्रियाऽपि वा ॥

षडक्षरश्रिया वाऽऽज्यं हुनेदष्टोत्तरं शतम् ।
वासुदेवस्य मनुना वैष्णव्याऽथ षडर्णया ॥

अष्टाविंशतिधा हुत्वा भगवद्रश्मिभिर्घृतम् ।
एकैकशस्ततो हुत्वा त्रिशतं ब्रह्मविद्यया ॥

अर्चयित्वा ततो भोज्यं मिथुनत्रयमादरात् ।
एकं वा मिथुनं भोज्यं मृष्टान्नैर्दक्षिणादिभिः ॥

सन्तोष्याचार्यपादाब्जे वर्षमानसुवर्णकम् ।
एकनिष्कसुवर्णं वा दद्यादाचार्यदक्षिणाम् ॥ —१६०

महालक्ष्मीधियाचार्यपत्न्यै वाऽथ समर्प्य च ।
जप्त्वा श्रीहृदयं पश्चात्पञ्चधा वा त्रिधापि वा ॥

स्वयं भुञ्जीत नियतो बन्धुभित्सह भूपते ।
भृगुवारव्रतं कुर्वन्नित्यं वत्सरपञ्चकम् ॥

त्रिवर्षमेकवर्षं वा षण्मासं वा समाहितः ।
श्रीमदष्टाक्षरीविद्यासिद्धिमाप्नोत्यनुत्तमाम् ॥

षण्मासादिन्दिराधीशं चक्षुर्भ्यां संप्रपश्यति ।
अथ मासादिमे दैत्याचार्यवारेऽपि वा नृप ॥

कृत्वेत्थं होमकर्माऽऽदौ स्वाचार्यचरण द्वये ।
वर्षमानसुवर्णं वा निष्कमेकमथापि वा ॥ —१६५

आचार्यपत्नीपादाब्जे दत्वा वा दक्षिणां नृप ।
प्राप्नोत्यनुत्तमां सिद्धिं षण्मासाद्वत्सरादपि ॥

आयुरारोग्यमचलमैश्वर्यमणिमादिकम् ।
शापानुग्रहसामर्थ्यमृद्धिं पुत्रादिसंयुताम् ॥

अवाप्य कामरूपित्वं मनसो वेगमक्षयम् ।
श्रियं च महतीं प्राप्य धनधान्याश्वसङ्कुलाम् ॥

मत्तहस्तिसमायुक्तां पशुरत्नौघसङ्कुलाम् ।
भोगानष्टविधान्प्राप्य सिद्ध्यष्टकमनुत्तमम् ॥

कुलसाहस्रसहितो देहान्ते भगवत्पदे ।
मोदते नात्र सन्देहो दिव्यकन्याशतान्वितः ॥ –१७०

न पुत्रपौत्रैः पशुभिर्नपत्न्या च वियुज्यते ।
न धनेन न रत्नैर्वा वियोगं लभते क्वचित् ॥

भार्गवे वासरे यत्र कुत्रापि नियतव्रतः ।
व्रतमित्थं शुचिः कृत्वा भगवत्कलयान्वितः ॥

स्वच्छन्दमृत्युश्शुद्धात्मा कन्दर्पशतसन्निभः ।
प्राप्याष्टगुणमैश्वर्यं योगमष्टाङ्गसंयुतम् ॥

ब्रह्मसायुज्यमाप्नोति योगिनामपि दुर्लभम् ।
अन्येऽपि साधनोपायाः सन्त्यस्य वसुधापते ॥

उक्ता महर्षिभिर्भूप सिद्धियत्नपरो भवेत् ।
श्रीमदष्टाक्षरीविद्या सिद्ध्युपायोऽयमीरितः ॥ –१७५
अतः परं प्रवक्ष्यामि ब्रह्मर्षित्वादि साधनम् ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे पञ्चचत्वारिंशोऽध्यायः ॥

## ॥ अथ षड्चत्वारिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

शृणु राजन् महीपाल ब्रह्मर्षित्वादि साधनम् ।
श्रीमदष्टार्णविद्यायाः प्रवक्ष्यामि ततः परम् ॥

लोकेऽस्मिन् मानुषे भूप जन्ममृत्युजराकुले ।
अनेनैव शरीरेण ब्रह्मर्षित्वादिकं पदम् ॥

दुर्लभं श्रीमदष्टार्णविद्यासिद्ध्यादिकं विना ।
वेदपारायणैर्वापि वाजिमेधशतेन वा ॥

महादानसहस्रैर्वा तीर्थयात्राशतेन वा ।
अमरत्वादिकं प्राप्तुं न शक्यं वसुधापते ॥

श्रीमदष्टाक्षरीविद्या जपहोमादिकर्मभिः ।
आचार्यसेवया नित्यं दक्षिणाद्रव्यदानतः ॥ –५

अनेनैव शरीरेण दिव्यदेहोभवत्यसौ ।
तस्मादष्टाक्षरीं विद्यां विनात्रैव कलेबरे ॥

अमरत्वाद्यभीष्टानि प्राप्तुं शक्यानि नो नृप ।
अनेनैव शरीरेण ब्रह्मर्षित्वादिकं शुभम् ॥

सम्प्राप्यते यथा लोके तत्प्रवक्ष्यामि साम्प्रतम् ।
सेतुबन्धो महत्क्षेत्रं रङ्गधाम ततः परम् ॥

श्रीपर्वतोपि शेषाद्रि पाण्डुरङ्गं महत्तरम् ।
कोल्लापुरं महत्पुण्यं महेन्द्रादिस्ततः परम् ॥

त्रियम्बकश्च सह्याद्रिः ततो भद्राचलः शुभः ।
कुम्भकोणं महत्क्षेत्रं वीरराघवधाम च ॥ —१०

काञ्चीपुरी महापुण्या दक्षिणे मधुरापुरी ।
अहोबलं महत्क्षेत्रं वाशिष्ठा सिन्धुसङ्गमः ॥

सीतारामगिरिः पश्चात् प्रयागस्तीर्थनायकः ।
अवन्ती द्वारकापुण्या जगन्नाथपदं परम् ॥

गङ्गा सागरसङ्गोऽपि सप्तगोदावरी तटम् ।
गोकर्णं नैमिषारण्यं गोकर्णं च तथोत्तरम् ॥

अयोध्यानगरी पुण्या मथुरापुरमुत्तमम् ।
गङ्गाद्वारं महत्पुण्यं कुरुक्षेत्रं च शोभनम् ॥

सीतारामाश्रमः पुण्यो भरतस्याश्रमोऽपि च ।
केदारं मानसमपि रामह्रदमनुत्तमम् ॥ -१५

पद्मनाभं महत्पुण्यं प्रभासं च महत्तरम् ।
बृन्दावनं गोकुलं च जाह्नवीतटमप्यथ ॥

सरस्वतीतटं पुण्यं यमुनातटमप्यथ ।
गोदावरीतटं पुण्यं कृष्णवेणीतटं शुभम् ॥

समुद्रतीरं सिह्माद्रिः कावेरीतटमुत्तमम् ।
एतानि पुण्यक्षेत्राणि विद्यासिद्धिकराणि हि ॥

समस्ततीर्थक्षेत्राणां राज्ञी वाराणसी शुभा ।
सर्वासामपि विद्यानां महासिद्धिप्रदायिनी ॥

ततोऽपि मत्पदं पुण्यमुक्तं बदरिकावनम् ।
सद्यस्सिद्धिप्रदं प्राहुर्भोगमोक्षफलप्रदम् ॥ -२०

पुण्यक्षेत्राणि दिव्यानि सन्त्यन्यान्यपि भूतले ।
यानि दृष्ट्वा तु मनुजः पातकौघैर्विमुच्यते ॥

शृणुष्वावहितो राजन् ब्रह्मर्षित्वादिसाधनम् ।
यच्छ्रुत्वाऽपि नरो धीमान् मुच्यते पापराशिभिः ॥

सेतुबन्धं समाश्रित्य स्वाचार्यचरणद्वयम् ।
धनुष्कोटिकृतस्नानः साष्टाङ्गं प्रणिपत्य च ॥

सहस्रकृत्वो गायत्रीमभ्यस्य त्रिशतं तु वा ।
श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ॥

चिद्रूपमातृकायुक्तामथवा पूजयेच्छुचिः ।
यावल्लक्षमयं नित्यं त्रिशतं जुहुयाद्घृतम् ॥ —२५

श्रीमन्त्रमपि जप्त्वैकं लक्षं शुद्धो जितेन्द्रियः ।
दिने दिनेऽर्चयेत्पुष्पैस्त्रिशतं ब्रह्मविद्यया ॥

तदन्ते जुहुयादग्नौ तिलैस्त्रिमधुसंप्लुतैः ।
विशुद्धो दशसाहस्रं श्रीमन्त्रेण सहस्रकम् ॥

सहस्रं शतनिष्कं वा तदर्धं वा तदर्धकम् ।
दत्वाऽऽचार्यपादाम्भोजे कुण्डलद्वितयान्वितम् ॥

ब्राह्मणान् भोजयेत्पश्चाच्छतं साग्रं सुवासिनीः ।
लक्ष्मणेन च शत्रुघ्नकैकयीसुतसंयुतः ॥

सुग्रीववायुपुत्रादि कपिनायकसंवृतम् ।
जानकीसहितं रामं चक्षुर्भ्यां संप्रपश्यति ॥ —३०

तस्यानुग्रहतस्सद्यो जरामरणवर्जितः ।
शक्राद्यैः पूज्यमानोऽसौ देवत्वं लभते ध्रुवम् ॥

श्रीरामस्याज्ञया नित्यं राजराजो विभीषणः ।
यद्यद्वांछति तत्सर्वमभीष्टं संप्रयच्छति ॥

धनानि दिव्यवस्त्राणि दिव्यान्याभरणानि च ।
धान्यौघमक्षयं नित्यं साधकाय प्रयच्छति ॥

अनेनैव शरीरेण मनोवेगी च खेचरः ।
शक्राद्यष्टदिगीशानां लोकेषु विहरत्यसौ ॥

रङ्गनाथस्य सान्निध्यमाश्रित्य नियतव्रतः ।
आचार्यं सन्निधीकृत्य तच्छुश्रूषणतत्परः । -३५

कुर्वन् त्रिषवणस्नानं कवेरतनयातटे ।
श्रीमदष्टाक्षरीं विद्यां शतसाहस्रमादरात् ॥

प्रजप्त्वा श्रीमनुं पश्चादप्येकं लक्षमभ्यसेत् ।
प्रत्येकं दशसाहस्रं प्रजप्त्वा नियतःशुचिः ॥

भगवद्रश्मिसूक्तं च शतमष्टोत्तरं जपेत् ।
मधुत्रितयसंमिश्रैर्गव्येनाज्येन संप्लुतैः ॥

हुत्वाऽथ दशसाहस्रं तिलैरष्टार्णविद्यया ।
श्रीमन्त्रेण ततो हुत्वा त्रिसहस्रं तिलैर्नृप ॥

वासुदेवस्य मनुना वैष्णव्या च षडर्णया ।
सहस्रमेकं जुहुयात्तिलैरेव घृतप्लुतैः ॥ -४०

भगवद्रश्मिमन्त्रैश्च पञ्चधाज्यं ततोहुनेत् ।
सालग्रामशिलां दत्वा शतदक्षिणयान्वितां ॥

पञ्चविंशतिसंख्याक निष्कद्रव्ययुतां तु वा ।
आचार्यचरणद्वन्द्वे दत्वा विप्रशतं ततः ॥

सुवासिनीशतं भोज्यं प्रदद्याद्दक्षिणा अपि ।
यस्मिन्नेव दिने साक्षाद्रङ्गनाथं प्रपश्यति ॥

तदनुग्रहतस्सद्यो जरामरणवर्जितः ।
तेजोमयतनुर्भूत्वा वसिष्ठादिप्रपूजितः ॥

ब्रह्मर्षित्वमवाप्नोति कल्पान्तं नात्र संशयः ।
शेषाचलस्य शिखरे सुवर्णमुखरीतटे ॥ –४५

स्नानं त्रिषवणं कुर्वन् गुरुशुश्रूषणेरतः ।
सहस्रकृत्वो गायत्रीं प्रजप्त्वा त्रिशतं तु वा ॥

नित्यहोमं समाप्याथ समस्तन्याससंयुताम् ।
श्रीमदष्टाक्षरीं विद्यां प्रजप्त्वा लक्षमादरात् ॥

श्रीमन्त्रान्यतमं स्वेष्टमपि लक्षं जपेच्छुचिः ।
वासुदेवमहाविद्यां वैष्णवीं च षडक्षरीम् ॥

दशसाहस्रकं जप्त्वा प्रत्येकं नियतव्रतः ।
जपेदष्टोत्तरशतं भगवद्रश्मिमालिकाम् ॥

घृतत्रिमधुसंमिश्रैः श्रीमदष्टार्णविद्यया ।
जुहुयाद्दशसाहस्रं तिलैस्तत्रापि भूतले ॥ –५०

श्रीमन्त्रेण हुनेत्पश्चैस्त्रिसहस्रं घृतप्लुतैः ।
विद्यया वासुदेवस्य वैष्णव्या च षडर्णया ॥

त्रिशताधिकसाहस्रं प्रत्येकं जुहुयाद्घृतम् ।
भगवद्रश्मिभिर्हुत्वा गोघृतेनैव पञ्चधा ॥

भोजयेत्त्रिशतं विप्रान् मृष्टान्नेन सुवासिनीः ।
आचार्यचरणद्वन्द्वे गोशतं दक्षिणान्वितम् ॥

तदर्धं वा तदर्धं वा तत्प्रत्याम्नायहेम वा ।
दत्वा तस्मिन् दिने साक्षाच्छेषाचलपतिं विभुम् ॥

श्रीभूमिनीला सहितं भगवन्तं प्रपश्यति ।
तत्प्रसादेन सद्योऽसौ सर्वविद्याधराधिपः ॥ -५५

जरामरणनिर्मुक्तो भवत्येव न संशयः ।
तस्य वक्त्राम्बुजात्सर्वविद्या वेदादिकाः शुभाः ॥

स्वयमेव हि निर्यान्ति पुराणं स्मृतयोऽपि च ।
तेजोमयतनुर्नित्यं पञ्चविंशति वार्षिकः ॥

योगमष्टाङ्गमासाद्य श्रियं चाष्टगुणान्विताम् ।
अनेनैव शरीरेण विमानमधिरोहति ॥

अक्षयान् सकलान् भोगान् भुङ्क्ते कल्पान्तमप्यसौ ।
अहोबलं समाश्रित्य नित्यं त्रिषवणे रतः ॥

श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ।
लक्षमेकं श्रियो विद्यामपि लक्षं ततो जपेत् ॥ —६०

वासुदेवमहाविद्यां वैष्णवीं च षडक्षरीम् ।
प्रत्येकमर्कसाहस्रं प्रजप्त्वा नियतव्रतः ॥

शतमावर्तयेद्धीमान् भगवद्रश्मिमालिकाम् ।
घृतत्रिमधुसंमिश्रं पायसं तिलमिश्रितम् ॥

हुत्वाऽथ दशसाहस्रं त्रिसाहस्रं श्रिया हुनेत् ।
भगवद्रश्मिभिः पश्चाद्घृतं द्वादशधाहुनेत् ॥

विप्राणां द्विशतं भोज्यं नारीणां च शतद्वयम् ।
आचार्यचरणद्वन्द्वे मही सस्यसमाकुला ॥

सम्पूर्णदक्षिणायुक्ता दातव्याऽवश्यमादरात् ।
तन्मूल्यमथवा द्रव्यं दत्वाऽऽचार्यपदाम्बुजे ॥ —६५

साक्षात्पश्यति चक्षुर्भ्यामिन्दिरासहितं विभुम् ।
तत्प्रसादेन विद्यानामधिपो दिव्यरूपभृत् ॥

जरामरणनिर्मुक्तो विमानं सर्वकामदम् ।
अधिरुह्याथ गन्धर्वराजोऽसौ भवति ध्रुवम् ॥

काञ्चीनगरमासाद्य नित्यं त्रिषवणे रतः ।
आचार्यं सन्निधीकृत्य शुश्रूषणपरायणः ॥

श्रीमदष्टाक्षरीं विद्यां समस्तन्यास संयुताम् ।
जप्त्वा लक्षं श्रियो विद्यामिष्टां लक्षं जपेद्बुधः ॥

जपेद्द्वादशसाहस्रं वासुदेवमहामनुम् ।
षडर्णां वैष्णवीं विद्यामपि तत्र तथा जपेत् ॥ –७०

शतमावर्तयेत्पश्चाद् भगवद्रश्मिमालिकाम् ।
बिल्वपत्रैर्घृताभ्यक्तैर्मधुत्रितयमिश्रितैः ॥

हुत्वा द्वादशसाहस्रं श्रिया च त्रिसहस्रकम् ।
वासुदेवस्य मन्त्रेण वैष्णव्या च षडर्णया ॥

हुत्वा सहस्रं प्रत्येकं घृतेनैव महीपते ।
भगवद्रश्मिभिर्हुत्वा घृतं द्वादशधा ततः ॥

ब्रह्मार्पणाहुतिं कृत्वा शतमष्टोत्तरं द्विजान् ।
सुवासिनीशतं वापि मृष्टान्नैरथभोजयेत् ॥

समर्पयित्वा स्वाचार्यकर्णयोः कुण्डलद्वयम् ।
दुकूलयुगलं दत्वा दद्यान्निष्कसहस्रकम् ॥ –७५

शतनिष्कं सुवर्णं वा तदर्धं वा तदर्धकम् ।
दद्यादाचार्यपादाब्जे वित्तशाठ्यविवर्जितः ॥

तस्मिन्नेव दिने साक्षात्काञ्चीनगरनायकम् ।
लक्ष्मीनारायणं देवं गरुडारूढमच्युतम् ॥

पश्यत्येव स्वचक्षुर्भ्यां ब्रह्मेशादिभिरर्चितम् ।
तदनुग्रहतस्सद्यो जरामरणवर्जितः ॥

निरामयश्चिरायुश्च श्रियमष्टगुणान्विताम् ।
अवाप्य धनधान्यौघमुक्तारत्नसमाकुलाम् ॥

इन्द्रार्धासनमासाद्य दैवतैरपि पूजितः ।
अनेनैव शरीरेण कामरूपी मनोजवः ॥ —८०

खेचरत्वमनुप्राप्य देवर्षित्वं प्रयात्यसौ ।
अथ क्षेत्रे महापुण्ये वाशिष्ठा सिन्धुसंगमे ॥

नरसिंहस्य सान्निध्ये स्वाचार्याज्ञापुरस्सरम् ।
माघमासे विशुद्धात्मा वैशाखे कार्तिकेऽपि वा ॥

श्रावणे मार्गशीर्षे वा चन्द्रभास्करपर्वणि ।
त्रिरात्रोपोषितः स्नात्वा स्पर्शकाले समागते ॥

आचार्यचरणद्वन्द्वजलं पीत्वा विशुद्धधीः ।
तिलैर्गव्याज्यसंमिश्रैर्मधुत्रितयमिश्रितैः ॥

त्रिशताधिकसाहस्रं श्रीमदष्टार्णविद्यया ।
जातवेदसि हुत्वाऽथ श्रियाप्यष्टोत्तरं शतम् ॥ —८५

हुत्वाऽथ भगवद्रश्मिमन्त्रैस्त्रेधा घृतं हुनेत् ।
प्रणिपत्य च साष्टाङ्गं विधिवज्जातवेदसि ॥

तत आचार्यपादाब्जयुगलं प्रणिपत्य च ।
कुण्डलद्वितयं दत्वा निष्कसाहस्रमादरात् ॥

शतनिष्कसुवर्णं वा तदर्धं वा तदर्धकम् ।
दद्यादाचार्यपादाब्जे वित्तशाठ्यविवर्जितः ॥

परेद्युर्ब्राह्मणान् शक्त्या भोजयेच्च सुवासिनीः ।
आचार्यपत्नीपुत्रादीनभ्यर्च्याकल्पसंचयैः ॥

आचार्ये दूरदेशस्थे पादुकाद्वितयोपरि ।
तदभावे भगवतः सन्निधौ वा समर्पयेत् ॥ —९०

आचार्यपत्नीपुत्रेभ्यः प्रेषयेद्वस्तु तत्परम् ।
ग्रहणेषु पुरश्चर्यां वाशिष्ठा सिन्धुसंगमे ॥

विधिवत् पञ्चधा कृत्वा साङ्गां सम्पूर्णदक्षिणाम् ।
नृसिंहानुग्रहात्सद्यो जित्वा मृत्युं च दुस्सहम् ॥

प्रह्लादं पश्यति क्षिप्रं दैत्यसाम्राज्यनायकम् ।
बहुकालं भवत्यस्य सखा दैत्याधिपः प्रभुः ॥

प्रह्लादानुग्रहात्सद्यो हरिभक्तिमचञ्चलाम् ।
सम्प्राप्य चक्षुषा नित्यं नरसिंहं जगत्पतिम् ॥

प्रपश्यति महालक्ष्मीसहितं दैवतैर्वृतम् ।
दिने दिनेऽस्य प्रह्लादो रत्नान्याभरणानि च ॥ —९५

वासांसि च महार्हाणि श्रियमष्टगुणामपि ।
प्रयच्छति चिरायुष्यं सन्ततिव्यापिनीं श्रियम् ॥

अनुग्रहान्नरहरेर्महर्षिर्जायते नृप ।
कोल्लापुरं समासाद्य कमलायाश्च सन्निधौ ॥

आचार्यचरणद्वन्द्वं नत्वा साष्टाङ्गमादरात् ।
श्रीमदष्टाक्षरीं जप्त्वा तत्राक्षयफलं लभेत् ॥

तदेव सुमहत्पीठं महालक्ष्म्या यशस्करम् ।
भूतले सर्वपीठेषु ततः परतरं न हि ॥

महासिद्धिप्रदं सद्यो महापातक भञ्जनम् ।
तत्पीठसदृशं सद्यास्सिद्धिदं नास्ति भूतले ॥

धर्मार्थकाममोक्षादिचतुर्वर्णफलार्थिनः
समस्तेप्सितसंसिद्ध्यै पीठे कोल्लापुरे श्रियः ॥

यजेद्धीमान् महालक्ष्मीं लक्ष्मीहृदय विद्यया ।
तत्र वक्ष्यामि भूपाल समाहितमनाः शृणु ॥

कोल्लापुरे महाक्षेत्रे स्वाचार्याज्ञा पुरस्सरम् ।
नित्यं त्रिषवणं कुर्वन् समस्तन्याससंयुताम् ॥

श्रीमदष्टाक्षरीं विद्यां जप्त्वैकं लक्षमादरात् ।
लक्ष्मीहृदयविद्यां च जपेल्लक्षमतः परम् ॥

द्वादशाक्षरलक्ष्मीं वा श्रीषडर्णमथापि वा ।
वासुदेवमहाविद्यां वैष्णवीं च षडक्षरीम् ॥ —१०५

जप्त्वा द्वादशसाहस्रं भगवद्रश्मिमालिकाम् ।
अष्टोत्तरशतं जप्त्वा विधिवत्संस्कृतेऽनले ॥

घृतत्रिमधुसंमिश्रैस्तिलैर्बिल्वदलान्वितैः ।
हुत्वा द्वादशसाहस्रं श्रीमदष्टार्णविद्यया ॥

अथ प्रसन्नलक्ष्म्या च त्रिसहस्रं हुनेत्तिलैः ।
वासुदेवस्य मनुना वैष्णव्या च षडर्णया ॥

हुत्वा सहस्रमाज्येन प्रत्येकं ज्वलितेऽनले ।
भगवद्रश्मिविद्याभिरथ द्वादशधा हुनेत् ॥

जयादि होमं कृत्वाऽथ कृत्वा ब्रह्मार्पणाहुतिम् ।
अग्निं प्रदक्षिणीकृत्य स्वाचार्यचरणद्वयम् ॥ —११०

साष्टाङ्गं प्रणिपत्याथ षष्टिचिह्नकहेमजम् ।
कुण्डलद्वितयं दत्वा मुद्रिकामङ्गुलीष्वपि ॥

अपि चोदरबन्धादिभूषणानि समर्पयेत् ।
सुवर्णनिष्कसाहस्रं तदर्धं वा तदर्धकम् ॥

पञ्चविंशतिनिष्कं वा स्वाचार्यचरणेऽर्पयेत् ।
वित्तशाठ्यं परित्यज्य स्वाचार्यस्य प्रियामपि ॥

स्वर्णालङ्करणैर्वस्त्रैर्विशेषेण प्रपूजयेत् ।
भोजयेच्च शतं साग्रं ब्राह्मणांश्च सुवासिनीः ॥

तस्मिन् दिने स्वचक्षुर्भ्यां महालक्ष्मीसमन्वितम् ।
विनतातनयारूढं पश्यत्येव हरिं विभुम् ॥ —११५

गजरत्नधनाश्वौघसंकुलामचलां श्रियम् ।
तत्प्रसादादवाप्यासौ दीर्घायुष्यं निरामयम् ॥

अधिपं सर्वसिद्धीनां कपिलं च प्रपश्यति ।
आधिपत्यं च सिद्धानामणिमादिगुणां श्रियम् ॥

सम्प्राप्य योगमष्टाङ्गसंयुतं सर्वसिद्धिदम् ।
सम्प्राप्य खेचरत्वं च मनोवेगं तथाक्षयम् ॥

अनेनैव शरीरेण जरामरणवर्जितः ।
श्वेतद्वीपादिलोकेषु सत्यलोकादिकेषु च ॥

कपिलानुग्रहान्नित्यमसौ विहरति स्वयम् ।
दिनेदिनेऽसौ चक्षुर्भ्यां कपिलं संप्रपश्यति ॥ —१२०

परकायप्रवेशादि सामर्थ्यं च व्रजत्यसौ ।
पुरुषोत्तममासाद्य जगन्नाथस्य सन्निधौ ॥

मार्कण्डेयसरः स्नातः स्नात्वा सिन्धौ ततःपरम् ।
प्रणम्याचार्यपादाब्जं समस्तन्याससंयुताम् ॥

श्रीमदष्टाक्षरीं जप्त्वा लक्षमेकं यतव्रतः ।
श्रियोविद्यां जपेल्लक्षं वासुदेवमहामनुम् ॥

दश साहस्रकं जप्त्वा वैष्णवं च षडक्षरम् ।
श्रीमदष्टाक्षरेणाथ विधिवत्संस्कृतेऽनले ॥

तिलैस्त्रिमधुगव्याज्यमिश्रितैरयुतं हुनेत् ।
लक्ष्मीमन्त्रेण जुहुयात्सहस्राणां चतुष्टयम् ॥ −१२५

वासुदेवस्य मनुना वैष्णव्या च सहस्रकम् ।
हुत्वाऽथ भगवद्रश्मिमन्त्रैर्द्वादशधा घृतम् ॥

हुत्वा जयादिभिर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
नमस्कृत्यानलं पश्चादाचार्यचरणद्वयम् ॥

प्रणम्य दण्डवत्तस्य कर्णयोः कुण्डलद्वयम् ।
षष्टिचिह्नकसंख्याकतप्तकाञ्चननिर्मितम् ॥

पद्मरागयुतं सूक्ष्मवासोयुक्तं समर्प्य च ।
सालग्रामशिलां दद्याद्गोयुग्मेन समन्विताम् ॥

सहस्रं दक्षिणां दद्यात्तदर्धं वा तदर्धकम् ।
पञ्चविंशतिनिष्कं वा यथाशक्त्या समर्पयेत् ॥ −१३०

श्रोत्रियाणां शतं साग्रं भोजयेच्च सुवासिनीः ।
आचार्यपत्न्यै दत्वाऽथ वस्त्रालङ्करणादिकम् ॥

सद्य एव जगन्नाथं सुभद्रासहितं विभुम् ।
ब्रह्मरुद्रादिभिर्वन्द्यं गरुडारूढमच्युतम् ॥

पश्यत्येव स्वचक्षुर्भ्यां तेजोमण्डलमध्यगम् ।
तत्प्रसादादयं सद्यो मार्कण्डेयं प्रपश्यति ॥

भवत्यस्य सखा नित्यं मृकण्डुतनयो मुनिः ।
प्रसन्ने जगतां नाथे महालक्ष्मीसमन्विते ॥

महेन्द्रपुरसाम्राज्यमथ ब्रह्मपदं तु वा ।
न साध्यं विद्यते तस्य प्रसादेनश्रियः पतेः ॥ –१३५

अयोध्यापुरमासाद्य स्नात्वाऽथ सरयूजले ।
आचार्यचरणद्वन्द्वं प्रणिपत्याऽथ दण्डवत् ॥

बृहच्चक्रे समभ्यर्च्य श्रीशमावरणान्वितम् ।
श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ॥

लक्षमेकं प्रजप्त्वाऽथ लक्षमेकं जपेच्छ्रियम् ।
वासुदेवमहाविद्यां वैष्णवीं च षडक्षरीम् ॥

प्रत्येकमयुतं जप्त्वा मालामन्त्रं श्रियः पतेः ।
राज्याभिषिक्तरामस्य जपेदर्कसहस्रकम् ॥

विधिवत्संस्कृते वह्नौ श्रीमदष्टार्णविद्यया ।
जुहुयाद्दशसाहस्रं कापिलाज्येन सादरम् ॥ –१४०

यद्वा गव्यघृतं श्रीमदष्टाक्षर्यायुतं हुनेत् ।
श्रीमन्त्रेण त्रिसाहस्रं वासुदेवस्य विद्यया ॥

वैष्णव्या च शतं हुत्वा श्रीराममनुना ततः ।
त्रिशताधिकसाहस्रं हुनेदग्नौ गवां घृतम् ॥

भगवद्रश्मिभिर्हुत्वा पञ्चधा गोघृतेन च ।
कृत्वा जयादिहोमं च ततो ब्रह्मार्पणाहुतिम् ॥

अग्निं प्रदक्षिणीकृत्य स्वाचार्यचरणद्वयम् ।
साष्टाङ्गं प्रणिपत्याऽथ तप्तहाटकनिर्मितम् ॥

पद्मरागसमायुक्तं कुण्डलद्वितयं शुभम् ।
आचार्यकर्णयोर्दत्वा गोद्वयं वत्ससंयुतम् ॥ —१४५

बहुक्षीरं समर्प्याथ निष्कसाहस्रमादरात् ।
दत्वा निष्कशतंवाऽपि तदर्धं वा तदर्धकम् ॥

दत्वाचार्यप्रियायै च दत्वालङ्करणादिकम् ।
पञ्चविंशतिसंख्याक मिथुनान्यथ भोजयेत् ॥

तस्मिन् दिने महाराजं भरतादिभिरन्वितम् ।
सुग्रीवादिकपिस्तुत्यं बहुरुद्रादिभिर्वृतम् ॥

साक्षात्पश्यति चक्षुर्भ्यां श्रीरामं जानकीपतिम् ।
असाध्यमपि देवानामपि द्वीपान्तरस्थितम् ॥

अभीष्टं सकलं दत्वा श्रीरामो जगतीपतिः ।
सखायमञ्जनासूनुं करोत्यस्य न संशयः ॥ -१५०

हनूमतः प्रभावेण सिद्धयोऽष्टाणिमादयः ।
पादुकाञ्जनमुख्याश्च सिद्ध्यन्त्यस्याशु सिद्धयः ॥

जरामरणराहित्यमपि दीर्घायुरक्षयम् ।
ददात्यस्याञ्जनासूनुर्नित्यमिष्टांश्च दुर्लभान् ॥

वाराणसीं समासाद्य विश्वनाथस्य सन्निधौ ।
मणिकर्ण्यां कृतस्नानो नत्वा विश्वेश्वरं विभुम् ॥

बिन्दुमाधवमभ्यर्च्य नत्वा स्वाचार्यपादुकाम् ।
समस्तन्याससहितां श्रीमदष्टाक्षरीं शुभाम् ॥

लक्षमेकं प्रजप्त्वाऽथ भगवत्सन्निधौशुचिः ।
जितेन्द्रियो हविष्याशी जपेल्लक्षमपि श्रियम् ॥ -१५५

वासुदेवमनुं पश्चाद्वैष्णवं च षडक्षरम् ।
प्रत्येकमयुतं जप्त्वा श्रीमदष्टादशाक्षरम् ॥

जप्त्वा द्वादशसाहस्रमयुतं ब्रह्मविद्यया ।
अर्चयित्वाऽथ कुसुमैर्बिन्दुमाधवमीश्वरम् ॥

ततः परं हुनेदग्नौ श्रीमदष्टार्णविद्यया ।
तिलाक्षतसमायुक्तैर्बिल्वपत्रैर्घृतप्लुतैः ॥

हुत्वाऽयुतं महालक्ष्म्या त्रिसहस्रमथो हुनेत् ।
वासुदेवस्य मन्त्रेण वैष्णव्या च षडर्णया ॥

प्रत्येकं त्रिशतं हुत्वा ततो घृतं रमापतेः ।
मन्त्रेण जुहुयादग्नौ सहस्रं त्रिशताधिकम् ॥ —१६०

हुत्वाऽथ भगवद्रश्मिमन्त्रैर्हुत्वाऽथ पञ्चधा ।
जयादिहोमं कृत्वाऽथ प्रणम्याभिमतः परम् ॥

आचार्यचरणद्वन्द्वं प्रणिपत्य प्रदक्षिणम् ।
षष्टिचिह्नकसन्तप्तहाटकेन विनिर्मितम् ॥

कुण्डलद्वितयं रम्यं दत्वाचार्यस्य कर्णयोः ।
मुद्रिकाद्यैरलङ्कारैस्समभ्यर्च्य च सादरम् ॥

क्षौमं वासोयुगं दत्वा निष्कसाहस्रमर्पयेत् ।
त्रिशतं शतनिष्कं वा तदर्धं वा तदर्धकम् ॥

आचार्यायार्पयेद्धीमान् वित्तशाठ्यविवर्जितः ।
महालक्ष्मीधिया पश्चात्तत्पत्न्या अपि भूषणैः ॥ —१६५

ताटङ्कहेमचिन्ताकं मुद्रिकां च समर्पयेत् ।
दुकूलमथ वासश्च कञ्चुकं च समर्पयेत् ॥

पञ्चविंशतिसंख्याकमिथुनेभ्यश्च भोजनम् ।
दत्वाऽथ दक्षिणाद्यैश्च सन्तोष्य च यथामति ॥

तस्मिन्दिने निराहारो बिन्दुमाधवसन्निधौ ।
भूत्वा परेद्यु र्भुञ्जीत ब्राह्मणैस्सह बन्धुभिः ॥

अवश्यं जगतां नाथं बिन्दुमाधवमच्युतम् ।
पश्यत्येवस्वचक्षुर्भ्यां विश्वेश्वरसमन्वितम् ॥

तदनुग्रहतस्सर्वविद्यानां पारगो वशी ।
भूत्वा मूकोऽपि महतीं श्रियमष्टगुणान्विताम् ॥ −१७०

प्राप्यायुष्यमथारोग्यं भगवत्किङ्कराधिपः ।
भूत्वाऽन्ते याति सान्निध्यं कुलकोटिसमन्वितः ॥

मकरस्थे रवौ माघे प्रयागे तीर्थनायके ।
प्रातः स्नात्वाऽन्वहं भक्त्या नित्यकर्म समाप्य च ॥

स्वाचार्यचरणद्वन्द्वं प्रणिपत्याथ सादरम् ।
श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ॥

लक्षमेकं प्रजप्त्वाऽथ पञ्चविंशत्सहस्रकम् ।
महालक्ष्मीमनुं जप्त्वा वासुदेवमहामनुम् ॥

षडक्षरं वैष्णवं च प्रत्येकमयुतं जपेत् ।
विधिवत्संस्कृते वह्नौ श्रीमदष्टार्णविद्यया ॥ −१७५

हुत्वा द्वादशसाहस्रं तिलैर्गव्यघृतप्लुतैः ।
त्रिसहस्रं तिलैरेव घृतमिश्रैः श्रियाहुनेत् ॥

वासुदेवद्वादशार्णवैष्णवाभ्यां ततःपरम् ।
हुत्वा सहस्रं प्रत्येकं भगवद्रश्मिभिस्त्रिधा ॥

हुत्वा द्वादशसाहस्रमर्चयेद्ब्रह्मविद्यया ।
कुण्डलाद्यैरलङ्कारैराचार्यमथ पूजयेत् ॥

सूक्ष्मं वासोयुगं दत्वा निष्कसाहस्रमर्पयेत् ।
त्रिशतं शतनिष्कं वा तदर्धं वा तदर्धकम् ॥

वित्तलोभं परित्यज्य श्रीधियाचार्यवल्लभाम् ।
अलङ्कारैश्च वासोभिः सन्तोष्य च ततःपरम् ॥ —१८०

पञ्चविंशतिसंख्याकमिथुनान्यपि भोजयेत् ।
श्रीश्रीपतिधियापश्चात्तोषयेद्दक्षिणादिभिः ॥

दिवसे माघमासान्त्ये श्री श्रीशब्रह्मविद्यया ।
श्री श्रीशावर्चयेद्धीमान् सहस्रं त्रिशताधिकम् ॥

तस्मिन् दिने निराहारो भूत्वा रात्रौ जगत्पतिम् ।
साक्षात्स्वप्नेऽपि वा पश्यत्यसौ देवं श्रियःपतिम् ॥

तदाज्ञयाऽष्टदिक्पालाः साक्षाद्विग्रहधारिणः ।
श्रीपतेराज्ञया तस्य शक्राद्या लोकपालकाः ॥

अन्वहं तस्य कैङ्कर्यं कुर्वन्त्येव न संशयः ।
कल्पद्रुमं कामधेनुं चिन्तारत्नमनुत्तमम् ॥ —१८५

दत्वाऽमृतं ततो दिव्यं प्रद्युम्नश्च न संशयः ।
पीत्वाऽमृतमसौ दिव्यमजरश्चामरस्तथा ॥

भूत्वासौ कामरूपी च मनोवेगी च खेचरः ।
विहरत्यखिलान् लोकान् सिद्धगन्धर्वसेवितः ॥

बदरीकाननं प्राप्य नरेण सहितस्य मे ।
स्नात्वा चाऽलकनन्दायां नित्यकर्म समाप्य च ॥

श्रीमदष्टाक्षरीं विद्यां समस्तन्याससंयुताम् ।
लक्षमेकं प्रजप्त्वाऽथ स्वाचार्याज्ञापुरस्सरम् ॥

पञ्चविंशत्सहस्राणि सप्तविंशाक्षरीं श्रियः ।
जप्त्वाऽथ वासुदेवाख्यं वैष्णवं च षडक्षरम् ॥ -१९०

प्रत्येकमर्कसाहस्रं प्रजप्त्वा रश्मिमालिकाम् ।
अष्टोत्तरशतं जप्त्वा विधिवत्संस्कृतेऽनले ॥

श्रीमदष्टार्णमन्त्रेण पायसं त्रिमधुप्लुतम् ।
हुनेद्गव्याज्यमथवा भानुसाहस्रमादरात् ॥

प्रसन्नलक्ष्मीमन्त्रेण त्रिसहस्रं हुनेद्घृतम् ।
वासुदेवस्य मनुना मनुना वैष्णवेन च ॥

प्रत्येकं त्रिशतं हुत्वा भगवद्रश्मिभिस्त्रिधा ।
हुत्वाऽऽज्यं ज्वलिते वह्नौ होमं कृत्वा जयादिभिः ॥

अग्निं प्रदक्षिणीकृत्य नत्वा स्वाचार्यपादयोः ।
नरनारायणीं विद्यां जपेदर्कसहस्रकम् ॥ -१९५

तथैवाग्नौ हुनेदाज्यं सहस्रं त्रिशताधिकम् ।
भूयो जयादिहोमं च कृत्वा ब्रह्मार्पणाहुतिम् ॥

आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ।
कुण्डलद्वितयं रम्यं दत्वाचार्यस्य कर्णयोः ॥

अङ्गुलीयकमुख्यानि दत्वालङ्करणानि च ।
पीताम्बरयुगं दत्वा स्वाचार्यचरणद्वये ॥

सुवर्णं निष्कसाहस्रं दद्यात्पञ्चशतं तु वा ।
त्रिशतं शतनिष्कं वा तदर्धं वा तदर्धकम् ॥

वित्तलोभं परित्यज्य दत्वाचार्यपदद्वये ।
आचार्यपत्न्यै दत्वाऽथ वासोऽलङ्करणादिकम् ॥ -२००

पञ्चविंशतिसंख्याकमिथुनान्यपि भोजयेत् ।
नरनारायणीं विद्यां प्रजपेत्तद्दिने शुचिः ॥

दृढव्रतो निराहारो नरेण सहितं विभुम् ।
ब्रह्मरुद्रादिभिर्वन्द्यं निशि मां संप्रपश्यति ॥

मदनुग्रहतः साक्षादसौ भानुसमप्रभः ।
अजरामरणो नित्यं पञ्चविंशति वार्षिकः ॥

सिद्धत्वममरत्वं वा ब्रह्मर्षित्वमथापिवा ।
महायोगित्वमथवा ब्रह्मत्वं वा महेशताम् ॥

विष्णुत्वमथवा साक्षाद्वांछितं प्राप्य साधकः ।
क्षणं कृशः क्षणं स्थूलः श्रियमष्टगुणां पुनः ॥ —२०५

प्राप्यापि योगमष्टाङ्गपरकायं विशत्यसौ ।
तिरश्चां भाषितं वेत्ति सर्वज्ञत्वं च सन्ततम् ॥

प्राप्य स्वच्छन्दमरणं देहान्ते योगिदुर्लभम् ।
कुलकोटियुतो धीमान् प्रविशत्येव मत्पदम् ॥

द्वारकामथुरावन्ती कुरुक्षेत्रं च नैमिषम् ।
क्षेत्राणि भूतले सन्ति सद्यस्सिद्धिकराण्यपि ॥

बदर्युक्तविधानेन कृत्वा होमजपादिकम् ।
आचार्यानुज्ञया कृत्वा सिद्धिमिष्टां व्रजत्यपि ॥

सर्वत्राचार्यसान्निध्यं सिद्धिदं भुवि कथ्यते ।
तत्पत्नीपुत्रपौत्राणां सान्निध्यमथवा नृप ॥

आचार्यपादुकायुग्मसन्निधौ वा जयादिकम् ।
कार्यं तद्दक्षिणादानं पादुकाद्वितयोपरि ॥

आचार्यपत्नीपुत्राणामथ तद्धनमर्पयेत् ।
अनेन विधिनावापि सिद्धिमिष्टां व्रजत्यथ ॥

श्रीमदष्टाक्षरीविद्या जपहोमादिसंभवम् ।
फलं वक्तुं न शक्यं स्यान्मया धात्रापि शम्भुना ॥

नाचार्यात्परमं दैवं विद्यानामष्टाक्षरी समा ।
ज्ञात्वेत्थं तत्परोनित्यं मोदते ब्रह्मरूपभाक् ॥

इदमेव परं श्रेयस्करं ब्रह्मत्वसाधनम् ।
एतस्मादधिकं नास्ति सत्यं सत्यं महीपते ॥ –२१५

इदमष्टार्णमाहात्म्यं किञ्चिदत्राप्युदीरितम् ।
वसुन्धरादि विद्यानां प्रवक्ष्ये साधनं ततः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे षड्चत्वारिंशोऽध्यायः ॥



## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

**श्री भगवानुवाच —**

अथ वक्ष्यामि भूविद्यानुष्ठानविधिमुत्तमम् ।
नीला विद्याविधानं च शृणुष्व श्रद्धयान्वितः ॥

त्रयीबीजं समुच्चार्य चतुर्दश समन्वितम् ।
महेन्द्रारूढगणपं बिन्दुनादसमन्वितम् ॥

चतुर्थमप्थान्तस्थं बिन्दुयुक्तमतःपरम् ।
तदेव बिन्दुहीनं च भृगुं पञ्चमसंयुतम् ॥

बिन्दुयुक्तं नकाराद्यं वह्निं दीर्घसमन्वितम् ।
वायुं द्वादशसंयुक्तं हृदयेन समन्वितम् ॥

एषा वसुन्धराविद्या दशार्णा संप्रकीर्तिता ।
सर्वतीर्थमयी सर्वक्षेत्ररत्नादिसिद्धिदा ॥ –५

समस्ताघौघशमनी महादारिद्र्यभञ्जनी ।
वराहोऽस्य मुनिः प्रोक्तो वैराजं छन्द उच्यते ॥

देवता सर्वभूतानां प्रकृतिर्वसुधा मता ।
द्वितीयं बीजमित्युक्तं हृच्छक्तिः समुदीरिता ॥
षड्दीर्घेण द्वितीयेन षडङ्गं विन्यसेत्ततः ॥

श्यामांविचित्रांशुकरत्नभूषणां पद्मासनां तुङ्गपयोधरोन्नताम् ।
इन्दीवरे द्वे नवशालिमञ्जरीं शुकं दधानां वसुधां भजामहे ॥

लक्षमेकं जपेन्मन्त्री धराया मन्त्रमादरात् ।
ससर्पिषा पायसेन जुहुयात्तद्दशांशतः ॥

तां विष्णोः पूजयेत्पीठे वक्ष्यमाणविधानतः ।
अङ्गानिपूजयेदादौ भूवह्निजलमारुतान् ॥ –१०

दिक्पत्रेषु समभ्यर्च्य कोणपत्रेषु तत्कलाः ।
ज्वलिन्यूष्मा ज्वालिनी च धूम्रार्चिरिति ताःकलाः ॥

आशापालाः ततः पूज्याः वज्राद्यस्त्रसमन्विताः ।
एवं सिद्धमनुर्मन्त्री साधयेत्स्वमनोरथान् ॥

चतुर्विंशतिसाहस्रमहोरात्रं भृगोर्दिने ।
एकस्मिन्नेव दिवसे प्रजप्त्वाऽथ परेह्न्यपि ॥

त्रिसहस्रं हुनेदग्नौ घृतं त्रिमधुपायसम् ।
गोचर्मसंमितां भूमिं पक्वसस्यसमन्विताम् ॥

बहुदक्षिणया युक्तामाचार्याय निवेदयेत् ।
महीप्रतिनिधिद्रव्यमथवा गुरवेऽर्पयेत् ॥ −१५

विद्यासिद्धिमवाप्नोति त्रिषु लोकेषु दुर्लभाम् ।
मधुत्रितयसंयुक्तैर्हुत्वा पञ्चसहस्रकम् ॥

धनं धान्यं महीं पक्वसस्याढ्यां श्रियमक्षयाम् ।
अचिराल्लभते मन्त्री निधानानि च पश्यति ॥

मञ्जरीं शालिसंभूतां मधुत्रितयतोलिताम् ।
नित्यं द्वादशधा हुत्वा मण्डलात्स्याद्धरापतिः ॥

शुक्रवारे दिनमुखे गृहीत्वा साध्यभूमृदम् ।
तामम्भांसि विनिक्षिप्य शोधितेत्र चरुं पचेत् ॥

पयोघृताभ्यां सहितं जुहुयात्तं हुताशने ।
षण्मासं शुक्रवारेषु हुत्वेत्थं प्राप्नुयाद्धराम् ॥ −२०

अष्टोत्तरशतेनासौ वर्षाद्ग्रामाधिपो भवेत् ।
धराविद्यां प्रजप्त्वैकं लक्षं विधिवदर्चिते ॥

कुशेशयैर्हुनेदग्नौ घृतत्रिमधुमिश्रितैः ।
शुद्धात्मा रविसाहस्रं धनरत्नौघसङ्कुलाम् ॥

चतुः समुद्रपर्यन्तां महीं शास्ति न संशयः ।
धरामेवं भजन्मन्त्री पशुरत्नधनादिभिः ॥

धराया वल्लभः स स्यान्नात्र कार्या विचारणा ।
धराया मन्त्रमाहात्म्यमिति किञ्चिन्मयेरितम् ॥

वदाम्यतः परं नीला महात्म्यं वसुधापते ।
त्रयीबीजं बिन्दुयुतं चतुर्थस्वरमप्यथ ॥ –२५

विंशति स्पर्शमुच्चार्य वामलोचनसंयुतम् ।
मुखवृत्तयुतां भूमिं धान्त्यं रुद्रसमन्वितम् ॥

अमृतं वायुसहितं वाग्भवारूढमप्यथ ।
हृदयेन समायुक्तं नीलाविद्येयमीरीता ॥

सर्वविद्यामयी सर्वमहासंपत्समृद्धिदा ।
सर्वक्षेत्रमयी सर्वलोकत्रयवशङ्करी ॥

ऋषिरस्य भवेद्ब्रह्मा छन्दो गायत्रमुच्यते ।
नीलादेवी देवता स्याद्बीजं स्याद्वामलोचनम् ॥

हृच्छक्तिरीरिता दीर्घस्वरैः कुर्यात्षडङ्गकम् ।
कालाम्बुदसमाकारां कस्तूरीतिलकाञ्चिताम् ॥ –३०

दिव्याभरणसंपन्नां दिव्यवस्त्रसमन्विताम् ।
दिव्यचन्दनलिप्ताङ्गीं दिव्यपुष्पसमन्विताम् ॥

वामपार्श्वे भगवतश्चामरं बिभ्रतीं करे ।
कमलं दधतीं हस्ते शरच्चन्द्रसमाननाम् ॥

स्मिताननां विशालाक्षीं नीलां वन्दे हरिप्रियाम ।
नीलादेवीमिति ध्यात्वा लक्षमेकं जपेच्छुचिः ॥

दशांशं पायसं हुत्वा घृतत्रिमधुमिश्रितम् ।
आचार्यदक्षिणां दत्वा विद्यासिद्धिमवाप्नुयात् ॥

पञ्चविंशतिसाहस्रमथवा दक्षिणान्वितः ।
जप्त्वा हुत्वा त्रिसाहस्रं परेद्युः कमलैः सितैः ॥ —३५

घृतत्रिमधुसंमिश्रैर्वर्षाशनमितं धनम् ।
दत्वाऽऽचार्यपदद्वन्द्वे सिद्धिं प्राप्नोत्यनुत्तमाम् ॥

अनया सिद्धया मन्त्री साधयेन्मनसेप्सितम् ।
वसुन्धरावत्पूजा स्यान्नीलाया अपि भूपते ॥

लक्षमेकं प्रजप्त्वेमां नीलाविद्यां फलप्रदाम् ।
घृतत्रिमधुसंमिश्रं दशांशं जुहुयाद्धविः ॥

मन्दधीरपि मूको वा विद्यानां पारगो भवेत् ।
पलाशकुसुमैर्हुत्वा पञ्चसाहस्रमादरात् ॥

मधुत्रितयसंमिश्रैः सर्वविद्यानिधिर्भवेत् ।
अरुणैरुत्पलैर्हुत्वा षट्साहस्रं जितेन्द्रियः ॥ —४०

अचलं महदैश्वर्यं लभते रत्नसङ्कुलम् ।
जप्त्वा लक्षमिमां विद्यां तुलसीवनमध्यगः ॥

घृतत्रिमधुसंमिश्रैर्हुत्वाऽथ तुलसीदलैः ।
लभते सर्वसाम्राज्यं सम्पत्तिमचलामयम् ॥

लाजैर्घृतप्लुतैर्हुत्वा पञ्चसाहस्रमादरात् ।
कन्यामिष्टामवाप्नोति रूपशीलगुणान्विताम् ॥

जप्त्वा नीलामहाविद्यां प्रत्यहं प्रयतः शुचिः ।
धनं धान्यं च रत्नानि विद्यां च महतीं लभेत्

विधानं किञ्चिदुक्तं ते नीलादेव्या भुवोऽपि च ।
वासुदेवादिविद्यानां माहात्म्यमथ वक्ष्यते ।

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सप्तचत्वारिंशोऽध्यायः ॥



## ॥ अथाष्टाचत्वारिंशोऽध्यायः ॥



**श्री भगवानुवाच –**

शृणु राजन्महीपाल वासुदेवस्य चक्रिणः ।
परब्रह्मात्मकस्याद्यां विद्यां सकलसिद्धिदाम् ॥

प्रणवं नमसा युक्तं भकारं गयुतं ततः ।
वते पदमथोच्चार्य मुखवृत्तयुतां सुधाम् ॥

भृगुं सवामकर्णं च रुद्रयुक्तात्रिमप्यथ ।
वरुणं दीर्घसहितं मारुताक्षरमप्यथ ॥

विद्येयं वासुदेवस्य ब्रह्मणः परमात्मनः ।
समस्तवेदवेदान्तसारभूतार्थसंग्रहा ॥

महापातकसंहर्त्री सर्वदुःखविभेदिनी ।
स्वयंभुवादयः पूर्वं वासुदेव महामनुम् ॥

द्वादशार्णममुं जप्त्वा संप्राप्ताः सिद्धिमक्षयाम् ।
ध्रुवोऽपि नारदादेशात् द्वादशार्णं श्रियःपतेः ॥

जप्त्वैव सिद्धिं गतवान् त्रैलोक्येऽपि सुदुर्लभाम् ।
आयुरारोग्यमैश्वर्यं पशवो धनसंचयाः ॥

जरामरणराहित्यं पूर्वजातिस्मृतिः शुभा ।
द्वादशार्णमनोर्जापात्सिद्ध्यन्ति अखिलसिद्धयः ॥

वासुदेवाभिधं ब्रह्म विश्वगर्भं चिदात्मकम् ।
द्वादशार्णानुसंधानान्नित्यमस्य प्रकाशते ॥

इच्छता ब्रह्मतादात्म्यसिद्धिमेकेन जन्मना ।
वासुदेवमहाविद्या जप्तव्या द्वादशाक्षरी ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य जागतं छन्द उच्यते ।
वासुदेवाभिधं ब्रह्म कल्प्यते दैवतं बुधैः ॥

बीजमुक्तं त्रयीबीजं नतिश्शक्तिरुदीरिता ।
प्रणवेन हृदि न्यस्य नमसा शिरसि न्यसेत् ॥

न्यसेद् भगवते शब्दं शिखायां वसुधापते ।
कवचं पञ्चभिर्वर्णैः समस्तेनास्त्रमाचरेत् ॥

हरिमुज्ज्वलचक्रदराब्जगदापरिघान्वितदोः सितपद्मगतम् ।
वलयाङ्गदहारकिरीटधरं नवकुन्दनिभं प्रणमामि सदा ॥

ध्यात्वैवं हृदये साक्षाद्वासुदेवं जगत्पतिम् ।
सर्वावरणसंयुक्तं बाह्यपीठे प्रपूजयेत् ॥ —१५

प्रथमावरणं पञ्चकोणेऽङ्गैः पञ्चभिः क्रमात् ।
अष्टपत्रे वासुदेवं श्रियं संकर्षणं ततः ॥

सरस्वतीं च प्रद्युम्नं रतिमप्यनिरुद्धकम् ।
प्रीतिं द्वादशपत्रेऽब्जे यजेत्केशवमादितः ॥

नारायणं माधवं च गोविन्दं विष्णुमप्यथ ।
मधुसूदनमभ्यर्च्य त्रिविक्रममतःपरम् ॥

वामनं श्रीधरं चैव हृषीकेशमतः परम् ।
पद्मनाभं समभ्यर्च्य दामोदरमतः परम् ॥

शक्राद्यैरष्टदिक्पालैर्वज्राद्यैश्च ततः परम् ।
इत्थमभ्यर्च्य विश्वेशं वासुदेवं जगत्पतिम् ॥

अर्कलक्षं जपेन्मन्त्री विधिवत्संस्कृतेऽनले ।
हुत्वा शुभतिलैर्गव्यघृतत्रिमधुमिश्रितैः ॥

अर्कसाहस्रमाचार्यदक्षिणां च समर्प्य च ।
वासुदेवमहाविद्यासिद्धिमाप्नोति शाश्वतीम् ॥

एकविंशतिसाहस्रमथवैकादशी दिने ।
द्वादश्यां च समभ्यर्च्य दिवारात्रमनन्यधीः ॥

त्रयोदश्यां हुनेदाज्यमधुत्रितयमिश्रितैः ।
त्रिशतं शुभ्रतिलैर्वर्षाशनमितं वसु ॥

दत्वऽऽचार्यपदाम्भोजे विद्यायाः सिद्धिमश्नुते ।
क्षीराक्ताभिरथ क्षीरसमिद्भिर्ज्वलितेऽनले ॥

हुत्वा द्वादशसाहस्रं चित्तशुद्धिमवाप्नुयात् ।
गोष्ठे बृन्दावने वापि लक्षजापी पयोव्रतः ॥

पलाशपुष्पैरयुतं हुत्वाज्यत्रिमधुप्लुतैः ।
पारगस्सर्वविद्यानां भवत्यत्र न संशयः ॥

नदीतीरे जपेल्लक्षमयुतद्वितयोत्तरम् ।
हुत्वा द्वादशसाहस्रं हविराज्यमधुप्लुतम् ॥

धनदेन समो लक्ष्म्या विद्यया धिषणप्रभः ।
कन्दर्पसदृशः कान्त्या जीवेच्च शरदांशतम् ॥

दूर्वाभिर्गोघृताक्ताभिर्हुत्वा दशसहस्रकम् ।
निरामयश्चिरायुष्यं लभते नात्र संशयः ॥

नन्द्यावर्तैर्गोघृताक्तैर्मधुत्रितयमिश्रितैः ।
अयुतत्रितयं हुत्वा भगवत्कलयान्वितः ॥

अणिमादिगुणैश्वर्यं वाचां सिद्धिमनुत्तमम् ।
आयुरारोग्यमतुलामृद्धिं पुत्रादिसंयुताम् ॥

प्राप्नोत्यत्र न सन्देहः प्रसादेन श्रियःपतेः ।
मथुरायामधश्शायी हविष्याशी जितेन्द्रियः ॥

लक्षद्वादशकं जप्त्वा द्वादशार्णं श्रियःपतेः ।
किमनेन जपेनाशु न साधयति मन्त्रवित् ॥

सर्वज्ञत्वं मनोज्ञत्वमनन्धत्वं महर्षिताम् ।
ब्रह्मर्षित्वं च सिद्धत्वं खेचरत्वमथापि वा ॥

असाध्यमपि देवानामसौ साधयतीप्सितम् ।
द्वादशाक्षरविद्याया यत्रकुत्राऽपि वा जपात् ॥

इहापि सकलान् भोगान् भुक्त्वा मानुषदुर्लभान् ।
कुलानां शतमुद्धृत्य मोदते परमेपदे ॥

षडक्षरीं प्रवक्ष्यामि वैष्णवीं सर्वसिद्धिदाम् ।
यस्या विज्ञानमात्रेण पलायन्ते महापदः ॥

प्रणवं विष्णवेशब्दं नमस्कारसमन्वितम् ।
उद्धरेद्वैष्णवी विद्या षडर्णेयमुदीरिता ॥

समस्तसंपत्साम्राज्यहेतुभूता सनातनी ।
महापातकसंहर्त्री भुक्तिमुक्तिफलप्रदा ॥ —४०

ऋषिः प्रजापतिर्ब्रह्मा गायत्रं छन्द उच्यते ।
देवता श्रीमहाविष्णुः परमात्मा श्रियःपतिः ॥

बीजमुक्तं त्रयीबीजं नतिःशक्तिरुदाहृता ।
एकेन च त्रिभिर्द्वाभ्यां द्विरावृत्त्या षडङ्गकम् ॥

विन्यस्य हृदये ध्यायेच्छ्रीपतिं जगतां पतिम् ।
मूले कल्पतरोर्दिव्यरत्नसिंहासने शुभे ॥

आसीनमिन्दिरानाथं नवनीलाम्बुदद्युतिम् ।
शङ्खचक्रगदापद्मधरं श्रीवत्सवक्षसम् ॥

पीताम्बरधरं हारकुण्डलादिविभूषितम् ।
पद्मपत्रविशालाक्षं कामकोटिसमद्युतिम् ॥ —४५

वामाङ्कस्थितया देव्या श्रिया कनकभूषया ।
सहितं दक्षिणे पार्श्वे धृतचामरहस्तया ॥

भूदेव्या वामपार्श्वे तु नीलादेव्या समन्वितम् ।
विमलोत्कर्षिणी ज्ञानाद्यष्टशक्तिभिरावृतम् ॥

अनन्तविष्वक्सेनाद्यैर्गरुडाद्यैश्चसंस्तुतम् ।
विष्णुं विश्वम्भरं वन्दे जगत्त्राणपरायणम् ॥

इति ध्यात्वा महाविष्णुं सर्वलोकैकसाक्षिणम् ।
जपेत्षडक्षरीं विद्यां वैष्णवीं सर्वसिद्धिदाम् ॥

लक्षषट्कं जपेदादौ गोष्टे बृन्दावनेऽपि वा ।
आचार्यं सन्निधीकृत्य दशांशं तर्पयेत्पयः ॥ —५०

दशांशं घृतसंयुक्तैर्हुत्वाऽथ तुलसीदलैः ।
आचार्यचरणद्वन्द्वे दत्वा बहुलदक्षिणाम् ॥

विद्यासिद्धिमवप्नोति प्रसन्नं कुरुते विभुम् ।
लक्ष्मीनारायणे योगे पञ्चविंशत्सहस्रकम् ॥

एकस्मिन् दिवसे जप्त्वा परेद्युः संस्कृतेऽनले ।
हुत्वा तिलैर्घृताभ्यक्तैस्त्रिसहस्रं समाहितः ॥

वर्षाशनमितं द्रव्यं दत्वाचार्यपदाम्बुजे ।
विद्यासिद्धिमवाप्नोति सद्य एव महत्तराम् ॥

सकलं कार्तिकं मासं हविष्याशी जितेन्द्रियः
जप्त्वा लक्षत्रयं विद्यां विधिवत्संस्कृतेऽनले ॥ —५५

हुत्वा कुशेशयैर्बिल्वदलैर्वा त्रिमधुप्लुतैः ।
अणिमादिगुणान् प्राप्य सर्वज्ञो भवति ध्रुवम् ॥

मधुत्रितयगव्याज्यमिश्रितैस्तुलसीदलैः ।
अष्टोत्तरशतं नित्यं हुत्वाऽग्नौ विधिवच्छुचिः ॥

षण्मासान्महतीं लक्ष्मीमवाप्य धनसङ्कुलाम् ।
पारगः सर्वविद्यानां भवत्यत्र न संशयः ॥

वर्षेणाप्नोति सकलान् दुर्लभांश्चमनोरथान् ।
अतः परमसौ नित्यं महेन्द्रादीन् प्रपश्यति ॥

सिद्धोभूत्वाऽमरावत्यां कुलसाहस्रसंयुतः ।
अनेनैव शरीरेण तेजोमयतनुभृशम् ॥ -६०

कल्पान्तं मोदते धीमान् महेन्द्रेण प्रपूजितः ।
षडक्षरीं महाविद्यां अन्वहं प्रजपन्निमाम् ॥

सन्निधौ श्रीपतेरन्ते वसत्याकल्पमक्षयम् ।
प्रणवं नमसा युक्तं विष्णवे शब्दमप्यथ ॥

वह्न्यारूढं दक्षपार्श्वं नाभिबीजमतः परम् ।
वरुणदक्षनेत्राढ्यं द्वितीयोष्माणमप्यथ ॥

पक्षस्पर्शसमायुक्तं जलं रुद्रसमन्वितम् ।
एकादशाक्षरी विद्या वैष्णवीसमुदाहृता ॥

स्मरणादघसंहर्त्री सर्वक्लेशविभञ्जनी ।
आयुरारोग्यसंपत्तिकारिणी भुक्तिमुक्तिदा ॥ –६५

अनया सदृशी विद्या सिद्धिदा नास्ति भूतले ।
महापातकसंहर्त्री महादारिद्र्यघातिनी ॥

जप्तुं योग्या सदाशूद्रैः स्त्रीभिश्च प्रणवं विना ।
प्रणवेन समायुक्ता जप्तव्या सततं द्विजैः ॥

एकेन जन्मना मुक्तिमिहापि परमां श्रियम् ।
इच्छता सततं जप्या विष्णोरेकादशाक्षरी ॥

ऋषिरस्य विधिर्ब्रह्मा भीष्मः शान्तनवोऽपि वा ।
त्रिष्टुभं छन्द उक्तं स्यान्महाविष्णुः श्रियःपतिः ॥

देवता जगतां नाथः प्रणवो बीजमुच्यते ।
हृच्छक्तिरुक्ता लक्ष्मीशप्रीतये विनियुज्यते ॥ –७०

एकाक्षरेण च द्वाभ्यां त्रिभिः पञ्चभिरक्षरैः ।
पुनस्त्रिवर्णैर्वसुभिः षडङ्गन्यास ईरितः ॥

ध्यानं पूर्ववदेवोक्तं साधनं संप्रवक्ष्यते ।
पञ्चलक्षं जपेन्मौनी पुरश्चर्यार्थमादरात् ॥

दशांशं तर्पयेद्धीमान् पयसेक्षुरसेन वा ।
तद्दशांशं हुनेदग्नौ तिलैराज्यमधुप्लुतैः ॥

आचार्यपादपद्माभ्यां समर्प्य बहुदक्षिणाम् ।
सद्य एव लभेद्विद्यासिद्धिं सुमहतीमपि ॥

एकादशीदिने मार्गशीर्षे मास्यथवा नृप ।
आरभ्य पौर्णमास्यन्तं पञ्चविंशत्सहस्रकम् ॥ -७५

जप्त्वा तिलैर्घृताभ्यक्तैर्मधुत्रितयमिश्रितैः ।
त्रिसहस्रं पौर्णमास्यां निशि हुत्वा यतव्रतः ॥

वर्षाशनमितं द्रव्यं दत्वाचार्यपदाब्जयोः ।
प्राप्नोत्यत्र न सन्देहो विद्यासिद्धिं महत्तराम् ॥

हुत्वा घृतप्लुतान् लाजान् पञ्चसाहस्रमादरात् ।
सुन्दरीं लभते कन्यां रूपशीलगुणान्विताम् ॥

गडूचीखण्डैरयुतं हुत्वाज्यत्रिमधुप्लुतैः ।
महदारोग्यमासाद्य जीवेद्वर्षसहस्रकम् ॥

केतकीकुसुमैर्हुत्वा घृतत्रिमधुमिश्रितैः ।
अर्कसाहस्रकं साक्षात्कन्दर्पशतसन्निभः ॥ -८०

प्राप्नोति महदैश्वर्यमचलं धनसङ्कुलम् ।
घृतत्रिमधुसंमिश्रं पायसं ज्वलितेऽनले ॥

हुत्वाऽयुतं समस्तानां विद्यानां पारगो भवेत् ।
ग्रहणे स्पर्शमारभ्य मोक्षकालान्तमादरात् ॥

स्पृष्ट्वा ब्राह्मीरसं मन्त्रं जप्त्वा साहस्रमादरात् ।
पिबेद्वा प्राशयेद्वापि सर्वविद्याप्रकाशनम् ॥

महासारस्वतं तस्य भविष्यति न संशयः ।
स्खलद्गीः स्पष्टवाग्भूत्वा सकृद्वा श्रवणादपि ॥

धारयेत् सकला विद्या न च विस्मरति ध्रुवम् ।
निष्काणां पञ्चकं वापि द्विनिष्कं वापि काञ्चनम् ॥ –८५

महासारस्वतप्राप्त्यै दद्यादाचार्यदक्षिणाम् ।
अष्टाङ्गयोगसिद्ध्यर्थं तुलसीवन मध्यगः ॥

जप्त्वा लक्षमिमां विद्यामयुतं तुलसीदलैः ।
घृतत्रिमधुसंमिश्रैर्हुत्वाऽथ ज्वलितेऽनले ॥

जातिस्मरत्वमासाद्य ब्रह्म पश्यति चक्षुषा ।
यन्त्रपूजादिकं सर्वमनयोर्वासुदेववत् ॥

एकादशार्णविद्यायाः अनुसन्धानतोऽन्वहम् ।
गुणवन्तं श्रियायुक्तमायुष्मन्तं लभेत्सुतम् ॥

आपदो विलयं यान्ति सम्पदः स्युः पदे पदे ।
भूत्वा ज्ञानी लभेन्मुक्तिं कुलानां शतसंयुतः ॥ –९०

वासुदेवमनोः सम्यग्विष्णुविद्याद्वयस्य च ।
कथितं ते मया, भूप माहात्म्यं किञ्चिदिष्टदम् ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्र वेदार्थसंग्रहे अष्टाचत्वारिंशोऽध्यायः ॥

## ॥ अथैकोनपञ्चाशोऽध्यायः ॥



**श्री भगवानुवाच —**

अतःपरं प्रवक्ष्यामि रहस्यमपि भूपते ।
यज्ञेशविद्यामाहात्म्यमखिलश्रुतिसंग्रहम् ॥

वेदवेदान्तशास्त्रौघसारभूतमभीष्टिदम् ।
यज्ञेशविद्यामाहात्म्यं शृणु वक्ष्यामि भूपते ॥

त्रयीबीजं श्रियो बीजं त्रयीबीजं ततःपरम् ।
हृदयेन समायुक्तं बिन्दुहीनं श्रियोऽक्षरम् ॥

जठराक्षरमुच्चार्य मुखवृत्तयुतं च खम् ।
वसुन्धराक्षरं पश्चान्मारुतेन समन्वितम् ॥

द्वादशस्वरसंयुक्तं जठरेण समन्वितम् ।
क्षेत्रेशाक्षरमुच्चार्य श्रीमदष्टार्णमुच्चरेत् ॥ —५

अर्धाङ्गश्रीपतेरेषा विद्या यज्ञपतेर्हरेः ।
अष्टादशाक्षरी चोक्ता सर्वयज्ञफलप्रदा ॥

सर्वपातकसंहर्त्री महादुःखविभेदिनी ।
आधिव्याधिहरी नृणां सर्वसाम्राज्यसिद्धिदा ॥

ऋषयो वातरशनाः पुराणा विजितेन्द्रियाः ।
सर्वलोकहितोद्युक्ता दैवैरपि सदार्चिताः ॥

कूष्माण्डनामकान् ब्रह्म मुनीन्दिव्यान् पुरातनान् ।
दृष्ट्वा प्रणम्य साष्टाङ्गं पप्रच्छुरिदमादृताः ॥

त्रैलोक्यस्वामिनो यूयं भगवन्तः पुरातनाः ।
नमस्कुर्मो वयं युष्मत्पादाब्जेभ्यो महर्षयः ॥ −१०

यूयं पवित्रं ब्रूतास्मान् ये नारिकाः सदुत्तमान् ।
भविष्यामो नृलोकेऽस्मिन् कथं वा ब्रह्मरूपिणः ॥

इति पृष्टास्तदा विप्राः कूष्माण्डा दीर्घदर्शिनः ।
अब्रुवन् वातरशनान् ऋषीन् दीर्घतपस्विनः ॥

**कूष्माण्डा ऊचुः —**

युष्मभ्यं संप्रवक्ष्यामः पवित्रं जगतो हितम् ।
वेदान्तेष्वपि वेदेषु सारभूतं सनातनम् ॥

ब्राह्मणो जायमानोऽसौ त्रयाणां ऋणवान् भुवि ।
देवतानां ऋषीणां च पितॄणां च महात्मनाम् ॥

ऋषीणां ब्रह्मचर्येण पितॄणां प्रजया तथा ।
यागैरखिलदेवानां भवेन्मुक्तो ऋणत्रयात् ॥ −१५

कष्टसाध्यं क्रतुफलं महापातक नाशनम् ।
कथ्यते सर्ववेदेषु वेदान्तेष्वपि भूपते ॥

पितॄणां च महर्षीणां देवतानाञ्च भूपते ।
ऋणत्रय विमुक्तिः स्यात्क्रतुभिर्भूरि दक्षिणैः ॥

वेदानधीत्य वेदौ वा वेदं वा शक्तितो द्विजः ।
सम्पूर्णदक्षिणं यागं कृत्वैकमपि वा भुवि ॥

हुत्वा सायं तथा प्रातरग्निहोत्रं दिने दिने ।
पौर्णमास्यां तथा दर्शे कृत्वेष्टिमघनाशिनीम् ॥

वत्सरे वत्सरे कृत्वा पशोरालम्भनं नृप ।
इत्थं पवित्रो यज्वासौ ब्रह्मार्पणधिया शुचिः ॥ —२०

पूज्यते सत्यलोकेऽसौ मुनिभिर्दैवतैरपि ।
अत्यल्पदक्षिणो यागो यजमानं विनाशयेत् ॥

अत्यल्पदक्षिणा यागा दक्षिणारहिता इव ।
निष्फला नात्र सन्देहः किञ्च नारक दुःखदाः ॥

सम्पूर्णदक्षिणो यागः कृत एकोऽपि भूतले ।
ब्रह्मार्पणधियाह्यस्य ब्रह्मसालोक्यसिद्धिदः ॥

अमन्त्रकं वृथाश्राद्धं वृथा यागोऽल्पदक्षिणः ।
वेदहीनो वृथा विप्रो वृथा विद्याप्यवैदिकी ॥

तस्मादवश्यं विप्रेण कार्या यागास्सदक्षिणाः ।
नामधारक विप्राऽसावयज्वा समुदीरितः ॥ —२५

एकं वापि महायागं कृत्वा सम्पूर्णदक्षिणम् ।
पुनाति सकलं वंशं दशपूर्वं दशावरम् ॥

ग्रहणे वापि सङ्क्रान्तौ नवरात्रव्रतेऽपि वा ।
पूर्णायामथ दर्शे वा वैशाखे कार्तिकेऽपि वा ॥

यागार्थं बहुलं द्रव्यं पात्रभूताय योऽर्पयेत् ।
तस्य पुण्यफलं वक्तुं नाहं शक्तोऽस्मि भूपते ॥

महादानसहस्रस्य फलं वक्तुं हि शक्यते ।
यागार्थं द्रव्यदानस्य फलं धाता मयापि वा ॥

रुद्रेणापि न शक्यं स्याद्वक्तुं राजन् महीपते ।
महादानशतं दत्तं कुरुक्षेत्रे रविग्रहे ॥ —३०

यागार्थं द्रव्यदानस्य कलां नार्हति षोडशीम् ।
श्रोत्रियाय दरिद्राय द्रव्यं वैवाहिकं ददत् ॥

यागार्थं द्रव्यदानेन समं प्राहुर्महर्षयः ।
विवाहार्थं धनं दत्वा रविपर्वणि वैन्दवे ॥

मातृवंश्यान् पितृवंश्यान् मग्नांश्च नरकार्णवे ।
सहस्रशस्समुद्धृत्य सहितस्तैः पितामहैः ॥

विमानमधिरुह्यान्ते ब्रह्मलोके वसत्यसौ ।
अहुताग्निरयज्वा च दुर्ब्राह्मण इति स्मृतः ॥

नित्याग्निहोत्री यज्वा च ब्राह्मणोत्तम उच्यते ।
तस्मादवश्यं कर्तव्यो यागः सम्पूर्णदक्षिणः ॥

पवित्रताकरो नित्यं ब्राह्मणानामितिश्रुतिः ।
यागेष्वनधिकारी यस्स आचार्यपदाम्बुजे ॥

यागार्थं बहुलं द्रव्यं समर्प्य वसुधापते ।
वेदविद्भ्यः श्रोत्रियेभ्यः सुवर्णं शतकोटिशः ॥

दत्वा यत्फलमाप्नोति ततोऽप्यधिकमुत्तमम् ।
फलमासाद्य तेजस्वी सहस्रकुलसंयुतः ॥

ब्रह्मणा पूजितस्सत्यलोके स्थित्वा ततःपरम् ।
ब्रह्मणा सह सायुज्यं प्राप्नोत्येव श्रियःपतेः ॥

एतदेव द्विजातीनां पवित्रं कर्म कथ्यते ।
युष्मभ्यं संप्रवक्ष्यामः सुगुप्तमपि वैदिकम् ॥

नाख्यातं यस्य कस्यापि सारात्सारतमं परम् ।
यज्ञनारायणी नाम्ना श्रीमदष्टादशाक्षरी ॥

अर्धाङ्गश्रीपतेर्विद्या ख्याता सर्वश्रुतिष्वपि ।
आचार्यकृपया लब्धा सर्वत्र तु फलप्रदा ॥

अग्निहोत्रफलं प्रेप्सुः सायंप्रातर्दिने दिने ।
यज्ञनारायणीं विद्यां प्रजपेत्सुसमाहितः ॥

पूर्णायामपि दर्शे च शतमष्टोत्तरं घृतम् ।
हुत्वाऽऽचार्यपदाम्भोजे दत्वा शक्त्या च दक्षिणाम् ॥

दर्शेऽपि पूर्णमासेष्टि फलं प्राप्नोतिशाश्वतम् ।
महतीं सुपुरश्चर्यां लघ्वीं वा पूर्णदक्षिणाम् ॥ —४५

वत्सरे वत्सरे कृत्वा हयमेधफलं लभेत् ।
समस्तविद्यासाम्राज्ञी श्रीमदष्टादशाक्षरी ॥

समस्तकामदोग्ध्रीयं कामधेनुरिवापरा ।
अनया सदृशी विद्या जगतीलयपावनी ॥

न विद्यते द्विजश्रेष्ठा इत्येषा शाश्वती श्रुतिः ।
शतकोटिमितस्वर्गदक्षिणा सहितान् क्रतून् ॥

राजसूयाश्वमेधादीन् कृत्वा यत्फलमश्नुते ।
अष्टादशाक्षरी विद्या पुरश्चरणतो नृप ॥

तदेव फलमासाद्य वर्षे वर्षे महामतिः ।
उद्धृत्य नरके मग्नान् पितॄनथ पितामहान् ॥ —५०

सहितस्तैर्ब्रह्मलोके मोदते ब्रह्मसन्निभः ।
अष्टदशाक्षरी विद्या मुनिर्ब्रह्मा प्रजापतिः ॥

छन्दश्च देवी गायत्री साक्षान्नारायणो हरिः ।
अर्धाङ्गश्रीयुतो देवः कथ्यते जगतीपतिः ॥

बीजं बीजद्वयं प्रोक्तं हृच्छक्तिः समुदाहृता ।
त्र्य्याद्या श्रिया कुर्यात्पश्चान्न्यास षडङ्गकम् ॥

मातृकामथ शैवींच वैष्णवीमथ मातृकाम् ।
न्यस्य वान्यस्य वा धीमान् ध्यायेत्स्वहृदयाम्बुजे ॥

पारिजाततरोर्मूले रत्नसिंहासने शुभे ।
आसीनं जलदाभासं दूर्वादलसमद्युतिम् ॥ –५५

पद्मपत्रविशालाक्षं प्रसन्नमुखपङ्कजम् ।
मुक्ताफलाभदन्तालिं सस्मिताधरविद्रुमम् ॥

शङ्खं रथाङ्गमादर्शं सुवर्णकलशाम्बुजे ।
बिभ्राणं च गदां घोरां वामाङ्के विद्युदाकृतिम् ॥

अर्धाङ्गलक्ष्मीसहितं पीताम्बर विराजितम् ।
किरीटहारकेयूरकुण्डलादिविभूषितम् ॥

नीलादेव्या महीदेव्या वामदक्षिणपार्श्वयोः ।
सहितं विमलाद्यष्ट महिषीभिस्समन्वितम् ॥

अनन्तविहगाधीशविष्वक्सेनादिभिर्वृतम् ।
सुनन्दनन्दप्रमुखैः पार्षदैरुपशोभितम् ॥ –६०

ब्रह्मरुद्रमहेन्द्रादिशिरोमकुटकान्तिभिः ।
विराजितपदद्वन्द्वमापन्नार्तिहरं हरिम् ॥

पद्मनाभं जगन्नाथं सर्गस्थितिलयाधिपम् ।
नारायणं भजे नित्यं परमात्मानमच्युतम् ॥

यज्ञनारायणं नित्यं ध्यात्वेत्थं जगतीपतिम् ।
अष्टादशाक्षरीं विद्यां जप्त्वा क्रतुफलं लभेत् ॥

नान्यत्पवित्रमस्त्येतत्सदृशं जगतीतले ।
यः पावनो जगत्यस्मिन् सर्वाघौघविवर्जितः ॥

स एव भगवान् साक्षादच्युतः परमेश्वरः ।
महापातक युक्तांश्च नित्यमष्टादशाक्षरी ॥ –६५

करोति पावनान् जप्ता नित्यमुक्तान् करोतिहि ।
अष्टादशाक्षरी विद्या जप्तेयमपि वत्सरम् ॥

महापापौघयुक्तांश्च जीवन्मुक्तान् करोतिहि ।
श्रीमदष्टार्णवत्प्रोक्तमस्या यन्त्रार्चनादिकम् ॥

पुरश्चर्यादिकं सर्वं विप्राः कुर्वन्तु संयुताः ।
जितेन्द्रियो हविष्यशी क्षीराशी वा फलाशनः ॥

लक्षत्रयं जपेद्विद्यां यज्ञनारायणीमिमाम् ।
दशांशं जुहुयात्पद्मैरुत्पलैर्वा घृतप्लुतैः ॥

तिलैर्वा बिल्वपत्रैर्वाघृतत्रिमधुसंप्लुतैः ।
आचार्यचरणद्वन्द्वे दत्वा सम्पूर्णदक्षिणाम् ॥ –७०

अष्टादशार्णविद्यायास्सिद्धिं प्राप्नोत्यनुत्तमाम् ।
अथवा कार्तिकेमासि वैशाखे श्रावणेऽपिवा ॥

आश्विने नवरात्रे वा माधे वा फाल्गुनेऽपि वा ।
पञ्चविंशति साहस्रं प्रजप्त्वाऽष्टादशाक्षरीम् ॥

दशांशं जुहुयात्पद्मैर्घृतत्रिमधुमिश्रितैः ।
शतनिष्कं तदर्धं वा वर्षाशनमितं तु वा ॥

दत्वाचार्यपदद्वन्द्वे वित्तमाकल्पसंयुतम् ।
पञ्चविंशतिसंख्याकमिथुनान्यपि भोजयेत् ॥

विद्यासिद्धिमवाप्नोति महतीं नात्र संशयः ।
अथ काम्यानि कर्माणि साधयेदनया द्विजाः ॥ —७५

जप्त्वा लक्षमिमां विद्यामालये कमलापतेः ।
दशांशं कमलैर्हुत्वा घृतत्रिमधुमिश्रितैः ॥

सौभाग्यं महदाप्नोति कन्दर्पशतसन्निभम् ।
पश्चिमद्वारलिङ्गेऽथ वृषशून्ये शिवालये ॥

मासमेकं हविष्याशी लक्षमेकं मनुं जपेत् ।
तत्र बिल्वदलैर्हुत्वा गव्याज्यमधुमिश्रितैः ॥

धनधान्यसमायुक्तां गजाश्वरथसङ्कुलाम् ।
मुक्तारत्नसमाकीर्णामचलां च परां श्रियम् ॥

आसाद्य धनदेनासौ सदृशो भवति श्रिया ।
नाभिदघ्नजले स्थित्वा मण्डलं त्रिशताधिकम् ॥

जप्त्वा प्राचीमुखोहुत्वा घृतमष्टोत्तरं शतम् ।
श्रिया धनदसङ्काशो विद्यया धिषणायते ॥

अश्वत्थमूलमाश्रित्य मासमेकं निरन्तरम् ।
त्रिशताधिकसाहस्रं जप्त्वा हुत्वा घृतं शतम् ॥

कालमृत्युमपि प्राप्तं जगत्यत्र न संशयः ।
स्वच्छन्दमरणो भूत्वा व्याधिभिर्नाभिभूयते ।

नारिकेलं चतुःखण्डं कृत्वाज्यत्रिमधुप्लुतम् ।
अष्टोत्तरशतं नित्यं हुत्वा प्रज्वलितेऽनले ॥

प्राप्नोत्यसाध्यानिष्टार्थानप्यसौ मंडलाद्ध्रुवम् ।
अष्टोत्तरशतं नित्यं लघुभिः कदलीफलैः ॥

घृतत्रिमधुसंमिश्रैर्हुत्वा प्रज्वलितेऽनले ।
मण्डलद्वितयेनासौ सप्तद्वीपाधिनायकम् ॥

चिरायुषं महाप्राज्ञं सुतमाप्नोत्यनुत्तमम् ।
मधुकैटभहन्तारं ध्यात्वार्धाङ्गश्रियःपतिम् ॥

जप्त्वा लक्षमिमंमन्त्रं हुत्वाऽर्ककुसुमैरथ ।
दुष्टान् स्तंभयति क्षिप्रं निगृह्णात्यपि राक्षसान् ॥

नागवल्लीदलैर्हुत्वा घृतत्रिमधुमिश्रतैः ।
अग्नौ द्वादशसाहस्रं सम्प्राप्य महतीं श्रियम् ॥

मान्यते सकलैर्भूपैरपि देवैस्सवासवैः ।
अमायां पौर्णमास्यां च शतमष्टोत्तरं घृतम् ॥ –९०

हुत्वाऽऽचार्यपदद्वन्द्वे निष्कं निष्कार्धमेव वा ।
सुवर्णं दक्षिणां दत्वा तत्पत्न्यै च सुताय वा ॥

दर्शेष्टिपूर्णमासेष्टि फलमासाद्य शाश्वतम् ।
पूज्यतेऽपि महेन्द्राद्यैः किमुमर्त्यैर्महीतले ॥

प्राप्नोति धनधान्यादिसङ्कुलामचलांश्रियम् ।
बृहस्पति समः साक्षाद्भूत्वा विद्यासु साधकः ॥

प्राप्नोति महतीं ऋद्धिं पुत्रपौत्रादि संयुताम् ।
सत्यलोके वसत्यन्ते कुलानां शतसंयुतः ॥

माघे वा फाल्गुनेवापि चैत्रे वैशाखमासि वा ।
यज्ञनारायणीं जप्त्वा पञ्चविंशत्सहस्रकम् ॥ –९५

मधुत्रितयगव्याज्यसहितं हविरादरात् ।
सहस्रत्रितयं हुत्वा वर्षाशनमितं धनम् ॥

दत्वाऽऽचार्यपदद्वन्द्वे कोटिशो दक्षिणान्वितम् ।
अवश्यं हयमेधस्य फलं प्राप्नोत्यनुत्तमम् ॥

महापापोपपापौघैरपि सद्यो विमुच्यते ।
महेन्द्रसदृशो लक्ष्म्या विद्यया धिषणप्रभः ॥

स्थापयित्वाऽन्वयं भूमावाचन्द्रार्कं श्रियान्वितम् ।
भुक्त्वा सुविपुलान् भोगान् दिव्यानप्यथ मानुषान् ॥

कुलसाहस्रसहितो भगवद्धाम्नि मोदते ।
रवीन्दुग्रहणे सर्वसंक्रान्तिष्वपि सन्ततम् ॥ –१००

व्यतीपातादियोगेषु श्रीमदष्टादशाक्षरीम् ।
जप्त्वा हुत्वा च विधिवत्तिलैराज्यविमिश्रितैः ॥

अष्टोत्तरशतं सर्वपितॄन्नरकसंस्थितान् ।
शतशोऽपि समुद्धृत्य सत्यलोके नयत्यसौ ॥

सायं प्रातर्नित्यहोमं कृत्वा यज्ञेश्वरं हरिम् ।
अर्धाङ्गश्रीपतिं वह्नौ ध्यात्वा नारायणं हरिम् ॥

श्रीमदष्टाक्षरीं विद्यां शताधिक सहस्रकम् ।
जपेत्पञ्चशतं वापि चतुःशतमथापि वा ॥

त्रिशतं वा शतं जप्त्वा श्रीमदष्टादशाक्षरीम् ।
सायं कृशानुसान्निध्ये शतमष्टोत्तरं जपेत् ॥ –१०५

अष्टाविंशतिधा वापि जप्त्वा नित्यं यतव्रतः ।
चतुर्णामपि वेदानां फलं पारायणोद्भवम् ॥

प्रत्यहं समवाप्नोति मुक्तः स्यादपि पातकैः ।
साङ्गदक्षिणया युक्त हयमेधफलं तथा ॥

अवाप्य सकलाभीष्टं प्राप्यान्ते मुक्तिमाप्नुयात् ।
कूष्माण्डैर्मुनिभिः पूर्वं यज्ञनारायणेशितुः ॥
यदुक्तं मन्त्रमाहात्म्यं मया तत्तुभ्यमीरितम् ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे एकोनपञ्चाशोऽध्यायः ॥



## ॥ अथ पञ्चाशोऽध्यायः ॥



**श्री भगवानुवाच –**

ब्रह्मनारायणादीनां विधानमपि वक्ष्यते ।
येषां विज्ञानमात्रेण पलायन्ते विपद्गणाः ॥

अन्तेऽपि प्रणवोपेता श्रीमदष्टाक्षरी शुभा ।
ब्रह्मनारायणी विद्या संप्रोक्ता परमर्षिभिः ॥

आदितः संहितां कुर्यादन्ततस्तु न संहिताम् ।
नवाक्षरीयं संप्रोक्ता ब्रह्मनारायणी शुभा ॥

एकेन जन्मनैवेयं ब्रह्मतादात्म्य सिद्धिदा ।
ब्रह्मदर्शनसिद्ध्यर्थमाशु विज्ञानसिद्धये ॥

ब्रह्मनारायणीं विद्यामाचार्यानुज्ञया जपेत् ।
छन्द आर्षादिकं चाऽस्याः सर्वमष्टार्णमन्त्रवत् ॥

प्रणवं हंसशब्दं च सोऽहशब्दमतःपरम् ।
श्रीमदष्टाक्षरीं पश्चात् हंसनारायणीरिता ॥

एकेन जन्मना मुक्तिमिच्छताऽवश्यमादरात् ।
हंसनारायणी विद्या जप्तव्या मुक्तिसिद्धये ॥

वनिभिर्यतिभिर्विद्याद्वयं जप्यमिदं शुभम् ।
प्राधान्येन न जप्तव्यं विद्याद्वयमिदं गृहे ॥

वैराग्यप्रापकत्वेन गृहस्थैः सिद्धिकांक्षिभिः ।
गृहस्थैश्च वनस्थैश्च यतिभिर्ब्रह्मचारिभिः ॥

श्रीमदष्टार्णविद्यैव जप्तव्या सर्वसिद्धये ।
अस्यापि श्रीमदष्टार्णमन्त्रवत्सर्वमीरितम् ॥

अथों नमो भगवते चतुर्थ्यन्तसमन्वितम् ।
नारायणपदं पश्चाद्विद्येयं द्वादशाक्षरी ॥

महासिद्धिकरी सद्यः समस्ताघविदारिणी ।
आर्षादिकमपि प्रोक्तमस्या अष्टार्णमन्त्रवत् ॥

त्रयीबीजं श्रियोबीजं चतुर्थ्यन्तसमन्वितम् ।
श्रीपदं नमसा युक्तं श्रीमदष्टाक्षरं ततः ॥

चतुर्दशाक्षरी विद्या लक्ष्मीनारायणीरिता ।
प्रणवं कमलाबीजं चतुर्थ्यन्तसमन्वितम् ॥

महालक्ष्मीपदं पश्चान्नमस्कार समन्वितम् ।
श्रीमदष्टाक्षरी पश्चाद्विद्येयं षोडशाक्षरी ॥

आर्षादिकमपि प्रोक्तमस्या अष्टार्णमन्त्रवत् ।
अन्येयमपि विद्योक्ता लक्ष्मीनारायणी शुभा ॥

अष्टादशार्णवद्विद्या द्वयस्यार्षादिकं स्मृतम् ।
पुरश्चर्यादिकमपि यन्त्रार्चादिकमप्यथ ॥

वक्ष्येऽथ याजुषीं विद्यां लक्ष्मीनारायणीं शुभाम् ।
अष्टादशार्णवद्विद्या द्वयस्यार्षादिकं स्मृतम् ॥

आवहन्तीपदं पूर्वं वितन्वानापदं ततः ।
कुर्वाणा चीरमित्युक्त्वा पदमात्मन उच्चरेत् ॥

वासाँसि ममेत्युक्त्वा गावश्चेति पदं ततः ।
अन्नपाने च शब्दं च सर्वदा पदमप्यथ ॥

ततो मे श्रिय उच्चार्य पदमावह तत्परम् ।
लोमशां पशुभिःपश्चात्सहस्वाहों नमःपदम् ॥

नारायणाय दयितां जातवेदस उच्चरेत् ।
अयमर्धाङ्ग लक्ष्मीश मन्त्रो याजुष उच्यते ॥

दारिद्र्यदुःखसंहत्री सकलैश्वर्यसिद्धिदा ।
याजुषीयं महाविद्या लक्ष्मीनारायणी स्मृता ॥

ऋषिरस्य कहोलः स्याच्छन्द आनुष्टुभं स्मृतम् ।
लक्ष्मीनारायणः स्वामी देव उक्तो महर्षिभिः ॥

हस्तैर्विभ्रत्सरसिजगदां शङ्ख चक्राणि विद्यां
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरताकल्पमाश्लेषलोभा-
देकीभूतं वपुरवतु नः पुण्डरीकाक्षलक्ष्म्योः ॥ —२५

यन्त्रपूजादिकं चास्यास्सर्वमष्टार्णवन्नृप ।
पुरश्चर्याविशेषोऽत्र वक्ष्यते वसुधापते ॥

लक्षमेकं जपेद्विद्या माचार्यस्यैव सन्निधौ ।
घृतत्रिमधु युक्तेन हविषा जुहुयादथ ॥

आचार्यचरणद्वन्द्वे दत्वा बहुलदक्षिणाम् ।
विद्यायास्सिद्धिमाप्नोति शाश्वतीं नात्र संशयः ॥

यद्वा द्वादश साहस्रं प्रजप्त्वाचार्यसन्निधौ ।
घृतत्रिमधुसंमिश्रं हविं हुत्वा सहस्रकम् ॥

वर्षाशनमितद्रव्यं दत्वाऽऽचार्यपदाब्जयोः ।
प्राप्नोति महतीं सिद्धिं विद्यया नात्र संशयः ॥ —३०

नित्यं द्वादशधा वह्नौ हुत्वा द्वादशधा हविः ।
मिष्टान्नराशिं लभते विपिनेऽपि न संशयः ॥

नित्यं प्रातः समुत्थाय हुत्वा हुतहुताशनः ।
अष्टोत्तरशतं जप्त्वा विद्यामेतां श्रियःपतेः ॥

अनुत्तमं महालाभं प्रत्यहं समवाप्नुयात् ।
आचार्यं सन्निधीकृत्य तुलसीवनमध्यगः ॥

जप्त्वा लक्षमिमां विद्यां लभेत्सर्वमनोरथान् ।
स्वभाववैदिकी विद्या श्रीमदष्टाक्षरी शुभा ॥

सा विद्यानां समस्तानां साम्राज्ञी समुदीरिता ।
गायत्र्यादि महाविद्या अस्या रश्मय ईरिताः ॥ –३५

श्रीमदष्टाक्षरी विद्या जपासक्तस्य सन्ततम् ।
सकृत्स्मरणतोऽप्येताः सिद्धिदाः सद्य एव हि ॥

श्रीमदष्टाक्षरी विद्या जपासक्तिरथान्वहम् ।
आचार्यचरणद्वन्द्वसेवा प्रत्यहमादरात् ॥

श्रुत्युक्ताचारसंपत्तिर्धर्मेमतिरचञ्चला ।
चत्वार्येतानि भगवत्सान्निध्यं प्रापयन्ति हि ॥

ब्रह्मनारायणादीनां विधानं किञ्चिदीरितम् ।
हयग्रीवादि विद्यानां माहात्म्यमथवक्ष्यते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्र वेदार्थसंग्रहे पञ्चाशोऽध्यायः ॥

## ॥ अथैकपञ्चाशोऽध्यायः ॥

श्री भगवानुवाच —

अथाश्वशिरसो विद्यां प्रवक्ष्यामि महीपते ।
यस्य विज्ञानमात्रेण वाचां सिद्धिर्भवेत्परा ॥

उद्गीथपदमाभाष्य प्रणवोद्गीथशब्दतः ।
सर्ववागीश्वरेत्यन्ते प्रवदेदीश्वरेत्यथ ॥

सर्वं वेदमया चिन्त्य पदान्ते सर्वमुच्चरेत् ।
बोधय द्वितयान्तोऽयं मन्त्रस्ताराादिरीरितः ॥

ऋषिर्ब्रह्मास्यनिर्दिष्टः छन्दोऽनुष्टुभुदाहृतम् ।
देवतास्याद्धयग्रीवो वागैश्वर्यप्रदो विभुः ॥
तारेणपादैर्मन्त्रस्य पञ्चाङ्गानि प्रविन्यसेत् ॥

शरच्छशाङ्कप्रभमश्ववक्त्रं मुक्तामयैराभरणैरुपेतम् ।
रथाङ्गशङ्खाञ्चितबाहुयुग्मं जानुद्वयन्यस्तकरं भजामः ॥ —५

गणन्लक्षं जपेन्मन्त्रं कुन्दपुष्पैर्मधुप्लुतैः ।
दशांशं वैष्णवे वह्नौ हुत्वाऽऽचार्यपदाम्बुजे ॥

समर्प्य बहुलं द्रव्यं वेदमूर्तिसमन्वितम् ।
विद्यासिद्धिमवाप्नोति यद्वा वर्ण सहस्रकम् ॥

प्रजप्त्वा कार्तिके मासि हविराज्यमधुप्लुतम् ।
त्रिसहस्रं हुनेदग्नौ त्रिशताधिकमादरात् ॥

रामायणं भारतं वा वर्षाशनसमन्वितम् ।
पुराणमथवा दत्वा स्वाचार्यकरपङ्कजे ॥

प्राप्नोति महतीं सिद्धिं विद्याया नात्र शंशयः ।
अष्टाक्षरोदिते यन्त्रे हयग्रीवं प्रपूजयेत् ॥ —१०

बीजेन मूर्तिं संकल्प्य बीजमुद्ध्रियते यथा ।
वियद्भृगुस्थमर्घीशबिन्दुमद्बीजमीरितम् ॥

केसरेषु चतुर्वेदान् चतुर्दिक्षु प्रपूजयेत् ।
विदिक्ष्वङ्गस्मृतिन्यायसर्वशास्त्राणि पूजयेत् ॥

अर्चयेत्पत्रमध्येषु विधानेनाङ्गदेवताः ।
बाह्ये लोकेश्वरास्तेषां वज्राद्यस्त्राणि संयजेत् ॥

एवं यो भजते देवं साक्षाद्वागीश्वरो भवेत् ।
बैल्वैः फलैः कृतो होमः श्रीकरः परिकीर्तितः ॥

कुन्दपुष्पाणि जुहुयादिच्छन् वाक्श्रियमक्षयाम् ।
मनुनानेन संयुक्तं घृतं ब्राह्मी रसान्वितम् ॥ —१५

कवितामावहेत्पुंसामनर्गलविजृम्भिणीम् ।
वाचामनेन संजप्तां भक्षयेत्प्रातरन्वहम् ॥

सर्ववेदागमादीनां व्याख्याता जायतेऽचिरात् ।
मनोरस्य समोनास्ति ज्ञानैश्वर्यप्रदायकः ॥

प्रणवं नमसा युक्तं पदं भगवते ततः ।
वेदाहरणशब्दं च हेतुभूताय शब्दतः ॥

महामत्स्याय शब्दं च नमस्कार समन्वितम् ।
मत्स्याकृतेरियं विद्या श्रीपतेः परमात्मनः ॥

महामत्स्याय शब्दान्ते विष्णवे नम इत्यपि ।
अङ्गिरोऽत्रिप्रभृतयो जपन्तीमं महामनुम् ॥ —२०

वाचां सिद्धिकरी विद्या महादारिद्य्रभंजिनी ।
धर्मार्थकाममोक्षाख्यपुरुषार्थफलप्रदा ॥

ऋषिरस्य महाराजो मनुर्वैवस्वतः स्मृतः ।
छन्दो गायत्रमेवोक्तं महामत्स्याकृतिर्हरिः ॥

देवता जगतां नाथः परमात्मा श्रियःपतिः ।
बीजं त्रयीमयं प्रोक्तं हृच्छक्तिः समुदीरिता ॥

षड्भिः पदैः षडङ्गानि न्यस्य ध्यायेच्छ्रियः पतिम् ।
शरत्पूर्णेन्दुसङ्काशं शुद्धस्फटिकसन्निभम् ॥

शुक्लाम्बरधरं शुक्लगन्धमाल्यविभूषितम् ।
कुण्डलद्वयसंशोभि मुखाब्जं मत्स्यरूपिणम् ॥ —२५

किरीटहारकेयूरमुद्रिकाद्रिविभूषितम् ।
शङ्खचक्रधरं मुद्रां चिन्मयीं दक्षिणेकरे ॥

वामेनालिङ्ग्य कमलां दिव्यसिम्हासने स्थितम् ।
विधात्रे सकलान् वेदान् प्रयच्छन्तं जगत्पतिम् ॥

वैवस्वताय मनवे प्रयच्छन्तं मनोरथान् ।
भगवन्तं भजे विष्णुं सर्ववेदमयं विभुम् ॥

ध्यात्वेत्थमिन्दिरानाथं मत्स्यरूपधरं हरिम् ।
अष्टोत्तरशतं नित्यं जप्त्वा प्राप्नोति वांछितम् ॥

चतुर्लक्षं पुरश्चर्येत् फलाशी वा हविष्यभुक् ।
तर्पयेत्तद्दशांशेन क्षीरेणेक्षुरसेन वा ॥ —३०

रम्भाफलैर्हुनेदग्नौ तद्दशांशेन साधकः ।
आचार्यचरणद्वन्द्वे दत्वासु बहुदक्षिणाम् ॥

मन्त्रसिद्धिमवाप्नोतु शाश्वतीं नात्र संशयः ।
एकविंशतिसाहस्रमथवा कार्तिके जपेत् ॥

त्रिशतं तु हुनेदग्नौ कमलैराज्यलोलितैः ।
वर्षाशनमितद्रव्यं दत्वाऽऽचार्यपदाब्जयोः ॥

विद्यासिद्धिमवाप्नोति महतीं सर्वसिद्धिदाम् ।
हुत्वा नीलोत्पलैरष्टसाहस्राणि घृतप्लुतैः ॥

पारगः सर्वविद्यानां भवत्यत्र न संशयः ।
जप्त्वा विद्यामिमां लक्षं ततो रक्ताम्बुजैर्हुनेत् ॥ —३५

अभीष्टधनमासाद्य भवेद्धनदसन्निभः ।
महार्णवे निमग्नोऽपि स्मृत्वेमं मन्त्रमादरात् ॥

दशधापि तरत्येव सद्योर्णवमथाप्ययम् ।
जप्तेयं लक्षमात्रेण मूकं मन्दधियं तु वा ॥

करोति सर्ववागीशं बृहस्पतिसमप्रभम् ।
विल्वपत्रैर्घृताभ्यक्तैर्हुत्वा भानुसहस्रकम् ॥

वैवस्वतं मनुं साक्षादसौ पश्यति चक्षुषा ।
तत्प्रसादेन लभते वांछितं सर्वमक्षयम् ॥

नाभिदघ्नजले स्थित्वा प्रातःकाले दिने दिने ।
जप्त्वा सहस्रं त्रिशताधिकं नित्यं हविष्यभुक् ॥ —४०

प्राप्नोति मण्डलेनासौ दुर्लभांश्च मनोरथान् ।
समस्ताभीष्टसंप्राप्तिहेतुभूता मनूत्तमः ॥

अनेन सदृशो नास्ति वेदेष्वथ चतुर्ष्वपि ।
ओं नमः पदमाभाष्य पदं भगवते ततः ॥

कूर्मरूपाय शब्दञ्च विष्णवे नम उच्चरेत् ।
विद्या सप्तदशार्णेयं श्रीपतेः कूर्मरूपिणः ॥

इन्द्रद्युम्नो मुनिः प्रोक्तः छन्दः पंक्तिरुदीरितम् ।
कूर्मरूपी महाविष्णु र्देवता जगतांपतिः ॥

बीजं तारो नतिश्शक्तिः षडङ्गं षट्पदैर्न्यसेत् ।
श्यामवर्णं चतुर्बाहुं कमठाकृतिमच्युतम् ॥ –४५

नखाग्रे मन्दरधरं शङ्खचक्रगदाधरम् ।
आसीनमासने दिव्यहेमरत्नमये शुभे ॥

इन्द्रद्युम्ननृपेणेयं दृष्टा सकलसिद्धिदा ।
श्रीपतेः कूर्मरूपस्य ब्रह्मसायुज्य सिद्धिदा ॥

वामाङ्के जगतामम्बां श्रियं देवीं त्रयीमयीम् ।
दिव्याभरणसंयुक्तां दिव्यस्रग्वस्त्रधारिणीम् ॥

तामालिङ्ग्यस्थितं कृष्णं महर्षिभिरभिष्टुतम् ।
वन्द्यमिन्द्रादिभिर्देवैः प्रसन्नवदनं विभुम् ॥

भजामि परमात्मानं सर्वलोकहितैषिणम् ।
अस्याश्च मत्स्यविद्याया यन्त्रपीठार्चनादिकम् ॥ –५०

सर्वमष्टार्णवत्प्रोक्तं विनियोगः प्रवक्ष्यते ।
लक्षमेकं प्रजप्त्वादौ दशांशं करवीरकैः ॥

मधुत्रितयसंयुक्तैर्हुत्वाऽऽचार्यपदाम्बुजे ।
बहुलां दक्षिणां दत्वा मन्त्रसिद्धिमवाप्नुयात् ॥

मधूकपुष्पैरयुतं हुत्वा मधुघृतप्लुतैः ।
शापानुग्रहसामर्थ्यं लभते नात्र संशयः ॥

बकुलैराज्यसहितैर्हुत्वा दश सहस्रकम् ।
प्राप्नोति महतीं लक्ष्मीं धनधान्यादिसङ्कुलाम् ॥

नागवल्लीदलैर्हुत्वा दश साहस्रमादरात् ।
सर्वाभीष्टमवाप्नोति मुक्तिञ्चाप्नोत्यनुत्तमाम् ॥ —५५

अष्टोत्तरशतं वाऽपि जप्त्वाकूर्ममहामनुम् ।
अन्वहं स लभेद्ब्रह्म सायुज्यममि दुर्लभम् ॥

हयग्रीवादिविद्यानां माहात्म्यमघनाशनम् ।
इति किञ्चिन्मया प्रोक्तं वराहस्याथ वक्ष्यते ॥

मत्स्यकूर्मद्वयस्यास्य सर्वमष्टार्णमन्त्रवत् ।
यन्त्रार्चनं भूपते हि यत्कृत्वासिद्धिमान् भवेत् ॥

इति श्रीमदनुत्तरब्रह्मतत्व रहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे एकपञ्चाशोऽध्यायः ॥

---

## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

**श्री भगवानुवाच –**

वराहविद्यामाहात्म्यमथ किञ्चित्वक्ष्यते ।
यच्छ्रुत्वापि नरो धीमान् मुच्यते पापराशिभिः ॥

तारं नमोभगवते वराहपदमप्यथ ।
रूपाय भूर्भुवःस्वः स्यात् पतये तदनन्तरम् ॥

भूपतित्वं मे पदान्ते देह्यन्ते च तु दापय ।
वह्निजायावधिर्मन्त्रः स्याच्चतुस्त्रिंशदक्षरः ॥

समस्ताघौघशमनो महादारिद्र्यभञ्जनः ।
भूपतित्वादिसंसिद्धिप्रदो दुःखौघभेदनः ॥

भार्गवोमुनिराख्यातः छन्दोऽनुष्टुभुदाहृतम् ।
देवतादि वराहात्मा भगवानिन्दिरापतिः ॥ —५

एकदंष्ट्राय हृदयं व्योमोल्काय शिरःस्मृतम् ।
शिखा तेजोऽधिपतये विश्वरूपाय वर्म च ॥
महादंष्ट्राय चास्त्रं स्यात्पञ्चाङ्गं कल्पयेत्पुनः ॥

आपादं जानुदेशाद्वरकनकनिभं नाभिदेशाधस्ता-
न्मुक्ताभं कण्ठदेशात्तरुणरविनिभं मस्तकान्नीलभासम् ।
गलेहस्तैर्दधानं रथचरणदरौ खड्गखेटौ गदाख्यां
शक्तिं दानाभये च क्षितिधरणलसद्दंष्ट्रमाद्यं वराहम् ॥

लक्षमेकं जपेन्मन्त्रं मधुयुक्तैस्सरोरुहैः ।
जुहुयात्तद्दशांशेन स्वाचार्यचरणद्वये ॥

गोचर्मसंमितां भूमिं बहुसस्यसमन्विताम् ।
बहुदक्षिणया युक्तां दत्वा सिद्धिमवाप्नुयात् ॥

चतुर्विंशति साहस्रं यद्वा जप्त्वा मनूत्तमम् ।
मार्गशीर्षाभिधेमासि कमलैस्त्रिमधुप्लुतैः ॥ –१०

हुत्वा सहस्रत्रितयमाचार्यचरणद्वये ।
सदक्षिणां महीं दत्वा सिद्धमन्त्रः प्रजायते ॥

अष्टाक्षरोदिते पीठे पूजयेद्यज्ञपूरुषम् ।
मूर्तिमूलेन संकल्प्य वक्ष्यमाणविधानतः ॥

पूर्वादिषु चतुर्दिक्षु हृदाद्यङ्गानि पूजयेत् ।
अस्त्रं कोणेष्वधश्चोर्ध्वं चक्राद्यस्त्राणि तद्बहिः ॥

चक्रं शङ्खमसिं खेटं गदां शक्तिं वराभये ।
सम्पूज्य बाह्ये लोकेशान् बहिरस्त्राणि पूजयेत् ॥

ध्यानाद्देवो धनं दद्याज्जपाद्देवो वसुन्धराम् ।
प्रयच्छत्येव पूजाद्यैर्धनधान्यमहीश्रियः ॥ –१५

रवौ सिंहगतेऽष्टम्यां शुक्लेपक्षे स्थितां शिलाम् ।
पञ्चगव्येषु निक्षिप्य स्पृष्ट्वा तामयुतं जपेत् ॥

उत्तराभिमुखो भूत्वा तां शिलां निखनेद्भुवि ।
शत्रुचोरमहाभूतैः कृतां बाधां विनाशयेत् ॥

भानूदये भानुवारे साध्यक्षेत्रात्समाहरेत् ।
मृत्तिकां स जतेन्मन्त्रं तां पुनर्विभजेत्त्रिधा ॥

चुल्ल्यामेकांशमालिप्य पाकपात्रे तथापरम् ।
गोदुग्धेऽपरमात्तोड्य शोधितं तण्डुलंक्षिपेत् ॥

संस्कृतेऽग्नौ पचेत्सम्यक् चरुमत्र जपन्मनुम् ।
अवतार्य चरुं पश्चादग्नौ देवं यथाविधि ॥ –२०

धूपदीपादिकैरिष्ट्वा पुनराज्यप्लुतं चरुम् ।
जुहुयादुदिते वह्नौ यावदष्टोत्तरं शतम् ॥

एवं सितारवारेषु जुहुयात्क्षेत्रसिद्धये ।
प्रातःकाले भृगोर्वारे मृदं साध्यमहीतलात् ॥

आदाय हविरापाद्य पूर्ववज्जुहुयात्सुधीः ।
विरोधो नश्यतिक्षेत्रे सहवाराद्युपद्रवैः ॥

राजवृक्षसमुत्थाभिः समिद्भिर्विद्यया नया ।
त्रिसहस्रं प्रजुहुयात्तस्यस्युस्सर्वसम्पदः ॥

शालिभिर्जुहुयान्मन्त्री नित्यमष्टोत्तरं शतम् ।
समृद्धं धान्यसंघातैः शोभते तस्यमन्दिरम् ॥ –२५

तावदाज्येन जुहुयान्मण्डलात्स्वर्णमाप्नुयात् ।
लाजैःकन्यामवाप्नोति मध्वक्तैर्निजवांछिताम् ॥

मधुरत्रयसंसिक्तै र्जुहुयादुत्पलैर्नवैः ।
महतीं श्रियमाप्नोति मण्डलात्पूर्वसंख्यया ॥
अथ यज्ञवराहस्य यन्त्रं वक्ष्ये फलप्रदम् ॥

मध्ये बीजं सतारं दहनपुरयुगे चक्रवर्णान् षडस्रे-
ष्वालिख्याङ्गानि संधिष्वथकरणदलैरम्बुजं केसरेषु ॥
अष्टार्णान् पत्रमध्येलिखतु वसुमितान्मन्त्रवर्णांश्चतुर्थे
शिष्टं पत्रे परस्ताद्वसुदलकमले केसरस्थस्वराढ्ये ॥

मन्त्रार्णान् वेदसंख्यान् दलमनुविलिखेदंत्यमन्त्ये ऽथबाह्ये
किञ्जल्कैः कादिवर्णैर्विलसितकमले षोऽशारे यथावत् ।
मन्त्रार्णान्युग्मशस्तच्चरमदलगतं शिष्टवर्णं लिखित्वा
तारक्ष्माकोलबीजैस्तदनुपरिवृतं साध्यनामार्णमध्यैः ॥

दर्भितैःसाध्यनामार्णैर्मन्त्रवर्णैर्वृतं बहिः ।
भूबिम्बेनास्य कोणेषु भूबीजं साध्यसंयुतम् ॥ —३०

अष्टशूलेषुवाराहं भूबीजसहितं लिखेत् ।
साधीशबिन्दुगगनं बीजं वाराहमीरितम् ॥

रोचनागरुकर्पूरलाक्षाकुङ्कुमचन्दनैः ।
त्रामयांभसिसंपिष्टैर्लिखेद्यन्त्रं शुभे दिने ॥

लेखिन्या हैमया मन्त्री सर्वकामार्थसिद्धये ।
स्वर्णपीठे लिखेद्यन्त्रं राज्यश्री समवाप्तये ॥

ग्रामसिद्ध्यै राजतेऽथ ताम्रपट्टे धनाप्तये ।
भूर्जपत्रे निजेष्टाप्त्यै क्षौमे भूसिद्धये लिखेत् ॥

जपपूजादिभिस्सिद्धं यन्त्रं कुर्यान्निजेप्सितम् ।
ग्रामपट्टणराष्ट्रेषु यन्त्रमेतत्सुसाधितम् ॥ -३५

निखनेच्छुभवारादौ साङ्गं दिक्षु समर्चयेत् ।
क्षुद्रापमृत्युचौरादिभूतव्याल महाभयैः ॥

न शक्यते परं द्रष्टुं तं देशं देवताबलात् ।
वरहविद्यामाहात्म्यमिति किञ्चिन्मयेरितम् ॥
नारसिह्मस्य माहात्म्यं प्रवक्ष्यामि ततःपरम् ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे द्विपञ्चाशोऽध्यायः ॥



## ॥ अथ त्रिपञ्चाशोऽध्यायः ॥



**श्री भगवानुवाच –**

नृसिह्मानुष्टुभस्याथ विधानं संप्रवक्ष्यते ।
यस्य स्मरणमात्रेण लयं यान्ति विपद्गणाः ॥

उग्रमाद्यं पदं वीरं द्वितीयं पदमुच्यते ।
महाविष्णुं तृतीयं स्याज्ज्वलन्तं पदमप्यथ ॥

सर्वतोमुखमुच्चार्य नृसिह्मं पदमप्यथ ।
भीषणं भद्रमुक्त्वाऽथ मृत्युमृत्युमथोच्चरेत् ॥

नमाम्यहं पदं पश्चाद्विद्यैषा समुदीरिता ।
मन्त्रादौ प्रणवं वामलोचनं च समुच्चरेत् ॥

अन्त्येप्येतानि बीजानि विलोमेन समुच्चरेत् ।
आनुष्टुभमहाविद्यामित्थं केचिज्जपन्ति हि ॥ –५

हल्लेखामात्रसहितामादौ निक्षिप्य केचन ।
शुद्धमानुष्टुभं मन्त्रं जपन्ति भुवि केचन ॥

वेदेष्वपि पुराणेषु धर्मशास्त्रेषु भूपते ।
नानया सदृशी विद्या दृष्टा सकलसिद्धिदा ॥

मुनिः प्रजापतिर्ब्रह्मा मन्त्रस्यास्य जगत्पतिः ।
छन्द आनुष्टुभं प्रोक्तं परमात्मा सनातनः ॥

देवता जगतां नाथः श्रीनृसिंहो महेश्वरः ।
अनन्तबीजमित्युक्तं शक्तिः शक्तिरुदीरिता ॥

द्वाभ्यां द्वाभ्यां तथैकेन द्वाभ्यामथ ततःपरम् ।
पुनः पदद्वयेनाऽपि षडङ्गं विन्यसेत्ततः ॥ –१०

षड्दीर्घयुतया शक्त्या न्यसेद्यद्वा षडङ्गकम् ।
शिरोललाटदृग्युग्ममुखेषु करसन्धिषु ॥

पदसन्धिषु साग्रेषु जठरे हृदि हस्तयोः ।
गलपार्श्वांशककुदि क्रमाद्वर्णान्न्यसेन्मनोः ॥
ध्यायेद् घोराकृतिं विष्णुमथ शान्ताकृतिं तु वा ॥

जान्वोरासक्ततीक्ष्णनखरुचिलसद्बाहुसंस्पृष्टकेशः
शङ्खं चक्रं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः ।
ज्वालामालापरीतं रविशशिदहनत्रीक्षणं दीप्तजिह्वं
दंष्ट्रोग्रं धूतकेशं वदनमपिवहन्पातु मां नारसिंहः ॥
यद्वा शान्ताकृतिं ध्यायेन्नारसिंहं जगत्पतिम् ॥

सत्यज्ञानसुखस्वरूपममलं क्षीराब्धिमध्यस्थितं
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम् ।
त्र्यक्षं चक्रपिनाकसाभयवरान् बिभ्राणमर्कच्छविं
छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृसिंहं भजे ॥

पूजयेद्वैष्णवे पीठे नृसिंहं कमलान्वितम् ।
मूर्तिं मूलेन संकल्प्य पूजयित्वोपचारकैः ॥ –१५

आद्यावरणमङ्गैः स्याद्द्वितीयेषु प्रवक्ष्यते ।
पक्षीन्द्रं शङ्करानन्तौ दिक्षु ब्रह्माणमर्चयेत् ॥

श्रियं ह्रियं च तुष्टिञ्च पुष्टिदेवीं विदिक्षु च ।
स्तम्भकारी वश्यकारी तथामरणकार्यपि ॥

द्वेषकार्याकर्षकारी पुष्टिः प्रमथिनी तथा ।
विद्येत्यावरणे पूज्या तृतीये वसुधापते ॥

चक्रं शङ्खं महापद्मं मुसलं देवदक्षिणे ।
शंखं खेटं गदां पाशमर्चयेद्देववामतः ॥

लक्ष्मीं दक्षिणतस्तुष्टिं वामे तत्रैव कौस्तुभम् ।
श्रीवत्सं दक्षिणे मध्ये वनमालां च पूजयेत् ॥ –२०

पीताम्बरं ब्रह्मसूत्रं नाभिपद्मं किरीटकम् ।
भूषणानि च सर्वाणि पुरोभागे तु पूजयेत् ॥

श्रद्धां मेधां तथा कामां भीमां मायां भयानकाम् ।
आर्द्रां दीप्तिश्चाष्टदिक्षु पूर्वादिक्रमतो यजेत् ॥

इन्द्रादीनष्टदिक्पालान् वज्रादीन्यपि पूजयेत् ।
यद्वा शिवाकृतिं ध्यात्वा नृसिंहं प्रजपेन्मनुम् ॥

पञ्चवक्त्रं महाभीमं कालानलसमप्रभम् ।
आन्त्रमालाधरं रौद्रं कण्ठहारेण शोभितम् ॥

अक्षसूत्रं गदां पद्मं शङ्खं गोक्षीरसन्निभम् ।
धनुश्च मुसलं चैव तथा चक्रञ्चविभ्रतम् ॥ –२५

खड्गं च शूलं वाणं च नृहरिं रुद्ररूपिणम् ।
इन्द्रगोपक नीलाभं चन्द्राभं स्वर्णसन्निभम् ॥

पूर्वादिचोत्तरान्तास्य मूर्ध्वास्यं स्वर्णवर्णकम् ।
एवमुग्रं हरिं ध्यायेत्सर्वव्याधिनिवृत्तये ॥

सर्वमृत्युहरं दिव्यं स्मरणात्सर्वसिद्धिदम् ।
ध्यायेद्यदा महत्कर्म तदा षोडशहस्तकान् ॥

नृसिंहः सर्वलोकेशः सर्वाभरणभूषितः ।
द्वौ विहरणकर्माढ्यौ द्वौचान्त्रोद्धरणोचितौ ॥

शंखचक्रधरौ द्वौ तु चन्द्रबाणधनुर्धरौ ।
खड्गखेटधरौ द्वौ च द्वौ गदापद्मधारिणौ ॥

पाशाङ्कुशधरौ द्वौ च द्वौ रिपोर्मकुटाथितौ ।
इति षोडश कोदण्डमण्डितं नृहरिं विभुम् ॥

ध्यायेन्नीरदनीलाभमुग्रकर्मण्यनन्यधीः ।
ध्येयो महत्तमे कार्ये षोडशद्वयहस्तवान् ॥

नृहरिस्सर्वलोकेशस्सर्वसिद्धिफलप्रदः ।
दक्षिणे चक्रपद्मे च परशुं पाशमेव च ॥

हलं च मुसलं चैवमभयं चाङ्कुशं तथा ः
पट्टिशंभिण्डिपालं च खेटमुद्गरतोमरान् ॥

वामभागे करैः शङ्खं खड्गं पाशं च शूलकम् ।
अग्निं च वरदं शक्तिं कुण्डिकां च ततःपरम् ॥

कार्मुकं तर्जनीमुद्रां गदां डमरुसर्पकौ ।
द्वाभ्यां कराभ्यां च रिपोर्जानुमस्तकपीडनम् ॥

तथोर्ध्वकृतहस्ताभ्यामान्त्रमालाधरं हरिम् ।
अधः स्थिताभ्यां बाहुभ्यां हिरण्यकविदारणम् ॥

प्रियङ्करं च भक्तानां दैत्यानाञ्च भयङ्करम् ।
नृसिंहं संस्मरेदित्थं महामृत्युभयापहम् ॥

यन्त्रं साध्यसमन्वितं च विलिखेन्मध्येष्टपत्रेषुत-
न्मन्त्रार्णांश्चतुरो विभज्य विलिखेत्क्षित्या बहिर्वेष्टयेत् ।
बाह्ये कोणगवह्निबीजवसुधागेहद्वयेनावृतं
यन्त्रं क्षुद्रविषग्रहामयरिपुप्रध्वंसनं श्रीकरम् ॥

अस्मिन् संस्थापयेद्यन्त्रे नवकुम्भान् सुशोभनान् ।
सुतीर्थतोयसंपूर्णान्वस्त्ररत्नौषधान्वितान् ॥ —४०

मध्ये समर्चयेद्देवं नृसिंहं शान्तविग्रहम् ।
नृसिंहं पूजयेदष्टौ पूर्वादिषु यथाक्रमम् ॥

सहस्रमन्त्रितैस्तोयैरभिषिञ्चेत्प्रियं नरम् ।
अभिचारग्रहोन्मादा विनश्यन्त्यरिभिस्सह ॥

अभिषिक्तस्तदा विप्रान् भोजयेद्देवताधिया ।
यथावत्पूजयेद्भक्त्या शक्त्याऽऽचार्यपदद्वयम् ॥

राजा विजयमाप्नोपि युद्धेषु विधिनामुना ।
लक्षमेकं पुरश्चरेदयुतद्वितयोत्तरम् ॥

दशांशं तर्पयेद्धीमान् पयसेक्षुरसेन वा ।
त्रिसहस्रं हुनेदग्नौ घृतमिश्रैः कुशेशयैः ॥ —४५

आचार्यचरणद्वन्द्वे बहुदक्षिणयान्वितम् ।
कुण्डलद्वितयं दत्वा विद्यासिद्धिमवाप्नुयात् ॥

यद्वा विंशति साहस्रं प्रजप्त्वाऽऽनुष्टुभं मनुम् ।
त्रिसहस्रं हुनेदग्नौ घृतमिश्रैः कुशेशयैः ॥

आचार्यकर्णयोर्दत्वा कुण्डलद्वितयं शुभम् ।
वर्षाशनमितं द्रव्यं दत्वाचार्यस्य दक्षिणाम् ॥
विद्यासिद्धिमवाप्नोति शाश्वतीमिष्टसिद्धिदाम् ॥

दूर्वातिकैरष्टसहस्रसंख्यैराराध्य मन्त्री जुहुयादथाप्सु ।
शान्तिं प्रयात्येवतथोपसर्गा आपोहि शान्ता इति च श्रुतिःस्यात् ॥

यद्वान्यन्निजमनसीप्सितं च कामं
तं प्राप्नोत्यखिलजगत्प्रियश्च भूयान् ।
दुःस्वप्नेष्वपि दृष्टेष्वथ शिष्टायां जाग्रतो निशायाम्
जपमानमन्त्रशक्त्या सुस्वप्नो भवति क्षणादेव ॥ —५०

चरन्वने दुष्टमृगाहिचोरव्यालाकुले मन्त्रमिमं जपेद्यः ।
असाधितं साधितमेव तस्य भवत्यवश्यं मिथिलेश भूप ॥

प्रजपन्नष्टसहस्रं कलशेनाप्यहिविषार्थमभिषिञ्चेत् ।
अतिविषमेणापि विषेणाप्यसौ विमुक्तः सुखी भवति ॥

मूषकलूतावृश्चिकबहुपादाद्युत्थितं विषं शमयेत् ।
अष्टोत्तरशतजपेनाभिमन्त्रितं च भस्माद्यम् ॥

सशिरोऽक्षि कर्णहृद्गुल्मकुक्षिरुजाज्वरविसर्पिहिक्कादीन् ।
मन्त्रौषधाभिचारकृतान् विकारानयं मनुश्शमयेत् ॥

ब्राह्मीं वचां चाष्टशतं च हुत्वा प्रातस्सगव्यां नृहरिं विचिन्त्य ।
सम्प्राप्य मेधां स तु धर्मशास्त्रैरिष्टार्थसिद्धिं लभते च वर्षात् ॥

उक्तैः किमत्र बहुभिर्मनुनामुनैव संप्रार्थितं च सकलं लभते विधिज्ञः ।
तस्मादमुं भुजत तत्प्रतिपन्नचित्ताः संसारसागर समुत्तरणार्थिनो ये ॥

लक्ष्मीकामस्तु मन्त्रज्ञः स्यमन्तकुसुमैर्हुनेत् ।
अयुतं मधुनाक्तैश्च दरिद्रो न भवेत्कुले ॥

औदुम्बरसमिद्धोमाद्धान्यसिद्धिः प्रजायते ।
अपूपलक्षहोमेन धनदेन समो भवेत् ॥

क्रुद्धस्य सन्निधौ राज्ञो जपेदष्टोत्तरंशतम् ।
सद्यो नैर्मल्यमाप्नोति प्रसादं चाधिगच्छति ॥

कुन्देन्दुसूनहोमेन सर्वकल्याण मश्नुते ।
मधूकपुष्पहोमेन सर्वाभीष्टं प्रजायते ॥ —६०

तुलसीदलहोमेनाकीर्तिर्याति न संशयः ।
सक्तुहोमेन शालाग्नौ जगद्वश्यं प्रजायते ॥

हरिद्राखण्डहोमेन स्तम्भयेच्छत्रुसन्ततिम् ।
कदलीफलहोमेन सर्वविघ्नैर्विमुच्यते ॥

दधिमध्वाज्यसंसिक्ताः गलूचीश्चतुरङ्गुलाः ।
जुहुयादयुतं योऽसौ शतं जीवति रोगजित् ॥

शनैश्चरदिनेऽश्वत्थं स्पृष्ट्वा वाचाष्टोत्तरं शतम् ।
जप्त्वा जित्वासोऽपमृत्युशतं वर्षाणि जीवति ॥ –६५

श्रीकामः सततं ध्यायेत्पूर्वोक्तं नृहरिं स्मितम् ।
वामाङ्कस्थितया लक्ष्म्याऽऽलिङ्गितं पद्महस्तया ॥

आनुष्टुभं नारसिंह्मं जप्त्वा हुत्वा दिने दिने ।
सिद्धो भूत्वेह सततं साक्षाद्ब्रह्ममयो भवेत् ॥

वक्ष्यामि तापनीयोक्तं यन्त्रराजमतःपरम् ।
पद्ममष्टदलं पूर्वं विरचय्य समाहितः ॥

तत्कर्णिकायामालिख्य षट्कोणं सुमनोहरम् ।
विनिखेत्प्रणवं तत्र नृसिंह्मैकार्णगर्भितम् ॥

सुदर्शनस्य षड्वर्णान् षट्कोणेषु ततो लिखेत् ।
मायया वेष्टयित्वाऽथ वसुपत्रे मनोहरे ॥ –७०

लिखित्वा श्रीमदष्टार्णान् मायया वेष्टयेदपि ।
द्वात्रिंशारं महापद्मं तद्बहिर्वेष्टयेदथ ॥

एकैकमक्षरं तत्र नारसिंह्मस्य संलिखेत् ।
द्वात्रिंशत्पद्मपत्राणि शक्त्या तान्यपि वेष्टयेत् ॥

तद्बहिर्वृत्तमालिख्य ककाराद्यष्टकं ततः ।
तत्पूर्वभागे संलिख्य जादीनेकादशाक्षरान् ॥

तद्दक्षिणे विलिख्याऽथ पश्चाद्भागे ततःपरम् ।
तदनन्तरवर्णानप्यष्टौ तत्र समालिखेत् ॥ —७५

अक्षरद्वितयं लेख्यं भागे तस्योत्तरे ततः ।
वृत्तस्य पार्श्वयोरर्णद्वयं लेख्यं प्रयत्नतः ॥

नारसिंह्ममिदं यन्त्रं जपहोमादि साधितम् ।
पूजयेद्धारयेद्यद्वा सर्वपापैर्विमुच्यते ॥

श्रियमासाद्य विपुलां धनधान्यादिसङ्कुलाम् ।
अवाप्य महतीं मेधामन्ते ब्रह्ममयो भवेत् ॥

नारसिंह्ममिदं यन्त्रं भुक्तिमुक्तिफलप्रदम् ।
आयुरारोग्यसंपत्तिकारणं पुत्रवर्धनम् ॥

नृसिंह्मानुष्टुभमनोर्माहात्म्यमघनाशनम् ।
इति किञ्चिन्मया प्रोक्तं वामनस्याऽथवक्ष्यते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्र
वेदार्थसंग्रहे त्रिपञ्चाशोऽध्यायः ॥

## ॥ अथ चतुःपञ्चाशोऽध्यायः ॥

**श्री भगवानुवाच —**

अथ वामनरूपस्य श्रीपतेः परमात्मनः ।
यथोपदिष्टां वक्ष्यामि विद्यां सकलसिद्धिदाम् ॥

प्रणवं नतिसंयुक्तं विष्णवे पदमप्यथ ।
दक्षश्रोत्रयुतं षान्त्यं द्वितीयान्तस्थमप्यथ ॥

षष्ठवर्गादिमं पञ्चवर्गाद्यक्षरमप्यथ ।
वायुरुद्रसमायुक्तमन्तस्थाद्यमतःपरम् ॥

मुखवृत्तयुतं व्योम पृष्ठदेशार्णमप्यथ ।
भुवं द्वितीयसहितां वायुं वह्निप्रियामथ ॥

इत्येषा वामनस्योक्ता विद्यापातक भञ्जिनी ।
आधिव्याधिहरी सर्वदुःखदारिद्र्य भञ्जिनी ॥ —५

ऋषिर्धनदपुत्रोऽस्य नलकूबर उच्यते ।
छन्दोऽति जागतं प्रोक्तं दधि वामनरूपधृत् ॥

देवता परमात्मोक्तो महाविष्णुः श्रियःपतिः ।
प्रणवो बीजमित्युक्तश्शक्तिः पावक वल्लभा ॥

त्रिभिस्त्रिभिश्च पञ्चार्णैः पञ्चभिर्द्वितयेन च ।
पञ्चाङ्गं विन्यसेद्धीमान् वर्णन्यासमथन्यसेत् ॥

मूर्ध्निदृक्श्रवणद्वन्द्वनासिकावदनेषु च ।
कण्ठे च बाहुयुगले नाभौ पृष्ठे च गुह्यके ॥
जान्वोः पादयुगे वर्णान्न्यसेदिति यथाक्रमम् ॥

राकेन्द्वाभः सिताब्जे स्रवदमृतमणिच्छत्रतोऽधोनिविष्टः
श्रीभूम्याश्लिष्टपार्श्वः स्फटिकमणिनिभोशेषदामार्चिताङ्गः ।
दध्यन्नाखण्डपूर्णं करधृतचषकं स्वर्णपीयूषकुम्भं
बिभ्रच्छ्रीवामनाख्यः सततमवतुनो विष्णुरिष्टार्थदायी ॥ –१०

अतिसुललितगात्रं रौप्यपात्रस्थमन्नं
सुदधिललितखण्डं पाणिना दक्षिणेन ।
कलशममृतपूर्णं सव्यहस्ते दधानं
तरति सकलदुःखाद्वामनं भावयेद्यः ॥

ध्यात्वेत्थं वामनं विष्णुं हृदब्जे मनसा हरिम् ।
मूलेन मूर्तिं सङ्कल्प्य वामनं विष्णुमर्चयेत् ॥

षडङ्गान्यर्चयेत्पश्चादुषासुमनसा तथा ।
प्रीतिस्तुष्टिश्च पुष्टिश्च वृद्धिर्वृत्तिस्ततःपरम् ॥

सौम्या मरीचिर्नी पश्चात् ततो देव्यंशुमालिनी ।
शशिनी दुर्गताचैव लक्ष्मीच्छाया तथैव च ॥

सम्पूर्णमण्डलेचैवममृता षोडशीकला ।
एताभिः शक्तिभिः प्रोक्तं द्वितीयावरणं शुभम् ॥ –१५

केशवादिचतुर्विंशद्देवतैः शक्तिसंयुतैः ।
तृतीयावरणं प्रोक्तं कुमुदः कुमुदेक्षणः ॥

पुण्डरीको वामनश्च शङ्कुर्णस्ततःपरम् ।
सर्पनेत्रश्च सुमुखस्सुप्रतिष्ठित इत्यपि ॥

चतुर्थावरणं प्रोक्तं शङ्खचक्रे गदामपि ।
पद्मं खड्गं च मुसलं शार्ङ्गं बाणानतः परम् ॥

पञ्चमावरणं प्रोक्तमिन्द्राद्यैः षष्ठमीरितम् ।
इत्थमभ्यर्च्य सततं वामनं विष्णुमच्युतम् ॥

समस्तसिद्धिसहितो भगवत्किङ्करो भवेत् ।
चतुर्लक्षं जपेदादौ दशांशं तर्पयेत्पयः ॥ –२०

होतव्यमथ दध्यन्नं तद्दशांशं महीपते ।
गोशतं दक्षिणां दद्यादाचार्यस्य पदद्वये ॥

तदर्धं वा तदर्धं वा कुण्डलद्वयसंयुतम् ।
पञ्चविंशतिसाहस्रमथवा श्रावणे जपेत् ॥

त्रिसहस्रं ततो हुत्वा दध्यन्नेन यतव्रतः ।
वर्षाशनमितद्रव्यसहितं च सवत्सकम् ॥

गोद्वयं दक्षिणां दत्वा सिद्धमन्त्रः प्रजायते ।
नित्यं द्वादशधा वह्नौ हुत्वा दध्यन्नमादरात् ॥

प्राप्नोत्यन्नसमृद्धिं च सोऽक्षयां नाऽत्रसंशयः ।
सहस्रं प्रजपेद्यस्तु नित्यं नियमतः शुचिः ॥ -२५

बहुलाभमवाप्नोति देहान्ते मुक्तिमेति च ।
अन्नकामो हुनेदन्नावष्टाविंशतिसंख्यया ॥

सितान्नं घृतसंमिश्रं प्राप्नुयादन्नमक्षयम् ।
अपूपषड्रसोपेतमन्नमष्टसहस्रकम् ॥

हुत्वा लभेत महतीं श्रियं धनदसन्निभाम् ।
दध्यन्नं शर्करायुक्तं हुत्वा दशसहस्रकम् ॥

अन्नपर्वतमाप्नोति यत्र यत्र हि गच्छति ।
हुनेद्बिल्वसमीपस्थः पद्माक्षैरयुतं शुचिः ॥

वसुधारा तु सा लक्ष्मीर्वसु वर्षति तत्र हि ॥
विद्यार्थी प्रजपेल्लक्षं ध्यात्वा देवं जनार्दनम् ॥ -३०

पायसेनायुतं हुत्वा साक्षाद्वागीश्वरो भवेत् ।
पुत्रकामो हुनेल्लक्षं पुत्रजीवीफलैर्हुनेत् ॥

तत्काष्ठं दीपिते वह्नौ स सत्पुत्रानवाप्नुयात् ।
ध्यात्वा त्रिविक्रमं देवं रक्ताभं करवीरकैः ॥

हुत्वाऽथ दशसाहस्रं सर्वत्र विजयी भवेत् ।
राज्यकामोऽपि कमलैर्हुत्वा दशसहस्रकम् ॥

लभते महतीं सिद्धिं समस्तफलसिद्धिदाम् ।
यद्वा द्वादशसाहस्रं प्रजप्त्वा नियतः शुचिः ॥

त्रिशताधिकसाहस्रं हुनेत्पायसमादरात् ।
वर्षाशनमितं द्रव्यं दत्वाऽऽचार्यपदाब्जयोः ॥

सिद्धिं प्राप्नोति महतीं विद्याया नात्र संशयः ।
प्राप्तासु सकलापत्सु भये चोरारिसम्भवे ॥ –५५

सिंहव्याघ्रादिभीतौ च रक्षः कूष्माण्डजे भये ।
त्रिसहस्रं मनुं जप्त्वा भार्गवस्य महात्मनः ॥

विमुक्तः सकलापद्भ्यः सद्य एव भवत्यसौ ।
आचार्यसन्निधौ नित्यं शुश्रूषुरनहङ्कृतिः ॥

जप्त्वा विद्यामिमां नित्यं सहस्रत्रयमादरात् ।
जडोऽपि सर्वविद्यानां पारगो मण्डलाद्भवेत् ॥

गोष्ठे समुद्रतीरे वा गुरोश्चरणसन्निधौ ।
जप्त्वा लक्षमिमां विद्यामयुतं घृतमिश्रितैः ॥

हुत्वा पलाशकुसुमैर्दत्वाचार्यस्य दक्षिणाम् ।
चतुर्णामपि वेदानां पारगः शास्त्रपारगः ॥ –६०

साक्षाद्धिषणसंकाशो भवत्यत्र न संशयः ।
महतीं श्रियमन्विच्छन् हुत्वारक्तोत्पलैर्नवैः ॥

कुलकालान्तकायेति चतुर्थ्यन्तसमन्वितम् ॥
रेणुकापुत्रशब्दं च हृदयेन समन्वितम् ।

एषा भार्गवरामस्य विद्याखिलफलप्रदा ।
समस्तदुःखशमनी वैरिवर्गविदारिणी ॥
सर्वापत्तारिणी सर्वदारिद्र्यौघविभेदिनी ॥ —४५

गाङ्गेयोऽस्य मुनिः प्रोक्तः छन्द आनुष्टुभं स्मृतम् ।
देवता भार्गवो रामः श्रीपतिर्जगतां पतिः ॥

बीजमुक्तं त्रयीबीजं हृच्छक्तिः समुदीरिता ।
त्रिभिर्वर्णैश्चतुर्भिश्च पञ्चभिर्भानुभिस्तथा ॥

षड्भिर्द्वाभ्यां षडङ्गानि न्यसेदिति समाहितः ।
तप्तकाञ्चनसङ्काशं जयमण्डलधारिणम् ॥

जमदग्निसुतं वीरं दधानं परमं शुभम् ।
धनुर्धरं विशालाक्षं राजराजविमर्दनम् ॥

नमामि भार्गवं रामं शिष्यं गौरीपतेर्विभुम् ।
ध्यात्वेत्थं भार्गवं रामं दुष्टक्षत्रियमर्दनम् ॥ —५०

अष्टोत्तरशतं जप्त्वा शाश्वतीं सिद्धिमश्नुते ।
लक्षमेकं पुरश्चरेत् साधकः स्थिरमानसः ॥

दशांशं पायसं हुत्वा घृतलिमधुमिश्रितम् ।
समर्प्याचार्यपादाब्जयुगले बहुदक्षिणाम् ॥

राज्यैश्वर्यमवाप्नोति यावदायुरकण्टकम् ।
अपामार्गदलैर्हुत्वा लवङ्गैर्वा मधुप्लुतैः ॥

अयुतं साध्यानामान्तं जगद्वश्यमवाप्नुयात् ।
आरोग्यकामो जुहुयादपामार्गैस्सहस्रकम् ॥ –३५

सप्ताहान्मुच्यते रोगैः तद्भस्मापि च धारयन् ।
आयुष्कामस्त्रिमध्वक्तैस्तिलदूर्वाङ्कुराक्षतैः ॥

अयुतंजुहुयात्तावज्जपेदायुर्लभेच्चिरम् ।
स्मृत्वा त्रिविक्रमं देवं जप्त्वा दशसहस्रकम् ॥
मुक्तो बन्धनतस्सद्यो भवत्येव न संशयः ॥

स साध्यलक्ष्मीप्रणवं सकर्णिकं मन्त्राक्षरं द्वन्द्वदत्ताष्टकं च ।
शिष्टार्णयज्ञोल्लसितान्त्यपत्रमष्टाक्षरैरुज्ज्वलपत्रकार्थम् ॥

परीतसद्द्वादशवर्णमन्त्रं ततो बहिर्मातृकया च वीतम् ।
ततो बहिः पूर्णमखण्डबिम्बे यन्त्रं त्विदं श्रीमभीष्टदं च ॥

उपास्येत्थं त्रिलोकेशं दधिवामनमच्युतम् ।
इह भुक्त्वाऽखिलान् भोगानन्ते ब्रह्मपदं व्रजेत ॥ –४०

अथ भार्गवरामस्य विद्यां वक्ष्यामि सिद्धिदाम् ।
यस्या विज्ञानमात्रेण विनश्यन्ति विपद्गणाः ॥

प्रणवं नमसा युक्तं पदं भगवते ततः ।
जामदग्न्याय दुष्टेति क्षत्रियेति पदं ततः ॥

अर्कसाहस्रमाप्नोति विपुलां श्रियमक्षयाम् ।
पर्वताग्रे जपेल्लक्षं फलाशी वा हविष्यभुक् ॥

साक्षात्पश्यति चक्षुर्भ्यां भार्गवं राममव्ययम् ।
प्रसन्ने भार्गवे साक्षान्नासाध्यं वांछितं भवेत् ॥

आयुरारोग्यमैश्वर्यं वसूनि पशवोऽपि च ।
भोगा अष्टविधाश्चास्य सिद्ध्यन्त्यत्र न संशयः ॥

मूर्तिं मूलेन संकल्प्य पूजयेद्भार्गवं विभुम् ।
षट्कोणेषु षडङ्गानि जमदग्निं च रेणुकाम् ॥

अत्रिमप्यनसूयां च दत्तात्रेयं श्रियं तथा ।
कुमारं देवसेनां च पद्मे वसुदले यजेत् ॥

इन्द्रादीनष्टदिक्पालांश्चतुरस्राष्टदिक्ष्वपि ।
इत्थमभ्यर्च्य सततं भार्गवं जगतीपतिम् ॥

विजयी सततं भूत्वा रमते ब्रह्मणः पदे ।
दधिवामनविद्याया भार्गवस्यमनोरपि ॥
किञ्चित्साधनमुक्तं ते श्रीरामस्याथ वक्ष्यते ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे चतुःपञ्चाशोऽध्यायः ॥



## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

श्री भगवानुवाच –

तारकब्रह्मरूपस्य श्रीरामस्य जगत्पतेः ।
प्रवक्ष्यामि महाविद्यां सर्ववेदान्तसंग्रहाम् ॥

प्रणवं हृदयोपेतं पदं भगवते ततः ।
रघुनन्दनशब्देन चतुर्थ्यन्तसमन्वितम् ॥

रक्षोघ्नविशदायेति मधुरेति पदं ततः ।
प्रसन्नवदनायामिति तत्तेजस उदीरयेत् ॥

बलाय पदमुच्चार्य पावकं दीर्घसंयुतम् ।
मुखवृत्तयुतं पाद्यमाद्यान्तस्थं ततःपरम् ॥

विष्णुशब्दं चतुर्थ्यन्तसहितं नमसान्वितम् ।
उच्चरेज्जानकीनाथविद्येयं समुदीरिता ॥ –५

स्मरणादघसंघानां दुःखौघस्य च भञ्जिनी ।
महादारिद्र्यशमनी राज्यैश्वर्यफलप्रदा ॥

सर्वतीर्थमयी सर्वविद्याराशिप्रदायिनी ।
समस्तसंपत्साम्राज्यहेतुभूता शिवङ्करी ॥

त्रैलोक्यमोहनकरी सर्वलोकवशङ्करी ।
समस्तैश्वर्यफलदा सर्वविद्याप्रदायिनी ॥

सत्यानन्दचिदाकारब्रह्मतादात्म्यसिद्धिदा ।
वाल्मीकिमुख्याः कवयो नारदाद्याः पुरातनाः ॥

विद्यामेतामुपास्यादौ सिद्धिमिष्टां परां गताः ।
तारकब्रह्मविद्येयमखिलानन्दसिद्धिदा ॥ –१०

मुनिर्ब्रह्मास्य मन्त्रस्य छन्दो गायत्रमुच्यते ।
राज्याभिषिक्तः श्रीरामः परमात्मा जगत्पतिः ॥

जानकीनायको विष्णुर्देवता संस्मृतो बुधैः ।
प्रणवाख्यं महद्बीजं शक्तिर्नतिरुदीरिता ॥

जानकीनायकप्रीत्यै बिनियोग उदाहृतः ।
सप्तवर्णैः ततः षड्भिः सप्तभिर्दशभिस्तथा ॥

नवभिर्वसुसंख्याकैर्षडङ्गन्यास ईरितः ।
अयोध्यानगरे रम्ये कल्पद्रुमवनान्तरे ॥

पारिजाततरोर्मूले रत्नसिंहासने शुभे ।
समासीनं त्रिजगतां पतिं नीलाम्बुदद्युतिम् ॥ –१५

पीताम्बरधरं दिव्यरत्नाभरणशोभितम् ।
अकलङ्कशरच्चन्द्रसमवक्त्रं महीपतिम् ॥

कन्दर्पकोटिलावण्यं कामितार्थफलप्रदैः ।
दधानं चिन्मयीं मुद्रां जान्वासक्तभुजं विभुम् ॥

राजीवायतनेत्रान्तं सुप्रसन्नस्मिताननम् ।
वक्तारं सर्वविद्यानां दातारं सर्वसम्पदाम् ॥

लक्ष्मणेन च चतुघ्नभरताभ्यां निषेवितम् ।
वामाङ्कारूढजनककन्ययादिव्यभूषया ॥

आश्लिष्टं वामदेवादि महर्षिभिरभिष्टुतम् ।
विभीषणाञ्जनेयाद्यैः किङ्करैर्नित्यमर्चितम् ॥

वसिष्ठाद्यैर्दयासारैः स्तुतिं कुर्वद्भिरावृतम् ।
सुग्रीवाद्यैः परिवृतं सुमन्त्राद्यष्टमन्त्रिभिः ॥

भूपालैरखिलैर्नित्यं वन्द्यमानपदाम्बुजम् ।
शरण्यं सर्वजगतां शरणागतवत्सलम् ॥

तेजोमयतनुं विष्णुं वन्देऽहं रघुनन्दनम् ।
षट्कोणं पद्ममष्टारं चतुरस्रसमन्वितम् ॥

सीतापतेरिदं यन्त्रं समस्ताभीष्टसिद्धिदम् ।
तन्मध्ये विलिखेत्साध्यं बीजं कामसमन्वितम् ॥

आवेष्टयेत्तस्य पञ्च बीजानि जगतीपतेः ।
दशाक्षरेण भूयोऽपि विलिखेच्च ततःपरम् ॥

शङ्खं चक्रं गदां पद्मं शार्ङ्गं बाणानतःपरम् ।
गरुत्मन्तं समभ्यर्च्य विष्वक्सेनं समर्चयेत् ॥

महेन्द्राद्यष्टदिक्पालान् वज्रादीन्यायुधानि च ।
इत्यभ्यर्च्य पुनर्धूपदीपाद्यैरपि तोषयेत् ॥

इत्थमभ्यर्चयन्मन्त्री जानकीनायकं विभुम् ।
विद्यैश्वर्यनिधिर्भूत्वा मोदते भगवत्पदे ॥

लक्षमेकं जपेदादौ पुरश्चर्यार्थमादरात् ।
अभ्यर्च्य सन्निधीकृत्य घृतत्रिमधुमिश्रितम् ॥

हुत्वाऽग्नौ पायसं पश्चादाचार्यचरणद्वये ।
समर्प्य बहुलं वित्तं मन्त्रसिद्धिमवाप्नुयात् ॥ –३०

रविपर्वणि वा सोमग्रहणे वा समाहितः ।
एकभक्ताशनो भूत्वा तत्पूर्वदिवसत्रयम् ॥

स्पर्शकालमथारभ्य शुद्धकालान्तमादरात् ।
जप्त्वा कृष्णतिलैरग्नौ घृतत्रिमधुमिश्रितैः ॥

हुत्वाऽऽचार्यपदद्वन्द्वे कुण्डलद्वितयान्वितम् ।
दत्वा वर्षाशतं द्रव्यं विद्यासिद्धिमवाप्नुयात् ॥

पञ्चविंशतिधा नित्यमभिमन्त्र्य जलं पिबन् ।
आरोग्यं महदासाद्य सर्वविद्यानिधिर्भवेत् ॥

हुत्वाबिल्वदलैरग्नौ गव्याज्यत्रिमधुप्लुतैः ।
राज्यलक्ष्मीमवाप्नोति दशसाहस्रतो नृप ॥ –३५

समुद्रतीरे गोष्ठे वा लक्षं जप्त्वा पयोव्रतः ।
पायसेनाज्ययुक्तेन हुत्वा विद्यानिधिर्भवेत् ॥

वैशाखे मासि शुद्धात्मा लक्षत्रितयमादरात् ।
जप्त्वा पञ्चाग्निमध्यस्थः कमलैर्मधुमिश्रितैः ॥

अयुतद्वितयं हुत्वा सार्वभौमः प्रजायते ।
दूर्वाभिराज्यसिक्ताभिर्हुत्वा दशसहस्रकम् ॥

निरामयश्चिरायुः स्यात् सत्यमुक्तं महीपते ।
हुत्वा नीलोत्पलैस्सम्यगयुतं साधकोत्तमः ॥

वशीकरोति त्रैलोक्यं यावज्जीवं न संशयः ।
हुत्वारक्ताम्बुजैरग्नावयुतं घृतमिश्रितैः ॥ —४०

वांछितं धनमाप्नोति शतसाहस्रशोऽपि च ।
घृतमिश्रं पयो हुत्वा षट्साहस्रं यतव्रतः ॥

पशुवृद्धिमवाप्नोति धनं धान्यमपि ध्रुवम् ।
बिल्वप्रसूनैर्जुहुयादाज्यत्रिमधुमिश्रितैः ॥

दशसाहस्रकं राज्यलक्ष्मीमाप्नोत्यनुत्तमाम् ।
करवीरसुमैर्हुत्वा लक्षं त्रिमधुमिश्रितैः ॥

महेन्द्रसदृशीं लक्ष्मीमचलां चिरमश्नुते ।
अष्टाविंशाधिकं नित्यं त्रिशतं यो जपेच्छुचिः ॥

स सर्वमीप्सितं लब्ध्वा ब्रह्मलोके महीयते ।
राज्याभिषिक्ता श्रीरामविद्येयं समुदीरिता ॥
श्रीकृष्णमन्त्रमहात्म्यमथ वक्ष्यामि भूपते ॥ —४५

इति श्रीमदनुत्तरब्रह्मतत्वरहस्ये दाशरथीये तन्त्र
वेदसारार्थसंग्रहे पञ्चपञ्चाशोऽध्यायः ॥

## ॥ अथ षट्पञ्चाशोऽध्यायः ॥

**श्री भगवानुवाच –**

श्रीकृष्णविद्यां वक्ष्यामि सर्वसौभाग्यसिद्धिदाम् ।
यदनुष्ठानमात्रेण सर्वसौभाग्यसिद्धिभाक् ॥

कामराजं समुच्चार्य कृष्णाय पदमप्यथ ।
गोविन्दाय पदं पश्चाद्गोपीजनपदं ततः ॥

वल्लभायपदं पश्चादग्निपत्नीसमन्वितम् ।
कृष्णविद्येयमाख्याता महासौभाग्यसिद्धिभाक् ॥

सर्वाधिव्याधिशमनी भुक्तिमुक्तिफलप्रदा ।
एनां विद्यां पुराऽऽराध्य नारदोभगवानपि ॥

त्रिकालज्ञानमैश्वर्यमणिमादिकमाप्तवान् ।
जगत्त्रितयसाम्राज्यहेतुभूता सनातनी ॥ —५

श्रीकृष्णविद्या कथिता सर्वलोकवशङ्करी ।
ऋषिरस्य विधिर्ब्रह्मा गायत्रं छन्द उच्यते ॥

कृष्णः श्रियः पतिः स्वामी देवता समुदाहृता ।
कामराजं बीजमुक्तं शक्तिः पावकवल्लभा ॥

एकेन त्रितयेनापि चतुर्भिश्चतुरक्षरैः ।
पुनश्चतुर्भिर्द्वाभ्यां च षडङ्गन्यासईरितः ॥

अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं
किञ्चित्कुञ्चितकोमलाधरपुटं साचीप्रसारेक्षणम् ।
आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गिललितं ध्यायेज्जगन्मोहनम् ॥

ध्यात्वेत्थं वसुदेवस्य सुतं कृष्णं जगत्पतिम् ।
चतुर्लक्षं पुरश्चर्यात्साधकःशुद्धमानसः ॥ —१०

दशांशं तर्पयेद्गव्यपयसेक्षुरसेन वा ।
तद्दशांशं हुनेदग्नौ पङ्कजैर्मधुमिश्रितैः ॥

भोजयेद्ब्राह्मणश्रेष्ठांस्तद्दशांशं महीपते ।
आचार्यचरणद्वन्द्वे तद्दशांशं सुवर्णकम् ॥

दत्वा प्राप्नोति महतीं विद्यासिद्धिं न संशयः ।
यद्वाऽष्टादशसाहस्रं नभोमासि जपेच्छुचिः ॥

त्रिशताधिकसाहस्रं घृतत्रिमधुमिश्रितैः ।
हुत्वा तप्तसुवर्णेन निर्मितं कुण्डलद्वयम् ॥

आचार्यकर्णयोर्दत्वा वर्षाशनमितंधनम् ।
दत्वाऽऽचार्यपदद्वन्द्वे गोयुग्मं च सवत्सकम् ॥ —१५

महतीं कृष्णविद्याया सिद्धिं प्राप्नोति शाश्वतीम् ।
त्रिलिख्य षडक्षरं पूर्वं वसुपत्राण्यतःपरम् ॥

तद्बहिः षोडशदलं ततोऽष्टादशपत्रकम् ।
चतुर्विंशति पत्राणि विलिख्याऽथ महीपते ॥

द्वात्रिंशत्पद्मपत्राणि त्रिवृत्तं चतुरस्रकम् ।
कामबीजं लिखेन्मध्ये साध्यकर्मसमन्वितम् ॥

चक्रायेत्यङ्गषट्कं च षट्कोणेषु ततोलिखेत् ।
कृष्णाक्षरवर्णांश्च वसुपत्रेष्वथो लिखेत् ॥

लिखेत्षोडशपत्रेषु षोडशार्णं श्रियःपतेः ।
अष्टादशसु पद्मेषु मन्त्रराजाक्षरानपि ॥ —२०

चतुर्विंशति पत्रेषु गायत्रीं श्रीपतेर्लिखेत ।
तद्वृत्तं कामराजेन वेष्टयित्वा ततःपरम् ॥

द्वात्रिंशतपद्मपत्रेषु गोपालानुष्टुभं लिखेत् ।
तद्वृत्तं पिण्डगोपालमन्त्रेण परिवेष्टयेत् ॥

द्वितीयं मातृकावर्णैर्वेष्टयित्वा ततःपरम् ।
पाशेनाङ्कुशबीजेन तृतीयमथवेष्टयेत् ॥

श्रीकृष्णयन्त्रमेतत्ते कथितं सर्वसिद्धिदम् ।
सर्वदुःखहरं सर्वदारिद्र्यौघविभेदमम् ॥

अस्मात्परतरं यन्त्रं नास्ति सिद्धिकरं भुवि ।
मूलेनात्र समावाह्य यजेत्कृष्णं जगत्पतिम् ॥ –२५

षडङ्गान्यग्निकोणेन षट्कोणेष्वर्चयेत्क्रमात् ।
द्वितीयं वासुदेवाद्यैः स्वस्वशक्तिसमन्वितैः ॥

रुक्मिणीं सत्यभामां च ततो नग्नजितामपि ।
सुनन्दामपि कालिन्दीं ततो जाम्बवतीमपि ॥

मित्रवृन्दां शुशीलां च तृतीयावरणेऽर्चयेत् ।
बलभद्रं रेवतीं च वसुदेवं च देवकीम् ॥

नन्दगोपं यशोदां च सुभद्रामर्जुनं तथा ।
चतुर्थावरणेऽभ्यर्च्य शक्रादीनथ पूजयेत् ॥

इत्थमभ्यर्च्य सततं देवकीतनयं विभुम् ।
सम्प्राप्य सकलाभीष्टं देववन्मोदतेऽन्वहम् ॥ –३०

कदम्बवृक्षमारूढं गोपीवसनहारिणम् ।
ध्यात्वाऽर्धरात्रे सप्ताहं सहस्रत्रितयं जपन् ॥

आकर्षयति भूपाल पत्नीमपि दृढव्रताम् ।
गोष्ठे गोपयसा हुत्वा सहस्त्रितयं शुचिः ॥

पशुवृद्धिमवाप्नोति यावज्जीवं न संशयः ।
दध्योदनं हुनेद्यस्तु नित्यमष्टोत्तरं शतम् ॥

सन्ततिव्यापिनीमन्नसमृद्धिं मासतो लभेत् ।
कदम्बद्रुममूलस्थो ध्यात्वा कृष्णं जगत्पतिम् ॥

लक्षद्वयमिमं जप्त्वा श्रीकृष्णमनुमादरात् ।
अणिमादिगुणैश्वर्यं लभते नाऽत्र संशयः ॥ –३५

ग्रामं गच्छन्नगरमपिवा मन्त्रजापी मनुष्यो
देवं कृष्णं सुखमनुमुहुस्तर्पयेद् दुग्धबुद्ध्या ।
शुद्धैस्तोयैः स तु बहुरसोपेतमाहारजातं
दद्यान्नित्यं प्रचुरधनधान्यांशुकाद्यं मुकुन्दः ॥

ध्यायन्मन्त्रीमन्त्रजापी च नित्यं यायाद्विद्वान् यत्र यत्र प्रयाति ।
तत्तत्प्राप्त्या कल्पकालं सुतुष्टः क्रीडन्नित्यं देववन्मानुषेषु ॥

मेधाकामः स्मरन्देवं मन्त्रं प्रणवसम्पुटम् ।
अयुतं सुशुचिर्भूत्वा सप्तरात्रं द्विजो जपेत् ॥

समस्तवेदशास्त्रार्थवक्ता जीवसमो भवेत् ।
भिक्षाहारो जपेन्मन्त्रं संवत्सरमतन्द्रितः ॥

बहुलां श्रियमाप्नोति सर्वज्ञो भवति ध्रुवम् ।
कन्यार्थी खादिरैर्हुत्वा दशसाहस्रमादरात् ॥ –४०

रुक्मिणीवल्लभं ध्यात्वा घृतत्रिमधुमिश्रितैः ।
दधिमध्वाज्ययुग्लाजैर्यद्वा हुत्वाऽयुतंबुधः ॥

सुन्दरीं रूपसंपन्नां कन्यामिष्टामवाप्नुयात् ।
नवनीताशनं कृष्णं ध्यात्वोलूखलबन्धनम् ॥

अयुतं नवनीतेन हुत्वा पुत्रमवाप्नुयात् ।
शतमष्टोत्तरं जप्त्वा पिबन्तं पूतनास्तनम् ॥

कृष्णं ध्यायेद्ग्रहग्रस्तात्पलायन्ते च तद्ग्रहाः ।
समस्तविषनाशार्थं कृष्णं कालियमर्दनम् ॥

जप्त्वा ततःशतं हुत्वा समस्तं नाशयेद्विषम् ।
विनतातनयारूढं हरन्तं पारिजातकम् ॥ –४५

जप्त्वा द्वादशसाहस्रं हुत्वाऽथ करवीरकैः ।
विजयी सततं भूत्वा देवबद्भुवि मोदते ॥

शनैश्चरदिनेऽश्वत्थं जपेदालभ्य पाणिना ।
अष्टोत्तरशतं शुद्धो म्रियते नापमृत्युभिः ॥

अश्नीयादन्वहं विद्वानन्नं सप्ताभिमन्त्रितम् ।
आयुरारोग्यमासाद्य बलं तेजश्चविन्दते ॥

जप्त्वा द्वादशलक्षाणि विद्यामेतां जितेन्द्रियः ।
कन्दर्पसदृशः कान्त्या विद्यया धिषणप्रभः ॥

जाम्बवत्सदृशायुष्मान् तेजसा भानुसन्निभः ।
भुक्त्वा भुक्त्वेह सकलान् भोगानपि मनोरमान् ॥ —५०

ब्रह्मलोके वसत्यन्ते दशपूर्वैर्दशापरैः ।
एतत्ते कृष्णविद्याया महात्म्यमघनाशनम् ॥
किञ्चिदुक्तं महाराज समस्तेप्सितसिद्धिदम् ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे षट्पञ्चाशोऽध्यायः ॥



## ॥ अथ सप्तपञ्चाशोऽध्यायः ॥



**श्री भगवानुवाच —**

अथ बुद्धादिविद्यानां साधनं किञ्चिदुच्यते ।
यासां विज्ञानतोवाऽपि पापराशिर्विनश्यति ॥

त्रयी बीजं हृदायुक्तं पदं भगवते ततः ।
वेदमार्गप्रतिष्ठाय प्राणकर्त्रे पदं ततः ॥

बुद्धरूपाय शब्दं च विष्णवे नम उच्चरेत् ।
बुद्धरूपस्य विद्येयं विष्णोस्त्रिजगतीपतेः ॥

समस्तपापकौघघ्नी दात्री सकलसम्पदाम् ।
मुनिरस्येरितो ब्रह्मा छन्दो गायत्रमीरितम् ॥

बुद्धरूपो महाविष्णुर्देवता सद्भिरीरितः ।
त्रिभिर्वर्णैश्चतुर्वर्णैरेकादशभिरक्षरैः ॥ —५

पञ्चभिश्च त्रिभिर्द्वाभ्यां षडङ्गन्यासईरितः ।
श्यामं प्रसन्नवदनं चतुर्बाहुं किरीटिनम् ॥

बुद्धरूपं भजे विष्णुं देवर्षिभिरभिष्टुतम् ।
दशांशं कमलैर्हुत्वा घृतत्रिमधुमिश्रितैः ॥

आचार्यचरणद्वन्द्वे दत्वा बहुलदक्षिणाम् ।
विद्यासिद्धिमवाप्नोति मुच्यते पातकैरपि ॥

सिद्धक्षेत्रं समाश्रित्य जप्त्वा लक्षमिमं मनुम् ।
महापातकसंघैश्च सद्य एव विमुच्यते ॥

अष्टाक्षरोदिते पीठे पूजयेद्बुद्धरूपिणम् ।
नारायणं जगन्नाथं सर्वसिद्धिप्रदं विभुम् ॥ —१०

अथ कल्किस्वरूपस्य श्रीपतेः परमात्मनः ।
प्रवक्ष्यामि महाविद्यां महासिद्धिप्रदायिनीम् ॥

प्रणवं नतिसंयुक्तं पदं भगवते ततः ।
कल्किरूपपदं पश्चाच्चतुर्थ्ययन्त समन्वितम् ॥

विष्णवे पदमाभाष्य नमःशब्दं ततोवदेत् ।
एषा कल्किस्वरूपस्य विद्या साक्षाच्छ्रियःपतेः ॥

समस्तकामफलदा महापातकभेदिनी ।
याज्ञवल्क्यो महायोगी मुनिरस्याः समीरितः ॥

पङ्क्तिश्छन्दः कल्किरूपी श्रीविष्णुर्देव उच्यते ।
बीजमुक्तं त्रयीबीजं शक्तिर्नतिरुदीरिता ॥ —१५

एकेनाक्षरयुग्मेन चतुर्भिःपञ्चभिस्तथा ।
त्रिभिर्द्वाभ्यां षडङ्गानि विन्यसेदिति साधकः

नीलमेघनिभं दिव्यरत्नसिंहासनेशुभे ।
समासीनं जगन्नाथं कालनीलाम्बुदद्युतिम् ॥

सर्वदुष्टहरं योगि मुनिसिद्धनिषेवितम् ।
धनुर्बाणधरं विष्णुं श्रिया देव्या समन्वितम् ॥

कल्किस्वरूपिणं देवं सर्वलोकहिते रतम् ।
कल्किरूपमिति ध्यात्वा वासुदेवं जगत्पतिम् ॥

जप्त्वा लक्षं महाविद्यां दशांशं तुलसीदलैः ।
मधुत्रितयसंमिश्रैर्हुत्वाऽऽचार्यपदाम्बुजे ॥ —२०

दक्षिणां वसुधां दत्वा बहुसस्यौघसङ्कुलाम् ।
विद्यासिद्धिमवाप्नोति मुक्तःस्यात्पापराशिभिः ॥

अष्टाक्षरोदिते पीठे पूजयेत्कल्किमच्युतम् ।
जप्त्वाचार्यस्य सान्निध्ये पञ्चषष्टिसहस्रकम् ॥

दशांशं कमलैर्हुत्वा श्वेताश्वं सपरिच्छदम् ।
बहुदक्षिणया युक्तं दत्वा श्रीगुरवे ततः ॥

भूत्वेह सार्वभौमोऽसौ देहान्ते मुक्तिमाप्नुयात् ।
वक्तारं सर्वविद्यानां ऋषिभ्यो यमुनातटे ॥

ध्यात्वा कल्किं महात्मानं जप्त्वा लक्षमतःपरम् ।
हुत्वा पलाशकुसुमैर्विद्यानां पारगो भवेत् ॥ -२५

पुत्रकामो हुनेत्पुत्रजीवैरयुतमादरात् ।
श्रीकामो बिल्वपत्रैश्च राज्यकामस्तु पङ्कजैः ॥

विद्याकामश्च हविषा भोगकामस्तथोत्पलैः ।
आयुष्यकामो जुहुयात् दूर्वाभिरयुतं शुचिः ॥

सहस्रं त्रिशतं वापि जप्त्वा वा शतमन्वहम् ।
जीवन्मुक्तो भवत्येव संशयो नात्र विद्यते ।

नामत्रयमहाविद्यामथ वक्ष्यामि भूपते ।
यदभ्यासपरो मुक्तो भवेत्संसारसागरात् ॥

अच्युतानन्तगोविन्दाः चतुर्थी नतिसंयुताः ।
असाध्यरोगसंहर्त्री भुक्तिमुक्तिफलप्रदा ॥ -३०

वसिष्ठो नारदो योगी कश्यपो ऋषयः स्मृताः ।
गायत्र्यादीनि छन्दांसि वराहो नृहरिस्तथा ॥

वामनो देवता प्रोक्तो विनियोगस्तु सिद्धये ।
पूर्वोक्तं यज्ञवाराहं नृहरिं वामनं विभुम् ॥

ध्यात्वा नामत्रयं नित्यं जप्त्वा सिद्धिमवाप्नुयात् ।
सिद्धविद्यामिमां प्राहुर्वेदवेदान्तपारगाः ॥

आचार्यदक्षिणैवास्य पुरश्चर्या समीरिता ।
बलवद्वातरोगेण पीडितो यदि मानवः ॥

स जपेच्छतसाहस्रमधःशायी जितेन्द्रियः ।
मृगदानं ततः साङ्गं कृत्वा तस्मात्प्रमुच्यते ॥ —३५

विषमज्वरयुक्तोऽपि शतसाहस्रमादरात् ।
कारयित्वा जपं विप्रैर्जुहुयादाम्रपल्लवैः ॥

कारयित्वा ततो होममममृताभिरथापि वा ।
असाध्येन ज्वरेणापि सद्य एव विमुच्यते ॥

दीर्घमायुष्यमन्विच्छन् दूर्वाभिरयुतं शुचिः ।
हुत्वा निरामयो दीर्घमायुष्यं लभते ध्रुवम् ॥

हुनेत्त्रिमधुसंमिश्रतिलैर्मेहस्य शान्तये ।
शान्त्यर्थं कुष्ठरोगस्य जप्त्वा लक्षत्रयंशुचिः ॥

राजतं वृषभं दत्वा साङ्गदक्षिणयान्वितम् ।
कुष्ठरोगाद्विमुच्येत दुर्विचित्रादपि ध्रुवम् ॥ —४०

अजीर्णरोगशान्त्यर्थं जप्त्वा शतसहस्रकम् ।
हविषा दशसाहस्रं हुत्वाग्निप्रतिमामथ ॥

सौवर्णीं दक्षिणायुक्तां दत्वा तस्माद्विमुच्यते ।
जितेन्द्रियो हविष्याशी जप्त्वा लक्षत्रयं बुधः ॥

दशांशं गोघृतं हुत्वा मन्त्रौषधरसायनैः ।
असाध्यैस्सर्वरोगैश्च मुक्तः स्यान्नात्र संशयः ॥

नामत्रयमहाविद्यां जपन्नन्वहमादरात् ।
आयुष्यं महदारोग्यं महतीं श्रियमक्षयाम् ॥

पुत्रपौत्राभिवृद्धिञ्च भोगानपि सुदुर्लभान् ।
सम्प्राप्य भगवद्धाम्नि वसन्त्यन्ते न संशयः ॥ —४५

प्रणवं नमसा युक्तं पदं भगवते ततः ।
सर्वाद्यगुणशब्दान्ते संख्यानाय समुच्चरेत् ॥

अनन्ताय पदं पश्चादव्यक्ताय नमःपदम् ।
अनन्तस्य महाविद्या साक्षात्सङ्कर्षणात्मनः ॥

उक्ता शङ्करजंप्तेयं महाभाग्यसमृद्धिदा ।
महेश्वरो मुनिः प्रोक्तो मन्त्रस्यास्य जगत्पतिः ॥

गायत्रमेवच्छन्दोऽस्य साक्षात्सङ्कर्षणो विभुः ।
पतञ्जलिरनन्तोऽसौ देवमुक्तो मनीषिभिः ॥

त्रिभिश्चतुर्भिरष्टाभिश्चतुर्भिश्चतुरक्षरैः ।
द्वाभ्यामिति षडङ्गानि न्यसेत्साधकपुङ्गवः ॥ —५०

सहस्रशिरसं देवं फणासाहस्रशोभितम् ।
वसुधां मूर्ध्नि बिभ्राणं लाङ्गलं मुसलं हलम् ॥

वासुक्यादिमहानागैस्सर्वतः परिवारितम् ।
सर्वविद्यानिधिं सर्वदेवर्षिगणवन्दितम् ॥

अनन्तं परमात्मानं भजामि जगतीपतिम् ।
ध्यात्वा नित्यं जपेद्विद्यामनन्तस्य जगत्पतेः ॥

विद्यानां पारगो भूत्वा परां मुक्तिमुपेत्यसौ ।
अर्चयेद्वैष्णवे पीठे नागराजं जगत्पतिम् ॥

मूर्तिं मूलेन संकल्प्य समभ्यर्च्योपचारकैः ।
अग्नीशासुरवायव्यमध्यदिक्षु षडङ्गकम् ॥ —५५

अभ्यर्च्य वासुकिं तक्षकं कर्कोटकमप्यथ ।
ततः पद्मं महापद्मं शङ्खं च गुलिकं तथा ॥

कुमुदं च ततश्चित्रकेतुं नारदपर्वतौ ।
इन्द्रादीनथ दिक्पालानायुधान्यप्यतःपरम् ॥

इत्थं सङ्कर्षणं देवमभ्यर्च्य त्रिजगत्पतिम् ।
जप्त्वा लक्षं महाविद्यां दशांशं त्रिमधुप्लुतैः ॥

हुत्वाऽथ दशसाहस्रं तिलैः शुक्लैर्महीपते ।
आचार्यपादकमले दत्वा बहुलदक्षिणाम् ॥

विद्यासिद्धिमवाप्यासौ सर्वविद्यानिधिर्भवेत् ।
अनन्तस्य महाविद्यां जपन्नन्वहमादरात् ॥ –६०

न सर्पभयमाप्नोति न भयं विषसंभवम् ।
विद्यानां पारगो भूत्वा भगवत्कलयान्वितः ॥

समृद्धिं महतीं प्राप्य धनधान्यादिसङ्कुलाम् ।
व्रजत्यन्ते हरिपदं दिव्यरूपधरो नृप ॥

इत्यनन्तमहाविद्याविधानं किञ्चिदीरितम् ।
नरनारायणीविद्याप्रभावो वक्ष्यते ततः ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे सप्तपञ्चाशोऽध्यायः ॥

## ॥ अथाऽष्टपञ्चाशोऽध्यायः ॥

**श्री भगवानुवाच –**

शृणु राजन् महाभाग बदरीवनवासिनः ।
मम विद्यां प्रवक्ष्यामि सद्यः सकलसिद्धिदाम् ॥

प्रणवं पूर्वमुच्चार्य हृदयेन समन्वितम् ।
भगवत्पदमाभाष्य चतुर्थ्यन्तसमन्वितम् ॥

उपाद्यशमशीलायोपेति वाक्यं रतापदम् ।
नात्म्याया किञ्चन पदं वित्ताय पदमप्यथ ॥

ऋषभाय पदं पश्चान्नरनारायणाय च ।
परमेत्यथ हंसाय परमेति पदं ततः ॥

गुरवे पदमात्मरामाधीति पतये ततः ।
हृदयद्वितयं पश्चाद्विद्यैषा समुदीरिता ॥ —५

नरनारायणीनाम्ना सर्वविद्याफलप्रदा ।
भेदिनी सर्वपापानां दुःखसंयनिवारिणी ॥

ज्ञानसिद्धिप्रदा साक्षान्मम सायुज्यसिद्धिदा ।
नारदाय पुरा प्रोक्ता ममैव करुणावता ॥

समस्तसिद्धिदा सद्यः सर्वसंपत्तिहेतुकी ।
अहं समस्तलोकानामाचार्यः परिकीर्तितः ॥

मद्भक्तानामियं साक्षाद्गुरुविद्येति कीर्तिता ।
श्रीमदष्टाक्षरीदाता सोऽहमेव महीपते ॥

मद्रूपिणं सदाचार्यं ये ध्यायन्ति दिने दिने ।
तेषां भुक्तिञ्च मुक्तिञ्च प्रदास्यामि न संशयः ॥ —१०

अहं समस्तलोकानां हिताय जगतीतले ।
बदरीकानने नित्यं निवसामि नरान्वितः ॥

अहमेव त्रिलोकानामीश्वरः परमेश्वरः ।
ब्रह्मविष्णुमहेशेन्द्र दैवताकृतिरच्युतः ॥

नारायणोऽस्मि भगवान् सर्वज्ञः सर्वरूपधृत् ।
धर्मेण प्रार्थितस्तस्य पुत्रत्वं गतवानहम् ॥

बदरीकानने नित्यं स्थित्वाऽहं सर्वपालकः ।
भूत्वाऽहं सर्वभक्तानां दास्यामि परमं पदम् ॥

बदरीकाननं पुण्यमिदमत्यन्तपावनम् ।
मत्परिग्रहतो भूप दर्शनान्मोक्षसिद्धिदम् ॥ –१५

यत्रैवालकनन्देयं निर्गता मदनुज्ञया ।
स्नात्वैवालकनन्दायां सकृद्दृष्ट्वापि मां विभुम् ॥

मत्पदं प्राप्नुवन्त्यन्ते ब्रह्मानन्दसुखान्विताः ।
षष्ट्यक्षरीमिमां विद्यां नरनारायणीं मम ॥

यत्रकुत्रापि वा नित्यं ये जपन्ति यतव्रताः ।
सम्प्राप्य महतीं सिद्धिं ते मत्पदमवाप्नुयुः ॥

संहर्त्री पापसंघानां सर्वपुण्यफलप्रदा ।
चतुर्विधमहामुक्तिसिद्धिदेयं सनातनी ॥

ये जपन्त्यन्वहं भक्त्या मम विद्यां दृढव्रताः ।
तस्याहं पितृवन्नित्यं प्रदास्ये सर्ववांछितम् ॥ —२०

सान्निध्ये सततं तस्य तिष्ठामि सकलामरैः ।
सिद्धविद्यामिमां प्राहुर्योगिनो वीतकल्मषाः ॥

मद्विद्यानुस्मृतिर्नित्यं सद्यो दुरितभेदिनी ।
मद्विद्यासिद्धिरुदिता गुरुदक्षिणयैव हि ॥

भगवद्दर्शने यस्य साक्षाद्वांछा भवेदिह ।
ममविद्यां जपेदेतां नरनारायणीं शुभाम् ॥

आधिपत्यं समस्तानां विद्यानामिह सन्ततम् ।
अणिमाद्यष्टसिद्धीनामाधिपत्यमचञ्चलम् ॥

शङ्खादीनां निधानानामीशत्वमपिसन्ततम् ।
आधिपत्यं महर्षीणां ब्रह्मर्षीणां च योगिनाम् ॥ —२५

इच्छता मम जप्येयं विद्या सकलसिद्धिदा ।
नरनारायणीं विद्यां नित्यं मम जपन् शुचिः ॥

मद्रूपिणमथाचार्यं सन्तोष्यान्वहमादरात् ।
अष्टाक्षरादिविद्यानामपि सिद्धिं परां व्रजेत् ॥

विना होमं पुरश्चर्यां विना तर्पणमन्वहम् ।
मद्विद्याया जपेनैव सिद्ध्यत्यष्टाक्षरी मम ॥

सप्तकोटिमहामन्त्रा अपि सिद्ध्यन्ति भूपते ।
एकामपि महाविद्यां मम जप्त्वाऽन्वहं शुचिः ॥

सिध्दो भवति सर्वत्र सिध्द्यष्टकसमन्वितः ।
अष्टाङ्गयोगसहितो जरामरणवर्जितः ॥ —३०

अणिमादिगुणान्प्राप्य लोकेषु विहरत्यसौ ।
नारदो भगवानस्य मुनिरुक्तो महर्षिभिः ॥

बदरीकाननाध्यक्षो भगवान् परमेश्वरः ।
नरनारायणःस्वामी देवता प्रोच्यते बुधैः ॥

विनियोगो भगवतः प्रीत्यर्थे समुदीरितः ।
नाङ्गन्यासकरन्यासौ नापि न्यासान्तरं नृप ॥

विद्यतेऽस्या महाराज सिध्दविद्या यतोनृप ।
सुरम्येऽलकनन्दायास्तटे बदरिकाश्रमे ॥

ब्रह्मरुद्रमहेन्द्रादिदेवतैः समलङ्कृते ।
वसिष्टवेदव्यासादिमहर्षिभिरधिष्ठिते ॥ —३५

योगमुद्राधरं साक्षाज्जगत्कर्तारमच्युतम् ।
नवनीलाम्बुदश्यामं जटामण्डलधारिणम् ॥

पद्मरागमणिस्वर्णकुण्डलद्वयभूषितम् ।
धनुर्बाणधरं दिव्यपीतांबरविराजितम् ॥

कौस्तुभोद्भासितोरस्कं मुक्ताहारविभूषितम् ।
दिव्यरत्नाङ्कितस्वर्णमकुटावृतमस्तकम् ॥

रत्नाङ्गुलीयकस्वर्णकाञ्चीदामविभूषितम् ।
स्मितवक्त्रं विशालाक्षं कोटिमन्मथसुन्दरम् ॥

सर्वलोकहितोद्युक्तं सर्वलोकैकसाक्षिणम् ।
आचार्यं सर्वलोकानां गुरूणां परमं गुरुम् ॥ —४०

आत्मारामं जगद्वन्द्यं नरेण सहितं विभुम् ।
नारायणं जगद्वन्द्यं भगवन्तमुपास्महे ॥

ध्यात्वेत्थं सर्वजगतामीश्वरं मां श्रियःपतिम् ।
नरनारायणीं विद्यां मम नित्यं जपेद्बुधः ॥

अनभ्यर्च्य सदाचार्यमजप्त्वेमं मनुं मम ।
अष्टाक्षरादि विद्यानां न सिद्धिं लभते क्वचित् ॥

अविच्छिन्नोपासनाऽस्याः पुरश्चर्या मनोःस्मृता ।
नरनारायणीं विद्यामजप्त्वा मम वल्लभाम् ॥

अष्टाक्षरादिविद्यानां पुरश्चर्याशतैरपि ।
लभते न परां सिद्धिमिति वेदानुशासनम् ॥ —४५

नित्यमाचार्यशुश्रूषा नरनारायणी जपः ।
द्वयमेव महासिद्धिप्रदं लोकेषु भूपते ॥

चतुर्वेदानधीत्यापि यागान् कृत्वापि कोटिशः ।
महादानानि कृत्यानि पुरश्चर्याशतं तु वा ॥
नरनारायणीं विद्यामनुपास्य न सिद्धिभाक् ।
सुदर्शनमहाविद्यां प्रवक्ष्याम्यतःपरम् ॥
यामुपास्य नरो नित्यं विजयश्रीयुतो भवेत् ।
चन्द्रबीजव्योमवर्णं चन्द्रदीर्घाग्निसंयुतम् ॥
वैश्वानरं च कवचमस्त्रबीजमतःपरम् ।
सुदर्शनमहाविद्या षडर्णेयमुदीरिता ॥ —५०
प्रणवं नारसिंह्मं च निक्षिप्यादौ दिने दिने ।
जप्तव्येयं महाविद्या विघ्नसंघनिवारिणी ॥
भूतप्रेतपिशाचादिमहाभयनिवारिणी ।
सर्वशत्रुक्षयकरी विषदारिद्र्यघातिनी ॥
अहिर्बुध्न्यो मुनिः प्रोक्तो मन्त्रस्यास्य महामतिः ।
सुदर्शनात्मा भगवान् देवो विष्णुरुदीरितः ॥
कवचं बीजमित्युक्तं शक्तिरस्त्रमुदीरितम् ।
सुदर्शन श्रीनृहरि प्रीत्यर्थं विनियुज्यते ॥
शङ्खं चक्रं च चापं परशुमसिमिषुं शूलपाशाङ्कुशाग्नीन्
बिभ्राणं वज्रखेटं हलमुसलगदाकुन्तमप्युग्रदंष्ट्रम् ।
ज्वालाकेशं त्रिणेत्रं ज्वलदनलनिभं हारकेयूरभूषं
ध्यायेत्षट्कोणसंस्थं सकलरिपुगणप्राणसंहारचक्रम् ॥ —५५

इत्थं सुदर्शनात्मानं नृहरिं जगतीपतिम् ।
ध्यात्वा जप्त्वा यथाशक्त्या विघ्नसंघविवर्जितः ॥

विजित्य सकलान् शत्रून् विमुक्तः सर्वपातकैः ।
विमुक्तः सकलापद्भ्यः पुरुषार्थचतुष्टयम् ॥

अवश्यं लभते मन्त्री नित्यमाचार्यभक्तिमान् ।
अतःपरं प्रवक्ष्यामि वायुपुत्रमहामनुम् ॥

यमुपास्य नरोनित्यं महाविजयसिद्धिभाक् ।
प्रणवं नमसा युक्तं पदं भगवते ततः

आञ्जनेयपदं पश्चाच्चतुर्थ्यन्तसमन्वितम् ।
पदं महाबलायेति पदं हनुमते ततः ॥ —६०

वह्निजायान्वितो मन्त्र स्त्रयोविंशाक्षरःस्मृतः ।
मन्त्रराज इति ख्यात आञ्जनेयस्य मारुतेः ॥

महापातकसंघघ्नः सर्वकामफलप्रदः ।
विजयश्रीप्रदो नित्यं लोकत्रयवशङ्करः ॥

अगस्त्यो भगवानस्य मुनिरित्युच्यते बुधैः ।
छन्दो गायत्रमित्युक्तमञ्जनानन्दनो विभुः ॥

देवता वायुतनयो हनूमान् कपिनायकः ।
बीजं त्रयीमयं प्रोक्तं शक्तिर्नतिरुदीरिता ॥

अञ्जनानन्दनप्रीत्यै विनियोगः उदीरितः ।
त्रिभिश्चतुर्भिः पञ्चार्णैः पञ्चभिश्चतुरक्षरैः ॥
द्वाभ्यामिति षडङ्गानि कृत्वा ध्यायेन्मरुत्सुतम् ॥ —६५

वन्दे बालदिवाकरायुतनिभं देवारिदर्पापहं
देवेन्द्र प्रमुखामरस्तुतिपदं सीताविशोकापहम् ।
मौञ्जीरत्नविचित्रकुण्डललसत्कौपीनकृष्णाजिनं
वज्राङ्गं सुमहाबलं कपिवरं श्रीरामदूतं विभुम् ॥

ध्यात्वेत्थमञ्जनासूनुं नित्यं बिजयसिद्धिदम् ।
जप्त्वा विजयमाप्नोति दिवि वा भुवि वा रणे ॥

आचार्यचरणद्वन्द्वशुश्रूषाऽस्य दिने दिने ।
पुरश्चरणसंसिद्धिकरी प्रोक्ता महर्षिभिः ॥

जयार्थिनामयं शत्रुसंघातकरणोऽन्वहम् ।
जयलक्ष्मीप्रदो नृणामणिमाद्यष्टसिद्धिदः ॥

पूजाऽस्य वैष्णवे पीठे शैवे वापि समीरिता ।
अञ्जनातनयस्यामुं प्रत्यहं मन्त्रनायकम् ॥ —७०

त्रिशतं वा शतं धीमानष्टविंशतिधापि वा ।
जप्त्वा विजयमासाद्य सर्वसिद्धियुतो भवेत् ॥

यः स्वगेहे हनूमन्तं मन्त्रराजेन पूजयेत् ।
अणिमादिगुणोपेता तद्गृहे श्रीरचञ्चला ॥

राजद्वारे महाघोरे बिलद्वारेऽपि दुर्गमे ।
यक्षराक्षसवेतालपिशाचादिमहाभये ॥

स्मरन्नित्यं महामन्त्रं सद्यो मुच्येत बन्धनात् ।
अष्टाविंशाधिकं मन्त्रं जप्त्वा त्रिशतमन्वहम् ॥

द्वादशाज्याहुतीः कृत्वा समभ्यर्च्य हरीश्वरम् ।
विन्दत्यचलसौभाग्यं स प्राप्नोत्यन्वहं जपन् ॥ —७५

अचलां श्रियमाप्नोति धनधान्यादिसङ्कुलाम् ।
राजानो यान्ति दासत्वं शत्रवो मित्रतां तथा ॥

विमुक्तः सकलापद्भ्यः पुत्रपौत्रादिसङ्कुलाम् ।
समृद्धिं महतीं लब्ध्वा मुक्तिं प्राप्नोति शाश्वतीम् ॥

गरुडस्य महाविद्यां प्रवक्ष्यामि ततःपरम् ।
यामुपास्य विमुक्तः स्यात् कालकूटभयादपि ॥

प्रणवं नमसा युक्तं पदं भगवते ततः ।
महागरुडशब्दं च चतुर्थ्यन्तसमन्वितम् ॥

पदं वज्रनखेत्युक्त्वा वज्रतुण्डाय तत्पदम् ।
वज्रपक्षामृताऽनघशरीराय पदं ततः ॥ —८०

एह्येहीति महाशब्दं गरुडेति पदं ततः ।
दुष्टान् नागान् छिन्धि छिन्धि पदं दुष्टानथोच्चरेत् ॥

राक्षसान् छिन्धि छिंधीति आवेशय पदत्रयम् ।
बद्ध्वा हुं फट् पदं पश्चादुच्चरेदियमिष्टदा ॥

गरुडस्य महाविद्या समस्तविषभेदिनी ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रं छन्द ईरितम् ॥

गरुडो देवता प्रोक्तः समस्तविषभञ्जनः ।
हेमाद्रिशिखराकारं पूर्णचन्द्रनिभाननम् ॥

दीर्घबाहुं वृषस्कन्धं नागाभरणभूषितम् ।
अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः ॥ –८५

तक्षकः कटिसूत्रं तु हारः कर्कोटकस्तथा ।
पद्मस्तु दक्षिणे कर्णे महापद्मस्तु वामतः ॥

शङ्खपालः शिरोदेशे गुलिकस्तु भुजान्तरे ।
ध्यायेद्देवं त्रिसन्ध्यायामात्मानं गरुडात्मकम् ॥

विषं नाशयति क्षिप्रं वायुः शीघ्रमिवाम्बुदम् ।
आजानुहेमवर्णाभमानाभेस्तुहिनप्रभम् ॥
आनासं शुकतुण्डाभमामूर्ध्नोऽञ्जनसन्निभम् ॥

यो विश्वस्य प्राणभूतस्तनुरपि च हरेर्यो निकेतस्वरूपो
यं संचिन्त्यैव सद्यःस्वयमुरगवधूवर्गगर्भाःपतन्ति ।
चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं
वन्दे छन्दोमयं तं खगपतिममलं स्वर्णवर्णं सुपर्णम् ॥

ध्यात्वेत्थं गरुडं विष्णुवाहनं पक्षिनायकम् ।
गरुडस्य महाविद्यां जप्त्वा नित्यं फलप्रदाम् ॥ –९०

सद्यो विनाशयत्येव स्थावरं जङ्गमं विषम् ।
गरुडस्याथ गायत्रीं वदामि सकलेष्टदाम् ॥

यामुपास्य सुपर्णात्मा भवेन्नित्यमकल्मषः ।
पदं तत्पुरुषायेति विद्महे पदमप्यथ ॥

सुवर्णपक्षशब्दं च चतुर्थ्यन्त समन्वितम् ।
धीमहीति पदोपेतं तन्नो गरुड इत्यथ ॥

प्रचोदयादिति पदं विद्यैषा समुदीरिता ।
प्रणवाद्या समस्ताघभेदिनी विषनाशिनी ॥

पितामहो जगद्धाता मुनिरस्यसमीरितः ।
छन्दो गायत्रमित्युक्तं देवता गरुडःस्मृतः ॥ –९५

पूर्वोक्तं कथितं ध्यानमस्यापि मुनिसत्तमैः ।
जप्त्वा गरुडगायत्रीं संहरेत्सकलं विषम् ॥

अष्टोत्तरशतं नित्यमष्टादशधापि वा ।
जप्त्वान्वहं पौर्णमास्याममायां वा समाहितः ॥

त्रिशतं जुहुयादाज्यं ज्वलिते जातवेदसि ।
न तं तत्पुत्रपौत्रादीनपि पादहता अपि ॥

हिंसन्ति पन्नगाः क्रूराः शतास्या अपि भूपते ।
षण्मासानन्तरं तस्य हस्ताभ्यां स्पर्शमात्रतः ॥

हालाहलं महाघोरमपि सद्यो विनश्यति ।
चक्षूरोगेषु घोरेषु द्वादशाहमतन्द्रितः ॥ —१००

जप्त्वा त्रिशतमेकान्ते प्रत्यहं साधकोत्तमः ।
आयुरारोग्यमचलमैश्वर्यमणिमादिकम् ॥

पुत्रपौत्राभिवृद्धिं च लब्ध्वा भोगानथाक्षयान् ।
तद्विष्णोः परमं धाम यात्यन्ते नात्र संशयः ॥

जपो द्वादशसाहस्रं पुरश्चर्यास्य कथ्यते ।
गोत्रयं दक्षिणा प्रोक्ता तन्मूल्यं वा सदक्षिणम् ॥

सहस्रं जुहुयादाज्यं ज्वलिते जातवेदसि ।
विप्रा द्वादशसंख्याका भोजनीयाः प्रयत्नतः ॥

कृत्वैवं नात्र सन्देहो गरुडात्मा भवेत्स्वयम् ।
श्रीमदष्टार्णविद्यायाः सिद्धिमिच्छन् महीपते ॥ - १०५

रश्मिमालामिमां स्मृत्वा सिद्धिं प्राप्नोति शाश्वतीम् ।
अपि सर्वप्रयत्नेन श्रीमदष्टाक्षरी शुभा ॥

यस्य सिद्धा भवत्यस्य नासाध्यं विद्यते भुवि ।
विधानान्तरमप्यस्ति श्रीमदष्टार्णसिद्धिदम् ॥
तत्कृतं चेन्महासिद्धिर्भविष्यति न संशयः ॥

इति श्रीमदनुत्तरब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे अष्टपञ्चाशोऽध्यायः ॥

## ॥ अथैकोनषष्टितमोऽध्यायः ॥



राजोवाच —

भगवन्देवदेवेश नारायण कृपानिधे ।
भूयोऽपि श्रीमदष्टार्णसाधनं सर्वसिद्धिदम् ॥

वद मे सर्वजगतां हिताय जगतीपते ।

श्री भगवानुवाच –

शृणु राजन्प्रवक्ष्यामि साधनान्तरमिष्टदम् ॥

श्रीमदष्टार्ण विद्यायास्सर्वलोकोपकारकम् ।
सर्वमन्त्रमहाराज्ञी श्रीमदष्टाक्षरी शुभा ॥

यस्य सिद्ध्यति तस्याशु सर्वास्सिद्ध्यन्ति सिद्धयः ।
शृणु राजन् प्रवक्ष्यामि शुचिः प्रयतमानसः ॥

श्रीमदष्टार्णविद्यायाः साधनान्तरमुत्तमम् ।
भानुवासरसंयुक्ता सप्तमी या निगद्यते ॥ –५

सा तिथिस्सर्वपापघ्नी सर्वपुण्यफलप्रदा ।
रविसङ्क्रमणं तत्र जायते यदि सुव्रत ॥

नाम्ना चूडामणिर्योगो दुर्लभोऽयं स्मृतो बुधैः ।
अस्तिचेत्तत्र सङ्क्रान्तिश्शतक्रतुफलप्रदः ॥

गत्वौ तदर्धफलदं योगमाहुर्महर्षयः ।
ब्राह्मे काले यदि भवेत्क्रतुकोटिफलप्रदम् ॥

उदयात्परतो नाडीयपञ्चके वसुधापते ।
रविसङ्क्रमणं वाजिमेधकोटिफलप्रदम् ॥

उदयानन्तरं भानुवासरो वेन्दुवासरः ।
भवेद्यदि महाराज तत्पुण्यफलमक्षयम् ॥ –१०

न शक्यते मया वक्तुं किमुतान्यैर्महर्षिभिः ।
तत्रापि रविणा चापराशिसंक्रमणं यदि ॥

ब्राह्मे काले भवेत्तत्र फलं वक्तुं न शक्यते ।
अश्वमेधसहस्रस्य फलं वक्तुं हि शक्यते ॥

न शक्यते मया वक्तुमेतस्य फलमक्षयम् ।
महादानसहस्रस्य राजसूयायुतस्य च ॥

सुकृतं शक्यते वक्तुमत्र वक्तुं न शक्यते ।
यदि ब्राह्मे मुहूर्ते स्याद्रविसङ्क्रमणं शुभम् ॥

सोमेन भानुना युक्तं रविपर्वशतप्रभम् ।
महाचूडामणिर्नाम्ना योगोऽलभ्योऽयमुत्तमः ॥ –१५

सप्तम्यां यदिमध्याह्ने रविसंक्रमणं भवेत् ।
सोमेन रविणा वापि सहितं हस्तसंयुतम् ॥

चिन्तामणिं योगमुदाहरन्ति समस्त साम्राज्यसुखैकहेतुम् ।
समस्तपापौघ विनाशहेतुं लक्ष्मीशसम्पूर्णकटाक्षहेतुम् ॥

न तत्र पुण्यं गणितुं हि शक्यते मया विधात्रा गिरिशेन वापि ।
तत्रापि कर्काटक भानुसङ्क्रमो योगाधिराजो भुवि कथ्यतेऽसौ ॥

यदिस्याज्झषसंक्रान्तिस्सप्तम्यां हस्तसंयुता ।
रविणावेन्दुना युक्ता मध्याह्ने वसुधापते ॥

विजयाख्यं महायोगमिमं प्राहुर्महर्षयः ।
चापसङ्क्रमणं भानोर्यदि ब्राह्मे मुहूर्तके ॥ –२०

मध्याह्ने झषसंक्रान्तिस्तंमासं विजयं विदुः ।
एकैकस्मिन् दिने तत्र जपहोमादिकं कृतम् ॥

पुरश्चर्याफलं प्राहुरागमार्थविशारदाः ।
महादानसहस्रस्य फलं वक्तुं हि शक्यते ॥

आचार्यदक्षिणापुण्यमत्रवक्तुं न शक्यते ।
एकैकस्मिन् दिने तत्र कृसरेणाहुतिं शुभाम् ॥

राजसूयाश्वमेधानां सहस्रफलमश्नुते ।
मासेऽत्र श्रीमदष्टार्णपुरश्चरणमादरात् ॥

कृत्वा कोटिपुरश्चर्याफलं निःसंशयं लभेत् ।
श्रीमदष्टार्णविद्याया मासेऽत्र वसुधापते ॥ –२५

पुरश्चर्यां प्रवक्ष्यामि समाहितमनाः शृणु ।
उत्थायापररात्रान्ते धनुस्संक्रमणेरवेः ॥

आचार्यं दण्डवन्नत्वा तदाज्ञां प्रतिगृह्य च ।
आचार्यं समलङ्कृत्य वासोलङ्कारचन्दनैः ॥

स्नात्वा तत्र विशुद्धात्मा नित्यसन्ध्यामुपास्य च ।
शालग्रामशिलाचक्रे श्रीपतेर्वसुधापतेः ॥

चक्रयुक्ते समभ्यर्च्य साङ्गावरणमादरात् ।
उच्चरन्निन्दिरानाथब्रह्मविद्यां फलप्रदाम् ॥

कोमलैस्तुलसीपत्रैर्बिल्वपत्रैरथापि वा ।
अथामलकपत्रैर्वा दूर्वाग्रैः कुसुमान्वितैः ॥ —३०

शमीपत्रैः पञ्चशतमर्चयेत्प्रत्यहं नृप ।
जीरकार्द्रकसंयुक्तं मुद्गान्नं घृतसंयुतम् ॥

गुडयुक्तं समर्प्याथ दत्वा पुष्पाञ्जलिं ततः ।
श्रीमदष्टाक्षरीं विद्यां सहस्रं प्रत्यहं जपेत् ॥

जप्त्वा पञ्चशतं वापि विद्यां श्रीहृदयाभिधाम् ।
जपेत्पञ्चशतं वापि द्वादशार्णं श्रियोऽथवा ॥

प्रत्यहं ज्वलिते वह्नौ मुद्गान्नं गुडसंयुतम् ।
जीरकार्द्रकसंयुक्तं गोघृतेन समन्वितम् ॥

हुनेदष्टोत्तरशतं श्रीमदष्टार्णविद्यया ।
तथैवाष्टोत्तरशतं हुनेच्छ्रीहृदयेन च ॥ —३५

द्वादशार्णश्रिया वापि ततो गव्याज्यमादरात् ।
भगवद्रश्मिविद्याभिरेकैकामाहुतिं हुनेत् ॥

झषसङ्क्रान्तिपर्यन्तमित्थं कृत्वा दिने दिने ।
झषसङ्क्रमणे प्राप्ते तत्राभ्यर्च्यादिपूर्ववत् ॥

तत्रापि पूर्ववज्जप्त्वा मुद्गान्नं गुडसंयुतम् ।
बिल्वपत्रसमायुक्तं तिलगव्याज्यसंयुतम् ॥

हुत्वा पञ्चशतं पूर्वं श्रीमदष्टार्णविद्यया ।
प्रसन्नलक्ष्मीमन्त्रेण द्वादशार्णश्रियापि वा ॥

अष्टाविंशाधिकशताधिकसहस्रमादरात् ।
हुत्वाऽथ रश्मिविद्याभिर्जुहुयाद्गोघृतं त्रिधा ॥ —४०

हुत्वा जयादिभिः पश्चात् कृत्वा ब्रह्मार्पणाहुतिम् ।
अग्निं प्रदक्षिणीकृत्य भगवन्तं श्रियःपतिम् ॥

पञ्चशतं ब्रह्मविद्यामुच्चार्याथ प्रपूजयेत् ।
आचार्यचरणद्वन्द्वं साष्टाङ्गं दण्डवन्नमेत् ॥

समर्प्य वासोयुगलं नवीनं सूक्ष्ममुत्तमम् ।
पद्मरागसमायुक्तं वज्रबिन्दुसमन्वितम् ॥

षष्टिचिन्नुकसंतप्तहाटकेन विनिर्मितम् ।
कुण्डलद्वितयं दद्यादवश्यं तस्य कर्णयोः ॥

बहुसस्यसमायुक्तां बहुदक्षिणयान्विताम् ।
आचार्यायार्पयेद्धीमान् महतीं सवसुन्धराम् ॥ —४५

धेनुं पयस्विनीं दद्यात्सवत्सां दक्षिणान्विताम् ।
पञ्चाढकमिता मुद्गा देया आचार्यमन्दिरे ॥

धनाढ्यो राजपुत्रस्तु ग्राममेकं समर्पयेत् ।
ग्रामस्य दक्षिणा प्रोक्ता निष्कसाहस्रकाञ्चनम् ॥

यथाशक्तिधनं वापि वित्तलोभं परित्यजेत् ।
नाल्पसस्या मही देया नरकक्लेशदुःखदा ॥

नाल्पक्षीरा प्रदातव्या धेनुरल्पफलप्रदा ।
महादानानि कुर्वीत राजा वा राजपुत्रकः ॥

श्रोत्रियाय दरिद्राय कूष्माण्डं दक्षिणान्वितम् ।
पुत्रपौत्राभिवृद्ध्यर्थं दद्यात्पापनिवर्तकम् ॥ —५०

दशदानानि देयानि विभवे सति साधकैः ।
झषसङ्क्रमणे तस्मिन्नेकाहुत्याऽनले शुभे ॥

लक्षहोमफलं प्राहुः पुराणाः परमर्षयः ।
तत्राचार्यपदाम्भोजे दत्वा सस्ययुतां महीम् ॥

सप्तद्वीपवतीं भूमिं सरत्नाकरमेखलाम् ।
दत्वा यत्फलमाप्नोति तदवश्यमवाप्नुयात् ॥

कुण्डलद्वितयं दत्वा तत्राचार्यस्य कर्णयोः ।
आकल्पकोटिदानस्य फलमक्षयमश्नुते ॥

दिव्यालङ्कारसुभगो दिव्यचन्दनचर्चितः ।
दिव्यवस्त्रधरःस्रग्वी जरामरणवर्जितः ॥ —५५

पितुर्मातुश्च पत्न्याश्च निमग्नान्नरकार्णवे ।
पितॄणां शतमुद्धृत्य सुपर्णध्वजभूषितम् ॥

विमानमधिरुह्यान्ते दिव्यकन्याशतान्वितः ।
भगवत्सदृशाकारो मोदते परमे पदे ॥

दत्वा पयस्विनीं धेनुं मुद्गान्नं झषसङ्क्रमे ।
महादानसहस्रस्य फलमक्षयमश्नुते ॥

मासं कृत्व पुरश्चर्यामित्थं मकरसङ्क्रमे ।
विशेषहोमं कृत्वाऽत्र दत्वाचार्याय दक्षिणाम् ॥

पुरश्चर्या सहस्रस्य साङ्गस्य फलमक्षयम् ।
सम्प्राप्य साक्षात्स्वप्ने वा पश्यत्येव श्रियःपतिम् ॥ —६०

धनधान्यसमायुक्ता मुक्तारत्नौघसङ्कुला ।
तन्मन्दिरे निवसति महालक्ष्मीरचञ्चला ॥

विद्यानामपि सर्वासामाधिपत्यमथाक्षयम् ।
सम्प्राप्य पुत्रपौत्रादिसमृद्धिं महतीमपि ॥

अवाप्य सकलान् भोगान् भुक्त्वेहापि सुदुर्लभान् ।
अवश्यं मुक्तिमाप्नोति सहस्रकुलसंयुतः ॥

शताढकमिता भूमिर्बहुसस्यसमन्विता ।
दानार्थं शस्यते भूप बहुदक्षिणयान्विता ॥

पञ्चाशदाढकमिता यद्वा शस्ता वसुन्धरा ।
सहस्रधेनुदानाच्च हयसाहस्रदानतः ॥ —६५

हस्तिसाहस्रदानाच्च महीदानं विशिष्यते ।
महीदानं महादानसहस्रादपि सिद्धिदम ॥

प्राहुर्महर्षयो दिव्यवेदा ब्रह्मादयोऽपि च ।
अशक्तो मन्दभाग्यश्चेद्विक्षित्वा शूद्रकानपि ॥

सूक्ष्मं वासोयुगं दत्वा वासोऽलङ्करणादिभिः ।
आचार्यपत्नीमभ्यर्च्य पञ्चनिष्कमितं धनम् ॥

दद्यादाचार्यपादब्जे तत्राशक्तोऽपि भूपते ।
धेनुं पयस्विनीं दत्वा चतुर्निष्कमितं धनम् ॥

दत्वा पञ्चाढकमितान् मुद्गानपि समर्पयेत् ।
अवश्यं सिद्धिमाप्नोति दरिद्रोऽपि न संशयः ॥ —७०

नारी वा पुरुषो वापि पुण्यकाले समागते ।
कूष्माण्डं सफलं दत्वा श्रोत्रियाय कुटुम्बिने ॥

विमुच्यते महापापैरपि सौभाग्यमुत्तमम् ।
प्राप्य वंशाभिवृद्धिं च महेन्द्रपदभाग्भवेत् ॥

कार्तिके पौर्णमास्यां च झषसंक्रमणे शुभे ।
कूष्माण्डं सम्प्रदायाशु फलं सुमहदश्नुते ॥

कार्तिके पौर्णमासी या भृगुवासरसंयुता ।
व्यतीपातसमायुक्ता महती तिथिरुच्यते ॥

प्रसन्नलक्ष्मीपतियोगमाहुस्तस्मिन् दिने सर्वयशस्करं च ।
स्नात्वाच हुत्वाच गुरोः पदाब्जे दत्वा परां सिद्धिमुपैति मर्त्यः ॥–७५

वारेषु भार्गवो वारः पौर्णमासी तिथिष्वपि ।
योगेषु च व्यतीपातो महासिद्धिं प्रयच्छति ॥

त्रितयं मिलितं यत्र तत्पर्वमहदीरितम् ।
तत्र स्नात्वा महाविद्यां श्रीमदष्टाक्षरीं शुभाम् ॥

प्रातर्जप्त्वा यथाशक्त्या विधिवत्संस्कृतेऽनले ।
हुत्वा पञ्चशतं श्रीमदष्टार्णेनादितः शुचिः ॥

लक्ष्मीहृदयमन्त्रेण शताधिकसहस्रकम् ।
बिल्वपत्रैर्घृताभ्यक्तैर्मधुत्रितयमिश्रितैः ॥

द्वादशार्णश्रियाबापि हुत्वा श्रीपतिरश्मिभिः ।
गव्याज्येन त्रिधा हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥

आचार्यचरणद्वन्द्वे निष्कद्वादशकं धनम् ।
षण्णिष्कं वा त्रिनिष्कं वा निष्कद्वयमितं तु वा ॥

समर्प्य वासो दत्वाऽथ तत्पत्न्यै कमलाधिया ।
अलङ्कारं तथा दद्याद्यथाशक्ति धनं तु वा ॥

मिथुनत्रितयं पूज्यं मृष्टान्नैर्दक्षिणादिभिः ।
श्रोत्रियाय दरिद्राय कूष्माण्डफलमुत्तमम् ॥

सदक्षिणं यथाशक्त्या दत्वा सकलपातकैः ।
विमुक्तो महतीं सिद्धिं प्राप्नोत्येव महीपते ॥

अधःशायी हविष्याशी भवेत्तस्मिन् दिने नृप ।
मासि मासि हरिं साक्षात्स्वप्नेवाऽपि प्रपश्यति ॥

पुरश्चर्यात्रयफलं प्राप्यसिद्धिमनुत्तमाम् ।
अवाप्य महतीं लक्ष्मीं धनधान्यादिसङ्कुलाम् ॥

सम्प्राप्य सुमहद्भाग्यं कवितां च मनोरमाम् ।
पुत्रपौत्राभिवृद्धिं च भोगानपि सुदुर्लभान् ॥

अन्ते लक्ष्मीपतेर्धाम्नि मोदते नात्र संशयः ।
नारी वा पुरुषो वापि कार्तिके पौर्णमी दिने ॥

सदक्षिणं यथाशक्त्या दत्वा कूष्माण्डमुत्तमम् ।
सौभाग्यमक्षयं लक्ष्मीं धनधान्यादिसङ्कुलम् ॥

वंशाभिवृद्धिमाकल्पं प्राप्नोत्यत्र न संशयः ।
भर्तुरायुष्यमिच्छन्ती सौभाग्यं च मनोरमम् ॥ –९०

पुत्रपौत्राभिवृद्धिं च धनधान्याकुलां श्रियम् ।
दद्यादवश्यं कूष्माण्डं कार्तिके पौर्णमा दिने ॥

कूष्माण्डदानं कुर्वीत मकरस्थेऽपि भास्करे ।
भूयोऽपि संप्रवक्ष्यामि नवरात्रव्रतं शुभम् ॥

आकर्णयैकचित्तस्त्वं सद्यस्सकलसिद्धिदम् ।
नवरात्रं महत्पर्व वर्षमध्यमणिव्रतम् ॥

सिद्धिदं सर्वविद्यानां पातकौघविभेदनम् ।
एकैकं च दिनं तत्र चूडामणि समं विदुः ॥

समस्तदुःखशमनं भवसागर तारकम् ।
तत्रदत्तं हुतं जप्तं श्रेयोराशिफलप्रदम् ॥ –९५

आयुष्करं धनकरमपमृत्युनिवारणम् ।
स्वर्गापवर्गदं सद्यस्समस्तेप्सितसिद्धिदम ॥

नवरात्रव्रतसमं नान्यदुक्तं महद्व्रतम् ।
आचार्यानुज्ञया तत्र व्रतं कृत्वा महत्तरम् ॥

सिद्धो भवति सर्वत्र निग्रहानुग्रहक्षमः ।
आश्विने मासि संप्राप्ते प्रतिपद्दिवसे शुभे ॥

आचार्यानुज्ञया प्रातः स्नात्वा नद्यां विधानतः ।
सहस्रं प्रजपेद्वेदमातरं त्रिशतं तु वा ॥

दिवाकरमुपास्थाय नित्यहोमं समाप्य च ।
विधिवत्संस्कृते वह्नौ द्वादशाक्षरविद्यया ॥ –१००

लक्ष्मीनारायणौ तत्रवाह्याभ्यर्च्योपचारकैः ।
अष्टोत्तरशतं हुत्वा घृतमष्टार्णविद्यया ॥

प्रसन्नलक्ष्मीमन्त्रेण द्वादशार्णश्रियापि वा ।
अष्टोत्तरशतं हुत्वा षडर्णेन श्रियोऽपि वा ॥

श्रीमदष्टाक्षरीं विद्यां संकल्प्यार्कसहस्रकम् ।
जपेच्छ्रीद्वादशार्णां च संकल्प्यार्कसहस्रकम् ॥

अष्टम्यन्तं जपेदित्थं तत आथर्वणेरितम् ।
एकोत्तरं जपेल्लक्ष्मीहृदयं सर्वकामदम् ॥

पञ्चाधिकं वा चत्वारिंशद्वारं वा जपेत्सुधीः ।
महानवम्यां त्रिमधुघृतबिल्वदलान्वितम् ॥ –१०५

पायसं तिलसंयुक्तं विधिवत्संस्कृतेऽनले ।
बृहदावरणैर्हुत्वा घृतेन पुरतःशुचिः ॥

श्रीमदष्टार्णमन्त्रेण शताधिकसहस्रकम् ।
पूर्वोक्तं पायसं हुत्वा द्वादशार्णश्रियापि च ॥

त्रिशताधिकसाहस्रं पायसं जुहुयाच्छुचिः ।
भगवद्रश्मिभिर्हुत्वा त्रिधाघृतमतःपरम् ॥

हुत्वा जयादिभिः पश्चात् कृत्वा ब्रह्मार्पणाहुतिम् ।
नित्यं पञ्चशतं ब्रह्मविद्यया पूजयेद्व्रती ॥

दिने दिने महालक्ष्मीधियाऽभ्यर्च्य सुवासिनीः ।
विमलादिधियाचैकामर्चयेच्च सुवासिनीम् ॥ —११०

आदौ मध्ये तथान्ते च भूनीलात्मधिया नृप ।
सुवासिनी द्वयं पूज्यं ब्राह्मणं वेदपारगम् ॥

अभ्यर्च्य भगवद्बुद्ध्या नित्यमन्नरसादिभिः ।
ताम्बूलैर्दक्षिणाभिश्च तोषयेच्च सुवासिनीः ॥

हविष्याशी फलाशी वा चैकभक्ताशनोऽपि वा ।
फलाशनोऽधःशायी च जितेन्द्रिययुतोऽपि च ॥

एकाम्बरोप्यथाचार्यचरणाब्जयुगे शुभे ।
प्रदद्याद्दक्षिणाद्रव्यं वासोऽलङ्करणादिकम् ॥

महानवम्यां हुत्वाऽथ नमस्कृत्याग्निमादरात् ।
श्रीश्रीशद्वादशाक्षर्या लक्ष्मीनारायणौ विभू ॥ —११५

पूर्वोक्तविधिनाऽभ्यर्च्य गत्वाचार्यस्य मन्दिरम् ।
षष्टिचिह्नकसौवर्णनिर्मितं कुण्डलद्वयम् ॥

तत्कर्णयुगले दत्वा वासोयुग्मं समर्प्य च ।
सौवर्णमुद्रिकाद्यैश्च समभ्यर्च्य ततः परम् ॥

शालग्रामशिलामेकां दत्वा दक्षिणयान्विताम् ।
दद्याद्वसुन्धरां पश्चाद्बहुसस्यौघसङ्कुलाम् ॥

अथ दक्षिणया युक्तं गोयुग्मं च समर्पयेत् ।
देया अनड्वाहः पश्चाच्चत्वारो भारवाहकाः ॥

ग्रामाणां दशकं दद्याद्धनाढ्यो राजनन्दनः ।
आश्वयुग्मासि महती नवमी या प्रकीर्तिता ॥ —१२०

साऽर्कग्रहसहस्राभा संप्रोक्ता महर्षिभिः ।
एकैकदिनमप्यत्र नवरात्रव्रते शुभे ॥

अर्धोदय समं प्राहुः पुराणाः परमर्षयः ।
महती नवमी याऽत्र तत्समं पर्वसिद्धिदम् ॥

न जानेऽहं महाभाग सिद्धिर्यत्राक्षयाभवेत् ।
महानवम्यां विजयलक्ष्मीमिच्छन्नचञ्चलाम् ॥

अभीष्टदेवतापूजां कृत्वाचार्यस्य दक्षिणाम् ।
समर्प्य बहुलां नित्यं जयलक्ष्मीमवाप्नुयात् ॥

एकस्मै विप्रमात्राय दत्वा भोजनमप्यथ ।
अवश्यं फलमाप्नोति विप्राणां कोटिभोजनात् ॥ -१२५

महालक्ष्मीधियाऽभ्यर्च्य तत्रैकां तु सुवासिनीम् ।
सुवासिनी सहस्राणां पूजाफलमवाप्नुयात् ॥

तत्राचार्यपदाम्भोजे समर्प्य वसुधां शुभाम् ।
दत्वा द्वादशधा भूमिं धनरत्नौघसङ्कुलाम् ॥

सप्तद्वीपसमायुक्तां यत्फलं पुरुषोऽश्नुते ।
अवश्यं तत्फलं साङ्गं लभते नाऽत्र संशयः ॥

दत्वा धेनुद्वयं वत्स दक्षिणान्वितमादरात् ।
धेनुकोटिप्रदानस्य फलं साङ्गं व्रजत्ययम् ॥

शालग्रामशिलादानात् कोटिब्रह्माण्डदानतः ।
फलमासाद्य शुद्धात्मा जीवन्मुक्तः सुखी भवेत् ॥ -१३०

धनाढ्यो राजपुत्रश्चेदाश्विने नवमीदिने ।
ग्रामद्वादशकं दत्वा श्वेताश्वं छत्रसंयुतम् ॥

बहुलैरप्यलङ्कारैर्वासोभिः कमलाधिया ।
आचार्यपत्नीमभ्यर्च्यसिद्धिमाप्नोति शाश्वतीम् ॥

सकृदप्याहुतिं हुत्वा तन्महानवमी दिने ।
कोटिशताहुतिफलं समग्रं पुरुषोऽश्नश्नुते ॥

यद्यत्तत्र सुवर्णादि दीयते गुरुपादयोः ।
तत्तन्मेरुसमं दानं प्राहुर्दिव्या महर्षयः ॥

कृत्वादौ राजतं पात्रं पलद्वयमिदं शुभम् ।
आचार्याय क्रतुद्रव्यं तत्र निक्षिप्य साधकः ॥ —१३५

योऽर्पयेत्तस्य सुकृतं मया वक्तुं न शक्यते ।
इहैव तस्य तेजोंऽशं मम दास्यामि सुव्रत ॥

तत्पितॄन्नरकस्थांश्च ब्रह्मलोकं नयाम्यहम् ।
अन्तेऽपि स महेन्द्रादि पदं कृत्वा तृणोपमम् ॥

भगवत्सदृशाकारो मोदते परमे पदे ।
श्रीमदष्टाक्षरीसिद्धिं द्वादशार्णश्रियाऽपि च ॥

साङ्गां कृत्वा पुरश्चर्यां साङ्गदक्षिणयान्विताम् ।
पुरश्चर्यासहस्रस्य साङ्गस्य फलमक्षयम् ॥

सम्प्राप्य शङ्खचक्रादि धारिणं जगतीपतिम् ।
नारायणमनाद्यन्तं पश्यत्येव श्रियःपतिम् ॥ —१४०

इहापि महदैश्वर्यमणिमादिगुणान्वितम् ।
धनधान्यपशुव्रातमुक्तारत्नौघसङ्कुलम् ॥

हयहस्तिसमायुक्तं दीर्घायुष्यमचञ्चलम् ।
सम्प्राप्य सर्वश्रेयांसि विद्यां च महतीं शुभाम् ॥

पुत्रपौत्रादिवृद्धिश्च भुक्त्वा भोगांश्च दुर्लभान् ।
सहस्रकुलसंयुक्तस्तद्विष्णोःपरमं पदम् ॥

कलेबरान्ते विशति संशयो नात्र विद्यते ।
लक्ष्मीहृदयविद्याया विशेषोऽत्र प्रवक्ष्यते ॥

आचार्याज्ञां प्रगृह्यादौ प्रतिपद्दिवसे शुभे ।
स्नात्वा प्रातर्विशुद्धात्मा नित्यसन्ध्यामुपास्य च ॥ –१४५

गायत्रीं बहुशो जप्त्वा नित्यहोमं समाप्य च ।
अष्टोत्तरशतं हुत्वा श्रीमदष्टार्णविद्यया ॥

हुनेदष्टोत्तरशतं लक्ष्मीहृदयविद्यया ।
जपेत्पञ्चशतं नित्यमष्टार्णां सर्वसिद्धिदाम् ॥

लक्ष्मीहृदयविद्यां तु संकल्प्यार्कसहस्रकम् ।
अष्टम्यन्तं जपेच्छुद्धः फलाशीवा हविष्यभुक् ॥

अधःशायी सकृद्यद्वा मितमश्नन् दिने दिने ।
अवश्यमेव ताम्बूलभक्षको भूषणान्वितः ॥

आचार्यं वाऽथ तत्पत्नीं तत्पुत्रं वा दिने दिने ।
सन्तोष्य सकलैरर्थैर्हृदयं श्रिय आदरात् ॥ –१५०

पञ्चाधिकं च चत्वारिंशद्वारं च प्रजपेत्सुधीः ।
सुवासिन्यः समभ्यर्च्याः पूर्वोक्तविधिना नृप ॥

महानवम्यामभ्यर्च्याः सुवासिन्यः सहस्रशः ।
महालक्ष्मीधिया साक्षादथवा द्वादशार्चयेत् ॥

द्वादशब्राह्मणा भोज्या नारायणधिया नृप ।
आचार्यपत्नीः श्रीबुद्ध्या वासोऽलङ्करणादिभिः ॥

विशेषेणार्चयेद्धीमान् व्रतस्य परिपूर्तये ।
महानवम्यां ज्वलिते जातवेदसि साधकः ॥

गव्याज्यं वेदमात्राऽऽदावष्टाविंशतिधा हुनेत् ।
श्रीश्रीपती समावाह्य तत्राग्नौ ब्रह्मविद्यया ॥ –१५५

श्रीमदष्टाक्षरेणादौ हुत्वा पञ्चशतं घृतम् ।
प्रसन्नया महालक्ष्म्या विद्यया त्रिमधुप्लुतम् ॥

तिलबिल्वदलोपेतं सहस्रं त्रिशताधिकम् ।
गव्याज्यसहितं हुत्वा पायसं ज्वलितेऽनले ॥

लक्ष्मीहृदयमन्त्रैश्च पायसं जुहुयात्त्रिधा ।
वैष्णवं रश्मिभिस्त्रेधा घृतं हुत्वा ततःपरम् ॥

जयादिहोमं कृत्वाऽथ कृत्वा ब्रह्मार्पणाहुतिम् ।
प्रदक्षिणं नमस्कृत्य जातवेदसमादरात् ॥

श्रीश्रीपती समभ्यर्च्य त्रिशतं ब्रह्मविद्यया ।
तत्राचार्य पदाम्भोजद्वितयं प्रणिपत्य च ॥ –१६०

गन्धादिभिरलङ्कृत्य तत्पत्नीं तत्सुतं तु वा ।
कुण्डलद्वितयं दत्वा तत्कर्णयुगले शुभे ॥

स्वगृहस्थितसर्वस्वं प्रदद्याद्दक्षिणाधनम् ।
सूक्ष्मवासोयुगं दत्वा वर्षाशनमितं तु वा ॥

तत्राप्यशक्तो निष्काणि तत्र द्वादश भूपते ।
तत्राप्यशक्तो मतिमान् दशनिष्कमितं धनम् ॥

वसुनिष्कधनं वाऽपि पञ्चनिष्कधनं तु वा ।
प्रदद्याद्गोद्वयं वत्स बहुक्षीरसमन्वितम् ॥

बहुसस्ययुतां पृत्वीमथवा दक्षिणान्विताम् ।
दत्वा सिद्धिमवाप्नोति महतीं नात्र संशयः ॥ —१६५

सम्पूर्णदक्षिणायुक्तं पुरश्चरणमादरात् ।
सकृत्कृत्वाऽपि वा साक्षाद्भगवत्कलयान्वितः ॥

सिद्धिं प्राप्नोति महतीं देवानामपि दुर्लभाम् ।
तमन्वहं पालयति महालक्ष्मीस्स्वपुत्रवत् ॥

वासन्ते नवरात्रेऽपि कृत्वेत्थं व्रतमादरात् ।
भगवत्कलयायुक्तो जीवन्नेव विमुच्यते ॥

महेन्द्राद्यष्टदिक्पाला अपि तद्द्वारिसन्ततम् ।
तिष्ठन्ति भृत्यवत्तस्य साक्षात्सकलसिद्धिदाः ॥

द्वादशार्णश्रिया युक्तव्रतेप्यष्टाक्षरस्य च ।
प्रसन्नलक्ष्मीसहितश्रीमदष्टाक्षरस्य च ॥ —१७०

सर्वस्वमुत्तमा प्रोक्ता दक्षिणा सर्वसिद्धिदा ।
वर्षाशनमितद्रव्यमथवा दक्षिणोत्तमा ॥

अथवा बहुसस्याढ्या चतुर्वृषभसंयुता ।
दक्षिणासहिता सर्वसिद्धिदोक्ता वसुन्धरा ॥

जरामरणराहित्यं ब्रह्मानन्दसुखं परम् ।
श्रियमष्टगुणोपेतामिच्छता नियतात्मना ॥

अवश्यमपि कर्तव्या पुरश्चर्येत्थमादरात् ।
लक्ष्मीनारायणे योगे योगेप्यर्धोदये नृप ॥

जपहोमादिकं कृत्वा सिद्धिं प्राप्नोति शाश्वतीम् ।
सिंहराशिस्थिते जीवे योगे पुष्करनामके ॥ —१७५

गोविन्दद्वादशे योगे कृत्वापि वसुधापते ।
जपहोमादिकं साक्षात्परंब्रह्म प्रपश्यति ॥

पुष्यार्के पुष्यमासेऽपि पूर्णिमा चन्द्रपर्वणि ।
अर्धोदयसहस्रं वा न तत्र सदृशं भवेत् ॥

शुक्ला तृतीया वैशाखे पौर्णमासी च कार्तिके ।
महासिद्धिकरी प्रोक्ता जपहोमादिभिर्नृप ॥

भृगुवारव्रतेनापि नवरात्रव्रतेन च ।
धनुर्मासव्रतेनापि महती सिद्धिरीरिता ॥

वैशाखे पौर्णमासी या माघमासेऽपि पूर्णिमा ।
दिनद्वयमिदं श्रेष्ठं सद्यस्सिद्धिप्रदायकम् ॥ —१८०

एकादश्यन्तिमं माघसप्तमी दिवसादिकम् ।
भीष्मपञ्चकमित्युक्तं महासिद्धिकरं स्मृतम् ॥

बहुना किमिहोक्तेन सारभूतं वचःशृणु ।
कुरुष्वाचार्यशुश्रूषां सैव सिद्धिकरी स्मृता ॥

त्यजेत्पतिव्रतां पत्नीं पितरौ स्वसुतानपि ।
आचार्यचरणद्वन्द्वं शरीरान्तेऽपि न त्यजेत् ॥

नित्यं गुरुवचः कार्यमशिवं शिवमेव वा ।
कर्तव्याऽऽचार्यशुश्रूषा प्राणैरपि धनैरपि ॥

एतदेव तपोऽत्युग्रं ब्रह्मत्वस्यैकसाधनम् ।
इत्थं विदित्वा सततं कृत्वाऽपि वसुधापते ॥ —१८५

प्राप्नोति परमं धाम योगिनामपि दुर्लभम् ।
आचार्याज्ञां समुल्लंघ्य सकृदप्यवनीपते ॥

पुत्रपौत्रादि सहितः पितृभिस्सहदारुणे ।
आकल्पं नरकेभूप निमज्जति न संशयः ॥

आचार्य चरणद्वन्द्वं सेव्यमन्वहमादरात् ।
प्रजप्तव्या महाविद्या भोगस्वर्गापवर्गदा ॥

इत्युक्त्वा जनकं साक्षान्नरेण सहितो विभुः ।
नारायणो महायोगी तत्रैवान्तरधीयत ॥

**ऋश्यशृङ्ग उवाच —**

इति नारायणेनादावुक्तं राज्ञे महात्मने ।
रामो दाशरथिः प्राह रुद्राय परिपृच्छते ॥ —१०

अनुत्तरब्रह्मतत्त्वरहस्ये श्रुतिसंग्रहे ।
तन्त्र दाशरथीयाख्ये पूर्वांऽशस्समुदीरितः ॥

अत्राचार्यमुखाम्भोजाच्छ्लोकमेकं पठन्नपि ।
शृण्वन्वापि विमुक्तोऽसौ महापातक राशिभः ॥
प्राप्नोति परमं धाम दुर्लभं दैवतैरपि ॥

॥ इति श्रीमदनुत्तरब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे एकोनषष्टितमोऽध्यायः ॥

—∞:✿:∞—

पूर्णः पूर्वः खण्डो दाशरथीये श्रुतिसंग्रहे ।
तन्त्रे हरिचरणाम्बुजतुष्ट्यै लिखितः श्रीधरसंज्ञेन ॥

॥ शुभमस्तु ॥



ॐ

# ॥ ऋश्यशृङ्गसंहिता ॥

## (उत्तरभागः)

॥ श्री रामचन्द्राय नमः ॥

## अथ प्रथमोऽध्यायः ॥

**ऋषय ऊचुः—**

ऋश्यशृङ्ग महाभाग सर्वज्ञानवतां वर ।
श्रीमदष्टार्ण माहात्म्यं श्रुतं साङ्ग रहस्यकम् ॥

श्रीविद्या तथा लक्ष्मी महालक्ष्मी स्त्रिशक्तिका ।
सांम्राज्य लक्ष्मीः पञ्चेति साम्राज्यश्रिय ईरिताः ॥

तत्राद्या साम्राज्य लक्ष्मीः श्रीविद्या कथिता त्वया ।
तस्य माहात्म्य मखिलं वद नः करुणानिधे ॥

**ऋश्यशृङ्ग उवाच—**

इत्युक्तवन्तं नृपतिं रामं त्रिजगतीपतिम् ।
प्राह सीतापतिं रुद्रो गौर्या सह जगत्पतिः ॥

**श्रीरुद्र उवाच—**

ब्रह्म तादात्म्य संसिद्धि हेतुभूतं सनातनम् ।
ब्रह्मापरोक्ष विज्ञान रहस्यं भुक्ति मुक्तिदम् ॥ ५

श्रुतं तव मुखाम्भोजात्सद्यः पातकभञ्जनम् ।
श्रीमदष्टाक्षरी मन्त्र माहात्म्य मखिलं श्रुतम् ॥

श्रीविद्या जगतां धात्री सूचिता न प्रकाशिता ।
माहात्म्य मखिलं तस्या वद मह्यं जगत्पते ॥

**श्रीभगवानुवाच—**

यत्तन्नारायणेनोक्तं जनकाय महात्मने ।
माहात्म्य मखिलं शम्भो श्रीविद्याया वदाम्यहम् ॥

**श्रीनारायण उवाच—**

शृणु राजन्महीपाल सौभाग्योदय नामकम् ।
तंत्रे नारायणीयेऽस्मिन्माहात्म्यं सर्वसिद्धिदम् ॥

अहं दाशरथिर्भूत्वा पृष्टो रुद्राय धीमते ।
पुनर्दाशरथीयाख्यं तन्त्रं वक्ष्यामि सादरम् ॥ १०

रहस्यमेतल्ललिता विद्यासारं यशस्करम् ।
सौभाग्योदय नामैतच्छृणु राजन्महीपते ॥

श्रुत्वा स्मृत्वाऽपि दृष्ट्वा वा तंत्रमेतज्जगद्धितम् ।
भूत्वा सकल भाग्याना माधारो मुक्तिमेत्यपि ॥

यः परः सर्वजगतां कर्ता हर्ता सनातनः ।
परमात्मा परानन्दः सर्वतः परमेश्वरः ॥

तस्य पञ्चमुखेभ्यश्च पञ्चाम्नाया विनिर्गताः ।
पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा ॥

ऊर्ध्वाम्नायश्च पञ्चैते मोक्षमार्गाः प्रकीर्तिताः ।
पूर्वाम्नायस्तु ऋग्वेदो यजुर्वेदस्तु दक्षिणः ॥ १५

पश्चिमस्सामवेदश्च स्यादाथर्वण उत्तरः ।
सर्वोपनिषदां जाल मूर्ध्वाम्नायः प्रकीर्तितः ॥

सिद्धान्त उक्त आम्नाय गणेषु प्रवदामि तम् ।
षड्विंशतिः स्युस्तत्वानि शरीरं विश्वमैश्वरम् ॥

शरीर कञ्चुको जीव आत्मा संसारि रूपधृक् ।
निष्कञ्चुको जगद्धाता श्रीशो नारायणो विभुः ॥

नित्यावर्णात्मकाः शब्दा एभ्यो विश्वमिदं ततम् ।
अचिन्त्य शक्तिता सर्वमन्त्राणां जगतीपते ॥

सत्संप्रदाया दाचार्य भक्त्या सिद्धिः परा स्मृता ।
आचार्य वदनोद्भूत वचनेषु प्रमाणता ॥ २०

महासिद्धिकरी सर्व विद्याना मुच्यते नृप ।
आचार्यवत् सदाऽऽचार्य पत्नी पुत्रेषु सन्ततम् ॥

दृढ भक्ति युतो भूत्वा व्रजत्येवोत्तमां गतिम् ।
गुरुदैवत मन्त्राणा मैक्यं ध्यायेत्सदा धिया ॥

आचार्यचरण द्वन्द्वान्नापरं शरणं व्रजेत् ।
अयमेव हि सिद्धान्त उक्तो वेदान्तवादिभिः ॥

वेदशास्त्र पुराणानि सामान्य गणिका इव ।
इयं "श्रीललिता विद्या" गोप्या कुलवधूरिव ॥

आचार्य चरणद्वंद्व दृढभक्तो जितेन्द्रियः ।
शरीर प्राण वित्ताना मप्याचार्य समर्पकः ॥ २५

वैदिकाचार निरतो धर्ममार्ग परायणः ।
परस्त्री विमुखो मानी सत्यवागनसूयकः ॥

अहङ्कार विमुक्तात्मा गायत्री जप तत्परः ।
एतादृशाय शिष्याय विद्या देया शुभार्थिने ॥

आचार्यः पुत्रवन्नित्यं तमन्तेवासिनं भुवि ।
पालयेत्सकलापद्भ्यो रहस्यमपि बोधयन् ॥

अवश्यं दीक्षितो भूत्वा स्वाचार्याज्ञा पुरस्सरम् ।
श्रीविद्यां प्रजपेद्धीमान् ब्रह्मानन्द रसाप्तये ॥

दीक्षास्तिस्त्रः समाख्याताः सर्वपाप प्रणाशनाः ।
आद्या पाशुपती दीक्षा वैष्णवी च ततः परा ॥ ३०

अपरा त्रैपुरी दीक्षा महासिद्धिकरी स्मृता ।
एकत्र दीक्षितो वापि शुचिर्भवति सन्ततम् ॥

दीक्षा द्वितय संयुक्तो भवेद्‌ब्रह्मा सभापतिः ।
दीक्षा त्रितय संयुक्त स्त्रिमूर्तिर्भगवान्भवेत् ॥

एकत्र दीक्षितो वापि समस्ताघ विवर्जितः ।
जप्तुं सकल विद्याना मधिकारी भवेच्छुचिः ॥

दीक्षाविधिं प्रवक्ष्यामि येन शिष्यः सुखी भवेत् ।
दीयते सकलं वस्तु गुरवे प्राणसंयुतम् ॥

नवरत्न सुवर्णादि पट्टवस्त्र समुच्चयः ।
क्षयं प्राप्नोति सद्भावे नाना पातक संचयः ॥ ३५

तस्माद्दीक्षेति नामास्याः सर्वशास्त्रेषु निश्चितम् ।
पापिने कृपणायाऽपि शठाय कपटाय च ॥

दीनायाचार शून्याय मंत्र दोष पराय च ।
निन्दकाय च मूर्खाय तीर्थद्वेष पराय च ॥

भक्ति हीनाय भूपाल न देया मलिनाय च ।
भक्तियुक्ताय शुद्धाय नारायण कलात्मने ॥

सन्मार्गवर्तिने राज्ञे देवद्विज हिताय च ।
सर्वशास्त्रार्थ वेदार्थ ज्ञानिने सुव्रताय च ॥

दीक्षा देया महीपाल पापभागन्यथा भवेत् ।
मण्डपे वेदिकां कृत्वा पुष्पवैतान मण्डितम् ॥ ४०

दीपमालावली रम्यां नानाभूषण भूषिताम् ।
सिन्दूर रङ्ग मालाभि र्मण्डितं च विचित्रितम् ॥

वेदिकायां मनोहारि कुङ्कुमेनाथवा नृप ।
सिन्दूररजसा वापि लिखितं चक्रमुत्तमम् ॥

मध्यचक्रे मनोहारि नवकोण विराजितम् ।
चतुरस्रं च विलिखेत्सुवर्ण कलशान्नृप ॥

रौप्य ताम्रादि रचितान् मृत्तिका रचितांस्तथा ।
जलपूर्णान् विशेषाढ्यान् रत्नस्वर्णादि भूषितान् ॥

फलपुष्पैश्च सुभगैः सुगन्धेन च चर्चितान् ।
वशिन्याद्यष्टकं तत्र कलाः कुम्भेषु पूजयेत् ॥ ४५

मध्यकुम्भे महीपाल श्रीविद्यां परितोषयेत् ।
क्रमात्समस्तमभ्यर्च्य विधिवत्संस्कृतेऽनले ॥

रश्मि मंत्रैस्सकृद्धुत्वा शतमष्टोत्तरं श्रिया ।
हुत्वाऽथ वामतः शिष्यं स्वासने स्थापयेच्छुचिः ॥

सर्वशृङ्गारवेषाढ्यं तत्र शिष्यं समर्चयेत् ।
षडध्वरूपं श्रीचक्रं तस्य मूर्ध्नि विचिन्तयेत् ॥

दृष्ट्वाऽवलोकयेत्तं तु दृष्ट्या दृष्टिं तु मेलयेत् ।
आज्ञा सङ्क्रमणं कुर्याद्यावन्निश्चलता भवेत् ॥

निश्चलः शांभवो देहः शून्याशून्य विवर्जितः ।
शून्यं शिवमयं वस्तु पुरुषः परमेश्वरः ॥ ५०

अशून्यं शक्ति राद्या हि प्रकृतिस्सर्वकारणम् ।
... वुस्थौत्प्रं संयोगश्शिवयोर्मुदा ॥

स्वप्नावस्था तदा ज्ञेया योगशक्त्यधिकत्वतः ।
शक्तिर्जाग्रदिति ख्याता शिवो निश्चलता तथा ॥

सुषुप्तिरिति विद्वद्भिः कथिता निश्चलायतः ।
गुणत्रयं तु कथितं जाग्रत्स्वप्नगुण ... ॥

.... सुषुप्तिस्तु शिव निश्चल रूपिणी ।
शिवाधिक्याद्गुणातीतं वस्तु जानीहि भूपते ॥

शिवशक्ति समायोगाच्छिवाधिक्यं यदा भवेत् ।
तदा तुर्यं विजानीहि सर्वांड निकृन्तनम् ॥ ५५

कलाः षोडश भूपाल ह्यात्मज्ञान व्यवस्थिताः ।
श्रीविद्याबीज संपत्तीः शिष्य देहे प्रकाशयेत् ॥

श्रीविद्या जगतां धात्री सर्वसिद्ध्यासनेश्वरी ।
तद्ध्यानान्मनसः स्थैर्यं मुन्मनीति निगद्यते ॥

ब्रह्मज्ञाने जगद्रूपे त्रित्रिचञ्चुविलक्षितः ।
संकल्पेन विकल्पेन पक्षाभ्यां चञ्चल स्सदा ॥

मोहमत्सर कामैश्च क्रोधाहङ्कार लोभकैः ।
सन्नद्ध पिच्छबहुलः कृत्याकृत्य पदद्वयः ॥

संसारवृक्षे बहुशो धन पुत्रादिमूलके ।
अविद्या विस्तृते निन्दा स्तुति शाखा सुशोभिते ॥ ६०

अभिलाष स्फुरत्पुष्प भरिते पातकादिभिः ।
पर्णपूर्णे महीपाल पाप पुण्य फलान्विते ॥

तत्वशाखाद्वये स्थूले श्रुत दृष्टादिभेदतः ।
पक्षिणा तत्समाक्रम्य ज्ञानपाशेन पाशनुत् ॥

तदा समुन्मनी त.... मखत्निश्चयान्नृप ।
सर्वसङ्कल्प रहिता कला सप्तदशी भवेत् ॥

पक्षि खेलनतो नित्यं कटाक्षः श्रीगुरो र्भवेत् ।
तेन पक्षद्वयं भिन्नं यदा भवति निश्चयः ॥

उन्मनी नाम सा प्रोक्ता भवपाश निकृन्तनी ।
उन्मन्या सहितो योगी नोन्मनी योगिनां परा ॥ ६५

यथा कर्पूरगो दीपो न दीपो न पुनः शशी ।
अत एव महीपाल दृष्ट्या संक्रमणं यजेत् ॥

तत्त्व मस्यादि वाक्येन पश्चाद्वाक्यं हि योजयेत् ।
आदौ करं च संयोज्य स्पर्शेनैव महीपते ॥

स्पर्श हस्त इवाभाति श्रीगुरोः करसंभवः ।
स्वर्णाद्या धातवः सर्वे लोहाद्या वसुधापते ॥

सुवर्णतामयास्सर्वे विशिष्टाभरणान्विताः ।
करस्पर्शेन भूपाल प्रपञ्चमनिलादिकम् ॥

लोहत्वं नाशयित्वैव सुवर्णं तत्करोति हि ।
करे पुष्पफलान् कृत्वा ब्रह्मरंध्रे ततः क्षिपेत् ॥ ७०

तस्माद्ब्रह्मत्वमेवासि तद्वाक्यार्थं कराद्भवेत् ।
अनिर्वाच्यो पदेशोऽयं स्पर्शनाद् ब्रह्मरंध्रके ॥

ब्रह्मरंध्रे सहस्रारे कर्पूरधवले गुरुः ।
वराभय करो नित्यो ब्रह्मरूपी सदाऽनघ ॥

जागर्ति वसुधापाल निजस्थान प्रकाशकः ।
पश्चात्षट्चक्र विज्ञानं शिष्याय प्रतिबोधयेत् ॥

आधारं स्वर्णवर्णञ्च चतुर्दल सुशोभनम् ।
वादि सान्तैश्चतुर्वर्णैस्तप्तहेम समप्रभैः ॥

गणेश सहितं विद्धि स्वाधिष्ठान मतः परम् ।
इन्द्रगोप प्रतीकाशैः स्फुरद्विद्रुम सन्निभैः ॥ ७५

बादि लान्तैः स्फुर द्वर्णैं र्ब्रह्मणा मंडितं नृप ।
नीलवर्णं तृतीयं हि मणिपूरकं दशारकम् ॥

विद्युत्कोटि प्रतीकाशै र्डादि फान्तैश्च मण्डितम् ।
गदाधर हरिप्रौढं चतुर्थं वसुधापते ॥

पिङ्गाभं द्वादशारं व कादि ठान्ताक्षरैर्वृतम् ।
विस्फुलिङ्ग प्रभादीप्तैः शिवेन च समन्वितम् ॥

विशुद्ध चक्रं भूपाल धूम्रवर्णं कलास्रकम् ।
स्वच्छैर्माणिक्य संकाशैर्मण्डितं वसुधापते ।
जीवात्मनाऽधिष्ठितं तज्जानीहि तदनन्तरम् ॥

आज्ञाचक्रे महीपाल विद्युत्कोटि समप्रभम् ।
द्विदलं ह क्ष वर्णाभ्यां शुभ्राभ्यां परिमण्डितम् ॥ ८०

परमात्म स्वरूपाद्यं नादरूपं हि सत्तमम् ।
नादो विलीनो यस्मात्तु तस्माद्ब्रह्म तदुच्यते ॥

देहेऽक्षराणि भूपाल नाद एवात्र कारणम् ।
नादः परम संयोगात्कुन्तिन्या युतो यदा ॥

प्रसरन्वसुधापाल षट्चक्राणां दलेषु च ।
पञ्चाश द्वर्णरूपत्वं प्राप्तवान् परमेश्वरः ॥

अव्यक्त स्वरतां प्राप्त उदात्ताद्यैः स्वरक्रमात् ।
इत्थं सर्वज्ञतां तस्मै दत्वा शिष्याय सद्गुरुः ॥

आचार्यस्य तदा शिष्यः पूजां कुर्यात्सुलक्षणाम् ।
रत्नाभरण शोभाढ्यां पट्टवस्त्र धनान्विताम् ॥ ८५

गजाश्व सहितां भद्र महिषी गो समन्विताम् ।
क्षिति ग्राम महाराम रम्य वेदी शतान्विताम् ॥

सुवर्ण पाशी सहितां कस्तूरी चन्दनान्विताम् ।
गुरुं सन्तोष्य विधिवत्प्रसादं प्रीति संयुतम् ॥

गृहीत्वा शिष्यवर्गोऽथ स्वाचार्य वदनान्नृप ।
बालां प्रकाशयेत्कर्णे दक्षिणे पूर्वमादरान् ॥

रश्मिमालां प्रदत्वाऽथ श्रियः पञ्चदशाक्षरीम् ।
सर्व विद्यामयीं दद्यात्सर्व सिंह्मासनेश्वरीम् ॥

सर्व सौभाग्य जननीं भोगमोक्ष फलप्रदाम् ।
न दद्यात्प्राणदायाऽपि निधान मिव संस्मर ॥ ९०

उदके लवणं लीनं यथा तिष्ठति भूपते ।
तथा ब्रह्ममयी मेतां विद्धि शास्त्रेषु गोमिताम् ॥

बाला मादौ प्रदायाऽथ रश्मिमालां महीपते ।
साम्राज्य नायिका विद्यां दत्वा पञ्चदशाक्षरीम् ॥

श्रियः प्रकाशयेद्दक्षे कर्णे शिष्यस्य भूपते ।
अनेन दीक्षाविधिना दीक्षितो यो भवेद्भुवि ॥

अश्वमेध सहस्रेषु दीक्षितः स भवेन्नृप ।
त्रिधा दीक्षेय माख्याता ह्युत्तमा मध्यमाऽधमा ॥

चूडामणि र्महायोगो नवरात्रे महीपते ।
उत्तमा सा समाख्याता दीक्षा संपूर्णदक्षिणा ॥ १५

अर्धोदयादौ या दीक्षा मध्यमा सा प्रकीर्तिता ।
शुभमासे शुभदिने दीक्षा स्यादधमा नृप ॥

आचार्यानुग्रहादित्थं दीक्षितः साधकोत्तमः ।
अवश्यं महतीं सिद्धि प्राप्नोत्यत्र न संशयः ॥

तन्त्रे दाशरथीयेऽस्मिन्सौभाग्योदय नामके ।
महा रहस्ये प्रोक्तोऽग्नि मस्त्वध्यायो महीपते ॥

इति श्रीमदनुत्तर ब्रह्मरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे उत्तरभागे सौभाग्य विद्योदये प्रथमोऽध्यायः ॥

## अथ द्वितीयोऽध्यायः ॥

**श्री भगवानुवाच–**

महाभट्टारिका देव्याः श्रीविद्यायास्ततः परम् ।
माहात्म्यं संप्रवक्ष्यामि यदुक्तं शम्भुना पुरा ॥

कैलास शिखरासीनं दक्षिणामूर्ति मीश्वरम् ।
गिरिजा परिपप्रच्छ शङ्करं लोकशङ्करम् ।।

श्री देव्युवाच-

भगवन् सर्वमन्त्राश्च भवता मे प्रदर्शिताः ।
चतुष्षष्टिश्च तन्त्राणि मातृणामुत्तमानि च ।।

महामाया शम्बरं च योगिनी जालशम्बरम् ।
तत्व शम्बरकं चैव भैरवाष्टकमेव च ।।

चन्द्रज्ञानं वासुकिं च महासंमोहनं तथा ।
महोच्छुषं महोदेव लातुलं लातुरं तथा ।। ५

हृद्भेदनं मन्त्रभेदं गुह्यतन्त्रं च कामिकम् ।
कलाद्वाढं कलासारं तथान्यत्कुब्धिकामताम् ।।

तोपोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ।
पञ्चामृतं रूपभेदं भूतडामरमेव च ।।

कलासारं कुलोद्दीशं कुलचूडामणिस्तथा ।
सर्वज्ञानोत्तरं देव महाग्नियुमतं तथा ।।

महालक्ष्मी मतं चैव सिद्ध योगीश्वरी मतम् ।
कुमारि कामदं देव रूपिकामतमेव च ।।

सर्ववीरमतं देव विमलामतमुत्तमम् ।
अरुणेशं मोहनेशं विशुद्धीश्वरमेव च ।। १०

एवमेतानि शास्त्राणि तथान्यान्यपि कोटिशः ।
भवतोक्तानि मे देव सर्वज्ञानमयानि च ॥

महानित्येति विद्वद्भिः कथ्यते या परा कला ।
तस्या माहात्म्य मखिलं श्रोतुमिच्छाम्यहं प्रभो ॥

लक्ष्मी मंत्रस्य माहात्म्यं महालक्ष्मी मनोरपि ।
त्रिशक्ति लक्ष्मी विद्यायाः साम्राज्य श्रीमनोरपि ॥

श्रीविद्या रश्मिमालाया माहात्म्यं मे वद प्रभो ।

**श्रीदक्षिणामूर्तिरुवाच—**

शृणु देवि महानित्या माहात्म्य मघनाशनम् ॥

यस्य स्मरणमात्रेण विनश्यन्त्यखिलापदः ।
कामयोनिश्च कमला वज्रपाणिरतः परम ॥ १५

रविश्चन्द्रश्च मदनो हंसः सर्वामरेश्वरः
परामारश्च वसुधा रवं त्रितयमीरितम ॥

अवसानेषु हृल्लेखा बीजैस्त्रिभिरन्विताः ।
श्रीमहासुन्दरीवर्णा एते ते कथिताश्शिवे ॥

वाग्भवं प्रथमं खण्डं पञ्चवर्णं फलप्रदम् ।
द्वितीयं कामराजाख्यं लोकत्रयवशङ्करम् ॥

षड्वर्णं सकलैश्वर्य सिद्धिदं शुभदायकम् ।
तृतीयं स्यात्परा खण्डं जरामृत्यु विनाशनम् ॥

चतुर्वर्णं महाभाग्यप्रदं संसार तारकम् ।
श्रीविद्या नामकं वस्तु बिन्दुत्रय विभूषितम् ॥ २०

ब्रह्मेति कथ्यते वेदवेदान्तेष्वपि सुव्रते ।
श्रीविद्याख्ये.परे तत्वे बिन्दुत्रय विभूषिते ॥

पञ्चाशन्मातृकावर्णा अन्तर्भूता स्सनातनाः ।
वेदशास्त्र पुराणाद्या विद्यास्सर्वास्सनातनाः ॥

अस्मादेव समुत्पन्नाः श्रियः पञ्चदशार्णतः ।
मातृका सर्वविद्यानां पञ्चाशद्वर्ण रूपिणी ॥

अनयैव समुत्पन्ना पिण्डत्रय विभूषिता ।
प्रणवाख्या ब्रह्मविद्या पञ्चाश द्वर्णमातृका ॥

पिण्डत्रय समायुक्ता हंसविद्यापि शैलजे ।
ब्रह्म तादात्म्य संसिद्धि प्रदा एता न संशयः ॥ २५

श्रियः पञ्चदशाक्षर्याः समुत्पन्ना इमा अपि ।
एकैक मस्य खण्डं वा य उपास्ते दृढव्रतः ॥

सोऽपि ब्रह्ममयः साक्षात् भवत्यत्र न संशयः ।
वेदानां त्रितयं वह्नित्रयं कालत्रयं तथा ॥

स्वराणां त्रितयं लोकत्रयं पादत्रयं हरेः ।
पुष्कर त्रितयं वर्णत्रय मात्मत्रयं तथा ॥

अवस्थात्रय मप्यस्याः खण्ड त्रितय संभवम् ।
हृल्लेखा त्रितयं यत्र बिन्दुत्रितय मिष्टदम् ॥

सैव श्रीरुच्यते साक्षाच्चिद्रूपा परदेवता ।
अन्यत्र श्रीपदं गौण्या वृत्यैव कथितं शिवे ॥ ३०

इयमेव महालक्ष्मी नारायण मनोहरा ।
इयमेव गिरेः पुत्री देवी शङ्करवल्लभा ॥

इयमेव ब्रह्मपत्नी वाणी सर्वत्रयी मयी ।
इयमेव जगन्माता तुरीया परमा कला ॥

एतदंशांश संभूता विद्धि सर्वाश्च देवताः ।
स्त्रीपुंनपुंसकाकारं यद्यद्भूत मुदंचितम् ॥

तत्तदेतां विना नास्ति समस्तमिति निश्चयः ।
इयं नारायणी लक्ष्मीर्गौरी दुर्गा सरस्वती ॥

श्रीविद्यैव त्रयी माता सावित्री च सरस्वती ।
सर्वविद्यामयी सर्वक्षेत्र तीर्थ स्वरूपिणी ॥ ३५

सर्वविद्या महाराज्ञी सर्वसिंहासनेश्वरी ।
सर्वज्ञानमयी सर्व पापघ्नी मंगलप्रदा ॥

राज्ञी समस्त जगतां सर्वसौभाग्य सिद्धिदा ।
यस्य नो पश्चिमं जन्म स्वयं यो वा न शङ्करः ॥

न तान् लभते विद्या श्रीमत्पञ्च दशाक्षरी ।
वक्त्र कोटि सहस्रैर्वा जिह्वा कोटिशतैरपि ॥

वर्णितुं नैव शक्येयं श्रियः पञ्चदशाक्षरी ।
राज्यप्रदाय राज्ञे वा स्वसुतायापि बन्धवे ॥

साम्राज्यमपि दातव्यं शिरोऽपि प्राणसंयुतम् ।
श्रियः पञ्चदशार्णेयं न दातव्या कथंचन ॥ ४०

शत साहस्रशो देव्या वेदमातुर्जपादयः ।
त्रयाणामपि वेदानां पारायणशतं तु वा ॥

एकवार स्मृतेरस्यास्तुलां नार्हति षोडशीम् ।
प्रजापतेरियं माता विष्णोरपि महेशितुः ॥

एनामाराध्य धाताऽसौ सृष्टेः कर्ता पुराऽभवत् ।
अश्वमेध सहस्राणि वाजपेयस्य कोटयः ॥

भूप्रादक्षिण्य साहस्रं राजसूय शतान्यपि ।
काश्यादि तीर्थयात्राश्च तुलां नायान्ति षोडशीम् ॥

आराध्यैनां पुरा विष्णुः स्थिति कर्ता जगत्पतिः ।
कामारिमपि मां रुद्रं मोहयामास शैलजे ॥ ४५

मृत्युञ्जयोऽप्यहं जप्त्वा श्रियः पञ्चदशाक्षरीम् ।
सर्वासामपि विद्यानामीश्वरत्वमवाप्तवान् ॥

चन्द्र सूर्यावपि पुरा जप्त्वा पञ्चदशाक्षरीम् ।
सर्गस्थित्युपसंहार कर्तारौ जगतः शिवे ॥

कामदेवोऽपि जप्त्वेमां श्रियः पञ्चदशाक्षरीम् ।
त्रैलोक्यं मोहयामास नरनारी गणैर्युतम् ॥

देवानप्यसुरान् यक्षान्गन्धर्वांश्च महोरगान् ।
सिद्धान् महर्षिसंघांश्च मुनिवर्यांश्च किन्नरान् ॥

इच्छता स्ववशीकर्तुं जप्याश्रीरन्वहं शिवे ।
सुन्दरीर्देवगन्धर्व कन्या अपि मनोहराः ॥ ५०

कन्या अप्सरसो यक्ष किन्नराणाञ्च कन्यकाः ।
रम्भोर्वश्यादिका दिव्याप्सरसोऽपि मम प्रिये ॥

इच्छता स्ववशीकर्तुं चाप्यापञ्चदशाक्षरी ।
यः परः पुरुषः साक्षाद्ब्रह्मरुद्रादि संज्ञितः ॥

नारायणस्त्रिजगतां नायकः परमेश्वरः ।
तस्य शक्तिरियं देवी सुन्दरी नामचित्कला ॥

परोऽपि शक्ति रहितः शक्त्या युक्तो भवेद्यदि ।
सृष्टि स्थिति लयान् कर्तुमशक्तः शक्त एष हि ॥

गायत्री नाम या विद्या सावित्री परमेश्वरी ।
अस्या अंश समुद्भूता वेदमाताऽपि शैलजे ॥ ५५

चतुर्वेदेषु वेदान्तेष्वधीतेष्वपि सुव्रते ।
विद्या चतुष्टयं सर्वविद्या सिह्मासनेश्वरम् ॥

श्रीमदष्टाक्षरी विद्या प्रणवश्च ततः परम् ।
श्रियः पञ्चदशार्णेयं वेदमाताऽपि शैलजे ॥

एतद्विद्या समा विद्या अधिका वा न सन्ति हि ।
चतुर्वर्णप्रदा नित्यमणिमाद्यष्ट सिद्धिदा ॥

श्रियः पञ्चदशार्णेयं ब्रह्मत्वादि पदप्रदा ।
समस्त विद्या साम्राज्ञी सर्वसंपत्ति हेतुकी ॥

सर्वं योगमयी सर्वविद्या जपफल प्रदा ।
महाकालात्मिका विद्या तिथि नक्षत्र रूपिणी ॥ ६०

ब्रह्म विष्णु महेशान रूपिणी सुररूपिणी ।
पञ्चभूतमयी सप्त लोकाधार सनातनी ॥

सर्वविद्यामयीमेतां तस्मात्पञ्चदशाक्षरीम् ।
जप्त्वा प्रत्यहमेकान्ते स्वाचार्यानुग्रहाच्छिवे ॥

ब्रह्म विष्णु महेशाद्यैरपि संपूज्यते भुवि ।
पुत्रवत्परिरक्षन्ति तं ब्रह्माण्यादि मातरः ॥

सहस्रकोटि योगिन्यस्तावन्तो भैरवा अपि ।
अमरा अपि शक्राद्याः सप्तकोटि महर्षयः ॥

श्रीविद्या जपकर्तारं पालयन्ति स्वपुत्रवत् ।
सहस्र योजनं वाऽपि गत्वाचार्यं शिवात्मकम् ॥ ६५

ब्रह्मबुद्ध्या तमभ्यर्च्य कृत्वा शुश्रूषणं सदा ।
सर्वस्वमपि वा दत्वा प्राणान् पुत्रांश्च कन्यकाः ॥

गृहीतव्या श्रियो विद्या राज्ञी पंचदशाक्षरी ।
ललिताजप कर्तृणां गृहः स्वर्गायते भुवि ॥

गर्विताः प्रणमन्त्यस्य द्वेषी मित्रति संततम् ।
स्त्री सङ्गमोऽपि कैवल्य हेतुरस्य न संशयः ॥

भोगो योगायते तस्य पापं च सुकृतायते ।
मोक्षायते च संसारो ललिताम्बामुपासितुः ॥

यत्रास्ति भोगो न हि तत्र मोक्षो
यत्रास्ति मोक्षो न हि तत्र भोगः ।
श्रीसुन्दरी तर्पण तत्पराणां
भोगश्च मोक्षश्च करस्थ एव ॥ ७०

अर्धोदये पुण्यतीर्थे हेमभार सहस्रकम् ।
एकोच्चारेण विद्यायास्तुलां नार्हति षोडशीम् ॥

वैखरी वाच्य भावत्वादशक्ता गुणवर्णने ।
यतो निरक्षरं वस्तु परा तत्र तु कारणम् ॥

मूकी भूता हि पश्यन्ती मध्यमा मध्यमा भवेत् ।
ब्रह्मविद्या स्वरूपेयं भुक्ति मुक्ति फलप्रदा ॥

श्रियः पञ्चदशार्णेयं न प्रकाश्या कदाचन ।
गोपितव्या सदा भद्रे स्वयोनिरिव सन्ततम् ॥

शिवशक्ति महायोगे यद्यत्कर्म प्रजायते ।
वेद्यं तन्नभवेत् तद्वच्छ्रियः पञ्चदशाक्षरी ॥ ७५

विना चार्योपदेशेन विद्यां पञ्चादशाक्षरीम् ।
दृष्ट्वा प्रजपेद्यस्तु स भक्ष्यो योगिनो गणैः ॥

आचार्य कृपया लब्ध्वा सर्वसाम्राज्यदायिनी ।
भुवनत्रय सौभाग्यं ददाति विपुलां श्रियम् ॥

कन्दर्पशत सौभाग्यं त्रैलोक्याकर्षणक्षमम् ।
सुधा तरङ्गिणी वेगशब्दचातुर्यदायिनी ॥

सौभाग्यभाग्यसंपन्नकला पटलदायिनी ।
परब्रह्मणि लीनत्वं ददाति यश उन्नतम् ॥

प्रपञ्चसागरे सीनादुद्धरेच्छ्रीरियं परा ।
यस्याः कटाक्षतो देवि भुवनानि चतुर्दश ॥ ८०

भवन्ति भक्तवश्यानि किमु नारि नरादिकाः ।
चतुस्सागरपर्यन्त मही साम्राज्य पालनम् ॥

श्रीविद्या साङ्ग जप्तुः स्यादाचार्यानुग्रहाच्छिवे ।
ब्रह्माण्डकोटि जननं भूयो वाचां विजृम्भणम् ॥

पुनर्देव मनुष्यादि सर्जनं च मम प्रिये ।
श्रीविद्याजपकृत्पुम्सो नासाध्यं भवति प्रिये ॥

परकायप्रवेशादि सामर्थ्यञ्चाणिमादिकम् ।
श्रीविद्या जपकृत्पुम्सो न दुर्लभमिह प्रिये ॥

शृणु ह्यन्यन्महद्गुप्तमप्युक्तं ब्रह्मणा पुरा ।
नारायणेन चाप्युक्तं श्रुत्वा गुप्तकरा भव ॥ ८५

त्रिखण्डान्तेऽग्निमारूढं छं वामाक्षि संयुतम् ।
बिन्दुयुक्तं श्रियो बीजमिदं संयोज्य योगिनः ॥

षोडशार्णां महाविद्यां जपन्त्यखिलसिद्धिदाम् ।
दातव्याः स्वप्रिया दारा देयाः पुत्राश्च कन्यकाः ॥

दातव्यमपि साम्राज्यं न देया षोडशाक्षरी ।
यस्योपदेशः क्रियते जपादि जनितं फलम् ॥

तद्देहं प्रविशत्येव दत्ता चेत्पूर्वदक्षिणा ।
सम्पूर्ण दक्षिणादानात्पुरश्चर्यादिकं विना ॥

सृष्टिर्भवति विद्यानां सद्यः प्रत्यय कारिणी ।
चत्वार ...... क्षेमयन्त इति सन्ततम् ॥ ९०

ऋचो वदन्ति गिरिजे श्रीविद्यां षोडशाक्षरीम् ।
नित्या पञ्चदशी ख्याता महाविद्या तु षोडशी ॥

सैव चिद्रूपिणी साक्षात् सर्वज्ञानमयी परा ।
चिन्तामण्यादिरत्नानि कल्पवृक्षादिभूरुहाः ॥

श्रीविद्या जापिनो गेहे तिष्ठन्त्येव न संशयः ।
श्रीविद्यां प्रजपेद्यस्तु सततं साधकोत्तमः ॥

धन्या तज्जननी लोके कृतार्थस्तत्पिता प्रिये ।
तद्वंशसंभवाः पुण्याः तनयाः पुत्रबान्धवाः ॥

श्रीविद्याजापिनं स्मृत्वा हयमेधफलं लभेत् ।
श्रीविद्या जापिनं नत्वा तुलादान फलं लभेत् ॥ ९५

श्रीविद्या जापिनं नित्यं सम्भाष्यापि मम प्रिये ।
वाजपेय फलं प्राप्य भुक्तिं मुक्तिं च विन्दति ॥

यत्र श्रीललिताम्बाया विद्याजापी यतव्रतः ।
तद्दिव्य क्षेत्रमुद्दिष्टं समन्ताद्योजनायतम् ॥

निधयः शङ्खपद्माद्यास्तस्य द्वारे वसन्ति हि ।
धर्मार्थकाममोक्षास्तत्करे तिष्ठन्ति सन्ततम् ॥

माहात्म्यं सुन्दरी देव्या निधानमिव सन्ततम् ।
गोपितव्यं प्रयत्नेन यदिच्छेदात्मनो हितम् ॥

अङ्गिरोभृगु दक्षाद्या जगत्सृष्टिकरा अपि ।
वसिष्ठ वामदेवाद्या दिव्या ब्रह्मर्षयोप्यमी ॥ १००

कपिलाद्या महासिद्धा अपि नारायणात्मकाः ।
सनकाद्याश्च योगीशा मार्कण्डेयादयोऽपि च ॥

ललिताम्बां श्रियं देवीं प्रजप्त्वैव यतव्रतः ।
सम्प्राप्य सकलाभीष्टं जपन्त्यद्यापि मत्प्रिये ॥

एतदेव तपोऽत्युग्रमिदमेव महद्व्रतम् ।
अयमेव परो योग इदमेव परं फलम् ॥

इयमेव परादीक्षा गतिरेषा परात्परा ।
इति मत्वा श्रियो विद्यामन्वहं प्रजपेच्छिवे ॥

समस्त वेदवेदान्त सारभूतार्थ संग्रहा ।
इयमेव महाविद्या नाम्नोक्ता परमर्षिभिः ॥ १०५

सिद्धत्वमथ देवत्वं गन्धर्वत्वमथापि वा ।
किन्नरत्वं महर्षित्वं शक्रत्वं च विधातृताम् ॥

विष्णुत्वं वाऽथ रुद्रत्वमिच्छता नियतात्मना ।
श्रीविद्यैव प्रजप्तव्या नान्या विद्या वरानने ॥

शापानुग्रह सामर्थ्यमजरामरतामपि ।
अवश्यमिच्छता जाप्या श्रीविद्यैव वरानने ॥

षोडशार्णां महाविद्यां यद्वा पञ्चदशाक्षरीम् ।
जप्त्वा सकलभाग्यानामाधारो देववद्भवेत् ॥

समस्त संपदाधारस्समस्तापद्भिर्वर्जितः ।
श्रीविद्या जापको नित्यं भवत्येव जगत्पतिः ॥

माहात्म्यं ललिताम्बाया इति किञ्चिन्मयेरितम् ।
समस्ताघहरं पुण्यं किं पुनः श्रोतुमिच्छसि ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे द्वितीयोऽध्यायः ॥

## अथ तृतीयोऽध्यायः ॥

**ऋश्यश्रृङ्ग उवाच—**

इति श्रुत्वा महादेवी दक्षिणामूर्तिमीश्वरम् ।
कृताञ्जलिपुटा भूत्वा पुनराह गिरीन्द्रजा ॥

**श्रीदेव्युवाच—**

भगवन्देव देवेश विद्या गुप्ततरा शुभा ।
श्रियः पञ्चदशार्णेयं श्रुता सर्व समृद्धिदा ॥

तदनुष्टान मखिलं वद मे करुणानिधे ।

**श्रीदक्षिणामूर्तिरुवाच—**

श्रृणु देवि प्रवक्ष्यामि रहस्यं श्रिय आदरात् ॥

यत् श्रुत्वाऽपि नरो धीमान् पूज्यते त्रिदशैरपि ।
श्रीमदष्टाक्षरीं विद्या श्रीविद्यैव ततः परम् ॥

द्वयमेव महासिद्धिप्रदमन्यन्न विद्यते ।
वेदान्तेष्वपि वेदेषु रहस्यं महदद्भुतम् ॥ ५

माहात्म्यं ललिताम्बाया श्रृणुष्वावहिता प्रिये ।
ब्राह्मे मुहूर्त उत्थाय ब्रह्मरंध्रे निजं गुरुम् ॥

वराभयकरं शुद्ध स्फटिकाभं शिवात्मकम् ।
नारायणाकृतिं वाऽपि स्वशक्ति सहितं विभुम् ॥

स्मृत्वा तत्पादयुगल विगलद्भिः सुधारसैः ।
ध्यात्वा प्लावितमात्मानं स्मरेदाचार्यपादुकाम् ॥

मूलादि ब्रह्मरन्ध्रान्तं ज्वलन्तीं पर संविदम् ।
उद्यत्सूर्य सहस्राभां तेजोरूपामथ स्मरेत् ॥

तदीय तेजः पुञ्जेन पिञ्जरीकृत विग्रहः ।
ब्रह्मविद्यां प्रजप्त्वादौ भगवद्रश्मिमालिकाम् ॥ १०

त्रैपुरीं रश्मिमालां च संस्मृत्य गिरिकन्यके ।
स्मृत्वा द्वादशधा विद्यां श्रियः सकलसिद्धिदाम् ॥

बहिर्निर्गत्य मूत्रादि विसर्जनमथाचरेत् ।
मुखप्रक्षालनादीनि कृत्वाऽऽचम्य प्रयत्नतः ॥

प्राणानायम्य संकल्प्य स्नात्वा नद्यामतः परम् ।
तोयाञ्जलिं त्रिधा मूलमुच्चार्य शिरसि क्षिपेत् ॥

मूलाभिमन्त्रिता आपस्त्रिधा पीत्वा ततः परम् ।
त्रिधा सन्तर्प्य मूलेन ललिताम्बां त्रयीमयीम् ॥

त्रिधा संमार्ज्य मूलेन वाससी परिधाय च ।
नित्यसन्ध्यामुपास्याऽथ ह्रां ह्रीं ह्रूँ ह्रः स इतीरयेत् ॥

मार्ताण्डभैरवायेति प्रकाशेति ततः परम् ।
शक्त्याद्य सहितायेति वह्निजायामथोच्चरन् ॥

अनया रवि गायत्र्या सवित्रेऽर्घ्यं त्रिधाऽर्पयेत् ।
रविमण्डलमध्येऽथ स्मृत्वा श्रीचक्रमादरात् ॥

वाग्भवं बीजमुच्चार्य पदं त्रिपुरसुन्दरि ।
विद्महे पदमुच्चार्य कामराजमतः परम् ॥

पीठ कामिनि शब्दं च धीमहीति ततः परम् ।
शक्तिबीजं समुच्चार्य तन्नः क्लिन्नं प्रचोदयात् ॥

अनया ललिताम्बायै दद्यादर्घ्यं ततस्त्रिधा ।
अथाचार्य पदाम्भोज द्वितयं सर्वकामदम् ॥ २०

ब्रह्मरन्ध्रे सहस्रारे ध्यात्वा नत्वा पुनः पुनः ।
कुमारीं प्रजपेदादौ यथाशक्त्या गिरीन्द्रजे ॥

अन्नपूर्णामथ स्मृत्वा विद्यामश्वासनामथ ।
पादुकां संस्मरेत्पश्चान्मूलाचार्यस्य सिद्धिदाम् ॥

रामो दाशरथिः स्वामी विद्या कुलगुरुः स्मृतः ।
स एव सच्चिदानन्द नाथ आचार्य ईश्वरः ॥

तत्पादुकामजप्त्वा यः श्रीविद्यां सततं जपेत् ।
कल्पकोटि शतेनाऽपि न सिद्धिस्तस्य जायते ॥

योऽसौ दाशरथिः साक्षात् भगवान् जानकीपतिः ।
तमनुस्मृत्य सततं सर्वसिद्धियुतो भवेत् ॥ २५

तेनैवोक्तमिदं शास्त्रं वेदसारं यशस्करम् ।
अनुग्रहाय लोकानां भुक्ति मुक्ति फलप्रदम् ॥

तुभ्यं तदुक्तमेवाहं तन्त्रं वक्ष्ये यशस्करम् ।
स एवास्मत्कुलगुरुः स्वामी दाशरथिर्विभुः ॥

तत्पादुकामनुस्मृत्य श्रीविद्यामन्वहं जपेत् ।
आसने सम्यगासीनः प्राणानायम्य वाग्यतः ॥

श्रीविद्या जपसंकल्पं कुर्यादादौ यतव्रतः ।
दक्षिणामूर्ति नामाहमृषिरस्योक्त ईश्वरः ॥

छन्दः पाङ्क्तमिति प्राहुर्देवता चिन्मयी परा ।
श्रीमहात्रिपुरेत्युक्ता सुन्दरी परदेवता ॥ ३०

ललिता श्रीमहापट्टारिका लक्ष्मी स्त्रयी मयी ।
देवता कथिता सर्वं जगन्माता महेश्वरी ॥

वाग्भवं प्रथमं खण्डं बीजमुक्तं त्रयीमयम् ।
शक्त्याद्यं शक्ति खण्डं च शक्तिरुच्यते श्रियः ॥

कामाद्यं कामराजं च कीलकं समुदाहृतम् ।
श्रीदेवी ललिता प्रीत्यै विनियोग उदाहृतः ॥

... .......... द्विरावृत्त्याङ्गुलीष्वथ ।
मध्यमाङ्गुलिमारभ्य तलान्तं विन्यसेच्छिवे ।
श्रीविद्याचक्रमन्त्राणां वाङ्माया कमला पुरः ॥

आचार्यं विन्यसेच्चक्रे पूजामपि समाचरेत् ।
कुमारिका द्विरावृत्त्या षडङ्गन्यासमाचरेत् ॥

अन्तर्बहिर्मातृकां च न्यसेदपि ततः परम् ।
वशिन्याद्यष्टकन्यासं ततः कुर्यादनन्यधीः ॥

तारत्रितयमुच्चार्य स्वरषोडशकां ततः ।
उच्चार्य भान्तं भूसंस्थं वामकर्ण समन्वितम् ॥

बिन्दुयुक्तं वरारोहे वशिनी बीजमुद्धृतम् ।
........ ... उच्चार्य वशिनीति पदं ततः ॥

वाग्देवता पदं पश्चाच्चतुर्थी हृदयान्वितम् ।
अनेन शिरसि न्यस्य कवर्गं प्रोच्चरेदथ ॥

ब्रह्म भू भुवनेशानी पदं कामेश्वरीत्यथ ।
वाग्देवतापदं पश्चाच्चतुर्थ्यन्तं नमोन्वितम् ॥ ४०

विन्यस्याऽपि ललाटेऽथ चवर्गं प्रोच्चरेदपि ।
भांतभूमि सुतारूढं बिन्दुं वामाक्षि संयुतम् ॥

मोदिनी वाग्देवतायै नमो भ्रूमध्यमे न्यसेत् ।
टवर्णं वसुधारूढं वायुं षष्ठ समन्वितम् ।

विमला वाग्देवतायै नमः कण्ठेऽथ विन्यसेत् ।
तवर्णं च कवर्गान्त्यं वैकुण्ठारूढमप्यथ ॥

वामाक्षि बिन्दु सहितमरुणा पदमप्यथ ।
वाग्देवता पदं पश्चाच्चतुर्थ्यन्तं नमोऽन्वितम् ॥

हृदि न्यस्य पवर्गं च हसलव्यूमतः परम् ।
जयिनी वाग्देवतायै नमो नाभौ प्रविन्यसेत् ॥ ४५

पकारादि चतुर्वर्णान् वयुतंद्रा समन्वितम् ।
स बिन्दुवामकर्णं च ततः सर्वेश्वरी पदम् ॥

वाग्देवता पदं पश्चाच्चतुर्थ्यन्तं नमोऽन्वितम् ।
लिङ्गेन्यस्य शकारादि षट्कं क्ष्मीमिति बीजकम् ॥

कौलिनी वाग्देवतायै नमो मूलेऽथ विन्यसेत् ।
वशिन्याद्यष्टकन्यास उक्तोऽयं सर्वसिद्धिदः ॥

अनेन न्यासयोगेन संवत्सर मतन्द्रितः ।
वाचां सिद्धिं समासाद्य संपदामाश्रयो भवेत् ॥

मूर्ध्नि मूले च हृदये लोचन त्रितयेऽप्यथ ।
श्रुतिद्वये च वदने भुजयुग्मे ततः परम् ॥ ५०

पृष्ठे जानुयुगे बिन्दून् नमोंतान् बीज पूर्वकान् ।
मूलविद्याक्षरान्न्यस्य साक्षाद् ब्रह्ममयो भवेत् ॥

न्यासेऽपि चक्रपूजायां वाणीं मायां समन्विताम् ।
सर्वेऽपि मंत्रा उच्चार्या देवता भावसिद्धये ॥

मातृका द्वितयंन्यस्य न्यस्य वाग्देवताष्टकम् ।
मूलविद्याक्षरन्यासं न्यस्य साक्षाज्जगत्पतिः ॥

परब्रह्ममयो ब्रह्म विष्णु रुद्राकृतिर्भवेत् ।
षोढा न्यासमकृत्वापि श्रीचक्रन्यासमप्यथ ॥

अकृत्वापि च कृत्वा वा ध्यायेच्चिद्रूपिणी पराम् ।
षोढा श्रीचक्रविन्यासौ दुर्लभौ भुवनत्रये ॥ ५५

मासान्तरेऽप्यसौ कृत्वा ब्रह्मरूपी न संशयः ।
नैत्यकन्यास उक्तोऽयं समस्त फल सिद्धिदः ॥

न्यास त्रयमिदं नित्यं विन्यस्यादौ दिने दिने ।
जप्त्वा विद्यामिमां साक्षात्परब्रह्मस्वरूपिणीम् ॥

शिव विष्णवाकृतिः साक्षात् स भवेत्परमेश्वरः ।
इत्थं विन्यस्य विधिवत् न्यासजालं दिने दिने ॥

तेजोमयीं त्रयीरूपां ध्यायेद्देवीं श्रियं पराम् ।
ततः पद्मनिभां देवीं बालार्क किरणारुणाम् ॥

जपाकुसुम सङ्काशां दाडिमी कुसुमोपमाम् ।
पद्मराग प्रतीकाशां कुङ्कुमोदर सन्निभाम् ॥ ६०

स्फुरन्मुकुट माणिक्य किङ्किणीजाल मण्डिताम् ।
कालालिकुल सङ्काश कुटिलालकपल्लवाम् ॥

प्रत्यग्रारुण सङ्काश वदनाम्भोज मण्डलाम् ।
किञ्चिदर्धेन्दु कुटिल ललाटमृदुपट्टिकाम् ॥

पिनाकि धनुषाकार भ्रूलतां परमेश्वरीम् ।
आनन्दमुदितोल्लास लीलांदोलितलोचनाम् ॥

स्फुरन्मयूख संघात विलसद्धेम कुण्डलाम् ।
स्वगण्ड मण्डिताभोग जितेन्द्वमृत मण्डलाम् ॥

विश्व कर्माभि निर्माण सूत्र स्पष्ट सुनासिकाम् ।
ताम्र विद्रुम बिम्बाभ रक्तामृतरसाधराम् ॥ ६५

दाडिमीबीज सङ्काश दन्त पङ्क्ति विराजिताम् ।
रक्तच्छाया जगद्भासि जिह्वां मधुरभाषिणीम् ॥

स्मित माधुर्य विजित माधुर्य रस सागराम् ।
अनूपम गुणोपेत चुबुकोद्देश शोभिताम् ॥

कम्बुग्रीवां महादेवीं मृणाल ललितैर्भुजैः ।
रक्तोत्पल दलाकार सुकुमार कराम्बुजाम् ॥

कराम्बुज नखज्योत्स्ना वितानित नभःस्थलाम् ।
मुक्ताहार लतोपेत समुन्नत पयोधराम् ॥

त्रिवली वलना युक्त मध्यदेश सुशोभिताम् ।
लावण्य सरिदावर्ता कार नाभि विभूषिताम् ॥ ७०

अनर्घ्य रत्न खचित काञ्चीयुत नितम्बिनीम् ।
नितम्ब बिम्ब द्विरद रोमराजी वरांशुकाम् ॥

कदली ललितस्तम्भ सुकुमारोरुमीश्वरीम् ।
कन्दर्प कदली तुल्य जङ्घायुगळ मंडिनीम् ॥

गूढ गुल्फ पदद्वंद्व प्रपदां जित कच्छपाम् ।
तनुदीर्घाङ्गुली भास्वन्नख चन्द्र विराजिताम् ॥

ब्रह्म विष्णु शिरोरत्न निघृष्ट चरणाम्बुजाम् ।
शीतांशुशत सङ्काश कान्ति सन्तान हासिनीम् ॥

लौहित्य जित सिन्दूर जपा दाडिम रागिणीम् ।
रक्तवस्त्रं परीधानां पाशाङ्कुश करोद्यताम् ॥ ७५

रक्तपुष्प निविष्टां च रत्नाभरणभूषिताम् ।
चतुर्भुजां त्रिनेत्रां च पञ्चबाणधनुर्धराम् ॥

कर्पूर शकलोन्मिश्र ताम्बूलापूरिताननाम् ।
महामृगमदोद्दाम कुङ्कुमारुण विग्रहाम् ॥

सर्वशृङ्गारवेषाढ्यां सर्वालङ्कारभूषिताम् ।
जगदाह्लाद जननीं जगद्रञ्जनकारिणीम् ॥

जगदाकर्षणकरीं जगत्कारण रूपिणीम् ।
सर्वमन्त्रमयीं देवीं सर्वसौभाग्य सुन्दरीम् ॥

सर्वलक्ष्मीमयीं नित्यं परमानन्द नन्दिनीम् ।
वन्दे पाशाङ्कुशाभीष्ट पञ्चबाण धनुर्धराम् ॥ ८०

रक्ताङ्गां शुकवेषाढ्यां पद्मस्थां परमेश्वरीम् ।
बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ॥

अरुणां करुणा तरङ्गिताक्षीं
धृतपाशाङ्कुश पञ्चबाण चापाम् ।
अणिमादिभिरावृतां मयूखै-
रहमित्येव विभावये भवानीम् ॥

कदम्बवनमध्यगां कनकमण्डपावस्थितां
सिताम्बुरुह वासिनीं सतत सिद्धिसौदामिनीम् ।
विडम्बित जपारुचिं विशदचन्द्र चूडामणिं
त्रिलोचन कुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥

सकुङ्कुम विलेपना मलकचुम्बि कस्तूरिकां
समन्दहसितेक्षणां सशरचाप पाशाङ्कुशाम् ।
अशेषजन मोहिनी मरुणमाल्य भूषोज्ज्वलां
जपाकुसुमभासुरां जपविधौ स्मराम्यम्बिकाम् ॥

इक्षु कार्मुकपुष्पेषु पाशाङ्कुशधरां पराम् ।
उद्यत्सूर्यनिभां वन्दे महात्रिपुरसुन्दरीम् ॥ ८५

सुधाब्धौ कल्पकोद्याने रत्नमण्डपमध्यगाम् ।
अमृतानन्द सन्दोह सन्तत्यै तां भजाम्यहम् ॥

ध्यात्वेत्थं मातृकां लक्ष्मीं महात्रिपुरसुन्दरीम् ।
पञ्चोपचारान् कृत्वाऽथ दशमुद्राः प्रदर्श्य च ॥

सहस्रं प्रजपेद्विद्यामथ पञ्चशतं तु वा ।
त्रिशतं प्रजपेन्नित्यं अष्टोत्तरशतं तु वा ॥

महतीं सिद्धिमासाद्य साक्षाद्ब्रह्ममयो भवेत् ।
पश्चिमद्वारगे लिङ्गे वृषशून्ये शिवालये ॥

नारायणालये वापि पर्वताग्रेऽथवा शुचिः ।
आचार्य सन्निधौ वापि जपेल्लक्षत्रयं श्रियम् ॥ ९०

दशांशं तर्पयेद्विद्वान् किं शुकै राज्यलोलितैः ।
तद्दशांशं हुनेदग्नौ मधुत्रितयमिश्रितैः ॥

आचार्य चरणाम्भोजे दत्वा सस्ययुतां महीम् ।
चतुर्वृषभ संयुक्तां बहुदक्षिणया युताम् ॥

कुण्डल द्वितयं दत्वा श्रीविद्यायाः फलप्रदाम् ।
महतीं सिद्धिमासाद्य सर्वभाग्य विधिर्भवेत् ॥

अथवा ग्रहणे प्राप्ते सवितुः शशिनोऽपि वा ।
दिनत्रयं मिताहारस्साहस्रं त्रिशताधिकम् ॥

जप्त्वा तत्स्पर्शसमये स्नात्वा नद्यां समाहितः ।
आचार्य चरणद्वन्द्व प्रक्षालित जलं पिबेत् ॥ ९५

आचार्य सन्निधावग्नौ विधिवत्संस्कृते शुभे ।
त्रिशताधिक साहस्रं हुत्वाग्नावाज्यमादरात् ॥

आचार्य चरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ।
षष्टि चिह्नक सौवर्ण कुण्डल द्वितयं शुभम् ॥

मधुत्रितय संमिश्र घृत संमिश्र किंशुकैः ।
अथवा जुहुयाद्वह्नौ कृत्वा होमं जयादिभिः ।
ब्रह्मार्पणाहुतिं कृत्वा नमस्कृत्याग्निमादरात् ॥

दिव्यरत्न समायुक्तं दत्वाऽऽचार्यस्य कर्णयोः ।
वसुधां सस्य संपूर्णां दत्वा दक्षिणयान्विताम् ॥

सिद्धिमाप्नोति विद्याया देवानामपि दुर्लभाम् ।
निधिस्सकल विद्यानामाधारस्सर्व संपदाम् ॥ १००

समृद्धिं महतीं प्राप्य पुत्रपौत्रादि संयुताम् ।
अणिमाद्यष्ट सिद्धीनां नायको जगतीपतिः ॥

भूत्वा चिरायुर्विजयी सर्वज्ञस्सुभगस्सुखी ।
आचार्यपत्नीं श्रीबुद्ध्या वासोलङ्करणादिभिः ॥

अवश्यमर्चयेद्धीमान् पुरश्चरण सिद्धये ।
इत्थं कृत्वा पुरश्चर्यां ललिताया मम प्रिये ॥

कन्दर्प सदृशः कान्त्या धनदेन समः श्रिया ।
भूत्वान्ते परमं धाम याति वंश समन्वितः ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
तृतीयोऽध्यायः ॥



# अथ चतुर्थोऽध्यायः ॥

शृणु देवि प्रवक्ष्यामि श्रियः साधनमुत्तमम् ।
यत् श्रुत्वाऽपि नरस्सर्वस्सौभाग्यैक निधिर्भवेत् ॥

येनाऽनेन विधानेन साधकेन दिने दिने ।
जप्यते ललिता विद्या श्रियः पञ्चदशाक्षरीम् ।

नियमात् त्रिशतं भक्त्या चक्रं संपूज्य सादरम् ॥
समस्तं चक्रमभ्यर्च्य मध्य चक्रमथाऽपि वा ।

देशे वा नगरे ग्रामे जगत्क्षोभः प्रजायते ।
ज्वलत्कामाग्नि संताप प्रतप्तास्तप्त मानसः ॥

पिपीलिकादि न्यायेन दूरादायान्ति योषितः ।
मन्त्र संमूढ हृदयाः स्फुरज्जघन मण्डलाः । ५

तद्दर्शनान्महादेवि जायन्ते सर्व योषितः ।
एकामपि पुरश्चर्यां कृत्वा साङ्गां मम प्रिये ॥

नियतस्त्रिशतं जप्त्वा श्रियः पञ्चदशाक्षरीम् ।
मध्यं वा चक्रमभ्यर्च्य वैदिके जातवेदसि ॥

रश्मि मंत्रैस्सकृद्धुत्वा नित्याभिश्च ततः परम् ।
गुरुभिश्च सकृद्धुत्वा ह्यष्टाविंशतिधा श्रिया ॥

इत्थमाचरतो नित्यं साधकस्य महीतले ।
कन्दर्प सदृशी कान्तिर्जायतेऽस्य कलेबरे ॥

अशीतिवर्ष वृद्धोऽपि युवा भवति सन्ततम् ।
नवरत्न समायुक्त मुकुटावृत मस्तकाः ॥ १०

प्रयच्छन्तोऽपि सर्वस्वं सेवन्ते तान्नरेश्वराः ।
ज्वलत्कामाग्नि संतप्ताः सौम्दर्यमदगर्विताः ॥

आयान्ति तेन क्रीडार्थ मन्यभूपाङ्गना अपि ।
संपदस्सकला दिव्या मानुषा अपि संपदः ॥

कौबेर्यस्संपदोऽप्यस्य गृहे तिष्ठन्ति सन्ततम् ।
जडस्स्तब्धो मन्दमतिरपि प्रज्ञा विवर्जितः ॥

आचार्यकृपया साक्षात् सर्वविद्यानिधिर्भवेत् ।
गङ्गाप्रवाहवत्तस्य वाग्विभूतिर्विजृम्भते ॥

अनुग्रहो भवेद्यत्र सोऽपि विद्या निधिर्भवेत् ।
व्यासवाल्मीकि सदृशो सरस्वत्या भवत्यसौ ॥ १५

प्राप्नोति दुर्लभान् भोगानथ दिव्यांश्च मानुषान् ।
वंशाभिवृद्धि सहितो भवत्याचन्द्रतारकम् ॥

चिरायुर्महदारोग्यं प्राप्य कन्दर्प सन्निभः ।
वशीकरोति त्रैलोक्यं यावज्जीवं न संशयः ॥

देहान्ते परमं धाम याति देवैश्च दुर्लभम् ।
लक्षमात्रे प्रजप्ते तु क्षुभ्यन्ते भूतलाङ्गनाः ॥

सुन्दर्यो मदमत्ताश्च तरुण्यो हरिणेक्षणाः ।
यदि न क्षुभ्यते देवि साधकस्य मनो मनाक् ॥

संक्षुभ्यन्ते ततः सर्वाः पाताले नागकन्यकाः ।
तासामपि यदा नासौ क्षोभमेति मनागपि ॥ २०

ततः स्वर्गनिवासिन्यो विद्रवन्ति सुराङ्गनाः ।
गन्धर्वकन्याः किन्नर्यो रूपवत्यो मनोहराः ॥

इत्थं लक्षत्रयं जप्त्वा साधकः स्थिरमानसः ।
संक्षोभयति विश्वेशि त्रैलोक्यं सचराचरम् ॥

लक्षत्रय जपं कृत्वा षष्टिचिह्नक हेमजम् ।
दिव्यरत्न समायुक्तं कुण्डलद्वयमुत्तमम् ॥

आचार्य कर्णयोर्दत्वा बहु सस्य समाकुलाम् ।
बहुदक्षिणया युक्तां प्रदत्वाऽथ वसुन्धराम् ॥

आचार्य पत्न्यै ताटङ्कद्यलङ्कारान् समर्पयेत् ।
सूक्ष्मं वासो युगं दत्वा क्षौमं कार्पासकं तु वा ॥ २५

अवश्यं महतीं सिद्धिं देवतैरपि दुर्लभाम् ।
प्राप्नोत्यत्र न सन्देहः सत्यं सत्यं वदाम्यहम् ॥

अथवा ग्रहणे कृत्वा पुरश्चर्यां पुरोदिताम् ।
सिद्धिमासाद्य महतीं सर्वभाग्य निधिर्भवेत् ॥

अथातः संप्रवक्ष्यामि व्रतान्तरमनुत्तमम् ।
कथितं सर्ववेदेषु सर्वशास्त्रेष्वपि प्रिये ॥

महापातकसंघानां नाशनं सम्पदास्पदम् ।
सर्वसिद्धिप्रदं सद्यो महासौभाग्य सिद्धिदम् ॥

आश्विने मासि सुमहन्नवरात्राभिधं व्रतम् ।
चैत्रेऽपि नवरात्राख्यं व्रतमस्ति महत्तरम् ॥ ३०

तस्मिन् व्रते पुरश्चर्यां कृत्वा साधक पुङ्गवः ।
संप्राप्य महतीं सिद्धिं देवतैरपि पूज्यते ॥

प्रतिपद्दिनमारभ्य नवम्यन्तमघापहम् ।
नवरात्रव्रतं प्रोक्तं समस्ताभीष्ट सिद्धिदम् ॥

आचार्यचरण द्वन्द्वं प्रतिपद्दिवसे प्रिये ।
साष्टाङ्गं दण्डवन्नत्वा तदनुज्ञा पुरस्सरम् ॥

प्रातः स्नात्वा विशुद्धात्मा नित्य संध्यामुपास्य च ।
आचार्य चरणद्वन्द्वं नत्वा ब्रह्मबिले शुभे ॥

आसने सम्यगासीनः कुमार्यादि चतुर्मनून् ।
अष्टाविंशतिधा वाऽपि जप्त्वादौ नियतव्रतः ॥ ३५

प्राणायामं त्रिधा कृत्वा ततः सङ्कल्पपूर्वकम् ।
वर्षसाहस्रसंख्याक सङ्कल्पं नवरात्रके ॥

कृत्वा पूर्वोदितान्न्यासान् ध्यात्वा भगवतीं श्रियम् ।
जप्त्वा समस्तावरणसहितं चक्रमर्चयेत् ॥

रश्मिमन्त्रैस्सकृद्धुत्वा नित्याभिगुरुभिस्सकृत् ।
अष्टोत्तरशतं नित्यं हुनेच्छ्रीविद्ययाऽनले ॥

सुवासिन्यः समभ्यर्च्य नित्यमेकोत्तराः प्रिये ।
एकैकां वा समभ्यर्च्य नित्यमत्र सुवासिनीम् ॥

एककाल मिताहारो भूत्वा नित्यमलङ्कृतः ।
ताम्बूलचर्वणरतो नित्यमाचार्यपूजकः ॥ ४०

महानवम्यां प्राप्तायामाचार्याज्ञा पुरस्सरम् ।
विधिवत् संस्कृते वह्नौ रश्मिमन्त्रैस्सकृद्धुनेत् ॥

नित्याभिर्गुरुभिर्हुत्वा सकृदेव ततः परम् ।
किंशुकैर्धृतसंमिश्रैः कमलैर्वा घृतप्लुतैः ॥

उत्पलैर्मधु मिश्रैर्वा केवलेन घृतेन वा ।
अथवा पायसेनाग्नौ मध्वाज्यसहितेन च ॥

तिलबिल्वविमिश्रेण सहस्रं त्रिशताधिकम् ।
हुत्वा श्रीविद्यया लक्ष्मी विद्ययाऽष्टोत्तरं शतम् ॥

प्रसन्नलक्ष्मी मनुना त्रिशक्त्या च ततः परम् ।
साम्राज्यलक्ष्मी मनुनाप्यष्टोत्तरशतं हुनेत् ॥ ४५

श्रीमदष्टाक्षरेणाऽपि शतमष्टोत्तरं ततः ।
हुत्वा जयादिभिर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥

प्रदक्षिणं नमस्कृत्य ज्वलितं जातवेदसम् ।
स्वाचार्यचरणद्वन्द्वं नत्वा साष्टाङ्गमादरात् ॥

कर्षद्वयमितं हेम षष्टिचिह्नकमेव वा ।
कुण्डलद्वितयं कृत्वा दिव्यरत्नसमन्वितम् ॥

आचार्यकर्णयोर्दत्वा बहुसस्य समाकुलाम् ।
बहु दक्षिणया युक्तामाचार्याय समर्पयेत् ॥

सवत्स गोद्वयं दत्वा दक्षिणान्वितमादरात् ।
दुकूलं वाऽथ कार्पासं सूक्ष्मं वासस्समर्प्य च ॥ ५०

साक्षाच्छ्री ललिता बुद्ध्या ध्यात्वाचार्यस्य वल्लभाम् ।
ताटङ्कस्वर्णचिन्ताकाद्यलङ्कारैः सुशोभनैः ॥

वासोभिश्च समभ्यर्च्य साङ्गं श्रीचक्रमर्चयेत् ।
अशक्तेन दरिद्रेणाप्यवश्यं निष्कपञ्चकम् ॥

आचार्यचरणद्वन्द्वे दातव्यं गिरिकन्यके ।
आचार्यपत्न्यै निष्कं वा सुवर्णं वा समर्पयेत् ॥

अथ भोज्याः सुवासिन्यो मिष्टान्नैः दक्षिणादिभिः ।
इत्थं कृत्वा पुरश्चर्यां नवरात्रव्रते शुभे ॥

अवश्यं महतीं सिद्धिं संप्राप्नोति न संशयः ।
पलद्वयमितं रौप्यपात्रं पलमितं तु वा ॥ ५५

कृत्वाऽऽचार्यपदांभोज द्वितयं प्रणिपत्य च ।
यागद्रव्यं प्रदद्याद्यः स एव परमेश्वरः ॥

तदन्वय समुद्भूता शतसाहस्रशोऽपि च ।
ब्रह्मलोके वसन्त्येव मग्नाश्च नरकार्णवे ॥

आचार्यचरणद्वन्द्वे यागद्रव्यप्रदायकः ।
महानवम्यां तत्पुण्यफलं वक्तुं न शक्यते ॥

तेनेष्टमश्वमेधानां शतं संपूर्णदक्षिणम् ।
तुलापुरुष साहस्रं कृतं तेन न संशयः ॥

श्रोत्रियाय दरिद्राय तन्महानवमी दिने ।
विवाहार्थं धनं दत्वा गोसहस्रफलं लभेत् ॥ ६०

यावन्तः पांसवो भूमेर्यावन्तो वृष्टि बिन्दवः ।
तावत्कुलसहस्राणि कुलानां शतसंयुतः ॥

वैकुण्ठे रमते दिव्यकन्या सहस्रसंयुतः ।
अवश्यं वसुधा दानं कुण्डलद्वयसंयुतम् ॥

महानवम्यां कर्तव्यं साङ्गदक्षिणयान्वितम् ।
आचार्यपत्न्यलङ्कारदानमावश्यकं स्मृतम् ॥

नवरात्रव्रते कृत्वा पुरश्चर्यामिमां प्रिये ।
पुरश्चर्या शतफलं प्राप्नोत्यखिल सिद्धिदम् ॥

सप्त द्वीपवतीं भूमिं धनरत्नौघ संकुलाम् ।
दत्वा यत्फलमाप्नोति स्वाचार्यचरणद्वये ॥ ६५

महानवम्यां वसुधां दत्वा तत्फलमश्नुते ।
महीं प्रतिनिधिद्रव्यमथवा गुरवेऽर्पयेत् ॥

दक्षिणा द्रव्यसहितं कुण्डलद्वितयान्वितम् ।
मही प्रतिनिधिद्रव्यं शतनिष्कमुदाहृतम् ॥

तदर्धं वा तदर्धं वा तदर्धार्धमथापि वा ।
दक्षिणा द्रव्यमप्युक्तं तथैव गिरिकन्यके ॥

कुण्डलद्रव्यमाचार्य कर्णयुग्मे समर्प्य च ।
महेन्द्रसदृशीं लक्ष्मीं प्राप्नोत्यत्र न संशयः ॥

आचार्यपत्न्यै श्रीबुद्धया दत्वालङ्करणादिकम् ।
सुभगः सुन्दरो वाग्मी श्रियः पुत्रो भवत्यसौ ॥ ७०

इत्थं कृत्वा पुरश्चर्यां नवरात्रे मम प्रिये ।
साक्षाद्ब्रह्ममयः सिद्धो भवत्येव न संशयः ॥

श्रियमेव लभेन्नित्यमचलां धनसंकुलाम् ।
कन्दर्पशत सौभाग्यं जगत् त्रयवशङ्करम् ॥

संप्राप्य सर्वविद्यानामधिपो जीवसन्निभः ।
बहुकालमसौ जीवत्यायुरारोग्यसंयुतः ॥

पूज्यते देवसंघैश्च योगिभिः परमर्षिभिः ।
प्रार्थ्यते दिव्यकन्याभिरहर्निशमसौ प्रिये ॥

श्रीचक्रपूजा निरतः श्रीविद्या जपतत्परः ।
स एवाहं न संदेहः स एव हरिरच्युतः ॥ ७५

स एव मुक्तस्स ब्रह्मा स एव जगतीपतिः ।
यस्याचार्ये दृढा भक्तिः श्रीविद्यायां च सन्ततम् ॥

स ब्रह्मा स शिवः साक्षात्स एव भगवान् हरिः ।
नवरात्रव्रते विद्या सिद्धिर्भवति यादृशी ॥

पुरश्चर्या शतेनापि न सिद्ध्यति तथा प्रिये ।
आचार्यनिन्दा कर्तारमपि स्वपितरं गुरुम् ॥

दण्डयेदविचार्यैव पापभागन्यथा भवेत् ।
आचार्यनिन्दा श्रवणाद्देवताशाप भागसौ ॥

पितरं मातरमपि भ्रातरं बान्धवं सुतम् ।
आचार्यनिन्दा कर्तारं दण्डयेदविचारयन् ॥ ८०

कर्णौपिधाय गन्तव्यमशक्तेनान्यतः प्रिये ।
इत्थं कृत्वा पुरश्चार्यां जपेत्साहस्रमन्वहम् ।।

प्रतिवर्षं पुरश्चर्यां कृत्वैकामपि साधकः ।
सहस्रं वा जपेन्नित्यं त्रिशतं वा चतुःशतम् ।।

दृष्टया करोति वागीशं जडं मन्दमतिं तु वा ।
दृष्टया करोति दारिद्र्यैस्सहितं तं श्रियः पतिम् ।।

दृष्टयैवा कर्षयेन्नारीर्दिव्या अपि मनोहराः ।
दृष्टया विनाशयत्याशु ज्वरान् रोगांश्च दारुणान् ।।

दृष्टया विषं नाशयति स्थावरं वाऽथ जङ्गमम् ।
स्वच्छन्दमृत्युः सर्वत्र सिद्धो भूत्वा जगत्त्रये ।। ८५

अणिमाद्यष्ट सिद्धीनां नायको विहरत्यसौ ।
इति श्री जानकीनाथ वदनाम्भोज निःसृतम् ।।

अति गुप्त तमं शास्त्रमुक्तं तुभ्यं मम प्रिये ।
इत ऊर्ध्वं मया देवि किं पुनः श्रोतु मिच्छसि ।।

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
चतुर्थोऽध्यायः ।।

# अथ पञ्चमोऽध्यायः ॥

**श्री देव्युवाच-**

महेश श्रोतुमिच्छामि सर्वज्ञ करुणानिधे ।
षोढान्यास विधानं च चक्रन्यास विधिं तथा ॥

चक्रोद्धारं तथा चक्रपूजां साङ्गामपि प्रभो ।

**श्रीदक्षिणामूर्तिरुवाच –**

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥

अपि गुप्ततरं पुण्यमपि तुभ्यं वदाम्यहम् ।
अज्ञात्वा समयाचारमस्पृष्ट्वा गुरुपादुकाम् ॥

योऽस्मिन् मन्त्रे प्रवर्तेत देवताशाप भागसौ ।
ब्रह्म तादात्म्य संसिद्धि कारणं भुक्ति मुक्तिदम् ॥

पूजा सङ्केतमधुना कथयामि तवानघे ।
यस्य विज्ञान मात्रेण जीवन्मुक्तः प्रमोदते ॥ ५

तत्र नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।
परा चाप्यपरा गौरि तृतीया च परापरा ॥

प्रथमा द्वैत भावस्था सर्वप्रवर गोचरा ।
द्वितीया ह्यपरा पूजा सदा निष्पाद्यते मया ॥

शुद्ध ज्ञान मयी देवि तृतीया स्वपरा मया ।
उत्तमा सा परा प्रोक्ता विधानं शृणु सांप्रतम् ॥

महापद्म तलान्तस्थे वाग्भवे गुरुपादुकाम् ।
आप्यायित जगद्रूपां परमामृतवर्षिणीम् ॥

सञ्चिन्त्य परमाद्वैत भावनामदघूर्णितः ।
दहनान्तर संसर्पन्नादालोकन तत्परः ॥ १०

विकल्परूप संकल्प विमुखोऽन्तर्मुखस्सदा ।
चित्कल्लोलाभिदलित संकोचस्त्वतिसुन्दरः ॥

इन्द्रियप्रीणनैर्दिव्यैर्विहित स्वात्मपूजनः ।
न्यासं विवर्तयेद्देहे षोढा न्यासपुरस्सरम् ॥

प्रथमोऽङ्गुलि विन्यासः षडङ्गाख्योऽपरस्तथा ।
अन्तर्बहिर्मातृकाख्यः तृतीयो न्यास उच्यते ॥

वाग्देवताष्टकन्यासः चतुर्थस्सर्वसिद्धिदः ।
मूल विद्याक्षरन्यासः पञ्चमः फलदायकः ॥

अयं पञ्चविधो न्यासोऽवश्यं कार्यो दिने दिने ।
षोढा चक्रादिकन्यासं कृत्वाऽकृत्वापि वान्वहम् ॥ १५

कृत्वा पञ्चविधन्यासं मूलं विद्यां सदा जपेत् ।
षोढा न्यासं प्रवक्ष्यामि ब्रह्मरूप फलप्रदम् ॥

समस्त पुण्यफलदं सर्वपातकभञ्जनम् ।
षोढान्यासं ततः कुर्याद्येन ब्रह्माण्डनायकः ॥

विराट्स्वरूपी ब्रह्मात्मा शिवः साक्षान्न संशयः
गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैर्मतः ॥

तृतीयस्तारजालेन योगिनीभिश्चतुर्थकः ।
राशिभिः पञ्चमो न्यासो षष्ठः पीठैर्निगद्यते ॥

षोढान्यासस्त्वयं प्रोक्तस्सर्वत्राप्यपराजितः ।
एवं यो न्यस्तगात्रः स्यात्पूज्यः सर्वयोगिभिः ॥ २०

नास्त्यस्य पूज्यो लोकेषु पितृमातृमुखो जनः ।
स एव पूज्यः सर्वेषां स स्वयं परमेश्वरः ॥

षोढान्यास विहीनं यं प्रणमत्येष साधकः ।
सोऽचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते ॥

गुरुभ्यो नम उच्चार्य नमेत्सर्वत्र सन्ततम् ।
आचार्य चरणद्वंद्वं ध्यात्वा कुर्यान्नतिं सदा ॥

षोढान्यास प्रकारं च कथयामि तवानघे ।
श्रवणादपि यस्याशु जायन्ते सर्वसिद्धयः ॥

तरुणादित्य सङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुश वराभीतिकरान् शक्ति समन्वितान् ॥ २५

विन्यसेद्विधिवद्देहे मातृकान्यासवत्प्रिये ।
विघ्नेश्वरस्तथा श्रीश्च विघ्नराजपथाह्वया ॥

विनायकस्तथा तुष्टि शान्तियुक्तः शिवोत्तमः ।
विघ्नकृत्पुष्टियुक्तश्च विघ्नकृच्च सरस्वती ॥

विघ्नराण्मति युक्तश्च मेधावारण नायकः ।
एकदन्तश्च कान्तिश्च द्विदन्तः कामिनीयुतः ॥

गजवक्त्रो मोदिनी च निरञ्जनजटे तथा ।
कपर्दभृत्तथा तीव्रा दीर्घवक्त्रस्ततः प्रिये ॥

ज्वालिनी सहितः पश्चान्मन्था संमर्षणौ ततः ।
वृषध्वजश्च सुभगा गणनाथेन संयुता ॥ ३०

कामरूपिणिका पश्चात् गजेन्द्रः शुभया युतः ।
सूर्यकर्णश्च जयिनी त्रिनेत्रस्सत्ययाऽन्वितः ॥

लम्बोदरश्च विघ्नेशो महानन्दस्वरूपिणी ।
चतुर्मूर्तिः कामदा च सदाशिवयुता ततः ॥

मदविह्वल नाम्नी च आमोद विकटे ततः ।
दुर्मदाश्च तथा घूर्णी सुमुखा भूतिमीप्सतः ॥

प्रमोदश्च तथा भूमिरेकपादस्तथा स हि ।
द्विजिह्वश्च रमायुक्तः शूरश्चैव तु मानुषी ॥

वीरेण सहिता पश्चाच्छैलजे मकरध्वजा ।
षण्मुखश्च त्रिवार्णा च वरदो भ्रुकुटी लता ॥ ३५

वामदेवस्तथा लज्जा वक्रतुण्डस्तथा निशा ।
दीर्घघोणान्विता पश्चात् ... ... ... ... ॥

सेनानीर्यामिनी युक्तो ग्रामणी रात्रिसंयुतः ।
मत्तश्च चन्द्रिकायुक्तो विमलश्च शशि प्रभा ॥

मत्तवाहन लोले च जटी च चपलेक्षणा ।
मुण्डी ऋश्वर्वीयुतः पश्चात् दण्डी दुर्भगयान्वितः ॥

वरेण्यश्चैव सुभगा वृषकेतुस्तथा शिवा ।
भक्ष्यप्रियश्च दुर्गाऽथ मेघनादश्च कालिका ॥

गणेशः कालकुब्जा च गणपो विघ्नहारिणी ।
एतास्तु विन्यसेद्देवि मातृकावर्णवत्प्रिये ॥ ४०

मातृकाक्षर पूर्वाश्च ग्रहन्यासं वदाम्यथ ।
रक्तं श्वेतं तथा रक्तं श्यामं पीतं च पाण्डुरम् ॥

धूम्रकृष्णं कृष्णधूम्रं धूम्रधूम्रं विचिन्तयेत् ।
रविमुख्यान् कामरूपान् सर्वाभरणभूषितान् ॥

स्वरैरर्कं हृदि न्यस्य कवर्गेणेन्दुमप्यथ ।
भ्रूमध्ये च चवर्गेण भौमं नेत्रत्रये न्यसेत् ॥

बुधं हृदि टवर्गेण तवर्गेण बृहस्पतिम् ।
हृदयोपरि देवेशि पवर्गेण गले भृगुम् ।।

पवर्गेण शनिं नाभौ राहुं वक्त्रे शवर्गकम् ।
लक्षाभ्यां तु गुदे केतुं न्यसेदेवं वरानने ।। ४५

अथ नक्षत्रबृन्दस्य न्यासं कुर्यात्सुखप्रदम् ।
ज्वलत्कालाग्नि सङ्काशाः सर्वाभरणभूषिताः ।।

नति पाण्योऽश्विनी मुख्या वरदाभय पाणयः ।
युग्मं युग्मं तथा युग्मं युग्मयुग्म सरोहिणीम् ।।

एकमेकं तथा द्वन्द्वमेकं पुष्यान्तमुच्यते ।
ललाटे नेत्रयोः पश्चाद्वाम दक्षिण कर्णयोः ।।

अंसद्वये वामकण्ठे दक्षकण्ठे क्रमान्न्यसेत् ।
पुष्यान्तं च प्रविन्यस्य खगार्णाभ्यां तु सार्पकम् ।।

दक्षस्कन्धे घङाभ्यां तु गघां संधि द्वितीयके ।
पूर्वाफल्गुनीं दक्षे चङर्परं छजपूर्विकाम् ।। ५०

उत्तरं फाल्गुनीं वाम कूर्परे विन्यसेत्प्रिये ।
झजवर्णास्थितं हस्तं मणिबन्धेऽथ दक्षिणे ।।

चित्रा टठस्थां वामे च मणिबन्धे न्यसेत्प्रिये ।
उकारेण युतां ज्येष्ठां न्यसेद्दक्षक यै प्रिये ।।

न पफस्थं तथा मूलं न्यसेद्वामकटौ प्रिये ।
पूर्वाषाढां वकारेण दक्षो रौ विन्यसेत् प्रिये ॥

भकारेणोत्तराषाढां वामो रौ तदनन्तरम् ।
मकारेण युक्तं श्रवणं दक्षजानुनि विन्यसेत् ।
यरस्थितां धनिष्ठां तु वामजानुनि विन्यसेत् ॥

लकारेण ततो देवि शततारां न्यसेत्प्रिये ।
दक्षघंघा गतां पश्चात् पूर्वभाद्रपदां ततः ॥ ५५

वशवर्णस्थितां न्यस्य वामजङ्घा गतां क्रमात् ।
षसहस्थोत्तरा भाद्रपदां दक्षिण पादके ॥

क्षकारेण विसर्गाद्य विसर्गाभ्यां च रेवतीम् ।
वामपादे प्रविन्यस्य योगिनी न्यासमारभेत् ॥

सितासिता रुणा बभ्रु चिताषीता विचिन्तयेत् ।
चतुर्भुजाः स्मितवक्त्राः सवाभरणभूषिताः ॥

डां डीं बीजद्वयं योक्त्वा डमलावस्थे प्रिये ।
वामकर्णेन्दु नादाख्यं डाकिन्यैन मरुत्यपि ॥

स्वरान्ते तु प्रवक्तव्यमन्ते रक्ष पदद्वयम् ।
त्वगात्मने कण्ठदेशे विशुद्धौ विन्यसेत्प्रिये ॥ ६०

कठवर्णं राकिनीं तु कं काराद्यक्षरैः क्रमात् ।
पूर्ववद्बीजसंयुक्तैरसृगात्माऽत्र संवदेत् ॥

अनाहते न्यसेत्पश्चादुकारादि फकारकैः ।
लाकिनी च ततो देवि मांसात्मा मणिपूरके ॥

बलवर्णैः काकिनीं तु स्वाधिष्ठाने तथाविधाम् ।
मेदः स्वरूपां विन्यस्य वसवर्णैस्तुषाकिनीम् ॥

अस्थिरूपां च पूर्वोक्तबीजं दक्षां च संवदेत् ।
ह क्ष वर्णस्थितां तद्वद्धाकिनीं द्विदले न्यसेत् ॥

हं सं शब्देन देवेशि तद्वद्धाकिनिकां न्यसेत् ।
ब्रह्मरन्ध्रे महेशानी न्यासोऽयं योगिनीयुतः ॥ ६५

राशिन्यासं ततः कुर्यात्सर्वरक्षाकरं सदा ।
रक्तश्वेत हरिद्वर्ण पाण्डु चित्रासितान् स्मरेत् ॥

पिशङ्ग पिङ्गलौ बभ्रु कर्बुरासित धूमलान् ।
अकारादि चतुर्वर्णैः विन्यसेत्सुरवन्दिते ॥

मेषं दक्षिणगुल्फे तु ततो द्वन्द्वेन वै वृषम् ।
न्यसेज्जानुनि वेदैस्तु मिथुनं वृषणे ततः ॥

द्वाभ्यां कर्कटकौ कुक्षौ द्वाभ्यां स्कन्धे च सिह्मकम् ।
अनुस्वारविसर्गाभ्यां शवर्गेण च कन्यकाम् ॥

दक्षिणे च शिरोभागे विन्यसेद्वीरवन्दिते ।
ततो वामशिरो भागे कवर्गेण तुलामृता ॥ ७०

चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेत्प्रिये ।
टवर्गेण तथा कुक्षौ धान्विनं विन्यसेत्प्रिये ॥

मकरं तु तवर्गेण विन्यसेच्छ्रवणे क्रमात् ।
पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत् ॥

यवर्गेण क्षकारेण मीनं गुह्येऽथ विन्यसेत् ।
पीठानि विन्यसेद्देवि मातृका स्थानके पुनः ॥

तेषां नामानि कथ्यन्ते शृणुष्वावहिता प्रिये ।
कामरूपं वाराणसी नैपालं पौण्ड्रवर्धनम् ॥

वरस्थिरं कन्या कुब्जं पूर्णशैलं तथार्बुदम् ।
आम्रातकेश्वरैकाम्रं श्रीस्तोतः कामकोटकम् ॥ ७५

कैलासं भृगु नगरं केदारं चन्द्रपूजकम् ।
श्रीपीठमेकापीठं जालान्ध्रं माळवं तथा ॥

कूलूत्थं देवकूलं च गोकर्णं मारुक्तेश्वरम् ।
अट्टहासं च विरजं राजगृहं महापथम् ॥

कोल्लापुरमेलापुरमोङ्कारं च जयान्तिकम् ।
उज्जयिन्यं विचित्राख्यं क्षीरकं हस्तिनापुरम् ॥

उड्डीशं च प्रयागाख्यं बिल्वं मायापुरं तथा ।
जलेशं मलपं शैलं मेरुं गिरिवरं तथा ॥

महेन्द्रं वामनं चैव हिरण्यपुरमेव च ।
महालक्ष्मी पुरो प्राणं छायाछत्रमतः परम् ॥ ८०

एते पीठास्समुद्दिष्टा मातृकारूपमास्थिताः ।
उक्तः षोढाभिधन्यासो ब्रह्म सारूप्य सिद्धिदः ॥

कृत्वा षोढाभिधं न्यासं विराडात्माहरिः स्वयम् ।
साक्षात्परा शिवाकारो भवत्येव न संशयः ॥

षोढा न्यासमिमं कृत्वा श्रीचक्र न्यासमाचरेत् ।
न्यस्तेन येन भवति ब्रह्मरूपी जगत्पतिः ॥

नवयोन्यभिधं न्यासं न्यसेदादौ ममप्रिये ।
श्रोत्रयोश्चुबुके चैव शंखास्थिषु दृशोर्नसि ॥

अंसद्वये च हृदये न्यसेत्कूर्पर कुक्षिषु ।
जान्वंध्रुपाद गुह्येषु पार्श्वहृत्सु स्तनद्वये ॥ ८५

स कण्ठे नवयोन्याख्यं न्यसेद्बीज मयात्मकम् ।
पुनर्बालां समुच्चार्य चतुरस्रं विचिन्तयेत् ॥

पुनर्बालां समुच्चार्य श्रीविद्यां परितो न्यसेत् ।
गोलकन्यास योगेन श्रीचक्रं परिचिन्तयेत् ॥

षट्चक्रेषु ललाटे च सीमन्ते च निराविले ।
नवस्थानेषु संकल्प्य न्यसेद्देवि ततः परम् ॥

श्रीविद्यां ब्रह्मरन्ध्रे च पृष्ठतो गुरवः क्रमात् ।
तिथिनित्यास्ततो देवि मातृकास्वर संयुताः ॥

स्वरान् सर्वान् न्यसेद्वक्त्रे सर्वसौभाग्यदायकान् ।
प्रकटाद्यान्न्यसेत् पश्चाद्याधारादिषु मन्त्रवित् ॥ ९०

अन्तः श्रीचक्रविन्यास उक्तोऽयं सर्वसिद्धिदः ।
अन्तः श्रीचक्रविन्यासं कृत्वा सकृदपि प्रिये ॥

ब्रह्मविष्णु महेशाद्यैरपि लोकेषु पूज्यते ।
बाह्य श्रीचक्रविन्यासं श्रृणु मत्प्राणवल्लभे ॥

यस्य विज्ञानतो वापि ब्रह्मरूपी भवत्यसौ ।
महात्रिपुरसुन्दर्याश्चक्रन्यासं श्रृणु प्रिये ॥

यन्न कस्यचिदाख्यातं सर्वसिद्धिकरं परम् ।
चतुरस्राद्य रेखायै नम इत्यादितो न्यसेत् ॥

दक्षांस पृष्ठपाण्यग्रस्थित पारांगुलीष्वथ ।
वामांगुलीषु ... ... ... ... ... ॥ ९५

समूलतलपृष्ठेषु व्यापकत्वेन सुन्दरि ।
अत्रैव स्थानदशके अणिमाद्याः प्रविन्यसेत् ॥

सिद्धांस्तदन्तश्च तनु व्यापकत्वेन सुन्दरि ।
चतुरस्र रेखायै नम इत्यपि वल्लभे ॥

विन्यस्य तस्या स्थानेषु ब्राह्मण्याद्यास्तथाष्टसु ।
पादाङ्गुष्ठद्वये पार्श्वे वक्षे मूर्ध्न्यन्य पार्श्वके ॥

वामदक्षिण जान्वोश्च बहिरंस द्वये तथा ।
न्यस्याथ चतुरस्रान्त रेखायै नम इत्यपि ॥

विन्यसेद्व्यापकत्वेन पूर्वोक्तां तस्य विग्रहे ।
तस्याः स्थानेषु दशसु मुद्राणां दशकं न्यसेत् ॥ १००

ब्रह्मण्याद्यष्टस्थानांत स्थानामष्टान्न्यसेदथ ।
शिष्टे द्वे द्वादशान्ते च पादांगुष्ठे च विन्यसेत् ।
तदन्तः षोडशदल पद्माय नम इत्यपि ॥

विन्यस्य तद्दले कामाकर्षिण्याद्याश्च विन्यसेत् ।
दलानि दक्षिणश्रोत्र पृष्ठमंसं च कूर्परम् ॥

कर पृष्ठं चोरु जानु गुल्फा पाददलं तथा ।
वामपादतलाद्येवमेव देवाष्टकं मते ॥

तदन्ते चाष्टदल पद्माय नम इत्यपि ।
विन्यसेत्तद्दलेष्वेषु दक्षशंखे च जत्रुके ॥

ऊर्वंत गुल्फोरु जत्रु शंखे च वामतः ।
अनङ्गकुसुमाद्याश्च शक्तीरष्टा च विन्यसेत् ॥ १०५

तदन्तश्चतुर्दशार चक्राय नम इत्यपि ।
विन्यसेत्तस्य कोणेषु न्यसेच्छक्तीश्चतुर्दश ॥

सर्वसंक्षोभिणी मुख्यास्तस्य कोणानिव ग्रहम् ।
ललाट दक्षभागं च दक्ष गण्डांस मध्यतः ॥

पार्श्वान्तरूरु जङ्घान्त वामजङ्घादि पार्वति ।
वामोर्वन्तर्वामपार्श्वं वामांसं वाम गण्डकम् ॥

ललाटवामभागं च तथा वै पृष्ठमित्यपि ।
ततो दशार चक्राय नम इत्यपि पार्वति ॥

अस्य कोणादि दक्षोऽक्षि नासामूलान्यनेत्रके ।
कुक्षीश वायु कोणेषु जानुद्वय गुदेषु च ॥ ११०

कुक्षि नैर्ऋत वह्न्याद्य कोणयोश्च न्यसेत्पुनः ।
सर्व सिद्धिप्रदाद्यानां शक्तीनां दशकं तथा ॥

तदन्तश्च दशारादि चक्राय नम इत्यपि ।
विन्यसेत्तस्य कोणेषु सर्वज्ञाद्याः प्रविन्यसेत् ॥

दक्षनासा सृक्विणी च स्तनं वृषणमेव च ।
शिवनी वाममुष्कं च स्तनं सृक्विणि नासिके ॥

नासाग्रं चेति विज्ञेयं कोणानां दशकं तथा ।
तदन्तरष्ट कोणादि चक्राय नम इत्यपि ॥

विन्यस्य तस्य कोणेषु वशिन्याद्यष्टकं पुनः ।
चुबुकं कण्ठ हृदय नाभीनां चैव दक्षिणम् ॥ ११५

ज्ञेयं पार्श्वचतुष्कं च मणिपूरादि नामकम् ।
चतुष्टयं च पार्श्वानामेतत्कोणाष्टकं पुनः ॥

हृदयस्थ त्रिकोणस्य चतुर्दिक्षु बहिर्न्यसेत् ।
शरचापौ पाशसृणीन्त्रिकोणाय नमस्तथा ॥

विन्यस्य तस्य कोणेषु अग्रदक्षोत्तरेषु च ।
कामेश्वर्यादि देवीनां मध्यदेवीं च विन्यसेत् ॥

एवं तवोदितो देवि न्यासो गुह्यतम क्रमः ।
एतद्गुप्ततरं कार्यं त्वया मत्प्राणवल्लभे ॥

समयस्थाय दातव्यं नाशिष्याय कदाचन ।
गुप्ताद्गुप्ततरं चैतत् तवाद्य प्रकटीकृतम् ॥ १२०

मूल देव्यादिकन्यास मणिमान्तं पुनर्न्यसेत् ।
शिरस्त्रिकोणे पूर्वादि कामेश्वरादिकं न्यसेत् ॥

बाणान्नेत्र भ्रूवोश्चापौ कर्णयोः पाशद्वयं न्यसेत् ।
सृणिद्वयं तु नासाग्रे दक्षिणाद्यं तु विन्यसेत् ॥

मुंडुमाला क्रमेणैवं न्यसेद्वाग्देवताष्टकम् ।
द्वौ द्वौ वैन्दवादीनि चक्राणि न्यस्तव्यानि वरानने ॥

नेत्रमूले त्वपाङ्गे च कर्णपूर्वोत्तरे पुनः ।
कण्ठादिके च निम्नोर्ध्वं शिखोर्ध्वं कर्णपृष्ठके ॥

कर्णमूले त्वपाङ्गे च तथा मूले च विन्यसेत् ।
सर्वसिध्यादि कण्ठे च प्रादक्षिण्येन विन्यसेत् ।। १२५

हृदये मनुकोणस्थः शक्तयोऽपि च पूजयेत् ।
नाभौ त्वष्टदलं तन्तुं वंशे वामे च पार्श्वके ॥

उरसस्सव्यपार्श्वे च न्यसेदादि चतुष्टयम् ।
... ... ... न्यसेदन्यश्चतुष्टयम् ।।

स्वाधिष्ठान द्व्यष्टदले कामाकर्षिणि पूर्वकाः ।
शक्तयो विन्यसेत्तस्य पूर्वाद्दक्षावसानकम् ।।

मूलाधारे न्यसेन्मुद्रा दशकं साधकोत्तमः ।
पुनः सव्ये च वंशे च वामे चैवान्तरालके ।।

ऊर्ध्वाधोदशमुद्राश्च ऊर्ध्वाधो वर्जितं पुनः ।
ब्रह्मण्याद्यष्टकं तत्र जंघायां तासु पूर्ववत् ।। १३०

वामजंघां समारभ्य वामादि क्रमतोऽपि च ।
सिद्धयष्टकं न्यसेत्तेषु द्वयं पादतले न्यसेत् ॥

कारणात्प्रसृतं न्यासं दीपाद्दीपमिवोत्थितम् ।
इत्थं विन्यस्य देवेशि स्वाभेदेन विचिन्तयेत् ।।

ततश्च करशुद्धयादि न्यासं कुर्यात्समाहितः ।
मूर्ध्नि गुह्ये च हृदये नेत्र त्रितय एव च ॥

श्रोत्रयुग्मे ततो देवि मुखे च भुजयोः पुनः ।
पृष्ठे जानुनि नाभौ च विद्यान्यासं समाचरेत् ॥

करशुद्धिः पुनश्चैव आसनादि षडङ्गकम् ।
श्रीकण्ठादि च वाग्देवीराधारे हृदये पुनः ॥ १५३

शिखायां बैन्दवस्थाने ह्यग्नि चक्रादिका न्यसेत् ।
तत्वत्रयैः समस्तं च विद्याबीजत्रयान्वितम् ॥

पादादि नाभिपर्यन्तमागलं शिरसस्तथा ।
व्यापकं चैव विन्यस्य स्वामीकृत्य न्यसेत्पुनः ॥

सन्तर्पयेत्पुनर्देवि सौम्याग्नेयामृतद्रवैः ।
षोढा न्यासोऽणिमादिश्च मूलदेव्यादिकः प्रिये ॥

करशुद्ध्यादिकं चैव साधकेनाशु सिद्धये ।
षोढ न्यास समायुक्तं श्रीचक्रन्यासमिष्टदम् ॥

सकृत्कृत्वापि वा साक्षात्परब्रह्ममयः पुमान् ।
तेजोमयतनुर्भूत्वा जीवन्मुक्तः सुखी भवेत् ॥ १४०

त्रिदशैरपि वन्द्योऽसौ योगिभिश्चामरर्षिभिः ।
सिद्ध्यष्टकमनुप्राप्य त्रैलोक्ये विहरत्यसौ ।
मासेन मासत्रयेऽपि वा षण्मासे वत्सरेऽपि वा ॥

कृत्वा षोडाभिधं न्यासं श्रीचक्रन्यासमप्यथ ।
प्राप्नोति महतीं सिद्धिं देवतैरपि दुर्लभाम् ॥

तेजोमय तनुर्भूत्वा श्रियमष्ट गुणान्विताम् ।
योगमष्टाङ्गमासाद्य सर्वलोकेषु पूज्यते ।

कर्ता न्यासद्वयस्यास्य तदज्ञं पितरं तु वा ।
प्रणमेद्यदि मासेन स मृत्युं लभते ध्रुवम् ।

प्रणमेन्नापि दैवं वा विना स्वाचार्यमीश्वरम् ।
कर्ता मासद्वयस्यास्य यत्र तिष्ठति साधकः ॥ १४५

सिद्ध क्षेत्रं तदुद्दिष्टं समन्ताद्योजनत्रयम् ।
कर्ता न्यास द्वय मेतत्सुदुर्लभम् ॥

यः करोति विशुद्धात्मा तस्य सिद्धिः पदे पदे ।
षण्मासाभ्यासयोगेन विधिविष्णु शिवात्मकः ॥

भवत्यासौ जगत्सृष्टिस्थितिसंहारकारकः ।
न वक्तव्यमिदं न्यासद्वयं सकलसिद्धिदम् ॥

भ्रष्टाय साधकायाऽपि प्रतिकूलाय सद्गुरोः ।
श्रीविद्याया जपो नित्यं नित्यमाचार्य पोषणम् ॥

न्यासद्वयं निवेशश्च नाल्पस्य तपसः फलम् ।
इदं न्यासद्वयं नित्यं कृत्वाऽकृत्वापि वा शुचिः १५०

ध्यात्वा निरामयं वस्तु सर्वब्रह्माण्ड नायकम् ।
चिद्रूपं परमं धाम त्रैपुरीकृत विग्रहः ॥

जप्त्वा श्रियो महाविद्यां साक्षाद्ब्रह्ममयो भवेत् ।
न्यासजातमिदं तुभ्यं कथितं गिरिकन्यके ।
श्री सुन्दर्या महादेव्या यजनं संप्रवक्ष्यते ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः ॥

**श्रीदक्षिणामूर्तिरुवाच–**

अकृत्वाप्यथ कृत्वा वा न्यासजालमिदं श्रियः ।
ध्यात्वा देवीं जगद्धात्रीं श्रियं सौभाग्यदेवताम् ॥

यथाशक्त्या प्रजप्त्वाऽथ श्रियः पञ्चदशाक्षरीम् ।
मौनेन प्रविशेद्यागमण्डपं रम्यमीश्वरि ॥

वाग्भवं भुवनेशानीं श्रियमुच्चार्य यत्नतः ।
आधारशक्ति कमलासनाय नम उच्चरेत् ॥

अनेनासनमन्त्रेण सूपविष्टः स्थिरासने ।
तृणासने यशो हानिर्दौर्भाग्यं दारुकासने ॥

पाषाणे दुःखमाप्नोति व्याधिजातं महीतले ।
विचित्रकम्बले सिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ ५

कृष्णाजिने भवेन्मुक्तिर्वाससि श्रीरचञ्चला ।
कुशासने भवेद् ज्ञानं रत्नपीठेऽष्टसिद्धयः ॥

उपविश्यासने शुद्धे पीठमन्त्रेण साधकः ।
उच्चार्य तारत्रितयं रत्न द्वादशतः परम् ॥

उच्चार्य शक्तियुक्ताय द्वीपनाथाय शक्तितः ।
उच्चार्य हृदयं पश्चाद्भूमौ पुष्पाञ्जलीः क्षिपेत् ॥

श्रीचन्दनविलिप्ताङ्गस्सर्वाकल्पविभूषितः ।
मानसालङ्कृतो वाऽपि शुक्लाम्बरधरः शुचिः ॥

हैमे वा राजते ताम्रे भूर्जे वा चक्रमालिखेत् ।
पञ्चशक्ति चतुःशम्भु रूपं चक्रं मनोहरम् ॥ १०

बिन्दुचक्रं विलिख्यादौ त्रिकोणं स्यात्ततः परम् ।
वसुकोणं ततः कृत्वा दशारद्वितयं ततः ॥

मनुकोणं ततः कृत्वा वृत्तमष्टदलान्वितम् ।
ततः षोडश पत्राणि लिखेद्वृत्तयुतान्यपि ॥

वृत्तमेकं ततो लेख्यं भूपुर त्रितयान्वितम् ।
समस्तपातकहरं समस्तफलसिद्धिदम् ॥

जगदाकर्षणकरमणिमाद्यष्टसिद्धिदम् ।
मोहनं सर्वजगतां सर्वतीर्थफलप्रदम् ॥

समस्तयागफलदं सर्वदानफलप्रदम् ।
नित्यानन्दकरं भक्तभोगस्वर्गापवर्गदम् ॥ १५

आधारं सर्वजगतां सर्वकामफलप्रदम् ।
सर्वधर्ममयं सर्वरत्नवित्तफलप्रदम् ॥

सर्वविद्याकरं सर्वरक्षाकरमनुत्तमम् ।
भूतप्रेतपिशाचादि सर्वभीति निवारकम् ॥

समस्तविषसंहार हेतुभूतं सनातनम् ।
आयुरारोग्यदं स्वस्ति पुत्रपौत्राभिवृद्धिकम् ॥

धनधान्यगजाश्वादि सर्वैश्वर्यफलप्रदम् ।
लोकापवादभीतिघ्नं भयमृत्युविनाशनम् ॥

सर्वसंग्रामजयदं सर्वशत्रु विमर्दनम् ।
अलक्ष्मी नाशनं धन्यं चिन्तामण्यादिसिद्धिदम् ॥ २०

सर्वसौभाग्यफलदं ब्रह्मानन्दसुखप्रदम् ।
वेदवेदान्तशास्त्रौघ सारभूतं यशस्करम् ॥

क्लेदनं द्रावणं चैव क्षोभणं मोहनं तथा ।
आकर्षणकरं सर्वस्तम्भनं जंभनं तथा ॥

व्याधि दारिद्र्यशमनं सर्वदुर्गतिभेदनम् ।
शान्तिवृद्धि धनारोग्य मन्त्रसिद्धिकरं परम् ॥

खेचरत्वकरं सर्वकार्यसिद्धिकरं परम् ।
सर्वसिद्धिकरं सर्वश्रेयस्करमनुत्तमम् ॥ २५

सर्वमन्त्रमयं सर्वयोगसिद्धिफलप्रदम् ।
सर्वज्ञानमयं सर्ववाचां सिद्धिफलप्रदम् ॥

सर्वतत्वमयं सर्वशुभदं ऋतुसिद्धिदम् ।
सर्वव्रतमयं देवि सर्वामृतमयं तथा ॥

सर्वदुःखप्रशमनं रोगशोकनिवारणम् ।
सर्वोन्मादकरं देवि सर्वाह्लादनकारकम् ॥

सर्वदौर्भाग्यशमनं सर्वविघ्न विनाशनम् ।
रौद्राभिचारकोच्चाट परमन्त्रौघभक्षणम् ॥

परविद्याकर्षणं च पराज्ञाकर्षणं तथा ।
परसैन्य स्तम्भकरं शस्त्र स्तम्भनकारकम् ॥ ३०

महाचमत्कारकरं महाबुद्धि प्रवर्तकम् ।
महाध्वरहरं देवि महामृत्यु विनाशनम् ॥

महापुरक्षोभकरं महाशुभकरं सदा ।
महालक्ष्मीमयं देवि महामाङ्गल्यसिद्धिदम् ॥

महाप्रभावफलदं महासुख समृद्धिदम् ।
इत्थमेतस्य चक्रस्य प्रभावो वर्णितो मया ॥

उक्तमारण्यकैरेतदयोध्यापुरनामकम् ।
श्रीचक्रमेतदेवोक्तं लक्ष्मीनारायणाभिधम् ॥

शिवशक्तिमयं प्राहुरेतदेव महर्षयः ।
शक्त्या शक्तिं विनिर्भिद्य पुनर्वह्नि पुरेण वै ॥ ३५

संपुटीकृत्य सर्वोर्ध्वां शक्तिं विस्तारयेद्बुधः ।
तामादि चक्राधः शक्तिं वह्निनोर्ध्वं विभेदयेत् ॥

पुनः पूर्ववदेवाद्यां शक्तिं विस्तार्य भेदयेत् ।
ऊर्ध्वशक्तिमधो वह्निं मध्यवह्निं विवर्जितम् ॥

विस्तार्य भेदयेच्छक्तिमधस्तादाद्य वह्निना ।
ततो मध्यादिशक्त्योर्ध्वं शक्तिं विस्तारयेदधः ॥

तथैव संपुटीकुर्यात् सर्वचक्रं सुरेश्वरि ।
तां च तेन महेशानि वह्निचक्रेण भेदयेत् ॥

ग्रन्थिभेदक्रमेणैव सर्वोर्ध्वं सर्वबाह्यतः ।
मध्योर्ध्वं शक्तिपर्यन्तमादिशक्त्यवधि प्रिये ॥ ४०

ततो बाह्यस्थ शक्त्यान्तः शक्तिमूर्ध्वं विकासयेत् ।
ततो विकासयेच्छक्तिमाद्यामप्यूर्ध्वमीश्वरि ॥

सर्वोर्ध्वं वह्न्यधोभाग ग्रन्थिपर्यन्ततः प्रिये ।
विस्तार्य बाह्यशक्ति तु सर्वाधस्ताद्विभेदयेत् ॥

एतद्बाह्यगतं पद्ममष्टपत्रं समालिखेत् ।
तद्बाह्यतोऽपि देवेशि षोडशारं ततःपरम् ॥

परिवेषसमायुक्तं चतुर्द्वारोपशोभितम् ।
ततः सृष्टेर्महाचक्रं तृतीयं तु हुताशनः ॥

मध्यं सृष्टेर्द्वितीयं तु संहारप्रथमं च यत् ।
एवमेतन्महाचक्रं श्रियो देव्या उदीरितम् ॥ ४५

इदं समस्तसाम्राज्य लक्ष्मीचक्रमुदाहृतम् ।
अग्नीषोमात्मकमिदं सर्वविद्यामयं प्रिये ॥

इदमेव जगत्सृष्टिस्थितिसंहृतिकारणम् ।
मातृकावर्णयुक् पूज्यमथ तद्रहितं तु वा ॥

चतुःषष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।
चक्रेऽस्मिन् सविशेषास्तास्साधकं मानयन्ति हि ॥

चतुरस्रं मातृकार्णैर्मण्डितं सिद्धिहेतवे ।
मुक्तामाणिक्यघटित समस्थल विराजितम् ॥

त्रैलोक्ये मोहनं नाम कल्पद्रुम फलप्रदम् ।
षोडशारं चन्द्रबिम्बरूपं तु सकलालयम् ॥ ५०

सर्वाशापूरकं भद्रे स्रवत्पीयूषवर्षणम् ।
अष्टपत्रं महेशानि जपाकुसुमसन्निभम् ॥

सर्वसंक्षोभणं नाम सर्वकाम प्रपूरकम् ।
एतत्त्रयं महेशानि सृष्टिचक्रं सुखप्रदम् ॥

अनन्तफलदं भद्रे सर्वसौभाग्य संपदाम् ।
द्वितीयमपि पद्मास्रं जपाकुसुमसन्निभम् ॥

पूर्वाम्नायाधिदेव्या तु मण्डितं सर्वकामदम् ।
चतुर्दशारं देवेशि दाडिमी कुसुमप्रभम् ॥

सर्वरक्षाकरं चक्रं महाज्ञानमयं प्रिये ।
एतत्त्रयं महेशानि स्थितिचक्रं स्थितिप्रदम् ॥ ५५

दक्षिणाम्नाय संसेव्यं यथेप्सितफलप्रदम् ।
अष्टपत्रं वरारोहे बालार्ककिरणारुणम् ॥

पद्मरागमणिप्रख्यं सर्वरोगहरं सदा ।
उद्यत्सूर्यसहस्राभं बन्धूककुसुमप्रभम् ॥

सर्वसिद्धिप्रदं चक्रं सकलालयमीश्वरि ।
त्रिकोणं सर्वसंभूतिकारणं भूतिदं सदा ॥

पिण्डपत्रं वरारोहे सर्वानन्दमयं परम् ।
सदाशिवमयं चक्रनायकं परमेश्वरि ॥

एतद्बिन्दुचक्रं तु संहाररूपं ब्रह्ममयं सदा ।
पश्चिमाम्नाय संसेव्य त्रयामुत्तरपूजितम् । ६०

अस्मिन् चक्रे षडध्वानो वर्तन्ते वीरवन्दिते ।
चक्रपत्रेषु देवेशि पदाध्वा तु निगद्यते ॥

चक्रेति संविभागेषु भुवनाध्वा व्यवस्थित: ।
वर्णाध्वा मातृकारूपी कथयामि तवानघे ॥

वर्गाष्टकं मातृकाया दिक्षु सिद्धं यत: प्रिये ।
पार्थिवं तन्मयं विद्धि षोडशारं कलाश्रकम् ॥

अष्टपत्रं कादिवर्गै: क्षान्तैर्दिक्षु विदिक्षु च ।
कादि छान्ता: शक्रवर्णा: शक्रकोणेषु संस्थिता: ॥

णकारादि भवर्णान्तान् विलिखेच्च दशारके ।
मकारादि क्षकारान्तान् द्वितीयेऽपि दशारके ॥ ६५

वर्गाष्टकं चाष्टकोणे त्रिकोणे कथयामि ते ।
अकथादि त्रिकोणान्तं हां क्ष युग्मं तु मध्यगम् ॥

वर्णाध्वा कथितो देवि मातृकापीठरूपक: ।
षट्त्रिंशत्तत्वभरितं चक्रं मूलानुसारत: ॥

पञ्चसिंहासनानन्द कलाध्वा चक्रशासनात् ।
सबाला भैरवीयुक्ता महात्रिपुरसुन्दरी ॥

त्रिपुराद्याम्बिकां ताध्वा चक्रं व्याप्य विजृम्भते ।
मन्त्रा ध्वायं समाख्यातो निश्चयेन सदाऽनघे ॥

एवं षडध्वविमलं श्रीचक्रं सर्वसिद्धिदम् ।
मेरुरूपं महीरूपं द्विधा पूजार्थमिष्यते ॥ ७०

सिन्दूररजसावापि कुङ्कुमेनाथवा लिखेत् ।
यद्वा सुवर्णलेखिन्या लिखितं संप्रपूजयेत् ॥

हैमं वा राजतं ताम्रं रत्नजं स्फाटिकं तु वा ।
अयोध्यानगरं चक्रराजं नित्यं समर्चयेत् ॥

पश्चिमाशा मुखो देवि यथाचक्रं समर्चयेत् ।
पश्चिमाशा तथा ज्ञेया पूर्वाशैव निगद्यते ॥

वायुकोणं तथा ज्ञेयमीशानं राक्षसं भवेत् ।
दक्षिणाशा मुखो देवि यथा चक्रं समर्चयेत् ॥ ७५

सा पूर्वाशैव संप्रोक्ता रक्षः कोणं तु वह्नि भाक् ।
उत्तराशा मुखो देवि यथा चक्रं समर्चयेत् ॥

उत्तराशा तदा ज्ञेया पूर्वाशैव न संशयः ।
ईशानकोणं देवेशि तदाग्नेयं न संशयः ॥

एतच्चक्रं मेरुरूपं श्रीविद्यार्णे समुद्धृतम् ।
सर्वागममयं देवि कथितं वीरवन्दिते ॥

अभ्यर्चिते चक्रराजे नित्यं सर्वोपचारकैः ।
स्थावरं जङ्गमं विश्वमर्चितं स्यान्न संशयः ॥

आचार्यचरणद्वन्द्वं रत्नैरर्थैश्च भूरिभिः ।
अभ्यर्च्याथ गृहीत्वैतच्चक्रं सकलसिद्धिदम् ॥

तदारभ्यार्चयेच्चित्त कल्पितैर्वोपचारकैः ।
अजरामरणो भूत्वा सिद्धिं प्राप्नोति शाश्वतीम् ॥ ८०

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
षष्ठोऽध्यायः ॥

## अथ सप्तमोऽध्यायः ॥

**श्रीदक्षिणामूर्तिरुवाच –**

चक्रोद्धारो मया प्रोक्तः साधकेप्सित सिद्धिदः
शृणु देवि प्रवक्ष्यामि पूजाविधिमतः परम् ॥

अयोध्यापुर नामैतच्छ्रीचक्रं पारमैश्वरम् ।
प्रतिष्ठाप्यार्चयेद्धीमान् साधकः शुद्धमानसः ॥

उच्चार्या मनवः सर्वे तार त्रितय संयुताः ।
अमृताम्भोनिधिः पूर्वं रत्नद्वीपमतः परम् ॥

नानावृक्ष महोद्यान मथस्यात्कल्पवाटिका ।
सन्तान वाटिका पश्चात् हरि चन्दन वाटिका ॥

मन्दार वाटिका पारिजातवाटि ततः परम् ।
कदम्बवनवाटी च वाटिकापि च कीर्तिताः ॥ ५

चतुर्थीहृत्समायुक्ता आदौ तारत्रयान्विताः ।
उच्चार्याः सकला मन्त्र जपे होमार्चनादिषु ॥

पुष्पराग महारत्न प्राकारं पूर्वमुच्यते ।
पद्मराग महारत्न प्राकारश्च ततः परम् ॥

गोमेध रत्नप्राकारो वज्रप्राकार इत्यपि ।
वैडूर्य रत्नप्राकार इन्द्रनीलाभिधस्तथा ॥

मुक्तारत्न महाप्राकारश्च मारकतस्तथा ।
विद्रुमाख्य महारत्न प्राकारो नवमः स्मृतः ॥

माणिक्य मण्डपं पश्चात् सहस्रस्तम्भ मण्डपम् ।
अथामृताख्यवापी स्यात् तत आनन्द वाटिका ॥ १०

विमर्श वाटिका बाला तथोद्गारस्ततः परम् ।
चन्द्रिकोद्गारमभ्यर्च्य ततः शैलेन्द्र कन्यके ॥

महाश्रृङ्गार परिखा महापद्माटवी ततः ।
चिन्तामणि महारत्न गृहराजस्ततः परम् ॥

पूर्वाम्नायमयं पूर्वद्वारं प्रथमतोऽर्चयेत् ।
दक्षिणाम्नाय रूपं तद्दक्षिणाद्वारमप्यथ ॥

पश्चिमाम्नायरूपं च पश्चिमद्वारमप्यथ ।
उत्तराम्नायरूपं चोत्तरद्वारं ततोऽर्चयेत् ॥

रत्नप्रदीपवलयं महासिंह्मासनं ततः ।
अथ ब्रह्ममयं मञ्च पादमेकं समर्चयेत् ॥ १५

ततो विष्णुमयं मञ्च पादमेकं मम प्रिये ।
ततो रुद्रमयं मञ्च पादमेकं समर्चयेत् ॥

मञ्चपादं यजेदेकमीश्वरात्मकमप्यथ ।
सदाशिवमयं मञ्च फलकं च ततः परम् ॥

हंसतूलाख्य तल्पकं समभ्यर्च्य प्रयत्नतः ।
हंसतूल महार्घोपधानमभ्यर्चयेदथ ॥

कौसुम्भास्तरणं पश्चान्महावितानकं ततः ।
महायवनिकां पश्चाद्देवी मन्दिर पूजकाः ॥

चतुरुत्तर चत्वारिंशन्मन्त्राः कथिता मया प्रिये ।
भावयेन्मन्दिरं देव्या मन्त्रैरेतैः समर्चयेत् ॥ २०

स्थापयित्वात्मनोदक्ष भागे पुष्पाक्षतादिकम् ।
दत्वाऽभितस्ततो दीपाश्चक्र मूलेन पूजयेत् ॥

मूलत्रिखण्डैः प्रथमन्यस्तमभ्यर्चयेदथ ।
वाय्वाग्नि जल संयुक्त प्राणायामैस्त्रिभिः प्रिये ॥

शोषणं दहनं कृत्वा कुर्यादाप्लावनं ततः ।
मूलविद्यां समुच्चार्य प्राणानायम्य च त्रिधा ॥

आर्षच्छन्दो दैवतं च न्यस्य बीजादिकं ततः ।
अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ॥

ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।
इति मन्त्रेण सव्यान्य पार्ष्णिघातेन शैलजे ॥ २५

करतालत्रयेणापि विघ्नानुत्सार्य यत्नतः ।
देव्यहं भावना युक्तः स्वशरीरे ततः प्रिये ॥

वज्रपञ्चरनामाथ न्यासजातं समाचरेत् ।
करशुद्धिं पुनः कृत्वा कुमारी मुच्चरेदथ ॥

श्रीमहापद मुच्चार्य मुच्चार्य त्रिपुरेत्यथ ।
आत्मानं रक्ष रक्षेति निक्षिप्य हृदयेऽञ्जलिम् ॥

मायां च कामराजं च शक्ति मुच्चार्य यत्नतः ।
देव्यात्मासन शब्दं च चतुर्थ्यन्तं नमोन्वितम् ॥

उच्चार्यानेन मन्त्रेण दद्यात्स्वस्यासनं ततः ।
श्रियं मायां कुमारीं च प्रोच्चार्य मनुनाऽमुना ॥ ३०

श्री चक्रासन शब्दं च चतुर्थी हृदयान्वितम् ।
उच्चार्य भुवनेशानीं पराबीजं कुमारिकाम् ॥

उच्चार्य सर्वमन्त्रा सनायाथ नम उच्चरेत् ।
त्रिलोकेशीं कामराजं क्लेमक्षरमतः परम् ॥

साध्य सिद्धासन पदं चतुर्थ्यन्त हृदन्वितम् ।
उच्चार्यानेन मन्त्राणां त्रितयेन च साधकः ॥

दत्वा पुष्पाञ्जलिं चक्रे षडङ्गन्यासमाचरेत् ।
विन्यस्य मातृकां पश्चाद्वशिन्याद्यष्टकं ततः ॥

मूलविद्याक्षर न्यासं विन्यस्याऽथ मम प्रिये ।
षोढा चक्राभिध न्यासद्वितयं सर्वसिद्धिदम् ॥ ३५

विन्यस्यान्यस्य वा ध्यात्वा ध्यानसूक्तेन चित्कलाम् ।
शुद्धाम्भसा वामभागे सवृत्त चतुरस्रकम् ॥

कृत्वा मध्ये त्रिकोणं च षट्कोणं तद्बहिर्लिखेत् ।
मूलेन तं समभ्यर्च्य साधारं शङ्खमप्यथ ॥

प्रतिष्ठाप्य षडङ्गेन समभ्यर्च्य ततः परम् ।
शुद्धोदकमथापूर्य स्पृष्ट्वामूलं त्रिधा जपेत् ॥

तेन संप्रोक्षयेदर्चाद्रव्यमात्मानमप्यथ ।
कुर्वन्ति केचिदत्रैव विशेषार्घ्यं फलप्रदम् ॥

कृत्वा तत्र विशेषार्घ्यमकृत्वाप्यर्चयेच्छ्रियम् ।
तज्जलेन त्रिधा कोणं वृत्तं च चतुरस्रकम् ॥ ४०

कृत्वा मूलेन मध्यं च विद्याखण्डैस्त्रिकोणकम् ।
षडस्रं तद्बहिरावृत्या संपूज्य मम वल्लभे ॥

अथ वाग्भव मुच्चार्य चतुर्थ्यन्त समन्वितम् ।
अग्नि मण्डल शब्दं च ततो दशकलात्मने ॥

अर्घ्यपात्राधार शब्दं चतुर्थी नति संयुतम् ।
अनन्त मनुनाधारं तत्र संस्थापयेच्छिवे ॥

धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी ।
सुश्री स्वरूपा कपिला हव्यकव्यवहा तथा ॥

वह्नेर्दशकला प्रोक्ता यादि वर्ण समुद्भवाः ।
तत्र संपूज्य मदनं समुच्चार्य ततः परम् ॥ ४५

सूर्यमण्डलशब्दं च चतुर्थी सहितं ततः ।
द्वादशेति पदं पश्चादथ चापि कलात्मने ॥

अर्घ्यपात्रपदं पश्चाच्चतुर्थी हृदयान्वितम् ।
इति पात्रं प्रतिष्ठाप्य तपिनी तापिनी ततः ॥

धूम्रा मरीचिरपि च ज्वालिनी रुचिराप्यथ ।
सुषुम्ना भोगदा विद्या बोधिनी धारिणी क्षमा ॥

कलाद्वादश संप्रोक्ता एताः सवितुरिष्टदाः ।
कभाद्यक्षर युग्मोत्थास्संपूज्यास्तत्र शैलजे ॥

परां सोमपदं पश्चान्मण्डलाय पदं ततः ।
षोडशेति पदं पश्चादुक्तं तत्र कलात्मने ॥ ५०

अर्घ्यामृताय शब्दं च नमस्कार समन्वितम् ।
तत्रामृतमथापूर्य क्षीरमध्वादिकं शिवे ॥

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्नाश्रीः प्रीतिरङ्गना ॥

पूर्णा पूर्णामृता कामदायिन्यः षोडशेष्टदाः ।
कलाः सोमस्य विख्याताः षोडशस्वर संभवाः ॥

तत्राभ्यर्च्या नमस्कार्या अकथाद्यक्षरात्मकम् ।
हलक्षवर्ण सहितं त्रिकोणं हंसमध्यगम् ॥

कामाद्य शक्ति सहित कोणेषु त्रयमप्यथ ।
हंसाख्यं मनुनाभ्यर्च्य षट्कोणं वृत्तबाह्यतः ॥ ५५

कृत्वा ध्यात्वा षडङ्गेन समभ्यर्च्य ततः परम् ।
मूलेन सप्तधाऽऽमंत्र्य ध्यायेज्ज्योतिर्मयीं शिवे ॥

चतुर्नवति संख्याकान् मन्त्रान् सृष्ट्वायजेदथ ।
चतुर्थी नति संयुक्ता ब्रह्मार्केन्दुकलाः क्रमात् ॥

अष्टत्रिंशति संख्याका उक्ताः पर्वतकन्यके ।
सृष्टिर्बुद्धिः स्मृतिर्मेधा कान्ति लक्ष्मीर्द्युतिः स्थिरा ॥

स्थितिश्च सिद्धिरित्युक्ता दशब्रह्मकला इमाः ।
जरा च पालिनी शान्तिरीश्वरी रतिकामिके ॥

वरदा ह्लादिनी प्रीतिर्दीर्घा विष्णुकला इमाः ।
तीक्ष्णा रौद्री भया निद्रा तन्द्रा क्षुत्क्रोधिनी क्रिया ॥ ६०

उत्कारीमृत्युरित्युक्ता दशरुद्रकला इमाः ।
पीताश्वेतारुणा पश्चादसितेश्वर संभवाः ॥

चत्वार उक्ता एताश्च कलाः सर्वफलप्रदाः ।
कादिक्षान्ताक्षरोद्भूताश्चतुस्त्रिंशदिमाः कलाः ॥

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
रोधिका दीपिका चैव रोचिका मोचिका ततः ॥

परा सूक्ष्मा ततस्सूक्ष्माऽमृता ज्ञाना ततः परम् ।
ज्ञानामृताप्यायनी च व्यापिनी व्योमनीति च ॥

सदाशिव कला एताः षोडशस्थिर संभवाः ।
तत्र पूज्या नमस्कार्यास्त्रिकर्तारो नति संयुताः ॥ ६५

हंसः शुचिषदित्युक्त्वा वसुरंतरिक्षेत्यथ ।
सद्धोता वेदिषत्प्रोक्ता पदमप्यतिथिस्ततः ॥

दुरोणसदथ प्रोच्य नृषद्वर सदित्यथ ।
ऋत सद्व्योम सत्पश्चात् अब्जागोजा ऋतं बृहत् ॥

मन्त्रान्ते च तथा विष्णुस्त्र्यंबक मनुस्ततः ।
तद्विष्णोरिति मन्त्रं च तद्विप्रासस्ततः परम् ॥

मूलविद्याथ संप्रोक्ताश्चतुर्नवति मन्त्रकाः ।
अथाखण्डादिभिः मन्त्रैः केचित्सिद्धा महर्षयः ।

चतुर्नवति मन्त्रान्ते प्रवदन्त्यभिमन्त्रणम् ।
अखण्डैक रसानन्द कलेबरतरात्मनि ॥ ७०

स्वच्छन्द स्फुरणं तत्र विधत्स्व कुल नायिके ।
अकुलस्थामृताकारे शुद्धज्ञानकरे परे ॥

अमृतत्वं निधेह्यस्मिन् वस्तुविक्लिन्नरूपिणी ।
त्वद्रूपेणैकरस्यत्वं कृत्वास्येतत्स्वरूपिणी ॥

भूत्वा परामृताकारे मयि चित्स्फुरणं कुरु ।
प्रणवं वाग्भवं ल्लूभ्रूजू स इत्यक्षरानथ ॥

अमृते पदमुच्चार्य पदमप्यमृतोद्भवे ।
अमृतेश्वरि शब्दं च पदं चामृतवर्षिणि ॥

अमृतं स्रावययुगं वह्निजाया समन्वितम् ।
उच्चरेदमृतेश्वर्यां विद्यैषा समुदीरिता ॥ ७५

वाग्भवं वदयुग्मं च पदं वाग्वादिनीत्यथ ।
वाग्भवं कामराजं च क्लिन्ने केदिनि चाप्यथ ॥

क्लेदय द्वितयं पश्चान्महाक्षोभं कुरु द्वयम् ।
अनन्तं चन्द्रभवनं मनुस्वर समन्वितम् ॥

मादनं शक्तिमुच्चार्य मोक्षं कुरु युगान्वितम् ।
बिन्दुना सहितं पश्चात् चन्द्र विष्णुपथान्वितम् ॥

मनुस्वर विसर्गाढ्य मुच्चरेदिति पञ्चमी ।
उक्तेयं दीपिनी विद्या समस्ताभीष्ट सिद्धिदा ॥

एताभिस्सर्व विद्याभिमन्त्र्यामृतं शिवे ।
ज्योतिर्मयं विधायाथ मन्त्रितं परमामृतम् ॥ ८०

तद्बिन्दुभिर्ब्रह्मरन्ध्रे गुरुत्रितय पादुकाः ।
सन्तर्प्याचार्य नाम्नाऽथ सन्तर्प्याचार्य पादुकाम् ॥

आत्मनः कुण्डलिन्यां च तद्बिन्दुं बोध सिद्धिदम् ।
आर्द्रां ज्वलति मन्त्रेण जुहुयाल्लोकमातृके ॥

इति कृत्वा विशेषार्घ्यं वत्सरे वत्सरेऽपि वा ।
चक्रराजं समभ्यर्च्य सार्वभौमो जगत्पतिः ॥

सर्वतः कृतकृत्यः स्यात् जीवन्मुक्तो न संशयः ।
कृत्वाऽकृत्वा वा नित्यं विशेषार्घ्य विधिं शिवे ।
श्रीचक्रं पूजयित्वाशु सर्वभाग्य निधिर्भवेत् ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः ॥



**श्रीदक्षिणामूर्तिरुवाच—**

शृणु देवि प्रवक्ष्यामि लयाङ्गार्चनमादरात् ।
यत्कृत्वापि शुचिर्नित्यं महासौभाग्यवान् भवेत् ॥

ततः पद्मनिभां देवीमिति सूक्तेन शैलजे ।
ध्यात्वा संविन्मयीं देवीं महात्रिपुरसुन्दरीम् ॥

ध्यात्वा हृच्चक्रमध्यस्थां श्रियं देवीं त्रयीमयीम् ।
अन्तः सुषुम्ना कमला दिवि निर्भेदनक्षमाम् ॥

निरस्तमोहतिमिरां शिवस्य जगतीपतेः ।
समस्तलोकदीपस्य दीप्तिभूतां सनातनीम् ॥

आद्यां संविन्मयीं शुद्धां ब्रह्मविष्णवीश वंदिताम् ।
नासापुटे निर्गमय्य लीला सङ्कल्पिताकृतिम् ॥ ५

सौभाग्यसुन्दरीं साक्षाच्छ्रियं तेजोमयीं पराम् ।
त्रिखण्डमुद्रा सहिते स्वाञ्जलौ कुसुमान्विते ॥

समानीय महामायां लक्ष्मीं शक्ति समुच्चरेत् ।
श्रीमहात्रिपुरेत्युक्त्वा सुन्दरीति पदं ततः ॥

अमृतेति पदं पश्चाच्चैतन्येति पदं शिवे ।
मूर्ति कल्पयामि नम इत्यमुना शिवे ॥

मन्त्रेण चक्रे श्रीदेव्याः कल्पयेन्मूर्तिमुत्तमाम् ।
बीजत्रयमिदं भूयोप्युच्चार्य गिरिकन्यके ॥

हसरैं हंस शब्दान्ते कलरीं हसरौंरथ ।
महापद्मवनान्तस्ते कारणानन्त विग्रहे ॥ १०

सर्वभूतहिते मातरेह्येहि परमेश्वरि ।
इति मन्त्रेण परमामिच्छा कल्पितविग्रहाम् ॥

निवेशयित्वा हृच्चक्रस्थितां श्रीचक्रमध्यमे ।
चतुष्षष्ट्युपचारांश्च कुर्याद्देव्यै ततःपरम् ॥

त्रितारी देवि नामान्त पाद्यं कल्पेत्यतःपरम् ।
यामीति नमसा युक्ता उपचारमनूत्तमाः ॥

इत्थं सर्वे समुत्तार्याः श्रीचक्रे सततं श्रियः ।
श्रीदेव्यै पाद्यमुच्चार्य कल्पयामि नमः परे ॥

श्रीदेव्या अर्घ्यमित्युक्त्वा कल्पयामि नमस्ततः ।
इत्यादिमन्त्रान् सकलानुपचाराभिधान् स्मरेत् ॥ १५

सुगन्धि तैलाभ्यङ्गं तु मज्जनशाला प्रवेशनम् ।
अथ मज्जन मण्डप मणि पीठोपवेशनम् ॥

दिव्य स्नानीयमथ च कुर्यादुद्वर्तनं शुभम् ।
तत उष्णोदकस्नानं कनकेति पदं ततः ॥

कलशच्युत शब्दान्ते सर्वतीर्थाभिषेचनम् ।
धौतवस्त्र परीत्युक्त्वा मार्जनं च ततःपरम् ॥

अरुणेन दुकूलेन परीधान मतःपरम् ।
अरुणेन दुकूलेनोत्तरीयमथ कल्पयेत् ॥

अथालेपनशब्दान्ते मण्डपान्ते प्रवेशनम् ।
अथालेपन मण्डप मणि पीठोपवेशनम् ॥ २०

चन्दनागरुशब्दान्ते कुंकुमेति पदं ततः ।
अथ शंकुमदेत्युक्त्वा पदं मृगमदेत्यथ ॥

अथ कर्पूर कस्तूरी पदं गोरोचनाद्यपि ।
दिव्यगन्धपदं संवीरगान्ते च विलेपनम् ॥

कालागरु महाधूपमथ केशभरस्य च ।
मल्लिका मालती जाति चम्पकाशोक शब्दतः ॥

शतपत्रपदं पूग कुहरीपदमप्यथ ।
पुन्नागेत्यथ कल्हार मुख्य सर्वर्तुशब्दतः ॥

पुष्पमालां कल्पयामि नमः स्रग्मनुरीरितः ।
अथ भूषणशब्दान्ते मण्डपान्ते प्रवेशने ॥ २५

भूयो भूषणशब्दान्ते मण्डपान्ते मणीप्यथ ।
पीठोपवेशनं पश्चादुपचारं प्रकल्पयेत् ॥

नवमाणिक्यमकुटं चन्द्रस्य शकलं ततः ।
अथ सीमन्तसिन्दूरं ततस्तिलकरत्नकम् ॥

कालाञ्जनं ततो वाली युगलं च समर्पयेत् ।
मणिकुण्डलयुग्मं च नासाभरणमप्यथ ॥

अथ वाते पावकं च कल्पयेदाद्य भूषणम् ।
सन्तप्त हेम चिन्ताकं वरकं च ततः परम् ॥

सुमहत्पदकं पश्चान्मुक्तावलिमतः परम् ।
एकावली ततो देवि छन्नवीरमतः परम् ॥ ३०

देविके पूर युगळ चतुष्टयमतः परम् ।
वलयावलिमध्यश्च कल्पयित्वोर्मिकावलीम् ॥

काञ्ची दाम कटि सूत्रं सौभाग्याभरणं ततः ।
कल्पयेत्पादकटकं रत्ननूपुरमप्यथ ॥

पादाङ्गुलीयकं पश्चात् पाशमेककरे ततः ।
अन्यहस्तेऽङ्कुशं पश्चादथ पुण्ड्रेक्षु सम्भवम् ॥

चापं चापरहस्तेऽस्याः पुष्पबाणान् करेऽपरे ।
श्रीमन्माणिना शब्शान्ते पादुके कल्पयेदथ ॥ ३५

स्वसमानेतिवेषाभिः पदमावरणोप्यथ ।
देवताभिस्सहेत्युक्त्वा महाचक्राधिरोहणम् ॥

कामेश्वराङ्क पर्यङ्कोपवेशन मतःपरम् ।
सुधासवाख्य चषकं तत आचमनीयकम् ॥

कर्पूरवीटिकां पश्चादानन्दोल्लास शब्दतः ।
परविलास हासं च मङ्गला रात्रिकं ततः ॥

छत्रं च चामरयुगं दर्पणं तालवृन्तकम् ।
गन्ध पुष्प धूप दीप नैवेद्यानि च कल्पयेत् ॥

उपचारांश्चतुष्षष्टि संख्याकान् चक्रनायिके ।
समर्पयित्वा श्रीदेव्यै नवमुद्राः प्रदर्श्य च ॥ ४०

त्रिधा मूलेन सन्तर्प्य श्रीदेवी पादुकां ततः ।
अग्नीशासुरवायव्य मध्यदिक्षु गिरीन्द्रजे ॥

षडङ्गान्यर्चयेद्देव्याः श्रीचक्रस्य मम प्रिये ।
अथ नित्यार्चनं वक्ष्ये शृणुष्वैकाग्रमानसा ॥

श्रवणादपि यस्य स्यात्साधकस्सर्वसिद्धिमान् ।
वाचं सकलशब्दं च भुवनेशीमतःपरम् ॥

नित्यक्लिन्ने मदपदं द्रवे सौरित्यथोच्चरेत् ॥
एषा कामेश्वरी विद्या सर्वकाम समृद्धिदा ॥

नित्येयं प्रथमा साक्षात्प्रतिपत्तिथि नायिका ।
आदौ विद्यां समुच्चार्य पदं कामेश्वरीत्यथ ॥ ४५

नित्या श्री पादुकां पूजयामीति मनुमुच्चरेत् ।
समस्त नित्या विद्यान्ते तत्तन्नित्याभिधान्विताम् ॥

पादुकाष्टाक्षरं मन्त्रं समुच्चार्य प्रपूजयेत् ।
वाचं भगभगे शब्दं भगिनीति भगोदरि ॥

भगमाले पदं पश्चात् पदं देवि भगोवहे ।
भगगुह्ये भगेत्युक्त्वा योगिनी च भगेत्यथ ॥

नियाति नीति सर्वेति भगेत्यथ वशङ्करी ।
भगरूपे नित्याद्यं क्लिन्ने भगपदं ततः ॥

ततः स्वरूपे सर्वाणि भगनीति पदं ततः ।
मेह्यानय पदं पश्चाद्वरदे पदमप्यथ ॥ ५०

रेते सुरे ते च भगक्लिन्ने क्लिन्नद्रवे ततः ।
क्लेदय द्रावयेत्युक्त्वा अमोघे पदमप्यथ ॥

भगा विवेक्षुभेत्युक्त्वा क्षोभयेति पदात्परम् ।
सर्व सर्वानथोच्चार्य भगेश्वरि पदं ततः ॥

वाचं लूकाष्टमं ल्लूं मों ल्लोमतः परम् ।
इत्यथोच्चार्य सम्पूज्य क्लिन्ने सर्वाणि शब्दतः ॥

भगानि मे वशं पश्चादानय स्त्रो मतःपरम् ।
पदं हरबलं माया नित्यैषा भगमालिनी ॥

वाचं मायां समुच्चार्य नित्यक्लिन्ने मदद्रवे ।
वह्निजायेति नित्योक्ता नित्यक्लिन्नाभिधा परा ॥ ५५

प्रणवं पाशबीजं च क्रौं क्रौं श्रौं छ्रोमतःपरम् ।
ज्रौं स्वाहेति चतुर्थ्येषा भेरुण्डा सर्वसिद्धिदा ॥

प्रणवं पूर्वमुच्चार्य स्त्रीलोकेशीमतः परम् ।
पदं वह्निवासिन्यै नमसान्वितमप्यथ ॥

समस्तसिद्धिदा प्रोक्ता नित्यैषा वह्निवासिनी ।
ह्रीं क्लिन्ने वाचमुच्चार्य बीजमङ्कुशनामकम् ॥

मदं नित्यपदान्ते च द्रव्ये ह्रीमिति चोच्चरेत् ।
महावज्रेश्वरी नित्या षष्ठीयं सर्वसिद्धिदा ॥

प्रणवं भुवनेशानीं शिरसोति नमस्ततः ।
शिवारुत्याभिधा नित्या सप्तमी समुदीरिता ॥ ६०

त्रयीमयो च कवचं खेचरीति पदं ततः ।
क्षु श्री हूं क्षे त्रिलोकेशी पदमस्त्रं ततःपरम् ॥

नित्येयं त्वरिता प्रोक्ता समस्तफलदायिनी ।
कुमार्यत्र ततः प्रोक्ता नित्याऽथ कुलसुन्दरी ॥

हसेति कलरेत्युक्त्वा वाग्बिन्दुयुतदाक्षरम् ।
हसाधकन्नरेत्युक्त्वा दार्णबिन्दु स्मरान्वितम् ॥

हसेति क्लरेत्युक्त्वा डं विदुर्मनुसंयुतम् ।
नित्याभिधेयमुद्दिष्टा नित्या सर्वशुभप्रदा ॥

ह्ली फ्रे स्रूं इत्यथोच्चार्य बीजमङ्कुशनामकम् ।
मुखवृत्तं कामराजं वाच्यं ग्लमामित्यथोच्चरेत् ॥ ६५

नित्याद्यमशब्दे ते द्रवे कवचमुच्चरेत् ।
फ्रें ज्म्रौं नीलपताकेयं नित्या सर्वफलप्रदा ॥

भमरान्ते मरुद्बीजं वामकर्णविभूषितम् ।
बिद्वंकितमियं नित्या विजयाशु फलप्रदा ॥

चन्द्रं वरुणमारूढं मनुबिन्दु समन्वितम् ।
उक्त्वा समस्तफलदा नित्येयं सर्वमङ्गला ॥

त्रयी बीजं नतियुतं पदं भगवतीत्यथ ।
ज्वालामालिनि शब्दान्ते देवदेवपदं ततः ॥

सर्वभूतपदं संहारान्ते शब्दं च कारिणे ।
जातवेदसि शब्दान्ते ज्वलद्वितयमप्यथ ॥ ७०

प्रज्वल द्वितयं पश्चान्मायां जातित्रयान्विताम् ।
रेफसप्तकमुच्चार्य ज्वालामालिन्यथाद्रिजे ॥

कवचास्त्रे ततो नित्या ज्वालामालिन्यथेरिता ।
समस्तैश्वर्यफलदा रोगशोक निकृन्तनी ॥

वायुमग्निसमायुक्तं मनुबिन्दु विभूषितम् ।
चित्रा पञ्चदशी नित्या महासिद्धिप्रदा स्मृता ॥

षोडशी सर्वजगतां माता सकलसिद्धिदा ।
श्रीविद्यैव महाविद्या ललिता परमेश्वरी ॥

एताः स्वराद्या अभ्यर्च्याः श्रीदेवी ललितात्मिकाः ।
नित्या पञ्चदश प्रोक्ता या एता गिरिकन्यके ॥ ७५

प्रतिपत्पौर्णमास्यन्त तिथीनामधिदेवताः ।
षोडशी या महानित्या मूलप्रकृतिरीश्वरी ॥

समस्तजगतां माता नित्यानामपि नायिका ।
प्रतिपत्पौर्णमास्यन्त दिवसेष्वखिलेष्वपि ॥

एकैकां पूजयेन्नित्यां चतुर्विंशोपचारकैः ।
नित्या पञ्चदशार्चान्ते मन्त्रमुच्चार्य यत्नतः ॥

तिथि नित्यां त्रिधाभ्यर्च्य सौभाग्यमतुलं लभेत् ।
नित्या मन्त्रजपं होममर्चनं यो दिने दिने ॥

करोति साधको भूमौ स एव परमेश्वरः ।
नित्या पञ्चदशाभ्यर्च्य तिथिनित्या फलप्रदाम् ॥ ८०

अभ्यर्च्याऽथ महानित्यां त्रिधा वा पञ्चधार्चयेत् ।
महद्भाग्यमवाप्नोति देवानामपि दुर्लभम् ॥

नित्या पञ्चदशाभ्यर्च्या तिथि नित्यामतः परम् ।
अनभ्यर्च्याथवा नित्यां श्रीदेवीं ललितां पराम् ॥

महानित्यां समभ्यर्च्य पञ्चधा वा त्रिधापि वा ।
गुरुपत्नीं समभ्यर्च्यं श्रेयो राशिमवाप्नुयात् ॥

गुरुपादं प्रवक्ष्यामि शृणुष्वावहिता शिवे ।
गुरुपत्नीमनभ्यर्च्य न वृद्धि याति भूतले ॥

परमेश्वरशब्दान्ते परमेश्वर्यथांबिका ।
श्रीपादुकां पूजयाभीत्यष्टार्णं यो जपेत्प्रिये ॥ ८५

अनयैव महाविद्या विख्याता जगतीतले ।
परेशं परमेश्वरीं गुरुरूपां पुरोऽर्चयेत् ॥

मित्रेशमथ षष्ठीशमोड्डीशं च ततः परम् ।
चर्यानाथं ततो लोपामुद्रां वागस्त्य संज्ञको ॥

देवानां ललिता दीक्षा प्रदाचार्या इमे स्मृताः ।
सर्वत्रानन्दनाथ श्रीपादुकां पूजयामि च ॥

अनेनैव विधानेन गुरुपंक्ति समर्चयेत् ।
आनन्दनाथ शब्देन लोपामुद्रा गुरौ शिवे ॥

लोपामुद्राप्रभावेण देवाः श्रीपूर्णतां गताः ।
पतिव्रता मुखाल्लब्धा विद्या सकलसिद्धिदा ॥ ९०

पतिव्रताशिषो नित्यं यः प्राप्नोति दिने दिने ।
दिने दिनेऽस्य श्रेयांसि वर्धन्ते सर्वसंपदः ॥

तस्मादाचार्यपत्नी या साध्वी पुत्रवती शिवे ।
तामभ्यर्च्य नरो नित्यं श्रीधिया सर्वसिद्धिभाक् ॥

आचार्यादपि तत्पत्नीं वासोऽलङ्करणादिभिः ।
जगन्मातृधियाऽभ्यर्च्य विशेषेण महोत्सवे ॥

आधारस्सर्वभाग्यानामिहामुत्रापि जायते ।
दिव्यौघमादावभ्यर्च्य सिद्धौघमथ पूजयेत् ॥

कालतापनमभ्यर्च्य धर्माचार्यमतः परम् ।
मुक्तकेशीश्वरं दीप कलानाथमथोऽर्चयेत् ॥ ९५

सिद्धानां गुरवः प्रोक्ता इमे चत्वार इष्टदाः ।
सिद्धौघमिति सम्पूज्य मानवौघमथार्चयेत् ॥

विष्णुदेवं पुरोऽभ्यर्च्य प्रभाकरमतः परम् ।
तेजो देवमथाभ्यर्च्य मनोजं च ततः प्रिये ॥

कल्याणं रत्नवेद्यं च वासुदेवमतः परम् ।
श्री रामानन्द नामाख्यमर्चयेज्जगतां गुरुम् ॥

पञ्चधा ब्रह्मरन्ध्रेऽथ पादुकामन्त्रमुच्चरन् ।
विशेषतोर्चयेत्त्रेधा ततः स्वगुरुपादुकाम् ॥

अर्चयेदिति संप्रोक्ता लयाङ्गार्चा मया शिवे ।
कृत्वा क्रियामङ्गपूजां वा प्रत्यहं साधकोत्तमः ।
सर्वज्ञत्वमवाप्नोति सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ १००

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
अष्टमोऽध्यायः ॥

---

# अथ नवमोऽध्यायः ॥

---

**श्रीदक्षिणामूर्तिरुवाच—**

अथावरणदेवीनामर्चनं संप्रवक्ष्यते ।
भोगाङ्गाख्यं महादेवि भोगस्वर्गापवर्गदम् ॥

अणिमां लघिमां महिमामीशत्वमतः परम् ।
वशित्वसिद्धिं प्राकाम्यसिद्धिं भुक्तिमतः परम् ॥

इच्छासिद्धिं प्राप्तिसिद्धिं सर्वकामाभिधामथ ।
चतुरस्रे प्राथमिके पूज्या एता मम प्रिये ॥

द्वितीये चतुरस्रेऽथ ब्राह्मीं माहेश्वरीमपि ।
कौमारीं वैष्णवीमम्बां वाराहीं च ततःपरम् ॥

माहेन्द्रीमपि चामुण्डां महालक्ष्मीं समर्चयेत् ।
तृतीये चतुरश्रेऽथ मुद्रां संक्षोभिणीमपि ॥ ५

सर्वविद्रावणीं मुद्रां सर्वाकर्षणिकामपि ।
सर्ववश्याभिधां मुद्रां सर्वोन्मादनिकां तथा ॥

मुद्रां सहाङ्कुशां सर्वं खेचरी योनिमप्यथ ।
सर्वत्रिखण्डमुद्रां च पूजयेद्गिरिकन्यके ॥

अणिमाद्याः पश्चिमादि दिक्ष्वभ्यचर्या विदिक्षु च ।
पूर्वादिक्रमतोऽभ्यचर्या ब्राह्म्याद्यास्सर्वमातरः ॥

क्षोभिण्याद्याः पश्चिमादि दिक्षु पूज्या विदिक्ष्वपि ।
एतास्त्रितारी बीजाद्याः पादुकान्ताः प्रपूजयेत् ॥

त्रितारेताः पदं पश्चात्प्रकटेति पदं ततः ।
योगिन्यः पदमाभाष्य पदं त्रैलोक्यमोहने ॥

चक्रे समुद्रा इत्युक्त्वा ससिद्धय इतीरयेत् ।
सायुधाः पदमाभाष्य पदं पश्चात्सशक्तयः ॥

सवाहनाः सपरीवाराः सर्वोपपदं ततः ।
चारैस्संपूजिताः सन्तु मन्त्रेणानेन सुन्दरि ॥

त्रैलोक्यमोहने चक्रे प्रकटा योगिनी भजेत् ।
तारत्रितयमुच्चार्य करशुद्धिकरं मनुम् ॥

उच्चार्य त्रिपुरा चक्रेश्वर्यैशब्दं नमोऽन्वितम् ।
उच्चार्य त्रिपुराचक्रेश्वर्यं वा श्रीपदं ततः ॥

पादुकां पूजयामीति यजेच्चक्रेश्वरीं शिवे ।
सर्वसंक्षोभिणी मुद्रां बीजपूर्वां प्रदर्शयेत् ॥ १५

प्रथमावरणं प्रोक्तमित्थं सकलसिद्धिदम् ।
कलास्रेऽथ महापद्मे वक्ष्ये पूजाविधिं शृणु ॥

तारत्रितयमुच्चार्य स्वरमेकैकशोऽपि च ।
पूजयेत्सकला नित्यां कला षोडश शैलजे ॥

कामाकर्षणिकां बुद्ध्या कर्षिणी च ततःपरम् ।
अहङ्कारा कर्षिणी च शब्दाकर्षिणिका तथा ॥

स्पर्शा कर्षिणिका रूपा कर्षिणी च ततःपरम् ।
रसाकर्षिणिका गन्धाकर्षिण्यथ हिमाद्रिजे ॥

चित्ताकर्षिणिका धैर्याकर्षिणी च ततःपरम् ।
स्मृत्याकर्षिणिका नामाकर्षिणी च मम प्रिये ॥ २०

बीजाकर्षिणिका चात्मा कर्षिणी च ततः परम् ।
अमृताकर्षिणा पश्चाच्छरीराकर्षिणी तथा ॥

एता नित्या कलान्ताः स्युः षोडशाराधिदेवताः ।
अन्ते वस्वर्ण सहिताः पूजनीयाः प्रयत्नतः ॥

एता गुप्तपदान्ते च योगिन्यः पदमुच्चरेत् ।
सर्वाशा परिशब्दान्ते पूरकेति पदं ततः ॥

चक्रे समुद्रा इत्युक्त्वा शेषं पूर्ववदुच्चरेत् ।
तारत्रय कुमार्यन्ते त्रिपुरेशीपदात्परम् ॥

चक्रैश्वर्यै नमः शब्दं समुच्चार्य ततःपरम् ।
त्रिपुरेश्वरशब्दान्ते चक्रेश्वर्यं पदात्परम् ॥ २५

श्रीपादुकां पूजयामीत्युक्त्वा चक्रेश्वरीं यजेत् ।
सर्वाशापूरकं चक्रमित्थमभ्यर्च्य सादरम् ॥

सर्वविद्राविणीं मुद्रां बीजपूर्वं प्रदर्शयेत् ।
सर्वसंक्षोभणे चक्रे देवता अर्चयेदथ ॥

तारत्रितयमुच्चार्य कवर्गाद्यष्टकं ततः ।
उच्चार्य पूजयेत्पश्चादनङ्ग कुसुमादिकाः ॥

अनङ्ग कुसुमानङ्ग मेखला च ततःपरम् ।
अनङ्ग मदनापश्चादनङ्ग मदनातुरा ॥

अनङ्ग रेखा चानङ्ग वेगिनी पद्मलोचने ।
अनङ्गाद्यङ्कुशानङ्ग मालिनी च ततः शिवे ॥ ३०

देवी श्रीपादुकामुक्त्वा पूजयामीति योजयेत् ।
त्रितार्येताः पदं गुप्ततर योगिन्य इत्यथ ॥

सर्वसंक्षोभणे चक्रे शिष्टं पूर्ववदुच्चरेत् ।
आत्मासन महाविद्यामथ त्रिपुरसुन्दरी ॥

चक्रेश्वर्यम्बिकापश्चात्पुनस्त्रिपुरसुन्दरी ।
चक्रेश्वर्यै नमः पश्चात्पुनस्त्रिपुरसुन्दरी ॥

चक्रेश्वर्यम्बिका पश्चाद्ध्रस्वक्षरमतःपरम् ।
इत्थं तृतीयावरणेश्वरीं त्रिपुरसुन्दरीम् ॥

अभ्यर्च्य दर्शयेद्बीजपूर्वामाकर्षिणीमथ ।
देवता अर्चयेत्पश्चात्सर्वसौभाग्यदायके ॥ ३५

ककारादि ठकारान्तान् सक्षोभिण्यादिकाः क्रमात् ।
सर्वसंक्षोभिणी शक्तिस्सर्वविद्राविणी तथा ॥

सर्वाकर्षिणिकापश्चात्सर्वाह्लादिनि कापि च ।
सर्व संमोहिनी सर्व स्तंभिनी च ततःपरम् ॥

सर्वं जननिका शक्तिस्तथा सर्व वशङ्करी ।
सर्व रञ्जनिका सर्वोन्मादिनी च ततः शिवे ॥

सर्वार्थसाधका शक्तिस्सर्व संपत्ति पूरणी ।
सर्व मन्त्रमयी शक्तिस्सर्व द्वन्द्व क्षयंकरी ॥

शक्ति श्री पादुकामुक्त्वा पूजयामीति योजयेत् ।
त्रितारेतास्सम्प्रदाय योगिन्यश्च ततःपरम् ॥ ४०

सर्व सौभाग्यशब्दान्ते दारके चक्र ईरयेत् ।
शिष्टं पूर्ववदुच्चार्य चक्रे सौभाग्यकेऽर्चयेत् ॥

चक्रासन महाविद्यामुच्चार्य त्रिपुरेत्यथ ।
वासिनीति पदं चक्रेश्वर्यै शब्दं नमोऽन्वितम् ॥

उच्चार्य त्रिपुराश्चाथ तथा चक्रेश्वरीपदम् ।
चक्रेश्वरी पदं पश्चात् वसुवर्णं समुच्चरेत् ॥

इत्थं चक्रेश्वरीमिष्ट्वा वश्यमुद्राः प्रदर्शयेत् ।
सर्वार्थसाधके चक्रे देवतार्चा प्रवक्ष्यते ॥

सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदा तथा ।
सर्वप्रियङ्करी देवी सर्वमङ्गलकारिणी ॥ ४५

सर्वकामप्रदा देवी सर्वदुःख विमोचनी ।
सर्वमृत्युप्रशमनी सर्वविघ्न निवारिणी ॥

सर्वाङ्गसुन्दरी देवी सर्वसौभाग्य दायिनी ।
णकारादि फकारान्ता एता देवीस्समर्चयेत् ॥

त्रितारेताः कुलोत्तीर्ण योगिन्यः परमप्यथ ।
सर्वार्थसाधके चक्रे मन्त्रशेषस्तु पूर्ववत् ॥

समष्टिपूजां कृत्वेत्थं सर्वमन्त्रासनात्परम् ।
त्रिपुरा श्रीपदं चक्रेश्वर्यै शब्दं नमोऽन्वितम् ॥

उच्चार्य त्रिपुराश्रीश चक्रेश्वर्यं पदं परम् ।
श्रीपादुकां पूजयामीत्युक्त्वा चक्रेश्वरीं यजेत् ॥ ५०

बीजपूर्वं ततः सर्वोन्माद मुद्रां च दर्शयेत् ।
सर्वरक्षाकरे चक्रे देवताः पूजयेदथ ॥

सर्वज्ञास्सर्वशक्तयश्च सर्वैश्वर्यप्रदास्तथा ।
सर्वज्ञानमयी देवी सर्वव्याधि विनाशिनी ॥

सर्वाधार स्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ॥

सर्वेप्सितप्रदा मादि क्षान्ता एतास्समर्चयेत् ।
... ... गर्भाद्य योगिन्यः पदमप्यथ ॥

सर्वरक्षाकरे चक्रे शेषं पूर्ववदुच्चरेत् ।
समष्टिपूजां कृत्वाऽथ साध्यसिद्धासनात्परम् ॥ ५५

त्रिपुरामालिनी चक्रेश्वर्यै शब्दं नमोऽन्वितम् ।
उच्चार्य त्रिपुरेत्युक्त्वा मालिनी पदमप्यथ ॥

चक्रेश्वर्यैम्बिकाशब्दं पादुकामन्त्र संयुतम् ।
उच्चार्य पूजयेच्चक्रराज्ञीं त्रिपुरमालिनीम् ॥

मुद्रां महांकुशां कृत्वा बीजपूर्वं गिरीन्द्रजे ।
सर्वरोगहरे चक्रे देवता अर्चयेदथ ॥

वाग्देवताष्टकं तत्तद्बीजपूर्वं हिमाद्रिजे ।
पूजामन्त्र समायुक्तं नभःस्थाने समर्चयेत् ॥

एता रहस्य योगिन्यः सर्वरोगहरे पदम् ।
चक्रे शेषमथोच्चार्य त्रितारााद्याः समर्चयेत् ॥ ६०

यजेत्त्रिपुरसिद्धां च मूर्तिविद्या पुरस्सराम् ।
वीमथोच्चार्य मुद्रां च कुर्याच्चक्रेऽथ खेचरीम् ॥

अस्त्रबाह्यचतुर्दिक्षु बाणाद्यर्चनमाचरेत् ।
द्रां द्रीं क्रीं श्रमथोच्चार्य सः सर्व पदमप्यथ ॥

जम्भनेभ्यः पदं पश्चाद्बाणेभ्यो नम उच्चरेत् ।
अथ त्रेतारिनाद्यन्ते सर्वसम्मोहनाय च ॥

धनुषे नम उच्चार्य मायाबीजमतः परम् ।
वशीकरणशब्दं च चतुर्थी हृदयान्वितम् ॥

अङ्कुशं सर्वशब्दाद्य स्तम्भनायाङ्कुशाय च ।
नम उक्त्वा चतुर्दिक्षु बाणादीनिति पूजयेत् ॥ ६५

त्रिकोणेऽथ प्रवक्ष्यामि महाकामेश्वरी पुरः ।
महावज्रेश्वरीं पश्चान्महाश्रीभगमालिनी ॥

वाक्कामशक्तिखण्डाद्या एतास्त्तत्रस्समर्चयेत् ।
महा श्रीसुन्दरीं पश्चात्खण्ड त्रितयपूर्विकाम् ॥

कुमारी पूर्विकां चैव मध्ये सम्पूजयेदथ ।
योगिनी नवमी चक्रदेवी च नवमी तथा ॥

नित्यानां षोडशी चात्र महाश्री सुन्दरी तथा ।
अथवैन्दव चक्रस्था ललिता परदेवता ॥

एकैवेति समाख्याता न भेदेऽत्रास्ति पार्वति ।
न मन्त्रदेवताभेदो विद्यतेऽत्र मम प्रिये ॥ ७०

एता अपि रहस्याख्या योगिन्यः पदमप्यथ ।
सर्वसिद्धिप्रदे चक्रे शेषं पूर्ववदुच्चरेत् ॥

समष्ट्यर्चां समाप्येत विद्यामावाहिनीमथ ।
उच्चार्य त्रिपुराम्बां चक्रेश्वर्यै नम उच्चरेत् ॥

त्रिपुराम्बापदं चक्रेश्वर्यम्बापदमप्यथ ।
श्रीपादुकां पूजयामीत्युक्त्वा चक्रेश्वरीं यजेत् ॥

बीजमुद्रां प्रदर्श्याथ बीजवर्णपुरस्सराम् ।
बैन्दवेऽथ महाचक्रे साम्राज्ञीं संविदं यजेत् ॥

तारत्रयं मूलविद्यां श्रीमहात्रिपुरेत्यथ ।
सुन्दरि श्रीमहाशब्दं ततश्च परमेश्वरी ॥ ७५

श्रीपादुकां पूजयामीत्यष्टाक्षरमतः परम् ।
उक्त्वाभ्यर्च्य त्रितार्यैषा परापरपदं ततः ॥

रहस्य योगिनी पश्चात्सर्वानन्दमये पदम् ।
चक्रे समुद्राशब्दं च ससिद्धिस्सायुधापदम् ॥

सशक्तिः पदमाभाष्य पदं चाथ सवाहना ।
पदं सपरिवाराः सर्वोपचारैरतःपरम् ॥

सम्पूजितास्त्विति प्रोच्य मूलविद्यामतः पुनः ।
उक्त्वाऽथ श्रीमहाशब्दं त्रिपुरेति पदात्परम् ॥

सुन्दरी श्री महाचक्रेश्वर्यैं शब्दं तदन्वितम् ।
उक्त्वाऽथ श्रीमहाशब्दं त्रिपुरेत्यथ सुन्दरी ॥ ८०

श्रीमहापूर्वचक्रेश्वर्यम्बा पदमप्यथ ।
श्रीपादुकां पूजयामीत्यर्चयेत्सर्वदेवताः ॥

वाग्भवाद्यां योनिमुद्रां दर्शयित्वा ततःपरम् ।
धूपं दीपं निवेद्याऽथ नवमुद्राः प्रदर्शयेत् ॥

पञ्चधाश्वा त्रिधा मूल विद्यामुच्चार्य यत्नतः ।
तर्पयित्वाऽथ नैवेद्यं भगवत्यै समर्पयेत् ॥

दत्वाऽथ मध्ये पानीयमुत्तरापोशनं ततः ।
हस्तप्रक्षालनं दत्वा ताम्बूलं च निवेदयेत् ॥

सङ्कल्प्य बिन्दुना वक्त्रं कुचौ बिन्दुद्वयेन हि ।
योनिं ध्यात्वा महादेव्याः चिन्तयेत्तदधोमुखम् ॥ ८५

इत्थं कामकलारूपं ध्यात्वा सकलभाग्यदम् ।
जपेत्सौभाग्यहृदयं भोगमोक्षफलप्रदम् ॥

स्तुमः पुंवत्करं संविदरुणं तरुणीमयम् ।
कलापञ्चदशारब्धं कमनीयं परं महः ॥

तन्महः परमं नौमि कृत्यै पञ्चभिरङ्कितम् ।
अशेषविश्वभेदात्मा पूर्णाहन्तात्मकं शिवे ॥

त्रिधा विभक्तं यद्वस्तु स्तोतृस्तुत्यस्तुतिक्रमात् ।
एकस्मै महसे तस्मै नमस्सकल चक्षुषे ॥

स्मरामि तां परां वाचं पश्यन्त्यादि क्रमाश्रयाम् ।
नानाविध महाकार रसानुभव कारणम् ॥ ९०

देशकाल पदार्थात्मा यद्यद्वस्तु यथा यथा ।
तत्तद्रूपेण या भाति तां श्रयेऽहं विभोः कलाम् ॥

मूलादि वलपर्यन्तं महात्रिपुरसुन्दरि ।
या तनुस्ते तडित्प्रख्या तां भजे भवशालिनीम् ॥

योनौ कनक वर्णाभं हृत्यादि विद्युद्यपोज्ज्वलम् ।
आज्ञायां चन्द्रसङ्काशं महस्तव महेश्वरि ॥

प्रसृतामृतरत्नौघ सन्तर्पित चराचराम् ।
भवानि भव प्रात्यै त्वां भावयाम्यमृतेश्वरी ॥

वर्णाः कलापदं तत्त्वं मंत्रो भुवनमेव च ।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥ ९५

अनाश्रितादि कालाग्नि रुद्रान्तं चित्रमद्भुतम् ।
उन्मीलयति मातस्त्वं प्रकाशवपुषि त्वयि ॥

यदीदं भासते देवि नामरूपं क्रियात्मकम् ।
प्रकाशवपुषस्त्वत्तस्तत्सर्वं नातिरिच्यते ॥

नेत्रादिमूल कोणान्ते हृत्पद्मासनलीलया ।
वारं वारं त्वया देवि रूपादिमधु सेव्यते ॥

संविद्देव्यः समाक्रम्य विषयानमृतासवम् ।
योगिनां प्रणयत्वार्ये त्वत्पूजार्थं हि सर्वदा ॥

सौभाग्य हृदयं गुह्यं शिवानन्देन योगिना ।
समाराधनपूर्त्यर्थं स्मृतं सकलकामदम् ॥ १००

इति विरचितमेतत्त्रैपुरं स्तोत्रमाप्तं
प्रकटित परमार्थं योगिवर्योपजुष्टम् ।
सकलदुरितरोग ध्वंसनानन्यकार्यं
प्रतियजनविधानं सेव्यतां शक्तियुक्तैः ॥

नैवेद्यानन्तरं मूलविद्यां जप्त्वा यथारुचि ।
सौभाग्यहृदयं जप्त्वा वामभागे ततःपरम् ॥

चतुरश्रसमायुक्तं वृत्तं कृत्वा मनोहरम् ।
त्रितारीवाग्भवं पश्चाद्रूपकान्ते ततःपरम् ॥

मण्डलाय नमस्तत्र मण्डलं सम्प्रपूजयेत् ।
तत्र पात्रं प्रतिष्ठाप्य प्रणवं भुवनेश्वरी ॥

सर्वविघ्नपदं कृद्भ्यः सर्वभूतेभ्य इत्यथ ।
हुं वह्नि भामिनी नित्यं त्रिरुच्चार्य ततःपरम् ॥ १०५

दत्वा भूतपदं पश्चाद् दद्यान्नीराजनं शिवे ।
मूलविद्यां समुच्चार्य तारत्रितयमप्यथ ॥

समस्तचक्र चक्रेशी युते देवि नवात्मिके ।
आरात्रिकमिदं दीपं गृहाण मम सिद्धये ॥

इति नीराजनं दत्वा मूलविद्यां समुच्चरेत् ।
दत्वा पुष्पाञ्जलिं सम्यक् त्रिधा कृत्वा प्रदक्षिणम् ॥

साष्टाङ्गं दण्डवन्नत्वा स्तुत्वा स्तोत्रैरनेकशः ।
श्रीधियाऽभ्यर्च्य गन्धाद्यैस्ताम्बूलाद्यैस्सुवासिनीः ॥

अनभ्यर्च्याऽपि वा मुद्रां खेचरीं संप्रदर्श्य च ।
क्षमस्वेति श्रियं देवीमात्मन्युद्वासयेत्ततः ॥ ११०

चक्रराजस्य कृत्वेत्थं सकृदप्यर्चनं शिवे ।
श्रियमष्टगुणां प्राप्य ब्रह्मरूपो भवत्यसौ ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
नवमोऽध्यायः ॥

# अथ दशमोऽध्यायः ॥



**श्रीदक्षिणामूर्तिरुवाच –**

शृणु देवि महाभागे चक्रार्चनफलं शुभम् ।
श्रवणादपि यस्य स्युस्सिद्धयोऽष्टाणिमादयः ॥

उत्तमा नित्यपूजा स्यान्मध्यमं पक्षपूजनम् ।
मासपूजाऽधमा प्रोक्ता पातकौघ विनाशिनी ॥

य इच्छन्यपि माहेन्द्रीं कौबेरीमपि सम्पदम् ।
षण्मासमन्वहं भक्त्या चक्रराजार्चनं शुभम् ॥

कृत्वाऽवश्यमवाप्नोति धनदेन समः श्रियम् ।
यः कुर्याद्वत्सरं नित्यां नवावरण पूजनम् ॥

स्वश्रिया धनदैश्वर्यं तृणलेशायते ह्यसौ ।
वेदशास्त्र पुराणादि विद्या अपि सुदुर्लभाः ॥ ५

अस्य वक्त्राद्विनिर्यान्ति ह्यनधीता अपि स्वयम् ।
धर्मार्थकाममोक्षाख्याः पुरुषार्थाश्च दुर्लभाः ॥

तिष्ठन्ति तत्करे नित्यमाज्ञया श्रीगुरोर्विभोः ।
आदौ मन्दिरपूजास्याल्लयाङ्गार्घा ततः परम् ॥

भोगाङ्गा च तृतीया स्यात्त्रिधा पूजेयमीरिता ।
लयाङ्गपूजां कृत्वा वा सततं साधकोत्तमः ॥

देवीवन्दन मालाख्या विद्यामुच्चार्य तत्परम् ।
अर्चयन् सर्वसौभाग्य संपन्नः सिद्धिमान् भवेत् ॥

समस्त चक्रपूजां वा मध्य चक्रार्चनं तु वा ।
कृत्वा त्रिशत मेकान्ते जपन् पञ्चदशाक्षरीम् ॥ १०

अष्टविंशतिधा हुत्वा गव्याज्यं जातवेदसि ।
अणिमाद्यष्ट सिद्धीनां नायको जगतीतले ॥

देवतानां महर्षीणामपि वन्द्यो भवत्यसौ ।
चक्रसिंहासनं देवि देशे वा नगरेऽपि वा ॥

यत्रानेन विधानेन साधकेन प्रपूज्यते ।
स्वगृहे वा वने ग्रामे जगत्क्षोभः प्रजायते ॥

ज्वलत्कालाग्नि सन्ताप प्रतप्ता सप्तमानसः ।
पिपीलिकादि न्यायेन दूरादायान्ति योषितः ॥

मन्त्रसंमूढ हृदयाः स्फुरज्जघन मण्डलाः ।
तद्दर्शनान्महादेवि जायन्ते सर्वयोषितः ॥ १५

ताम्रे विलिखितं चक्रं येन संपूज्यतेऽन्वहम् ।
तस्यापि सिद्धिर्महती जायते न चिरादिह ॥

रत्नेषु लिखितं चक्रं स्फाटिकं वा मनोरमम् ।
ददाति सकलानर्थान्वत्सर त्रितयेन हि ॥

लिखितं राजतं चक्रं आचार्याज्ञयाऽन्वहम् ।
साङ्गं प्रपूज्यते यत्र धनधान्यादि सङ्कुला ॥

तन्मन्दिरे महालक्ष्मीश्चञ्चलाऽप्यचला भवेत् ।
धिषणाधिप सादृश्यं विद्याभिश्चास्य सिद्ध्यति ॥

कन्दर्पसदृशी कान्तिः श्रेयोराशिः पदे पदे ।
पुत्रपौत्रादि संपत्तिरचिरादस्य सिद्ध्यति ॥ २०

ब्रह्मानन्द सुखावाप्तिरेकस्मिन्नेव जन्मनि ।
भवत्यस्य न सन्देहो विश्वासं कुरु भामिनी ॥

सौवर्णे लिखितं चक्रमाचार्यस्य कृपावशात् ।
बीजगर्भमबीजं वा येन नित्यं प्रपूज्यते ॥

अवश्य मणिमाद्यष्ट सिद्धयस्तस्य मन्दिरे ।
किङ्करा इव तिष्ठन्ति मूर्तिमत्यो मम प्रिये ॥

धनधान्यादि संपूर्णामुक्ता रत्नौघ सङ्कुला ।
गजाश्वरथ संयुक्ता पशुभृत्य गणान्विता ॥

आकल्पं मन्दिरे तस्य सन्तति व्यापिनी परा ।
तिष्ठत्येऽवाचला लक्ष्मीर्दैवतैरपि दुर्लभा ॥ २५

सर्वासामपि विद्यानामधिपः स्याज्जडोप्ययम् ।
पुत्रपौत्राभिवृद्ध्यापौ कश्यपप्रतिमो भवेत् ॥

कान्त्या शिथिलयत्याशु पातिव्रत्यं रतेरपि ।
राजानो राजयुवतयश्च तद्भृत्याः सचिवा अपि ॥

किङ्करा इव तिष्ठन्ति किङ्कर्तव्य धियाऽन्विताः ।
निवसन्ति गृहे यस्य तेषामपि न रोगजा ॥

पीडा भवति सर्पाणां नापि पीडाऽतिदारुणा ।
स्वच्छन्द मरणं तस्य वश्यानामपि जायते ॥

सौवर्णचक्र सांनिध्ये शरीरं यो विमुञ्चति ।
श्वपचानां गृहं वापि तदुक्तं बदरीवनम् ॥ ३०

चक्रराजस्य सान्निध्यं सदा काशी निगद्यते ।
चक्रराजार्चनं सम्यक्कुर्वन्नन्वहमादारात् ॥

तृणी करोति देवांश्च किमु मर्त्यान् महीतले ।
हैमं चक्रार्चनं नित्यं कृत्वा प्रत्यहमादरात् ॥

नियतस्त्रिशतं जप्त्वा श्रियः पञ्चदशाक्षरीम् ।
मण्डलद्वितयादूर्ध्वं राजानं नगरं तु वा ॥

देशं ग्रामं मनुष्यांश्च स्ववशी कुरुते ध्रुवम् ।
षण्मासं पूजयेद्यस्तु सौवर्णं चक्रनायकम् ॥

देवानपि सगन्धर्वान् यक्षकिन्नर राक्षसान् ।
ब्रह्मर्षीनपि देवर्षीन् पन्नगानपि सुरानपि ॥ ३५

दासभूतान् करोत्येव संशयो नात्र विद्यते ।
श्रीचक्रमन्वहं हैमं साङ्गं वर्णं प्रपूजयन् ॥

आचार्यं सदृशो राज्ञां नारीणां मदनोपमः ।
वशीकरोति त्रैलोक्यं सदेवासुर राक्षसम् ॥

सकिन्नरं सगन्धर्वं सयक्ष पतगोरगम् ।
रम्भोर्वश्यादि सहिताप्सरसोऽपि मनोहराः ॥

नागकन्याश्च देवानां गन्धर्वाणां च कन्यकाः ।
वशीभूता भवन्त्यस्य दासीवन्नात्र संशयः ॥

महदायुष्यमारोग्यमैश्वर्यमणिमादिकम् ।
सर्वविद्याधिपत्यं च जरामृत्यु निवर्तनम् ॥ ४०

पुत्रपौत्राभिवृद्धिश्च समृद्धिर्धनसम्पदाम् ।
मुक्तारत्न समृद्धिश्च श्रेयोवृद्धिर्दिने दिने ॥

सिद्ध्यत्यस्य न सन्देहो वर्षादूर्ध्वं मम प्रिये ।
अथ वक्ष्ये महेशानि श्रीविद्या पूजनं महत् ॥

ब्रह्महत्यादि दोषाणां सद्यो नाशकरं परम् ।
ब्रह्मपुष्पैर्महेशानि साङ्गं श्रीचक्रमन्वहम् ॥

मासमात्रं समभ्यर्च्य महापातक कोटिभिः ।
विमुक्तो महतीं लक्ष्मीं धनधान्यादि सङ्कुलाम् ॥

अवाप्य सर्वविद्याभिर्भवत्यङ्गिरसासमः ।
जपापुष्पैस्समभ्यर्च्य श्रीचक्रं साङ्गमन्वहम् ॥ ४५

ब्रह्महत्यादिभिर्दोषैर्जन्मान्तर कृतैरपि ।
विमुक्तो नात्र सन्देहो धनवान् जायते बुधः ॥

केतकी तरुणैः पत्रैर्नित्यमभ्यर्च्य सादरम् ।
उपपातक सङ्घांश्च मासमात्रेण नाशयेत् ॥

कन्दर्प समसौभाग्यं प्राप्नोत्यत्र न संशयः ।
करवीरैस्समभ्यर्च्य श्रीचक्रं साङ्गमन्वहम् ॥

महापापोप पापौघैर्विमुक्तो मासमात्रतः ।
विद्यया जीव सङ्काशो धनेन धनदोपमः ॥

मासत्रयाद्भवत्येव कान्त्या कामसमप्रभः ।
शतपत्रैर्मनोरम्यैर्मासमात्रं समर्चयन् ॥ ५०

महापातक राशिभ्यो विमुक्तो मासमात्रतः ।
सौभाग्यमतुलं प्राप्य श्रियं प्राप्नोत्यचञ्चलाम् ॥

चम्पकैस्सुमनोरम्यैः श्रीचक्रं नित्यमर्चयन् ।
मासमात्रेण मुक्तोऽसौ महापापोपपातकैः ॥

संप्राप्य महतीं लक्ष्मीं धनरत्नौघ सङ्कुलाम् ।
अधिपस्सर्व विद्यानां भूत्वा कामसमप्रभः ॥

भुक्त्वेह सकलान्भोगान् व्रजन्त्यन्ते परं पदम् ।
बन्धूक कुसुमैर्नित्यं मासमात्रं समर्चयन् ।।

वशीकरोति त्रैलोक्यं पापौघैरपि मुच्यते ।
बिल्वपत्रैस्समभ्यर्च्य मासमात्रं निरन्तरम् ।। ५५

विमुक्तः सर्वपापेभ्यः प्राप्नोत्यक्षय सम्पदम् ।
बिल्वपत्रैश्च जलज संहितैः परिपूजयन् ।।

शतजन्मकृतैः पापसंघैरपि विमुच्यते ।
आयुष्यं महदारोग्यं समृद्धिं च महत्तराम् ।।

मासादूर्ध्वमवाप्यासौ जीवन्मुक्तो भवेद्ध्रुवम् ।
मल्लिका कुसुमैश्चक्र राजमभ्यर्च्य सादरम् ।।

महापातक राशिभ्यो विमुक्तो मासमात्रतः ।
संप्राप्य विपुलां लक्ष्मीं प्राप्नोत्यन्ते परं पदम् ।।

मल्लिका मालती जाती कुन्दैश्च शतपत्रकैः ।
श्वेतोत्पलैर्वा मिश्रैश्च प्रत्यहं चक्रमर्चयन् । ६०

शतजन्मकृतैः पापराशिभिश्च विवर्जितः ।
मासादूर्ध्वमवाप्नोति श्रियं विद्यां च दुर्लभाम् ।

मल्लिका कुसुमैर्नित्यं तुलसीदल मिश्रितैः ।
चक्रराजं समभ्यर्च्य मासं साङ्गं प्रसन्नधीः ।।

वाचाजीवसमः साक्षाच्छ्रिया धनद संनिभः ।
तेजसा रविसङ्काशो भूत्वा पातकवर्जितः ॥

समृद्धिं महतीं लब्ध्वा जीवन्मुक्तो भवत्यसौ ।
जम्बूप्रवालैरभ्यर्च्य चक्रराजं दिने दिने ॥

महापातकसङ्घैश्च मासमात्रेण मुच्यते ।
अचलां श्रियमासाद्य पुत्रपौत्र सुखान्वितः ॥ ६५

चिरायुस्सकलान् भोगान् भुक्त्वान्ते मुक्तिमाप्नुयात् ।
शमीदूर्वाङ्कुरैर्वापि चक्रराजं समर्चयन् ॥

सहस्रजन्म जनितैः पातकैरपि मुच्यते ।
सौभाग्यमतुलं प्राप्य मासमेकं प्रसन्नधीः ॥

दुरितौघैर्विमुक्तोऽसौ समृद्धिं लभतेऽचलाम् ।
सुगन्धि कुसुमैर्नित्यं पल्लवैर्वा सुगन्धिभिः ॥

चक्रराजं समभ्यर्च्य साङ्गमन्वह मादरात् ।
समस्त पापराशिभ्यो विमुक्तः श्रियमक्षयाम् ॥

अवाप्याचञ्चलं श्रेयो ब्रह्मलोके महीयते ।
रत्नपूजा विधानं च कथयामि तवानघे ॥ ७०

श्रवणादपि यस्य स्यात्सर्व सौभाग्य संयुतः ।
नाना पुष्पैश्च रचयेत्स्वर्ण पुष्पाणि सुन्दरि ॥

एकविंशति रात्रयन्तैः कर्तव्यं चक्रपूजनम् ।
एकविंशति रात्रेण वश्य भूपो न संशयः ॥

चन्द्रवत्कान्तिमान् मन्त्री प्राप्नोत्यक्षय सम्पदः ।
प्रवालघटितैः स्वर्णपूष्पैश्श्रीचक्रमर्चयन् ॥

त्रिसप्ताहान् महादेवि वैरिवर्गान् विनाशयेत् ।
वश्याभवन्ति दुष्टाश्च भूपाला नात्र संशयः ॥

तथा मरकतक्षिप्त स्वर्णपुष्पैस्समभ्यर्चयन् ।
विनाशयति शत्रूंश्च विबुधान् वशमानयेत् ॥ ७५

पुष्पराग महारत्न घटितैः स्वर्णनिर्मितैः ।
कुसुमैः पूजयेच्चक्रे त्रिसप्ताहात्सुरेश्वरि ॥

अवश्या अप्यमरास्तस्य वरदाः संभवन्ति च ।
विद्यया जीवसदृशो भवत्यत्र न संशयः ॥

सुवर्णनिर्मितैः पुष्पैर्वज्रकेसर राजितैः ।
एकविंशति रात्रेण योऽर्चयेच्चक्रनायकम् ॥

विबुधा अपि दैत्याश्च वशास्तस्य न संशयः ।
वशीकरोति त्रैलोक्यं सदेवासुरमानवम् ॥

इन्द्रनीलयुतैः स्वर्णपुष्पैश्चक्रं समर्चयन् ।
त्रैलोक्यं स्तम्भयत्येव त्रिसप्ताहान्न संशयः ८०

एकविंशतिरात्रेण वैरिवर्गान् विनाशयेत् ।
दासिभूतास्तरुण्योऽपि नार्यो यौवन गर्विताः ॥

गोमेधघटितैः स्वर्णपुष्पैश्चक्रं समर्चयेत् ।
सप्ताहाद्वैरिणोवश्या राजानोऽपि न संशयः ॥

त्रिसप्ताहान्महापाप संघोऽप्यस्य विनश्यति ।
वैडूर्यघटितैः स्वर्णपुष्पैश्चक्रं समर्चयेत् ॥

त्रैलोक्यं स्तम्भयत्येव त्रिसप्ताहान्न संशयः ।
सर्वे वश्या भवन्त्येव पापौघैश्च विमुच्यते ॥

पुष्पैः पर्युषितैर्देवि नार्चयेत्स्वर्णजैरपि ।
निर्माल्यभूतैः कुसुमैरुच्छिष्टैः परमेश्वरि ॥ ८५

नवरत्नमयैः स्वर्णपुष्पैर्यदि शिवां यजेत् ।
तदा देवासुरनराः पन्नगा राक्षसा अपि ॥

सर्वे वश्या भवन्त्येव त्रिसप्ताहान्न संशयः ।
जन्मकोटिकृतैः पापैरपि मासाद्विमुच्यते ॥

स्वर्णरत्नमयैः पुष्पैः सहस्रं संप्रपूजयन् ।
दशाश्वमेध जनितं फलमाप्नोत्यनुत्तमम् ॥

रत्नादि परिपूर्णत्वं यदि नास्ति तदा शृणु ।
तैरेव पुष्पैः पूजादि कर्तव्यं साधकोत्तमैः ॥

यद्यत्पुष्पं यत्र यत्र दत्तं कृत्वा सुरेश्वरि ।
तत्र तत्र प्रदातव्यं न दातव्यं यथेच्छया ॥ १०

करवीरादि सहितैः स्वर्णपुष्पैः समर्चयन् ।
कोटिजन्मकृतैः पापैरपि मासान्विमुच्यते ॥

तुलसी मिश्रितैर्बिल्वदल मिश्रैरथापि वा ।
सुगन्धिपुष्पयुक्तैर्वा सजम्बूपल्लवैस्तु वा ॥

नवरत्न समायुक्त सुवर्णकुसुमैः शुभैः ।
चक्रराजं समभ्यर्च्य विमुक्तः सर्वपातकैः ॥

श्रियमष्टगुणोपेतां विद्यां च महतीं शुभाम् ।
सम्प्राप्य शाश्वतायुष्यं पुत्र पौत्रवतीं श्रियम् ॥

संप्राप्य सकलान् भोगान् ब्रह्मसायुज्यमश्नुते ।
कार्तिके मार्गशीर्षे वा माघे वा फाल्गुनेऽपि वा ॥ १५

वैशाखे चाश्विने मासि श्रावणे वा शुभे दिने ।
संप्रार्थ्य बहुधाचार्यं श्रीचक्रं सर्वसिद्धिदम् ॥

आचार्यपादाद्गृह्णीयादाशीर्वाद पुरस्सरम् ।
पूजितं येन सौवर्णं श्रीचक्रं सर्वसिद्धिदम् ॥

स यत्र भूम्यां वसति तमयोध्यापुरं विदुः ।
तदेव मेरुशिखरं कैलासस्थानमुच्यते ॥

आचार्यकृपया स्वर्णचक्रराजं मनोहरम् ।
यस्मिन्दिनेऽसौ गृह्णाति स्वाचार्य करपङ्कजात् ॥

कर्षद्वयमितं हैममथवा षष्ठि चिह्नकम् ।
आचार्य पत्न्यै श्रीबुद्धया दद्यादाभरणं शुभम् ॥ १००

त्रिंशच्चिह्नक हैमं वा गुरुपत्न्यै समर्प्य च ।
यथाशक्त्या समभ्यर्च्य स्वाचार्यमपि भूषणैः ॥

श्रीविद्याया महासिद्धिं प्राप्नोत्यचल संपदम् ।
तं पालयन्ति सुतवद्योगिन्यो मातरोऽपि च ॥

सम्प्राप्य नित्यकल्याणं भोगानपि सुदुर्लभान् ।
कुलसाहस्र सहितो लभते परमं पदम् ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
दशमोऽध्यायः ॥

## अथ एकादशोऽध्यायः ॥

श्रीदक्षिणामूर्तिरुवाच—

शृणु सर्वानवद्याङ्गि श्रीविद्यायजनं परम् ।
यस्य विज्ञानतः साक्षात् कर्ता हर्ता भवेत्स्वयम् ॥

अनेन विधिना यत्र श्रीचक्रं सर्वसिद्धिदम् ।
पूज्यते तत्र सकलं वशीकुर्यान्न संशयः ॥

नगरं वशमायाति देशमण्डलमद्रिजे ।
योषितस्सकला वश्या ज्वलत्कामाग्निपीडिताः ॥

विद्या विमूढ हृदयास्साधके न्यस्तमानसाः ।
तद्दर्शनान्न सन्देहो जायन्ते सर्वयोषितः ॥

अक्षमालां समाश्रित्य मातृकां वर्णरूपिणीम् ।
जपेदवश्यं श्रेयोऽर्थी श्रीविद्यां विश्वमातृकाम् ॥ ५

अथ मुक्ताफलमयी वा मोक्षफलदायिनी ।
सर्वसिद्धिप्रदा नित्यं सर्वराजवशङ्करी ॥

यथा मुक्ताफलमयी तथा स्फटिकनिर्मिता ।
रुद्राक्षमालिका मोक्ष सर्वकाम समृद्धिदा ॥

प्रवाल मालिका सर्वं सिद्धिदा भोगमोक्षदा ।
मोहिनी सर्वजगतां सर्वसंपत्समृद्धिदा ॥

माणिक्यमाला सकल साम्राज्य फलदायिनी ।
पुत्रजीवकमाला तु विद्यालक्ष्मी प्रदा सताम् ॥

पद्माक्षमालया लक्ष्मीर्जायतेऽतिमहीयसी ।
रक्तचन्दन माला तु सर्वभोगप्रदा मता ॥ १०

कुशग्रन्थिमयी माला नित्या कल्याणसिद्धिदा ।
अक्षमालां समभ्यर्च्य चन्दनेनानुलेपिताम् ॥

समाश्रित्य जपेद्विद्यां लक्षमात्रं यदा बुधः ।
योषितो भ्रामयन्त्येव मनो यदि सुनिश्चलम् ॥

तदद्वितीय लक्षं तु प्रजपेत्साधकोत्तमः ।
पातालतल नागेन्द्र कन्यकाः क्षोभयन्ति तम् ॥

तासां कटाक्षजालेन मोहितो यदि न र नयम् ।
तदा लक्षत्रयं कुर्यात्साधकः स्थिरमानसः ॥

तृतीयलक्षे संजप्ते द्रावयन्ति सुराङ्गनाः ।
अभिमानेन सौन्दर्य सौभाग्यमद सम्युताः ॥ १५

साधकं द्रावयन्त्येव स्थिरचित्तो भवेद्यदि ।
जप्तं लक्षत्रयं सद्यो महापापौघभेदनम् ॥

महासिद्धिप्रदं सद्यस्सकलैश्वर्यं सिद्धिदम् ।
इत्थं लक्षत्रयं जप्त्वा साधकः स्थिरमानसः ॥

संक्षोभयति भूलोक स्वर्लोकतलवासिनः ।
पुरुषा योषितो वश्याश्चराचरगताः प्रिये ॥

गोरोचनादि द्रव्यैश्च चक्रराजं समालिखेत् ।
अतीव सुन्दरां रम्यां तन्मध्ये प्रतिमां पराम् ॥

ज्वलन्तीं नाम सहितां कामराजविजृम्भिताम् ।
चिद्रूपेणोद्यता सा तु योजनानां शतादपि ॥ २०

अदृष्टपूर्वा देवेशि श्रुतमात्रापि दुर्लभा ।
राज्ञः कन्याऽथवा पत्नी भयलज्जा विवर्जिता ॥

आयाति साधकं सम्यग्मन्त्रमूढा सती प्रिये ।
चक्रमध्यगतो भूत्वा साधकश्चिन्तयेद्यदि ॥

उद्यत्सूर्यसहस्राभमात्मानमरुणं तथा ।
साध्यमप्यरुणीभूतं चिन्तयित्वा जपेच्छ्रियम् ॥

अनेन क्रमयोगेन स्वयं कन्दर्परूपवान् ।
चिन्तयेद्या ततः सा तु योजनानां शतादपि ॥

सर्वसौन्दर्यसुभगः कामिनी वल्लभो भवेत् ।
सर्वलोकेषु सुभगः सर्वलोकवशङ्करः ॥ २५

दासभूतान् करोत्येव नरनारी नृपादिकान् ।
सर्वरक्तोपचारैस्तु मुद्रा सन्नद्ध विग्रहः ॥

चक्रं समर्चयेद्यस्तु यस्य नाम विदर्भितम् ।
स भवेद्दासवद्देवि धनाढ्यो वा महीपतिः ॥

चक्रमध्यगतं कुर्वन् नाम यस्यास्तु योषितः ।
अदृष्टाया अपि शिवे योनिमुद्राधरो जपन् ॥

हठादानयते शीघ्रं यक्षिणीं राजकन्यकाम् ।
राजकन्यामप्सरसं खेचरीं वा सुरवन्दिते ॥

संक्षोभयति भूलोक पातालतल योषितः ।
रोचनादिकमंकं तु भागमेकं तु कुङ्कुमम् ॥ ३०

अथ भागद्वयं देवि चन्दनं मर्दयेत्सुधीः ।
अष्टोत्तरशतं जप्तं तिलकं धार्यते यदि ॥

जगत्त्रयं वशीकुर्यान्नरनारी कुलान्वितम् ।
ताम्बूलं धूपमुदकं पत्रं पुष्पं फलं दधि ॥

दुग्धं घृतं हृद्यमन्नं वस्त्रं कर्पूरमप्यथ ।
शतमष्टोत्तरं जप्त्वा यस्मै यस्मै प्रयच्छति ॥

स वश्यो जायते देवि नात्र कार्या विचारणा ।
स्त्रियस्तु सकला वश्या दासीभूता भवन्ति हि ॥

आकर्षणमिदं प्रोक्तं निश्चितं लोकमोहनम् ।
रहस्यस्थानके मन्त्री लिखेद्रोचनया भुवि ॥ ३५

चारुश्रृङ्गारवेषाढ्यां सर्वालङ्कारशोभिताम् ।
प्रतिमां सुन्दरीं नारीं विलिख्य सुमनोहराम् ॥

तत्फालकण्ठ हृन्नाभिजन्ममण्डल योषिताम् ।
जन्म नाम महाविद्यामङ्कुशेन विदर्भिताम् ॥

सर्वसन्धिषु देहस्य मदनाक्षरमालिखेत् ।
एनं दाडिमपुष्पाभं चिन्तयेद्देहसन्धिषु ॥

तदाशाभिमुखो भूत्वा स्वयं देवीस्वरूपवान् ।
विमुद्रां संक्षोभिणीं बद्ध्वा विद्यामष्टशतं जपेत् ॥

नियोज्य दहनागोरे चन्द्रसूर्यकलात्मके ।
ततो विकल सर्वाङ्गीं कामबाणप्रतापिताम् ॥ ४०

अनन्यमानसां प्रेम भ्राम्यमाणां तदात्मना ।
इत्थमाकर्षयेन्नारीं योजनानां शतादपि ॥

मातृकां विलिखेच्चक्रे बाह्यतस्सकलां प्रिये ।
स्वर्णपत्रे रौप्यपत्रे भूर्जे वा ताम्रकेऽपि वा ॥

तद्धारयेद्गले दक्षे करे वामेऽथवा प्रिये ।
अवध्यः सर्वजन्तूनां व्याघ्रादीनां विशेषतः ॥

तथैव मातृकायुक्तमन्वहं चक्रमर्चयन् ।
अजरामरणो भूत्वा लोकेषु विहरत्यसौ ॥

अनेन विधिना देवि रोचनागरुकुङ्कुमैः ।
लिखितं चक्रयोगेन साध्यनाम वरानने ॥ ४५

विदर्भितं स्वनाम्नापि यस्मिन् कस्मिन्नपि स्थितम् ।
स्थावरं जङ्गमं वापि सकलं जनमण्डलम् ॥

वशीकुर्यान्महेशानि पादाक्रान्तं न संशयः ।
महात्रिपुरसुन्दर्याः कामकूटेन भास्वता ॥

एकमेकमवष्टभ्य साध्यनामाक्षरं प्रियम् ।
बहिरप्यखिलैर्वर्णैर्मातृकां च प्रवेष्टयेत् ॥

हेममध्यगतं कृत्वा शिखायां वा भुजद्वये ।
धारयेद्यत्र कुत्रापि त्रैलोक्यवशकारकम् ॥

राजेन्द्रमपि देवेशि दासभूतं करोति हि ।
राजानो वाजिनस्सर्पा गजा दुष्टा महोत्कटाः ॥ ५०

व्याघ्राः केसरिणो दुष्टा अपि वश्या भवन्ति हि ।
पूर्वक्रमेण तद्गात्र नाम सन्दर्भ्य शैलजे ॥

चतुष्पथे वाऽपि चतुर्दिक्षु निधापयेत् ।
महाक्षोभो योषितां स्याज्जनानां महतामपि ॥

तथैव सर्वदुष्टानां पुरस्थानां च जायते ।
एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ॥

ज्वलन्तीं सर्वराजेन्द्रमण्डितां सागराम्बराम् ।
मासषट्कं चिन्तयेद्यस्साक्षात् कामोपमो भवेत् ॥

कटाक्षाक्षेपमात्रेण नार्यस्तस्य वशाः प्रिये ।
राजानो ब्राह्मणा वैश्याः शूद्राश्च पशवो जगत् ॥ ५५

दृष्ट्वैवाकम्पयेद्देवी त्रैलोक्यं सचराचरम् ।
सपत्नान्त्रासयेद्दृष्ट्या नात्र कार्या विचारणा ॥

भूतप्रेतपिशाचांश्च ज्वरान् चातुर्थिकानपि ।
शूलगुल्मादिरोगांश्च दृष्ट्या नाशयति क्षणात् ॥

एतत् सिन्दूरसुभगं रात्रौ संपूजितं प्रिये ।
योजनानां सहस्राद्वा सम्यगाकर्षयेत्प्रियम् ॥

यदा दिक्षु विदिक्ष्वैवं विधिवत्कृतमीश्वरि ।
वशमानयति क्षिप्रं सपुत्रपशुबान्धवम् ॥

भूर्जपत्रे समालिख्य रोचनागरुकुङ्कुमैः ।
तन्मध्ये नगरं देशं मण्डलं खण्डमेव वा ॥ ६०

नाम्ना विदर्भितं सम्यङ्मासमात्रं प्रपूजयन् ।
वशीकरोति त्रैलोक्यं यावज्जीवं न संशयः ॥

अथवा धारयेत्कण्ठे शिखायां वा भुजद्वये ।
यत्र कुत्र स्थितो भद्रे क्षोभयेदपि पट्टणम् ॥

अर्कक्षीरेण सहितं धुत्तूरकरसं तथा ।
रोचना कुङ्कुमयुतं लाक्षाकुङ्कुमसंयुतम् ॥

कस्तूरी चन्द्रसम्युक्तमेकीकृत्य ततःपरम् ।
चक्रमेतत्समालिख्य यस्य नाम्नार्चयन् जपेत् ॥

स व्याघ्ररिपुव्याधि गजसर्पभयान्वितम् ।
चोरग्रह जलारिष्ट शाकिनी डाकिनी भयम् ॥ ६५

न जायते महादेवि परमन्त्राभिचारणम् ।
चक्रं संधारयन्नित्यं कालमृत्युं विनाशयेत् ॥

अथवा मध्यगां देवि त्रिकोणोभयपार्श्वगाम् ।
अधःस्थ नाम सम्युक्तां रोचनाकुङ्कुमाङ्किताम् ॥

निधापयेच्च सप्ताहाद् भयवार्तिककरो भवेत् ।
पीतद्रव्यैस्समालिख्य पीतपुष्पैः समर्चयेत् ॥

पूर्वाशाभिमुखो भूत्वा स्तंभयेत्परवादिनः ।
संवादादरिसंघोऽस्य मूको भवति तत्क्षणम् ॥

नाम्ना यस्य सर्वा श्रीश्च पाषाण इव जायते ।
चक्रं विलिख्य देवेशि महानीलरसेन च ॥ ७०

नाम संयोज्य विधिवद्दक्षिणाशामुखो बुधः ।
वह्नौ दग्ध्वा महेशानि मादयेद्वैरिणं प्रिये ॥

माहिषस्य पुरीषस्य रसमाकृष्य शैलजे ।
गोमूत्रे च तु संलिख्य नाम संदर्भ्य पूर्ववत् ॥

क्षिप्त्वा चानलमध्येऽरिविद्वेषणकरं भवेत् ।
कृत्वा रोचनया नाम काकपक्षस्य मध्यगम् ॥

लम्बमानं तदाकाशे शत्रूच्चाटन कारकम् ।
महानीला रोचनाभ्यां दुग्धलाक्षारसेन च ॥

विलिख्य धारयन्मंत्री सर्ववर्णान्वशं नयेत् ।
अनेनैव विधानेन स्थापयेद्वारि मध्यगाम् ॥ ७५

तेनोदकेन संस्नानं पीतं सकलवश्यकृत् ।
सौभाग्यं जायते तस्य पानीयेन न संशयः ॥

एतन्मध्यगतां पृथ्वीं नगरं वा सुलोचनम् ।
सप्ताहात् क्षोभयेत्सम्यग्ज्वलमानो विचिन्तयेत् ॥

सौवर्णचक्रमभ्यर्च्य पुष्पैर्वा पल्लवैः शुभैः ।
महापापोपपापौघैरपि मासाद्विवर्जितः ॥

महेन्द्रसदृशीं लक्ष्मीं धनरत्नादिसंकुलाम् ।
सम्प्राप्य दीर्घमायुष्यं श्रियं चाष्टगुणान्विताम् ॥

संप्राप्य योगमष्टाङ्गं देवतैरपि पूजितः ।
पुत्रपौत्रादिसंपत्ति सहितो दिव्यभोगवान् ॥ ८०

अव्याहतगतिस्सर्वलोकेषु विहरत्यसौ ।
राजतं चक्रमभ्यर्च्य राज्यलक्ष्मीमचञ्चलाम् ॥

सम्प्राप्य दीर्घमायुष्यं विद्यां सुमहतीमपि ।
पुत्रपौत्रसमृद्धिं च सम्प्राप्यान्ते परं पदम् ॥

कुलानां शतमादाय लभते नात्र संशयः ।
ताम्रचक्रं समभ्यर्च्य विमुक्तः सर्वपातकैः ॥

धनाढ्यो महतीं मेधामपि पुत्रादिसंयुतः ।
भुक्त्वेह सकलान् भोगान् अन्ते ब्रह्मपदं लभेत् ॥

चक्रं रत्नमयं नित्यमभ्यर्च्याखिलसिद्धिदम् ।
श्रेयोराशिमिह प्राप्य धनदेन समः श्रिया ॥ ८५

वाचा जीवसमो भूत्वा पुत्रपौत्रसुखान्वितः ।
चिरायुर्विपुलान् भोगान् भुक्त्वान्ते मुक्तिमाप्नुयात् ॥

पूर्वाशाभिमुखो भूत्वा चन्दनेन समालिखेत् ।
पीतद्रव्यैस्समभ्यर्च्य स्तम्भयेत्सर्ववादिनः ॥

उत्तराशामुखो भूत्वा सिन्दूररजसा लिखेत् ।
पूजयन्विधिवद्विद्वान् सर्वलोकं वशं नयेत् ॥

पश्चिमाशामुखो भूत्वा चन्दनेन समालिखेत् ।
संपूज्य विधिवद्विद्वान् योषितां वल्लभो भवेत् ॥

यमाशाभिमुखो भूत्वा कृष्णं चक्रं समर्चयेत् ।
यस्य नामाङ्कितं तस्य मन्त्रहानिः प्रजायते ॥ ९०

अग्निराक्षसवायव्य शम्भुकोणेषु पूजितम् ।
स्तम्भविद्वेषणव्याधिशत्रूच्चाटन कारकम् ॥

लेखिन्या हैमया चक्रं रोचना कुंकुमादिभिः ।
लिखितं पूजित नित्यं महासिद्धिप्रदं स्मृतम् ॥

रोचनालिखितं चक्रं क्षीरमध्ये विनिक्षिपेत् ।
सर्ववश्यकरं देवि भवत्यत्र न संशयः ॥

गोमूत्रमध्यगं सम्यक् शत्रूच्चाटनकारकम् ।
तैलस्थं चक्रराजं तु शत्रुविद्वेषकारकम् ॥

ज्वलज्ज्वलन मध्यस्थं शत्रुनाशकरं भवेत् ।
यदैकान्ते चतुर्भागं सिन्दूररजसा लिखेत् ॥ ९५

साधकः खेचरो देवि जायते नात्र संशयः ।
गिरावेकतरौ तद्वदर्चयन् चक्रराजकम् ॥

अजरामरणो भूत्वा सुखी भवति मान्त्रिकः ।
श्मशाने पूजयेच्चक्रं महाभूत दिने बुधः ॥

निशीथे बिल्वपत्रैश्च प्रशस्तैः कुसुमैरपि ।
लभते सद्य एवासौ घुटिकाञ्जन पादुकाः ॥

खड्गसिद्धिं च वेताल सिद्धिं च महतीमपि ।
महाविवर सिद्धिं च यक्षिणी सिद्धिमप्यथ ॥

लभते नात्र सन्देहस्सत्यं सत्यं मयोदितम् ।
महाभूत दिने भौमवारयुक्ते यमान्विते ॥ १००

उपोषणपरस्तत्र सहस्रत्रितयं दिवा ।
जप्त्वा च त्रिशतं पश्चात्सायं संध्यामुपास्य च ॥

शताधिकसहस्रं च तत्र जप्त्वा पुनः शिवे ।
श्रीचक्रं साङ्गमुद्धृत्य पत्रैः पुष्पैः सुगन्धिभिः ॥

तत्सन्निधौ प्रतिष्ठाप्य विधिना जातवेदसम् ।
अष्टोत्तरशतं हुत्वा गायत्र्या पुरतः शुचिः ॥

ललिता रश्मिभिर्हुत्वा सकृदेव ततःपरम् ।
नवावरण देवीनां सकृदेव घृतं हुनेत् ॥

त्रिशताधिक साहस्रं शुद्धं गव्याज्यमादरात् ।
हुत्वा श्रीविद्यया वह्नौ चतुःश्री मनुभिस्ततः ॥ १०५

अष्टाविंशतिधा हुत्वा प्रत्येकं जातवेदसि ।
जयादिभिस्ततो हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥

अग्निं प्रदक्षिणीकृत्य स्वाचार्यचरणद्वयम् ।
साष्टाङ्गं दण्डवन्नत्वा वासोऽलङ्करणादिभिः ॥

अभ्यर्च्यं गन्धपुष्पाद्यैर्यैञ्च यावच्च सन्ततम् ।
सर्वस्वमर्पयेद्द्रव्यमाचार्यचरणद्वये ॥

वर्षाशनमितं द्रव्यमथवाचार्यपादयोः ।
समर्प्याचार्यपत्न्यै च दद्यादाकल्पसञ्चयम् ॥

पुरश्चर्याशतफलं सद्यः संप्राप्य साधकः ।
खड्गं च पादुकायुग्मं दिव्याञ्जनमनुत्तमम् ॥ ११०

भेतावसिद्धिं च परां घुटिका सिद्धिमप्यथ ।
केह सिद्धिमनुप्राप्य वाक्सिद्धिं महतीमपि ॥

अणिमादि गुणान् प्राप्य जरामरणवर्जितः ।
पञ्चविंशतिवर्षोऽसौ भूत्वा कन्दर्पसन्निभः ॥

अनेनैव शरीरेण नन्दनादि वनेषु च ।
क्रीडते दिव्यकन्याभिः भुञ्जन् भोगान् यथेप्सितान् ॥

श्रीविद्या सदृशं वस्तु न कुत्रापि प्रदृश्यते ।
श्रीचक्रसदृशं पूज्यं नास्ति लोकत्रयेऽपि च ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
एकादशोऽध्यायः ॥

# अथ द्वादशोऽध्यायः ॥

**श्री देव्युवाच-**

श्रीविद्येयं त्रिकूटाख्या ललिता श्रीरुदीरिता ।
बीजत्रयस्य कथय साधनं मे जगत्पते ॥

**श्रीदक्षिणामूर्तिरुवाच -**

श्रृणु देवि महाज्ञानं सर्वेषामुत्तमोत्तमम् ।
येनानुष्ठितमात्रेण भवाब्धौ न निमज्जति ॥

त्रिपुरा परमा शक्तिराद्या ज्ञानघना प्रिये ।
स्थूल सूक्ष्म विभागेन त्रैलोक्योत्पत्तिमातृका ॥

कबलीकृत निश्शेष तत्वग्रास स्वरूपिणी ।
तस्यां परिणतायां तु न कश्चित्पर इष्यते ॥

परोऽपि शक्तिरहितः शक्तः कर्तुं न किंचन ।
शक्तः स्यात्परमेशानि शक्तियुक्तो यदा भवेत् ॥ ५

शक्त्या विना शिवे सूक्ष्मे नामरूपं न विद्यते ।
ज्ञानेनापि महेशानि कर्म शर्म न किञ्चन ॥

ध्यानावष्टंभकाले तु न मतिर्न रतिः स्थितिः ।
प्रविश्य परमार्गं तु सूक्ष्माकार स्वरूपिणी ॥

कबलीकृत निश्शेषा बीजाङ्कुरतया स्थिता ।
वामा शिवा तथा ज्येष्ठा शृङ्गार पीठतां गता

रौद्री तु परमेशानि जगद्ग्रसन रूपिणी ।
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥

त्रैलोक्यं संसृजत्येका त्रिपुरा परिकीर्तिता ।
यदोल्लासति शृङ्गार पीठात्कुटिल रूपिणी ॥ १०

शिवार्कमण्डलं भित्वा द्रावयन्तीन्दुमण्डलम् ।
तदुद्भवामृतास्वाद परमानन्द नन्दिता ॥

कध योषित्कुलं त्यक्त्वा परं पुरुषमेति सा ।
निर्लक्ष्यं निर्गुणं चैव कुलरूप विवर्जितम् ॥

ततः स्वच्छन्द रूपा तु परिभ्राम्य जगत्प्रभा ।
तेन मार्गेण सन्तुष्टा पुनरेकाकिनी सती ॥

रमते स्वयमव्यक्ता त्रिपुरा व्यक्तिमागता ।
तत्वत्रय विनिर्दिष्टा वर्णशक्ति क्रियात्मिका ॥

वागीश्वरी ज्ञानशक्तिर्वाग्भवे ज्ञानरूपिणी ।
कामराजे कामकला कामरूप क्रियात्मिका ॥ १५

शक्तिबीजे पराशक्तिरिच्छैव शिवरूपिणी ।
एवं देवी त्र्यक्षरा श्रीमहात्रिपुरसुन्दरी ॥

पारम्पर्येण विज्ञाता भवबन्धविमोचनी ।
संस्मृता पापशमनी जरामृत्यु विनाशिनी ॥

पूजिता दुःख दौर्भाग्य व्याधि दारिद्रय नाशिनी ।
हुता विघ्नोपशमनी ध्याता सर्वार्थ साधकी ॥

एतस्याः शृणु देवेशि बीजत्रितय साधनम् ।
शुक्लाम्बर परीधानः शुभ्रचन्दनचर्चितः ॥

मुक्ताफल स्फुरद्रूप भूषणः शुक्ल माल्यभृत् ।
पूजयेद्धवलैः पुष्पैर्ब्रह्मचर्यरतो नरः ॥ २०

धवलैरेव नैवेद्यैर्दधिक्षीरोदनादिभिः ।
सङ्कल्प्य धवलैः पुष्पैर्विविधैर्मानसैः शिवे ॥

वागीशीमर्चयेच्छुभ्र गन्धपुष्पैर्मनोहरैः ।
कर्पूरधवलां शुभ्र पुष्पाभरण शोभिताम् ॥

अत्यन्त शुभ्रवसनां वज्रमौक्तिक भूषणाम् ।
मुक्ताफला पद्ममणि जपमाला लसत्कराम् ॥

पुस्तकं वदातं च दधती मभयप्रपाम् ।
एवं ध्यायेन्महेशानि सर्वविद्याधरो भवेत् ॥

मूलादि ब्रह्मरन्ध्रान्तं स्रवत्पीयूषवर्षिणीम् ।
ब्रह्मज्योतिर्मयीं ध्यायेज्जिह्वाग्रे दीपरूपिणीम् ॥ २५

प्रजपन् वाग्भवं खण्डं सहस्रं मण्डलं शुचिः ।
पाषाणेन समो वापि मूकः पशुसमोऽपि वा ॥

ग्राम्यो मूर्खः पातकी वा वर्णमात्र विवर्जितः ।
नष्टचित्तोऽतिमन्दो वा ग्राम्यो मूर्खोऽतिपातकी ॥

शठोऽपि यः पदं स्पष्टमक्षरं वक्तुमक्षमः ।
जडो दुष्टोऽति दुर्मेधा गतप्रज्ञो विनष्टधीः ॥

सोऽपि संजायते वाग्मी वाचस्पतिरिवापरः ।
सत्पण्डितो भाषाढ्यो यजेता प्रतिहृतप्रभः ॥

सतर्कपद वाक्यार्थ शब्दालङ्कार सर्ववित् ।
वाताहृत समुद्रोर्मि मालातुल्यैरुपन्यसेत् ॥ ३०

सुकुमारतर स्फार रूपालङ्कार पूर्वकैः ।
पदगुंफैर्महाकाव्य कर्ता देवेशि जायते ॥

वेदवेदाङ्ग वेदी च सद्गीत ज्ञान पारगः ।
ज्योतिः शास्त्रेति हासादि मीमांसा स्मृतिवाक्यवित् ॥

पुराण रसवादादि गारुडानैक मन्त्रवित् ।
पातालशास्त्र विज्ञान भूत तंत्रार्थ तत्ववित् ॥

विचित्र चित्रकर्मादि शिल्पानेक विचक्षणः
महाव्याकरणोदार शब्द सङ्कर मर्मवित् ॥

सर्वभाषारुतज्ञानी समस्तलिपि कर्मकृत्।
नाना शास्त्रार्थ शिक्षादिवेत्ता भुवन विस्तृतः॥ ३५

सर्ववाङ्मयवेत्ता च सर्वज्ञो देवि जायते।
वाग्भवस्य मया देवि माहात्म्यं कथितं तव॥

कामराजस्य माहात्म्यं प्रवक्ष्यामि ततः प्रिये।
अथ कामकलासक्तः साधकः परमेश्वरः॥

रक्तालङ्कारसुभगो रक्तगन्धानुलेपनः।
रक्तवस्त्रावृतः सम्यङ्मध्यकामकलात्मना॥

रक्तपुष्पैश्च विविधैः कुङ्कुमादिभिरर्चयेत्।
मूलादिब्रह्मरन्ध्रान्तं स्फुरद्दीपस्वरूपिणीम्॥

बन्धूककुसुमाकार कान्तिभूषणभूषिताम्।
इक्षुकोदण्ड पुष्पेषु वराभय लसत्कराम्॥ ४०

तदीयाकार सिन्दूरभरितं भुवनत्रयम्।
चिन्तयन्परमेशानि कामराजं ततो जपेत्॥

त्त्रैलोक्यं मोहयत्येव तत्क्षणादेव साधकः।
राजानो वशमायान्ति पन्नगा राक्षसा सुराः॥

कन्दर्प इव देवेशि योषितां मानहारकः।
मनश्चिन्तितयोषित्तु दासीव वशगा भवेत्॥

तद्दृष्टिपथगा नारी सुरी वाप्यथवाऽसुरी ।
विद्याधरी किंनरी वा यक्षनागाङ्गनाऽथवा ॥

प्रचण्ड नरभूपाल कन्यका नागकन्यका ।
प्रज्वलन्मदनोत्कृष्ट दह्नेभ्रष्टमानसा ॥ ४५

क्लिन्ना प्रचलितापाङ्ग विमूढा मदविह्वला ।
निवेदितात्मसर्वस्वा वशगा देवि जायते ॥

चलज्जलेन्दु सङ्काशा बालार्क किरणारुणा ।
चिन्तिता योषितां योनौ संक्षोभयति तत्क्षणात् ॥

एषैव चिन्तिता जप्ता सिन्दूराभा हृदि क्षणात् ।
आकर्षयेन्न सन्देहो रम्भां वापि तिलोत्तमाम् ॥

रक्तवर्णां श्रियं ध्यात्वा तदीय महसावृतः ।
तस्या मूर्ध्नि स्मरेद्बीजं स्रवत्पीयूषवर्षणम् ॥

जप्तं संमोहयत्येव रम्भां च सुरसुन्दरीम् ।
नाडी द्वितयान्तः सर्वं त्रैलोक्यमपि मोहयेत् ॥ ५०

किञ्चकामकलाध्यानात् पञ्चकाख्या वरानने ।
मोहयन्ति जगत्सर्वं प्रयोगं शृणु पार्वति ॥

पूर्वोक्त कामा देवेशि ज्ञातव्याः पञ्चसंज्ञकाः ।
विदर्भाद्येन कामेन मन्मथं तद्गतं कुरु ॥

कन्दर्प संपुटं कृत्वा कोणमध्यगतं ततः ।
मकरध्वज संस्तम्भं सर्वमेतद्वरानने ।
मीनेकगुगतं कुर्यान्मोहयेज्जगतीमिमाम् ॥

त्रैलोक्यमोहनो नाम यागोऽयं परिकीर्तितः ।
शृणु देवि प्रवक्ष्यामि शक्तिबीजस्य साधनम् ॥

मूलादिब्रह्मरन्ध्रान्तं शरीरे चिन्तयेत्पराम् ।
स्रवत्पीयूष धाराभिर्वर्षतीं विषहारिणीम् ॥ ५५

हेमप्रभा भासमानां विद्युत्पुञ्ज समप्रभाम् ।
स्फुरच्चन्द्रकला पूर्णकलशं वरदाभये ॥

ज्ञानमुद्रां च दधतीं साक्षादमृतरूपिणीम् ।
ध्यायन् विषं हरेन्मन्त्री नानाकारव्यवस्थितम् ॥

एतस्याः स्मरणादेव नीलकण्ठत्वमागतम् ।
अहं मृत्युञ्जयो भूत्वा विचरामि जगत्त्रये ॥

वैनतेय समो मंत्री विषभार सहस्रनुत् ।
भूतप्रेत पिशाचांश्च नाशयेद्रोगसञ्चयम् ॥

चातुर्थिकज्वरान् कुष्ठानपस्मारांश्च नाशयेत् ।
नागानां दर्शनादेव जडीकरण कारकः ॥ ६०

दाहिनाममृताकारः क्षीरधारोपमः स्मृतः ।
स्थिरकृत्रिम शङ्काख्य विषोपविषनाशकः ॥

दुष्ट व्याधि ग्रहानेक डाकिनी रूपिकागणैः ।।

भूतप्रेत पिशाचाद्यैस्त्रिनेत्रवन्न दृश्यते ।
अथ त्रिकूट संपूर्णा महात्रिपुरसुन्दरी ।।

प्रजप्ता साधकस्याशु सर्वपातकभेदिनी ।
समस्त पुण्यफलदा सर्वलोक वशङ्करी ।।

नाभिमण्डल मध्यस्था बालार्कशत सन्निभा ।
प्रातर्जप्त्वाऽथ मध्याह्ने हृत्पद्मस्थाऽरुणप्रभा ।। ६५

तप्तकाञ्चन सङ्काशा सायंकाले ततः पराम् ।
मुखमण्डल मध्यस्था पद्मराग मणिप्रभा ।।

स्मृता जप्ता साधकस्य प्रागेवजुरणाच्छिवे ।
सिद्धयत्यष्ट गुणैश्वर्यं सौभाग्यं च महत्तरम् ।।

तन्नाम संस्मरन् वापि योगिनीनां प्रियो भवेत् ।
श्रियो विद्यानुसंधाने यस्याचार्य कृपा भवेत् ।।

सूतकादिभयं तस्य नास्ति नित्यं शुचिस्मिते ।
नियतो यो जपेन्नित्यं महात्रिपुरसुन्दरीम् ।।

तथैव मातृ चक्राज्ञा संक्रमत्यस्य विग्रहे ।
सर्वासां सर्वसंस्थानां योगिनीनां भवेत्प्रियः ।। ७०

साधकोऽसौ भवत्यासां साक्षात्पुत्र इवापरः ।
परिपूर्णैव सततं जप्यते श्री यदि प्रिये ।।

खेचरी सिद्धिरतुला योगोऽप्यस्याशु सिद्ध्यति ।
चतुः षष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ॥

चक्रमेतत्समाश्रित्य संस्थिता वीरवन्दिते ।
जप्त्वा त्रिकूटां संपूर्णां महात्रिपुर सुन्दरीम् ॥

ऋतौ षष्ठेऽष्टमे वापि दशमे द्वादशेऽपि वा ।
षोडशे दिवसे क्षामां गच्छन् स्त्रियं निशि ॥

नारायण समं पुत्रं आयुष्मन्तं यशस्विनी ।
पारगं सर्वविद्यानां धनाढ्यं भाग्यसंयुतम् ॥ ७५

संप्राप्य सर्वश्रेयोभिस्सहितोऽसौ भवेत्सदा ।
नैतया सदृशी काचिद्विद्या देवेशि विद्यते ॥

एतामेव पुराराध्य विद्यां त्रैलोक्यमोहिनीम् ।
त्रैलोक्यमोहनं रूपं प्राप्तवान् भगवान् हरिः ॥

कामदेवोऽपि देवेशि महात्रिपुर सुन्दरीम् ।
समाराध्याऽभवल्लोके सर्वसौभाग्यसुन्दरः ॥

मयाप्येतद्व्रतस्थेन क्रियतेऽद्यापि सुव्रते ।
जपंस्त्रिसंध्यमेतस्यास्समस्तफलसिद्धये ॥

लयाङ्गपूजनान्नित्यं लक्ष्मी सौभाग्य वाक्पतिः ।
महाभाग्य निधिर्भूत्वा प्राप्नोत्यन्ते परं पदम् ॥ ८०

मध्यान्त चक्रार्चां कुर्वन् पक्षे पक्षेऽपि मासि वा ।
सम्प्राप्य सर्वश्रेयांसि पूज्यते दैवतैरपि ॥

एतदाराधनादेव ब्रह्मा सृष्टिकरोऽभवत् ।
चन्द्रसूर्याविपि जगत्सृष्टि संहारकारकौ ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
द्वादशोऽध्यायः ॥



## अथ त्रयोदशोऽध्यायः ॥

शङ्कर सुव्रत

**श्रीदक्षिणामूर्तिरुवाच –**

श्रृणु देवि प्रवक्ष्यामि जपहोमविधिं प्रिये ।
श्रवणादपि यस्य स्यात्साधको ब्रह्मरूपभाक् ॥

चक्रं समर्चयेद्देवि सकलं साङ्गमन्वहम् ।
अश्वमेधफलं साङ्गं प्राप्नोत्यन्वहमक्षयम् ॥

लयाङ्गपूजां कृत्वा वा यति नित्यं जितेन्द्रियः ।
वाजपेय फलं प्राप्य सर्वपापैः प्रमुच्यते ॥

ताम्रजं चक्रमभ्यर्च्य श्रियं जप्त्वाऽन्वहं शुचिः ।
विमुक्तः सर्वपापेभ्यो महतीं श्रियमक्षयाम् ॥

सम्प्राप्य महतीं विद्यां पुत्रपौत्र समृद्धिभाक् ।
ब्रह्मलोके वसन्त्येते दशपूर्वैर्दशावरैः ॥ ५

राजतं चक्रमभ्यर्च्य श्रियं जप्त्वा दिने दिने ।
महापापोपपापौघैरपि मुक्तः सुदारुणैः ॥

राज्यलक्ष्मीमवाप्नोति विद्यानां पारगो भवेत् ।
महतीं ऋद्धिमासाद्य पुत्रपौत्रादि संयुताम् ॥

भुक्त्वेह सकलान् भोगान् दीर्घायुर्विजयी सदा ।
कुलानां शतमुद्धृत्य वैकुण्ठे निवसत्यसौ ॥

सौवर्णं चक्रमभ्यर्च्य साधकोऽन्वहमादरात् ।
अश्वमेधफलं साङ्गं अन्वहं प्राप्य साधकः ॥

विमुक्तः पातकैर्घोरैः कोटिजन्म कृतैरपि ।
मुक्तारत्नादि सम्पूर्णां धनधान्यौघ सङ्कुलाम् ॥ १०

महेन्द्र सदृशीं लक्ष्मीमिहैव प्राप्य साधकः ।
आरोग्यं महदायुष्यं कान्ति कन्दर्पसन्निभाम् ॥

सम्प्राप्य सर्वविद्यानां पारगो धिषणप्रभः ।
आयुः श्रीकीर्ति सहितः पुत्रपौत्रादि संयुताम् ॥

समृद्धि महतीं प्राप्य भुक्त्वा भोगांश्च दुर्लभान् ।
सहस्रकुल संयुक्तो मोदते परमे पदे ॥

चक्ररत्नमयं नित्यमभ्यर्च्य शुचिरादरात् ।
कामवत्सुभगो लोके विद्यया धिषणप्रभः ॥

धनदेन समो लक्ष्म्या ............ ।
भुक्त्वेह सकलान् भोगान् व्रजत्यन्ते परं पदम् ॥ १५

सर्वोपचारैराराध्य चक्रराजं फलप्रदम् ।
सहस्रं प्रजपेन्नित्यमथ पञ्चशतं तु वा ॥

चतुश्शतं जपेन्नित्यं त्रिशतं द्विशतं तु वा ।
अष्टोत्तरशतं वाऽपि नोचेत्प्राप्नोत्यधोगतिम् ॥

समग्रं फलमक्षय्यं नित्यमाप्नोति सिद्धिदम् ।
पश्चिमाभिमुखे लिङ्गे वृषशून्ये शिवालये ॥

अथवाऽऽचार्य सान्निध्ये भगवन्मन्दिरेऽपि वा ।
चक्रराजार्चनं यत्र तत्राऽऽचार्य सन्निधिः ॥

दिव्यक्षेत्रं तदुद्दिष्टं समन्ताद्योजनायतम् ।
एकादश्यां माघमासे द्वादश्यां वा शुचिः शिवे ॥ २०

आरभ्य शिवरात्र्यन्तं साधको नियतव्रतः ।
आचार्यं सन्निधीकृत्य चक्रराजं समर्चयन् ॥

फलाशी वा हविष्याशी क्षीराशी वा जितेन्द्रियः ।
एकभक्ताशनो देवि गायत्रीं बहुशो जपन् ॥

चक्रराजं समभ्यर्च्यं साङ्गावरण मादरात् ।
सहस्रं प्रजपेन्नित्यं श्रियः पञ्चदशाक्षरीम् ॥

शताधिकं ततो हुत्वा नित्यमष्टोत्तरं शतम् ।
सुवासिनीत्रयं नित्यमेकैकां वासुवासिनीम् ॥

भोजयित्वाऽथ मृष्टान्नैर्दक्षिणाभिश्च तोषयन् ।
माघमासस्य भूतायां निराहारो यतव्रतः ॥ २५

स्नात्वा सायमथायोध्या नगराभिधमिष्टदम् ।
चक्रराजं समभ्यर्च्य साङ्गावरणमादरात् ॥

यामोपरि ततो रात्रौ विधिवत्संस्कृतेऽनले ।
ललितां श्रियमाराध्य जातवेदसि साधकः ॥

सकृदादौ घृतं हुत्वा रश्मिविद्याभिरादरात् ।
नवावरणदेवीनां धृतमेकैकशो हुनेत् ॥

शुद्धेन गोधृतेनाऽथ सहस्रं त्रिशताधिकम् ।
हुत्वा पञ्चदशाक्षर्या श्रिय आचार्य सन्निधौ ॥

लक्ष्मी मंत्रैश्चतुर्भिश्च हुत्वाष्टाविंशतिधा धृतम् ।
ततो जयादिभिर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥ ३०

अग्निं प्रदक्षिणीकृत्य श्रियमुद्वास्य चात्मनि ।
चक्रराजं समभ्यर्च्यं साङ्गं भूयोऽपि शैलजे ॥

आचार्यं चरणद्वन्द्वं नत्वा साष्टाङ्गमादरात् ।
रत्नवित्त समायुक्त षष्टिचिह्नक हेमजम् ॥

कुण्डल द्वितयं दद्यादाचार्यस्याथ कर्णयोः ।
प्रत्याम्नाय सुवर्णं वा दत्वा वासोयुगं शुभम् ॥

अङ्गुलीयक मुख्यानि भूषणानि समर्पयेत् ।
दद्याद्ग्रामाननेकांश्च रत्नौघं चाक्षयं धनम् ॥

बहुक्षीर समायुक्तां गां दद्याद्वत्स संयुताम् ।
अथवाचार्य पादाब्जे वर्षाशनमितं धनम् ॥ ३५

वासोयुग समायुक्तमर्पयेन्नियतव्रतः ।
वर्षाशन मितं द्रव्यं शतनिष्कमुदाहृतम् ॥

तदर्धं वा तदर्धं वा वित्तलोभं परित्यजेत् ।
एकविंशति निष्कं वा वर्णुनिष्कमथापि वा ॥

अर्पयेदेकनिष्कं वा सिद्धिमिच्छन् महत्तराम् ।
कृत्वैवं नियमं घोरं पुरश्चरण कर्मकृत् ॥

अवश्यं सिद्धिमाप्नोति दुर्लभां च महत्तराम् ।
आचार्यपत्न्यै सौवर्णं कर्षमानमथापि वा ॥

त्रिंशच्चिह्नुक सौवर्णमलङ्कारं समर्पयेत् ।
दद्यात्सूक्ष्मतरं वस्त्रं क्षौमं कार्पासकं तु वा ॥ ४०

कृत्वा जागरणं रात्रौ श्रियमभ्यर्चयन् शुचिः ।
शाश्वतीं सिद्धिमाप्नोति श्रियं चापि महत्तराम् ॥

चतुर्दशी निशीथे सा यदि भौम समन्विता ।
कृत्वेत्थं तत्र विद्यायाः पुरश्चर्या सहस्रजम् ॥

अवश्यं फलमाप्नोति साधको नात्र संशयः ।
ब्रह्महत्यादि पापौघोऽप्यस्य नश्यति तत्क्षणात् ॥

वाजिमेधसहस्रस्य वाजपेयायुतस्य च ।
फलं साङ्गमवाप्नोति प्रभाते साधकस्ततः ॥

कृत्वादौ नैत्यकं कर्म साङ्गावरणमादरात् ।
चक्रराजं समभ्यर्च्य सवत्सां गां पयस्विनीम् ॥ ४५

आचार्याय समर्प्याथ दत्वा शक्तोऽथ दक्षिणाम् ।
सुवासिनी पञ्चदश मृष्टान्नैस्तोषयेद्व्रती ॥

वासोभिर्दक्षिणाद्यैश्च विभवे सति साधकः ।
आचार्यचरणद्वंद्व प्रक्षालितजलं शुचिः ॥

पीत्वाश्नीयादथो तस्य भुक्त शिष्टान्नमादरात् ।
तस्मिन्नेव दिने स्वप्ने श्रियं देवीं प्रपश्यति ॥

यद्याचार्य पदाम्भोजे दद्यादुत्तमदक्षिणाम् ।
पश्यत्यसौ श्रियं साक्षाच्चक्षुर्भ्यामेव साधकः ॥

मध्यमां दक्षिणां दत्वा कनिष्ठामपि दक्षिणाम् ।
श्रियं भट्टारिकां तस्मिन् दिने स्वप्ने प्रपश्यति ॥ ५०

तदारभ्य महद्भाग्यं भवत्यस्य दिने दिने ।
अक्षया महती लक्ष्मीर्धनधान्यादि संकुला ॥

तद्द्वारि किङ्करीभूत्वा तिष्ठत्येव न संशयः ।
वाचि वाग्देवता तस्य भवत्येव न संशयः ॥

आश्विने नवरात्रे वा वासन्ते नवरात्रके ।
जप्त्वा वर्णसहस्राणि श्रियः पञ्चदशाक्षरीम् ॥

पूर्वोक्तविधिना हुत्वा दत्वा पूर्वोक्त दक्षिणाम् ।
महतीं सिद्धिमासाद्य भवत्येवेन्द्र सन्निभः ॥

अक्षयायां तृतीयायां आरभ्य नियतव्रतः ।
आचार्यानुज्ञयावर्ण साहस्रं श्रियमिष्टदाम् ॥ ५५

पूर्णिमान्तं प्रजप्त्वाऽथ पूर्णिमायां ततः परम् ।
दधि मध्वाज्य सहितौदनेन पनसोद्भवैः ॥

बीज शून्यैः फलैर्वाऽऽज्य सहितैस्त्रिशताधिकम् ।
सहस्रं विद्यया हुत्वा रश्मिविद्या पुरस्सरम् ॥

जयादिभिरथो हुत्वा कृत्वा ब्रह्मार्पणा हुतिम् ।
चक्रराजं समभ्यर्च्य साङ्गावरणमन्वहम् ॥

अथ पञ्चदशाभ्यर्च्य प्रमदाः श्रीधिया शुचिः।
गुडोदकेन दध्यन्नैः फलैरपि मनोहरैः ॥

दक्षिणाभिश्च ताम्बूलैः सन्तोष्य च ततः परम्।
श्रीचक्र सन्निधौ पश्चादाचार्यं दण्डवन्नमेत् ॥ ६०

दत्वा धेनुद्वयं वत्स बहुक्षीर समन्वितम्।
अलङ्कारैरलङ्कृत्य वासोयुग्मं समर्प्य च ॥

वर्षाशन मितं द्रव्यं तदर्धं वा तदर्धकम्।
पञ्चनिष्कमितं वाऽपि प्रदद्याद्दक्षिणाधनम् ॥

आचार्यपत्न्यै सौवर्णमलङ्कारं यथारुचि।
वासोऽपि च समर्प्याथ तच्छेषं भोजयेद्व्रती ॥

इत्थं कृत्वाऽपि महतीं सिद्धिं प्राप्नोति शाश्वतीम्।
महदायुष्यमारोग्यं श्रीरप्यष्ट गुणान्विता ॥

धनधान्य समृद्धिश्च पशुवृद्धिर्महत्तरा।
कन्दर्प समसौभाग्यं विद्याबहुविधाऽपि च ॥ ६५

सिद्ध्यत्येव न सन्देहस्तस्मिन्नेव हि वत्सरे।
सिद्धिं विना न काम्यानां सिद्धिरुक्तामनीषिभिः ॥

साधयेद्वांछितानर्थान् सिद्ध्यनन्तरमेव हि।
येन केनाप्युपायेन पूर्णानुग्रहतो गुरोः ॥

विद्या सिद्धयति तस्याऽथ देवत्वं च न दुर्लभम् ।
ध्यात्वाऽथवा चक्रराजं मनः पूजा समन्वितम् ॥

जपारम्भं सुधीः कुर्यान्महापापैः प्रमुच्यते ।
निगदेनो पांशुना वा मनसा वा जपेत्सदा ॥

निगदः परमेशानि स्फुटवाचा निगद्यते ।
अव्यक्ततः स्फुरद्वक्त्र उपांशुः परिकीर्तितः ॥ ७०

मानसस्तु वरारोहे चिन्तनाजपरूपभाक् ।
जिह्वया जप्यते येन सोऽपि मानस उच्यते ॥

निगदेन तु यज्जप्तं लक्षमात्रं वरानने ।
उपांशु स्मरणेनैतत्तुल्यं भवति शैलजे ॥

उपांशुना लक्षमात्रं यज्जप्तं कमलेक्षणे ।
मानसोच्चारणेनैव तुल्यमेकेन सुन्दरि ॥

धिया यदक्षर श्रेण्या वर्णाद्वर्णं पदात्पदम् ।
जप्यते स जपः प्रोक्तो मानसोक्षय सिद्धिदः ॥

मुद्रासन्नद्धदेहस्सन् साङ्गं चक्रं समर्चयन् ।
लक्षमात्रं जपेद्यस्तु चक्रराजं समर्चयन् ॥ ७५

लक्षमात्रं जपेद्यस्तु महापापैश्च दारुणैः ।
वार्धके यौवने बाल्ये जाग्रत्स्वप्न सुषुप्तिषु ॥

मनसा कर्मणा वाचा ज्ञानाज्ञान कृतैरपि ।
उपपातक संघैश्च मुच्यते नात्र संशयः ॥

लक्षद्वयं जपेद्यस्तु श्रियः पञ्चदशाक्षरीम् ।
ब्रह्महत्या सुरापान स्वर्णस्तेयादिकैरपि ॥

महापातक संघैश्च उपपातक राशिभिः ।
मुच्यते नात्र सन्देहः कोटिजन्मकृतैरपि ॥

चक्रराजं समभ्यर्च्य श्रियः पञ्चदशाक्षरीम् ।
जप्त्वा लक्षत्रयं मंत्री हयमेध सहस्रजम् ॥ ८०

फलं प्राप्य विशुद्धात्मा दैवतैरपि पूज्यते ।
चतुर्लक्षं जपेद्यस्तु चक्रराजं समर्चयन् ।

जडोऽपि सर्वविद्यानां पारगो जीववद्भवेत् ।
सकृच्छ्रवण मात्रेण गृह्याद्वेद चतुष्टयम् ॥

अश्रुतानां च शास्त्राणां वक्ता वाचस्पतिर्भवेत् ।
अनधीता महाविद्या अपि भान्त्यस्य वक्त्रतः ॥

महाकविर्महावाग्मी भवत्येव न संशयः ।
पञ्चलक्षं जपेद्यस्तु नियतः श्रियमिष्टदाम् ॥

सर्वविद्यानिधिरयं व्यासवाल्मीकि सन्निभः ।
भूत्वा धनद सङ्काशः श्रिया भवति सन्ततम् ॥ ८५

अजरामरणो भूत्वा प्राप्नोत्यायुष्य मक्षयम् ।
लक्षषट्कं जपेद्यस्तु चक्रराजं समर्चयन् ॥

पारङ्गतोऽसौ विद्यानां भूत्वा विद्याधराधिपः ।
सर्वतत्त्वमनुप्राप्य चिरायुष्यं महत्तरम् ॥

अवाप्य दिव्यभोगाढ्यो लभते सर्ववाञ्छितम् ।
प्राप्नोति महदैश्वर्यं मुक्तारत्नादि सङ्कुलम् ॥

गजाश्वरथ संपूर्णं दासीदास समन्वितम् ।
सप्तलक्षं जपेद्यस्तु श्रियो विद्यां फलप्रदाम् ॥

अजरामरणो भूत्वा पञ्चविंशति वार्षिकः ।
सौभाग्यं परमं लब्ध्वा धनधान्यादि सङ्कुलम् ॥ ९०

शक्राद्यैरष्टदिक्पालैरपि नित्यं प्रपूज्यते ।
अष्टलक्षं जपेद्यस्तु महात्रिपुरसुन्दरीम् ॥

अष्टाङ्ग सहितं योगं श्रियं चाष्टगुणान्विताम् ।
सम्प्राप्य कालमृत्युं च विनिर्जित्याजरामरः ॥

खेचरत्वं समासाद्य विमानमधिरोहति ।
चिन्तामणि गणाकीर्णे कामधेनु समन्विते ॥

कल्पद्रुम वनान्तस्ते सुरराजादि मन्दिरे ।
क्रीडते दिव्यकन्याभिः कन्दर्प इव सुन्दरः ॥

नवलक्ष प्रमाणं यो जपेत्त्रिपुर सुन्दरीम् ।
अधिपः सर्वविद्यानां भूत्वा विंशतिवार्षिकः ॥ ९५

जरामरण निर्मुक्तो वलीपलितवर्जितः ।
अणिमादि गुणैश्वर्यं लब्ध्वा खेचरतामपि ॥

क्रीडते दिव्यकन्याभिः सततं देवमन्दिरे ।
वर्णलक्षं जपेद्यस्तु श्रियः पञ्चदशाक्षरीम् ॥

स एव जगतां कर्ता हर्ता संरक्षकोऽपि च ।
सर्वतः सुभगो वाग्मी सर्वविद्यासुपारगः ॥

अनेनैव शरीरेण जरामरणवर्जितः ।
पञ्चविंशति वर्षश्च श्रियमष्ट गुणान्विताम् ॥

सम्प्राप्य ब्रह्मविष्णवीश शक्राद्यैश्च मरुद्गणैः ।
पूजितो योगमष्टाङ्गं लब्ध्वा खेचरतामपि ॥ १००

प्रार्थ्यते दिव्यकन्याभिस्तिरश्चां वेत्ति भाषितम् ।
परकायं प्रविशति जायते दिव्यभोगवान् ॥

ब्रह्मर्षिभिर्वसिष्ठाद्यैरपि नित्यं समर्चितः ।
शतयोजन पर्यन्तमपि पश्यति चक्षुषा ॥

महेन्द्रपुरमुख्येषु दिव्यलोकेषु सन्ततम् ।
विहरत्येव गन्धर्वैस्संस्तुतोऽप्सरसां गणैः ॥

दिव्यकन्याशताकीर्णं विमान मधिरुह्य च ।
भुक्त्वाऽऽकल्पं महाभोगान् ब्रह्मतादात्म्य सिद्धिभाक् ॥

यदामकर सङ्क्रान्ति सविता सङ्क्रमत्यसौ ।
तदारभ्य दिनं नित्यमाचार्यानुज्ञया शिवे ॥ १०५

एकभक्ताशनो विद्यां जप्त्वा साहस्रमन्वहम् ।
अधः शायी जितामित्रो गुरुशुश्रूषणे रतः ॥

कुम्भसङ्क्रान्ति पर्यन्तं तद्दिने गुर्वनुज्ञया ।
विधिवत्संस्कृते वह्नौ पलाश कुसुमैः शुभैः ॥

त्रिशताधिक साहस्रं जुहुयात्त्रिमधुप्लुतैः ।
पूर्ववद्रश्मिविद्याभिर्हुत्वैकामाहुतिं शिवे ॥

चतुः श्रीमनुभिः पश्चादष्टाविंशतिधा धृतम् ।
हुत्वा जयादिभिर्हुत्वा कुर्याद्ब्रह्मार्पणाहुतिम् ।

पलाशकुसुमाभावे पद्मैर्घृत मधुप्लुतैः ।
पद्माभावे बिल्वपत्रैः केवलेन धृतेन वा ॥ ११०

हुत्वाऽऽचार्य पदाम्भोजे दद्याद्वर्षाशनं धनम् ।
अथवा वर्षनिष्कं स्वं पञ्चनिष्कमथापि वा ॥

समर्प्याचार्य पत्न्यै च दद्याद्वासो विभूषणम् ।
वर्णसंख्यास्सुवासिन्यः सन्तोष्या भोजनादिभिः ॥

बन्धुभिः स भुञ्जीत स्वयमाचार्य सन्निधौ ।
इत्थं कृत्वा महासिद्धि पुरश्चर्या शतोद्भवाम् ॥

सम्प्राप्य जगतां धात्रीं श्रियं देवीं प्रपश्यति ।
कन्दर्पशत सौभाग्यं श्रियं चाष्ट गुणान्विताम् ॥

वाचस्पति समां विद्यां जातिस्मरण मुत्तमम् ।
योगमष्टाङ्ग सहितं धनधान्याकुलां श्रियम् ॥ ११५

दिव्यकन्या पतित्वं च सत्पात्रोत्तमतामपि ।
पूज्यतां नृपसान्निध्ये दैवतैरपि पूज्यताम् ॥

अवाप्य वत्सरे तस्मिन् दिव्यान्भोगांश्च दुर्लभान् ।
व्रजत्यन्ते परंधाम कुलसाहस्र संयुतः ॥

दासभूता नृपालाः स्युर्योषितो दास्य एव हि ।
सन्तति व्यापिनीर्लक्ष्मीर्गजाश्वरथ सङ्कुला ॥

मुक्तारत्नौघ संपूर्णा स्वर्ण रौप्य समाकुला ।
अचला जायते तस्य मन्दिरे नात्र संशयः ॥

ऋषित्वममरत्वं वा गन्धर्वत्वमथापि वा ।
सिद्धत्वं वाऽथ देवत्वं लभतेऽस्मिन् कलेबरे ॥ १२०

पुरश्चरण कर्मेद मुक्तं ते गिरिकन्यके ।
विशेष होमद्रव्याणि प्रवक्ष्यामि ततः परम् ॥

**इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे त्रयोदशोऽध्यायः ॥**

# अथ चतुर्दशोऽध्यायः ॥

**श्रीदक्षिणामूर्तिरुवाच–**

विशेष होमद्रव्याणां विधानमथ वक्ष्यते ।
यत् श्रुत्वाऽपि नरो धीमान् दुरितौघैर्विमुच्यते ॥

दीपस्थानं समाश्रित्य जपहोमार्चनादिकम् ।
कुर्यात्समस्त विद्यानां सिद्ध्यर्थं साधकोत्तमः ॥

वर्तुलं रचयेद्देवि कूर्माकृति सुलोचने ।
तन्मध्ये नवकोष्ठानि कृत्वा वर्णान् समालिखेत् ॥

मध्यकोष्ठे क्षेत्रनाम लिखेद्वर्णा नथाष्टसु ।
स्वरयुग्म क्रमेणैव कादि चाष्टसु योजयेत् ॥

अवर्गक्रमतो देवी कवर्गादि ततः परम् ।
लक्षवर्णौ संभुकोणे विलिखेत्कूर्म संज्ञिकम् ॥ ५

यस्मिन्क्षेत्रे कोष्ठ नाम तन्मुखं विद्धि पार्वति ।
मुखस्य पार्श्वयोः पाणिद्वयं जानीहि पार्वति ॥

ततः पश्चाद्द्वयं कुक्षिस्थानं हि सुरवन्दिते ।
ततः पादद्वयं विद्धि तदन्ते पुच्छमीरितम् ॥

मुखे कार्याणि सिद्ध्यन्ति मनोरथ शतान्यपि ।
करस्थाने महाक्लेशः सर्वकार्य विनाशकृत् ॥

उदरे दुःखमधिकं पादयोर्हानिरच्युता ।
पुच्छे तु धनहानिश्च जायते नान्यथा प्रिये ॥

दीपस्थानं मया प्रोक्तं त्रैलोक्येऽपि सुदुर्लभम् ।
दीपस्थानं पुरो क्षेत्रे ग्रामेधि विषयेऽपि वा ॥ १०

यत्र कुत्रापि वा कृत्वा जपहोमार्चनादिकम् ।
कुर्यादनन्त फलदं विद्धि पर्वतकन्यके ॥

नित्यहोमः पुरा प्रोक्तो मया पातक भञ्जनः ।
कामनाहोमकर्माणि वक्ष्यामि फलदाप्यथ ॥

मल्लिका मालतीजाती कुसुमैर्मधुमिश्रितैः ।
चैत्रमासे पूर्णिमायां सहस्रत्रितयं हुनेत् ॥

मन्दोऽपि सर्वविद्यानां पारगो जीवसन्निभः ।
भवत्येव वरारोहे महावाग्मी महाकविः ॥

जपापुष्पैराज्ययुक्तैः करवीरैरथापि वा ।
सहस्रत्रितयं हुत्वा गोक्षीर त्रिमधुप्लुतैः ॥ १५

कामवत्सुभगः कान्त्या मोहयेज्जगतीमिमाम् ।
नरो राजकुले वापि बिलद्वारे वनेऽपि वा ॥

विजयश्रियमाप्नोति हनूमानिव सन्ततम् ।
सौभाग्येन विलासेन सामर्थ्येनापि सुव्रते ॥

पूर्वोक्त कुसुमैर्हुत्वा तरुणीश्च मदान्विताः ।
सम्मोहयति भूपानां कन्या अपि मनोहराः ॥

कर्पूरकुङ्कुमं देविमिश्रं मृगमदेन च ।
लघुकोल समं हुत्वा सहस्रं त्रिशताधिकम् ॥

राज्यलक्ष्मीमवाप्नोति सन्ततिव्यापिनीं नरः ।
चम्पकैः पाटलैर्हुत्वा घृतत्रिमधुमिश्रितैः ॥ २०

त्रिसहस्रं विशुद्धात्मा त्रिशताधिकमादरात् ।
धनधान्याकुलां मुक्ता रत्नराशि समाकुलाम् ॥

महतीं श्रियमाप्नोति शाश्वतीमनपायिनीम् ।
श्रीखण्डं गुग्गुलं चन्द्रं नागरं जुहुयाद्यदि ॥

प्रत्येकमेक साहस्रं कन्दर्प सदृशः श्रिया ।
राजराजेन्द्र देवानां पुरन्ध्रीर्वश मानयेत् ॥

सर्वे लोकावशीभूता भवन्त्यस्य न संशयः ।
घृत त्रिमधु संमिश्र लाक्षां हुत्वा सहस्रशः ॥

राज्यलक्ष्मीं समासाद्य दारिद्र्येन विमुच्यते ।
मधुत्रितय होमेन सहस्र त्रितयं शुचिः ॥ २५

विमुक्तः सकलापद्भ्यः खेचरत्वमवाप्नुयात् ।
क्षीरं मधुदध्याज्यं पृथक् हुत्वा सहस्रशः ॥

आयुर्धनमथारोग्यं समृद्धिं च लभेत्पराम् ।
क्षीरेण मधुना हुत्वा प्रत्येकं त्रिसहस्रकम् ॥

अपमृत्युं विनिर्जित्य कालमृत्युं च साधकः ।
महदायुष्यमाप्नोति सर्वाधिव्याधिवर्जितः ॥

दधिमाक्षिक होमेन प्रत्येकं त्रिसहस्रकम् ।
सौभाग्यं महदासाद्य धनमक्षयमाप्नुयात् ॥

सघृतेन हुतेनाथ हुत्वा दशसहस्रकम् ।
महतीं श्रियमासाद्य वैरिणः स्तम्भयत्यसौ ॥ ३०

होमाद्दधिमधुक्षीर लाजाभिर्वीर वन्दिते ।
विमुक्तः सर्वरोगैश्च स्वच्छन्दमरणो भवेत् ॥

कमलैररुणैर्हुत्वा धृतत्रिमधुमिश्रितैः ।
त्रिसहस्रं विशुद्धात्मा द्वितीय इव यक्षराट् ॥

रक्तोत्पलैस्त्रिमध्वक्तैर्जहुयाद्गोघृतप्लुतैः ।
सप्ताहं सर्वभूपाला दासभूता भवन्ति हि ॥

त्रिशताधिकसाहस्रं प्रत्यहं गिरिकन्यके ।
अक्षयं धनमाप्नोति वांछितं नात्र संशयः ॥

नीलोत्पलैस्त्रिमध्वक्तैः शताधिक सहस्रकम् ।
हुत्वा सप्ताहमात्रेण क्रूरभूपतयोऽपि च ॥ ३५

दासभूता भवन्त्यस्य दुःसाध्या अपि योषितः ।
श्वेतोत्पलैस्त्रिमध्वक्तैः शताधिक सहस्रकम् ॥

हुत्वा सप्ताहमात्रेण महतीं श्रियमक्षयाम् ।
सम्प्राप्य सर्वविद्यानां पारगो भवति ध्रुवम् ॥

श्वेतपद्मैस्त्रिमध्वक्तैश्शताधिकसहस्रकम् ।
हुत्वा सप्ताहमात्रेण कान्ति कन्दर्पसन्निभाम् ॥

सम्प्राप्य महतीं लक्ष्मीं प्राप्नोतीन्द्रसमप्रभाम् ।
कल्हारहवनान्मंत्री त्रिशताधिक सहस्रकम् ॥

सप्ताहात्सर्वसौभाग्यं धनमक्षयमाप्नुयात् ।
मातुलुङ्गफलैर्हुत्वा सहस्रं त्रिशताधिकम् ॥ ४०

सप्ताहात्क्षत्रियावश्या भवन्त्यत्र न संशयः ।
नारङ्गफलहोमेन सहस्रं त्रिशताधिकम् ॥

त्र्यहात्सकला वैश्या दासभूता न संशयः ।
कूष्माण्डफलहोमेन सहस्रं त्रिशताधिकम् ॥

पञ्चाहात्सर्वशूद्राश्च वश्या अत्र न संशयः ।
द्राक्षाफलैस्त्रिमध्वक्तैस्सहस्रं त्रिशताधिकम् ॥

हुत्वैकविंशतिदिनं सिद्ध्यष्टकमवाप्नुयात् ।
कदलीफलहोमेन लक्षमात्रेण भूभुजः ॥

दशवश्या न संदेहो यावज्जीवं भवन्ति हि। ४५
खर्जूर फलहोमेन लक्षमात्रेण भूभुजः ॥

वश्या विंशति संख्याका इत्याज्ञा पारमेश्वरी।
नारिकेल फलैर्हुत्वा लक्षं त्रिमधुमिश्रितैः ॥

सप्तद्वीपाधिपो राजा यावज्जीवं भवत्यसौ।
पक्वान्नफल होमेन लक्षमात्रेण सुन्दरि ॥

चतुःसागरपर्यन्त भूपतिर्जायते सदा।
पनसस्य फलैर्बीज रहितैस्त्रिमधुप्लुतैः ॥

त्रिशताधिकसाहस्रं पक्षमेकं निरन्तरम्।
इष्टसिद्धिमवाप्नोति दुर्लभामपि दैवतैः ॥

गुग्गुलस्य च होमेन षट्सहस्रेण सुन्दरि। ५०
सर्वदुःख निवृत्तिःस्यादक्षयं सुखमश्नुवे ॥

कुकुमं मधुसंयुक्ता मधुत्रितय मिश्रितम्।
सहस्रपञ्चकं हुत्वा कामवत्सुन्दराकृतिः ॥

वशीकरोति त्रैलोक्यं यावज्जीवं न संशयः।
चन्दनं घृतसंमिस्रं मधुत्रितयमिश्रितम् ॥

सहस्रत्रितयं हुत्वा वैरिणो वशमानयेत्।
रक्तचन्दनहोमेन सहस्रं त्रिशताधिकम् ॥

स्त्रियो वश्या भवन्त्यस्य पुरुषाश्चापि सन्ततम् ।
कर्पूरं जुहुयाद्यस्तु घृतत्रिमधुमिश्रितम् ॥

त्रिशताधिकसाहस्रं दिनत्रितयमीश्वरि ।
दीर्घमायुष्यमासाद्य कान्त्या कन्दर्पसन्निभः ॥ ५५

वाचस्पति समःसाक्षाद्विद्ययेहापि जायते ।
कस्तूरी होमतः सम्यक् सहस्रं त्रिशताधिकम् ॥

एकेन दिवसेनैव वश्यास्स्यू राजमंत्रिणः ।
तिल तण्डुल होमेन सहस्रं सप्तवासरम् ॥

सर्वपाप निवृत्तिः स्याद्रोगशान्तिश्च जायते ।
घृतत्रिमधुसंमिश्र शर्करा होमतः शिवे ॥

त्रिशताधिक साहस्रं सप्ताहं साधकोत्तमः ।
वशीकरोति त्रैलोक्यं श्रियमप्यचलां लभेत् ॥

घृतत्रिमधुसंमिश्र पायसं जुहुयाद्यदि ।
त्रिशताधिकसाहस्रं दशाहं कमलेक्षणे ॥ ६०

त्रैलोक्यं स्ववशीकृत्य श्रियमष्टगुणान्विताम् ।
प्राप्नोत्यत्र न सन्देहस्सत्यं सत्यं वरानने ॥

नानाविधान्नहोमेन मासि मासि शतत्रयम् ।
अन्नराशिमवाप्नोति धान्यमक्षयमश्नुते ॥

सोपस्करैश्च कटुकैस्सहस्रं त्रिशताधिकम् ।
हुत्वा सप्ताहमात्रेण रोगजालैस्सुदारुणैः ॥

अपनेतुमशक्यैश्च मन्त्रौषधरसायनैः ।
मुच्यते नाऽत्र सन्देहः क्षयकुष्ठादिकैरपि ॥

जपापुष्पैस्त्रिमध्वक्तैः सप्ताहं जुहुयाद्यदि ।
त्रिशताधिक साहस्रं प्राप्य लक्ष्मीमचञ्चलाम् ॥ ६५

सर्वविद्यानिधिर्भूत्वा कामवत्सुन्दरो भवेत् ।
बकुलस्य हुनेत्पुष्पैस्त्रिसहस्रं शताधिकम् ॥

सौभाग्यं महदासाद्य वृद्धोऽपि तरुणायते ।
दशाङ्गधूप होमेनाप्यसौ सौभाग्यवान् भवेत् ॥

जम्बूफलैस्त्रिमध्वक्तैस्त्रिसहस्रं शताधिकम् ।
चतुर्दिवसहोमेन तरुण्यो रूपगर्विताः ॥

दासीभूता भवन्त्येव राजकन्या अपि ध्रुवम् ।
कूष्माण्डफलहोमेन त्रिसहस्रं शताधिकम् ॥

सप्ताहाद्दैत्यकन्याश्च दासीभूता भवन्ति हि ।
श्रीफलैर्जुहुयादग्नौ पञ्चाहं त्रिमधुप्लुतैः ॥ ७०

त्रिशताधिकसाहस्रं राज्यलक्ष्मीर्महीयसी ।
तन्मन्दिरे भवत्येव धनरत्नौघ संकुला ॥

इक्षुखण्डैश्चतुरहं शताधिकसहस्रकम् ।
हुत्वा त्रिमधुसंमिश्रैः श्रियं साक्षात्प्रपश्यति ॥

अष्टोत्तरशतं नित्यमष्टाविंशतिधाऽपि वा ।
हुत्वा शुद्धेन गव्येन घृतेनैव दिने दिने ॥

विद्यासिद्धिमवाप्नोति श्रेयांसि सुबहून्यपि ।
केवलं घृतहोमेन प्रत्येकं जातवेदसि ॥

समस्ताभीष्टसंसिद्धिं प्राप्नोत्यत्र न संशयः ।
शृणु देवि प्रवक्ष्यामि मानं हवनसिद्धिदम् ॥ ७५

पुष्पं समग्रं जुहुयादुत्पलं कमलं तु वा ।
कुसुम्भानि च पुष्पाणि यथेष्टं हुनेत्प्रिये ॥

शतसंख्यास्तिलाः प्रोक्तास्तण्डुलाश्च तथैव हि ।
लाजा मुष्टि प्रमाणाश्च माषमग्नं घृतं स्मृतम् ॥

चुलुकार्धं क्षीरमन्नं वादरसम्मितम् ।
स्फूलं फलं महेशानि कूष्माण्ड मातुलुङ्गकम् ॥

मनः प्रीतिकरैः खण्डैर्जुहुयान्मृगलोचने ।
रम्भाफलं चतुःखण्डं लघुचेत्खण्डितं न हि ॥

नारिकेलं चतुःखण्डमुक्तं शास्त्रेषु सुन्दरि ।
प्रतिपर्वं हुनेदिक्षु खण्डं सकल सिद्धिदम् ॥ ८०

द्राक्षाफलं समग्रं स्यान्नारङ्गं च द्विधा स्मृतम्।
खर्जूरमेकमेकं स्यात्क्रमुकार्धं च गुग्गुलम्॥

गुञ्जासमं च कर्पूरं कस्तूरी कुङ्कुमं तथा।
मनःप्रियाणि चान्यानि फलानि जुहुयात्प्रिये॥

लाक्षा गुग्गुलसंख्या स्याद्यद्वस्तु सुमनोहरम्।
मनःप्रियाहुतिं कृत्वा होमं कुर्यात्सुलोचने॥

एतदाहुतिमानं ते कथितं सर्वविघ्नहृत्।
येन केनाप्युपायेन स्वाचार्यानुग्रहाच्छिवे।
श्रियं सन्तोषयेन्नित्यं जपहोमार्चनादिभिः॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
चतुर्दशोऽध्यायः॥

## अथ पञ्चदशोऽध्यायः ॥



श्रीदक्षिणामूर्तिरुवाच –

शृणु देवि प्रवक्ष्यामि विशेषविधिमुत्तमम् ।
आदौ कुण्डं समुत्पाद्य चतुरश्रसुलक्षणम् ॥

सर्वलक्षणसंयुक्तं शतहोमेऽर्धमस्तकम् ।
सहस्तमात्रं स्याद्द्विसहस्रे द्विहस्तकम् ॥

त्रिहस्तमयुते प्रोक्तं लक्षे हस्तचतुष्टयम् ।
कोटिहोमेऽष्टहस्तं च कृत्वा कुण्डस्य लक्षणम् ॥

शान्तिके चतुरश्रं च वश्ये चैवार्धचन्द्रकम् ।
षट्कोणं स्तंभने प्रोक्तं मारणे तद्वदेव हि ॥

आकर्षणे त्रिकोणं च वृत्तमुच्चाटने तथा ।
नानासिद्धिकरं प्रोक्तं पञ्चकोणं महेश्वरि ॥ ५

उत्तरे शान्तिकर्मस्या द्वारुण्यं स्तंभनं भवेत् ।
मारणे दक्षिणा प्रोक्ता पश्चिमाधिक् सुकर्मणि ॥

दाहकर्मणि चाग्नेयी विद्वेषे नैर्ऋती तथा ।
उच्चाटनं स्याद्वायव्ये ईशान्ये सर्वसिद्धिदम् ॥

विद्यासिद्धिकरं पूर्वदिङ्मुखं होमकर्मणि ।
कृत्तिकाऽऽकर्षणे प्रोक्ता भरणी मारणे तथा ॥

स्वाती वश्ये तथोच्चाटे ज्येष्ठा स्तंभनकर्मणि ।
विद्वेषे शततारा स्यादहिर्बुध्न्यं तु शान्तिदम् ॥

आकर्षणं सोमवारे मारणं मङ्गले तथा ।
बुधे च स्तंभनं कार्यं गुरुवारे च पौष्टिकम् ॥ १०

भार्गवे सर्वसिद्धिः स्याद्रवौ सर्वशुभं भवेत् ।
राजवृक्षस्य समिधो होतव्याः स्तंभने शिवे ॥

महिषीघृतहोमश्च लोकत्रयवशङ्करः ।
दाडिमी समिधो होमे प्रशस्ता मारणादिके ॥

अजाघृतेन होमः स्याज्जगत्त्रितय मोहनः ।
विद्वेषे चैव होतव्या उन्मत्तसमिधस्तथा ॥

अतसीतैल संयुक्ता महाविद्वेष कारकाः ।
सर्वकार्यार्थसिद्धिश्च सर्वविघ्न निवारणम् ॥

गोघृतेनैव हवनादन्वहं गिरिकन्यके ।
भार्गवे वासरे वापि नवम्यां पूर्णिमासु वा ॥ १५

अवश्यं पूजयेद्देवि कन्यकाः सुमनोहराः ।
पञ्चमं वर्षमारभ्य यावद्द्वादशवत्सरम् ॥

अविवाहित कन्यानां पूजनात्सर्वसिद्धयः ।
पूजिता येन त्रैलोक्यं समग्रं तेन पूजितम् ॥

विवाहिता अपि सदा रजोदर्शनवर्जिताः ।
कन्यका इति संप्रोक्ता यावद्द्वादशवत्सरम् ॥

श्रीधिया कन्यकाः पूज्यास्समस्त फलसिद्धये ।
सुवासिन्योऽपि संपूज्या भूषणाच्छादनाशनैः ॥

आचार्यपत्नी संपूज्या साक्षाल्लक्ष्मीधियान्वहम् ।
सैव लक्ष्मीर्जगन्माता सैव गौरी सरस्वती ॥ २०

आचार्यपत्न्यो बह्वयश्चेत्तत्र या पुत्र संयुता ।
सैव साक्षान्महालक्ष्मी धिया पूज्या विभूषणैः ॥

तत्पत्न्योऽपीतरा मातृ सदृशा नात्र संशयः ।
दमनारोपणं वक्ष्ये साधकानां हिताय च ॥

संवत्सरकृता पूजा येन पूर्णा प्रजायते ।
तपोभङ्गाय मदनो मम शैलसुते यदा ॥

यक्ष्मीभूतस्तदा पत्न्यौ रतिः प्रीतिश्च दुःखिते ।
सन्तुष्टमनसा ताभ्यां वरोदत्तो मया प्रिये ॥

तन्नेत्रवारि संभूता दमनस्य लताऽद्रिजे ।
तत्सौरभ्य समुद्भूत सौख्यमासीत्सुलोचने ॥ २५

रत्यै प्रीत्यै च तस्मात्तु मदनः प्रकटीकृतः ।
दमनेन तु यो मंत्री वर्षमध्येन पूजयेत् ॥

तस्य सांवत्सरी पूजा मदनाय भविष्यति ।
इति तयोर्वरो दत्तो मयैव सुरवन्दिते ॥

तस्माद्दमनपूजा हि कर्तव्या साधकोत्तमैः ।
श्री श्रीशपूजा निरतैर्गौरीशङ्करपूजकैः ॥

रविपूजा परैश्चापि गणेशार्चनतत्परैः ।
श्रीचक्रपूजानिरतैः शालग्रामार्धकैरपि ॥

लिङ्गार्चनपरैश्चापि वटुकार्चनतत्परैः ।
महेन्द्राद्यष्टदिक्पाल पूजनासक्तमानसैः ॥ ३०

यस्य यत्र भवेत्प्रीतिस्तदर्चन परैरपि ।
वत्सरे वत्सरेऽवश्यं कर्तव्यं दमनार्चनम् ॥

अन्यथा तत्फलं वर्षकृतं कामस्य जायते ।
चैत्रादयस्त्रयो मासाः पक्षौ सितासितौ वरौ ॥

एतेषु पूर्वं पूर्वस्तु कालस्सर्वोत्तमोत्तमः ।
अष्टम्यां च चतुर्दश्यां पौर्णमास्यामथापि वा ॥

पूर्वरात्रौ प्रकुर्वीत सद्योवाधिनिवापनम् ।
स्वयमुत्पाद्यदमनं समूलं पल्लवैर्युतम् ॥

आनीतमथवाऽन्येन मौल्यादाहृतमेव वा ।
वामतः स्थापयेद्देवि सर्वतो भद्रजेम्बुजे ॥ ३५

वस्वरे दमनं पात्रं प्रस्थाप्य पूजयेत्सुधीः ।
वाग्भवं भुवनेशानीं श्रियं काममतः पराम् ॥

कामदेवाय हृदयं विषा रुद्रवर्णि ... ।
पूर्वबीजानि चोच्चार्य फरे मात्मनमुच्चरेत् ॥

रत्यै नमश्चाष्टवर्णा रतिं विद्या वरानने ।
प्रीतिं वदेद्रतिस्थाने प्रीतिमन्त्रोष्टवर्णकः ॥

नवप्रकारभिन्नं तद्दमनं पूजयेत्क्रमात् ।
पूर्वोक्तायां दक्षिणस्यां दिशि सिह्मासनोपरि ॥

अस्त्रेण रक्षणं कुर्यात्कवचेन आत्मकुण्ठनम् ।
बद्ध्वा त्रिशूलमुद्रां च दापयेद्दमनोपरि ॥ ४०

श्रीखण्ठ घुसृणेन्द्वाढ्यैरधिवासं तु कारयेत् ।
प्रथमे दिवसे कुर्यादधिवासनमुत्तमम् ॥

सद्यो दिव्यथ रात्रौ वा वर्षपूजा फलाप्तये ।
प्रातःकाले महापूजां कृत्वाऽयोध्यापुराभिधे ॥

नवकोणं विधायाऽथ सिन्दूरेण महाप्रभम् ।
कलशान्नव संस्थाप्य हेमरत्नादिपूरितान् ॥

एकं वा कलशं नित्यं स्थापयेद्देशिकोत्तमः ।
दक्षिणे मंडलं कृत्वा कुंकुमाद्यैर्विचित्रितम् ॥

अशोकतरुमूलेऽथ त्रिकोणं मण्डलं लिखेत् ।
तन्मध्ये पूजयेत्कामं तरुणं चारुणप्रभम् ॥ ४५

रक्तपल्लवभूषं च वामदक्षिणयोः प्रिये ।
रतिप्रीति विशोभाढ्यं पञ्चबाणधनुर्धरम् ॥

वसन्तसहितं कामं कदम्बवनमध्यगम् ।
पूर्वोक्तमनुना सम्यगर्चयेत्सिद्धिहेतवे ॥

गौरश्यामे रतिप्रीती क्रमेण मणिभूषिते ।
पद्मताम्बूल हस्ते च रक्तवस्त्र विराजिते ॥

दिव्याभरण संयुक्ते दिव्यमाल्य विराजिते ।
वामदक्षिणयोर्ध्यात्वा कामस्य तदनन्तरम् ॥

वसन्तं पूजयेत्पश्चात् कदम्बवनमध्यगम् ।
गौरवर्णं वामहस्ते सुधापूर्णघटान्वितम् ॥ ५०

दक्षहस्तेन वित्रार्णं नानापुष्पसमुच्चयम् ।
सांगं कामं प्रपूज्याऽथ महात्रिपुरसुन्दरीम् ॥

क्रमं समर्चयेत्सम्यगाचार्यचरणद्वयम् ।
स्वर्णभारसहस्रैश्च दिव्यस्रग्वस्त्रभूषणैः ॥

रत्नैर्मुक्ताफलैर्वित्तैः अर्चयेदिष्टसिद्धये ।
आचार्यः पूज्यते यत्र तत्कर्म सफलं स्मृतम् ॥

आचार्यपूजारहितं निष्फलं नात्र संशयः ।
गुरोरभावे तत्पुत्रं तत्पत्नीं वा समर्चयेत् ॥

आचार्यपौत्रमथवा तद्दौहित्रमथापि वा ।
तेषामभावे तद्भ्रातॄनथवा सम्प्रपूजयेत् ॥ ५५

कन्यका अर्चयेत्पश्चान्मृष्टान्नैश्च सुवासिनीः ।
श्रीविद्यया हुनेदाज्यमथ त्रिशतमादरात् ॥

ब्रह्मार्पणाहुतिं कृत्वा ब्राह्मणान् भोजयेदथ ।
इत्थं कृत्वा नरः सम्यग्दमनारोपणव्रतम् ॥

वत्सरे वत्सरे सम्यग्जपहोमार्चनादिकम् ।
कृत्वा साङ्गमवाप्नोति फलं नात्र विचारणा ॥

संवत्सरकृता पूजा जपहोमादिकं शिवे ।
अन्यथा मदनायैव कृतं स्यात् गिरिकन्यके ॥

ललिताया महाराज्ञ्याः श्रियो विद्यापहायणः ।
भक्षयेन्नेक्षुखण्डानि न भवेत्स्त्रीषु निष्ठुरः ॥ ६०

न भवेल्लोकविद्वेषी मलिनो न भवेत्क्वचित् ।
नानृतं कस्यचित् ब्रूयाद्विशेषेण गुरोः शिवे ॥

आचार्य निन्दाश्रवणं श्रेयस्कामी परित्यजेत् ।
दरिद्रो वा धनाढ्यो वा मूर्खो वा पण्डितोऽपि वा ॥

आचार्य एव भगवान् हरिर्ब्रह्मा परःशिवः ।
किमत्र बहुनोक्तेन परमेश्वरमच्युतम् ॥

आचार्यरूपिणं विद्धि सत्यं सत्यं न संशयः ।
भक्तिमान् राजविद्यायां लक्ष्म्यादीनपि सन्मनून् ॥

यथाशक्त्या जपेद्विद्वान् सिद्धिं प्राप्नोत्यनुत्तमाम् ।
माहात्म्यमेतच्छ्रीदेव्याः सागरे चुलुकाम्बुवत् ।
किञ्चिदुक्तं मया देवि किं पुनः श्रोतुमिच्छसि ॥ ६५

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे पञ्चदशोऽध्यायः ॥

---

## अथ षोडशोऽध्यायः ॥

**श्रीदेव्युवाच–**

भगवन्दक्षिणामूर्ते सर्वज्ञ करुणानिधे ।
चतुर्लक्ष्मी सेव्यमाना श्रियो विद्यात्वयेरिता ।
लक्ष्म्यादि विद्यारत्नानां विधानं कथय प्रभो ॥

**श्रीदक्षिणामूर्तिरुवाच –**

श्रीदेवी ललिता सर्वजगत्कारण रूपिणी ।
चतुर्लक्ष्मी सेव्यमाना साक्षात्कामदुघा स्मृता ॥

श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्ततः परम् ।
त्रिशक्तिः सर्वसाम्राज्य लक्ष्मीः परिकीर्तिता ॥

श्रियस्त्रिजगदम्बाया मूलविद्या गरीयसी ।
सिह्मासनेश्वरी प्रोक्ता सर्वविद्यामयी शुभा ॥

एकाक्षरी महाविद्यां लक्ष्मीमथ वदाम्यहम् ।
वारुणान्तं वह्निसंस्थं वामनेत्र विभूषितम् ॥ ५

बिन्दुनादयुतं लक्ष्मीबीजमेतदुदाहृतम् ।
पूर्वसिंहासनेशानि लक्ष्मीरेषा त्रयीमयी ॥

समस्तसंपत्सुखदा विधात्रा पूजिता पुरा ।
ब्रह्मणोऽनुग्रहाद्दक्ष कश्यपाद्याः प्रजेश्वराः ॥

लक्ष्मीमाराध्य लोकानामाधिपत्यं प्रपेदिरे ।
ऋषिर्भृगुर्महायोगी निछृत् छ द उदाहृतम् ॥

श्रीलक्ष्मीर्देवता प्रोक्ता सर्वसंपत्समृद्धिदा ।
शतुर्ये बीजशक्तीच कीलकं रेफ उच्यते ॥

द्वितीयेन तृतीयेन षष्ठे नार्णेनचैमिति ।
इन्द्रेणचन्द्रकलया विद्यां संभेद्य सुन्दरि ॥ १०

षडङ्गानि न्यसेन्मंत्री हृच्छिरश्च शिखां ततः ।
कवचं नेत्रमस्त्रं च नमः स्वाहा क्रमेण च ॥

वषट् च वौषडन्तं च फटेभिर्योजयेत्क्रमात् ।
अष्टपत्रं लिखेद्यन्त्रं बहिर्भूबिन्दुमालिखेत् ॥

मध्ये पुष्पं विनिक्षिप्य त्रयीशक्तीः समर्चयेत् ।
विभूतिरुन्नतिः कान्तिः पुष्टिः कीर्तिश्च सन्नतिः ॥

व्युष्टिरुत्कृष्टि ऋद्धी च वसु दिक्षु प्रपूजयेत् ।
मध्ये सिंहासनं पूज्य सर्वशक्तिमयं प्रिये ॥

ध्यायेत्ततः श्रियं रम्यां सर्वदेव नमस्कृताम् ।
तप्त कार्तस्वराभासां दिव्यरत्न विभूषिताम् ॥ १५

आसिच्यमानाममृतैर्मुक्तारत्न द्रवैरपि ।
शुभ्राभ्राभेन युग्मेन मुहुर्मुहुरपि प्रिये ॥

रत्नौघबद्धमकुटां शुद्धक्षौमाङ्ग रागिणीम् ।
पद्माक्षीं पद्मनाभस्य वामाङ्के संस्थितां भजे ॥

एवं ध्यात्वा यजेद्देवीं पद्मयुग्मधरां सदा ।
वरदाभयशोभाढ्यां चतुर्बाहु त्रिलोचनाम् ॥

आवाहनादिमुद्राश्च क्रमेणैव प्रदर्शयेत् ।
उच्चाञ्जलिमधः कुर्यादियमावाहनी भवेत् ॥

इयं तु विपरीता स्यात्तदा वै स्थापनी भवेत् ।
ऊर्ध्वाङ्गुष्ठं मुष्टियुतं तदेयं सन्निधापनी ॥ २०

अन्तरङ्गुष्ठ मुष्टिभ्यां तथेयं तन्निरोधनी ।
तर्जनीभ्यां परिभ्राम्य सकलीकरणं भवेत् ॥

अञ्जलिं चार्घ्यवत्कृत्वा परमीकरणं भवेत् ।
परिवृत्य करौ मन्त्री तर्जन्यौ च कनिष्ठिके ॥

मध्यमानामिकायुग्मे स्थापयेत्तु परस्परम् ।
अमृतीकरणं नाम मुद्रेयं धेनुरूपिणी ॥

एतास्साधारणा मुद्रा दर्शयित्वा जपेत्प्रिये ।
गन्धपुष्पादिभिश्चैव सर्वकामार्थ सिद्धये ॥

अग्नीशासुर वायव्य मध्यदिक्ष्वङ्ग पूजनम् ।
बलाका विमला चैव कमला वनमालिका ॥ २५

विभीषिका मालिका च शाङ्करी वसुमालिका ।
पूर्वादि क्रमतो देवि प्रादक्षिण्येन पूजयेत् ॥

इन्द्राग्नि यमरक्षोराड्वरुणानिल संज्ञकान् ।
कुबेरेशान लोकेशा भूमिबिम्बे क्रमाद्यजेत् ॥

ब्रह्मा विष्णुश्च लोकेशा ऊर्ध्वादि क्रमतो यजेत् ।
अर्कलक्षं जपेन्मन्त्रं तद्दशांशेन साधकः ॥

तर्पयेत्पयसा सम्यक् कमलैराज्यलोलितैः ।
हुत्वा द्वादश साहस्रमाचार्य चरणद्वये ॥

पलमान सुवर्णेन रचितं कमलं शुभम्।
दत्वा सिद्धिमवाप्नोति लभते सर्वसम्पदः॥ ३०

चतुर्विंशति साहस्र मथवा साधकोत्तमः।
निराहारो जपेद्विद्वान् कार्तिकैकादशी दिने॥

त्रिसहस्रं हुनेदग्नौ पद्मैर्गव्याज्यतोलितैः।
पलमान सुवर्णं वा धेनुद्वादशकं तु वा॥

आचार्य चरणद्वंद्वे प्रदत्वा दक्षिणां शुभाम्।
लक्ष्मी विद्या महासिद्धिं प्राप्नोत्यत्र न संशयः॥

प्रतिमासं शुक्लपक्षे पञ्चम्यां नियतव्रतः।
जप्त्वा द्वादश साहस्रं जुहुयात्संस्कृतेऽनले॥

सुवासिनीस्समभ्यर्च्य पञ्च शैलसुते शिवे।
वत्सरान्महतीं लक्ष्मीं लभते धनसंकुलाम्॥ ३५

जप्त्वा द्वादश साहस्रं चतुर्मासं दिने दिने।
सहस्रपञ्चकं वापि सहस्रत्रितयं तु वा॥

अष्टोत्तरशतं हुत्वा गव्येनाज्येन साधकः।
अचलां महतीं लक्ष्मीं धनधान्यादि सङ्कुलाम्॥

प्राप्नोत्यत्र न सन्देहस्सत्यं सत्यं वदाम्यहम्।
एकाक्षरात्मिकां लक्ष्मीं जपन्नन्वहमादरात्॥

राज्यलक्ष्मी मवाप्नोति गुरुभक्तो यदि स्वयम् ।
लक्ष्मी विद्या विधानं ते किञ्चिदेतन्मयेरितम् ॥
महादारिद्र्यशमनं किं पुनः श्रोतुमिच्छसि ।

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
षोडशोऽध्यायः ॥

## अथ सप्तदशोऽध्यायः ॥

**ऋषय ऊचुः—**

ऋष्यशृङ्ग महाभाग दिव्यज्ञानवतां वर ।
प्रसन्न लक्ष्मी विद्यायाः पार्वत्यै परमेश्वरः ॥

यदाह तद्वयं भूयः श्रोतुमिच्छामहे प्रभो ।
यदाह भगवान् रुद्रो महालक्ष्मीमनोः शुभम् ॥
माहात्म्यं सर्वपापघ्नं तद्भूयः कथयस्व नः ।

**श्री ऋष्यशृङ्ग उवाच—**

लक्ष्मी विद्याविधिं श्रुत्वा गिरिजा तुष्टमानसा ।
दक्षिणामूर्तिमाहेदं वचनं लोकसम्मितम् ॥

**श्री देव्युवाच–**

देवदेव नमस्तेऽस्तु महेश करुणानिधे ।
माहात्म्यं ललिताम्बाया लक्ष्म्या अपि मया श्रुतम् ॥

महालक्ष्मी महाविद्या विधानं सर्वसिद्धिदम् । ५
सुगुप्तमपि मे ब्रूहि कृपया जगतां गुरो ॥

**श्रीदक्षिणामूर्तिरुवाच—**

सम्यक् पृष्टं महाभागे लोकानामुपकारकम् ।
प्रसन्न लक्ष्मीमाहात्म्यं सद्यः कल्मषनाशनम् ॥

पुरा नारायणेनोक्तं जनकाय महात्मने ।
ततो दाशरथिः प्राह वसिष्ठादिभ्य आदरात् ॥

अहमप्यत्र वक्ष्यामि तुभ्यं राजीवलोचने ।
गुह्याद्गुह्यतमं पुण्यं सारात्सारतरं परम् ॥

प्रसन्नलक्ष्मी माहात्म्य मधुना कथयामि ते ।
त्रयीबीजं श्रिया रुद्धां भुवनेशीमतःपरम् ॥

स्पर्शाद्यं ब्रह्मपूर्वं च महीं रुद्र समन्विताम् ।
स्मरं जठरवर्णं च मुखवृत्तं युतां भुवम् ॥ १०

बलानुजं ततो वायुं रुद्रस्वर समन्वितम् ।
प्रसीदयुगलं भूयः श्रीरुद्धां भुवनेश्वरीम् ॥

लक्ष्मीपदं पश्चाच्चतुर्थी हृदयान्वितम् ।
सप्तविंशाक्षरी विद्या महालक्ष्म्या इतीरिता ॥

दक्षसिह्मासनेशानी विष्णुना पूजिता पुरा ।
गजाश्व मुक्तारत्नौघ वर्षिणी जगदीश्वरी ॥

अयोध्यापुर वैकुण्ठ सर्वसाम्राज्य नायिका ।
महालक्ष्मीरिति ख्याता वेदवेदान्त संस्तुता ॥

प्रसन्नश्रीरिति ख्याता वेदवेदान्दवेदिभिः ।
भक्तानां शंख पद्मादि निधिसंपत्करी शुभा ॥ १५

उपासकानां विप्राणां माहेन्द्र श्रीफलप्रदा ।
अलकापुर साम्राज्य दायिनी धनवर्षिणी ॥

वेदवेदाङ्ग वेदान्त पूर्ववाक् सिद्धिकारिणी ।
सर्वक्षेत्रमयी सर्वयोगशास्त्र स्वरूपिणी ॥

सर्वतीर्थमयी सर्वपातकौघ विघातिनी ।
अनुग्रहाद्भगवतो ब्रह्माद्या देवतागणाः ॥

योगिनः सनकाद्याश्च वसिष्ठाद्या महर्षयः ।
पुरन्दरादयस्सर्व दिक्पाला अमृताशनाः ॥

वसवोऽष्टौ महाभागा रुद्रा एकादशापि च ।
द्वादशापि तथाऽऽदित्या महालक्ष्मीं हरिप्रियाम् ॥ २०

आराध्याष्टगुणैश्वर्य मवाप्याद्यापि पार्वति ।
जपन्ति नियता नित्यं समस्तफल सिद्धिदाम् ॥

अलकापुर साम्राज्यं महेन्द्रपुर सम्पदम् ।
अणिमादि गुणैश्वर्यं मथ ब्रह्मपदं तु वा ॥

इच्छते यं महालक्ष्मीर्जप्तव्या नियतात्मना ।
न वेदैर्नागमैः शास्त्रै र्नपुराणैस्सुविस्तरैः ॥

ज्ञातुं शक्या महालक्ष्मी राचार्यानुग्रहं विना ।
प्रसन्नलक्ष्मी विद्यां यो दृष्ट्वा पुस्तक संस्थिताम् ॥

जपेत्स योगिनीवृन्दै र्भक्ष्यते मासषट्कतः ।
आचार्यानुग्रहान्नित्यं महालक्ष्मीमिमां जपन् ॥ २५

सम्प्राप्य दिव्यभोगांश्च पुत्रपौत्रवतीमपि ।
समृद्धिं महतीं लब्ध्वा वैकुण्ठे वसतिं लभेत् ॥

नाल्पं श्रीकामिभिर्जप्या प्रसन्नश्रीरियं शिवे ।
साम्राज्य लक्ष्मीकामेन भोगमोक्षार्थिना सदा ॥

महालक्ष्मीरियं जप्या महासंपत्समृद्धिदा ।
अचलं महदैश्वर्यं महासिद्धिमचञ्चलाम् ॥

इच्छता सततं जप्या प्रसन्नश्रीरियं शिवे ।
देवाधिपत्यमिन्द्रेण नियन्तृत्वं यमेन च ॥

वरुणेन जलैश्वर्यं वायव्यं वायुना पदम् ।
तेजस्वित्वं सविता च सुधांशुत्वमथेन्दुना ॥ ३०

कोशैश्वर्यं कुबेरेण गुरुणा शक्रगौरवम् ।
अग्निना तापशक्तित्वमोषधीशत्वमिन्दुना ॥

पातालराज्यं नागेन शक्राद्यैर्दिगीश्वरैः ।
लोकैश्वर्यं च संप्राप्तमचलं भयवर्जितम् ॥

देवसेना नियन्तृत्वं प्राप्तमीश्वर सूनुना ।
गणैश्वर्यं गणेशेन नन्दिना शिवतुल्यता ॥

महालक्ष्मी प्रभावेण नान्यथा वीरवन्दिते ।
यत्र यत्र महद्भाग्यं प्राप्तं देवर्षिभिः पुराः ॥

अनुग्रहात्प्रसन्नायाः श्रिय एव न संशयः ।
प्रसन्नलक्ष्मो माहात्म्यं ब्रह्मापि जगतां पतिः ॥ ३५

अहं नारायणोवाऽपि न शक्ता वक्तुमीदृशी ।
यदा दुर्वाससश्शापाच्छक्रोप्यमरनायकः ॥

नष्ट श्रीकोऽभवत्पश्चात्सम्प्राथ्र्याङ्गिरसं गुरुम् ।
तदनुग्रहतः प्राप्य महालक्ष्मीमिमां शिवे ॥

समुद्रमथनोद्भूतां दृष्ट्वा साक्षाच्छ्रियं पराम् ।
अनुत्तमं महद्भाग्यं प्राप्तवानमराधिपः ॥

अचल श्रीयुतोभूत्वा तदाऽऽरभ्य शचीपतिः ।
त्रयाणामपि लोकाना माधिपत्यमवाप्तवान् ॥

त्रैलोक्यजयिनं लेभे मत्तमैरावतं गजम् ।
हयरत्नं मनोवेग मुच्चैःश्रवसमाप्तवान् ॥ ४०

राजा वैश्रवणः पूर्वं तपस्तप्त्वा सुदुश्चरम् ।
यक्ष राक्षस राजत्वं प्राप्यालकापुरीं शुभाम् ॥

धिक्कृतो रावणेनाथ पुलस्त्यानुग्रहात्पुनः ।
प्रसन्न श्रीमहाविद्यां जप्तवा हुत्वा ततः परम् ॥

मत्सखित्वमनुप्राप्य धनेशत्व मनुत्तमम् ।
अलकापर साम्राज्यं प्राप्तवान् गिरिकन्यके ॥

राज्यलक्ष्मीरियं विद्या महालक्ष्मीरिति स्मृता ।
प्रसन्न लक्ष्मीर्विख्याता समस्ताभीष्ट सिद्धिदा ॥

न वक्तव्या दुराचार रताय पिशुनाय वा ।
क्रोधिने चातिमूर्खाय लुब्धायानृतवादिने ॥ ४५

निन्दाकर्त्रे पितुर्मातुराचार्ये द्वेषकारिणे ।
वेदनिन्दापरायाऽपि परनिन्दापराय च ॥

पराङ्गना सङ्गरतं परद्रव्येषु लोलुपम् ।
मन्दबुद्धिं जडं मूर्खं दुराचाररतं तथा ॥

वेदबाह्यं दुरात्मानं वेदनिन्दापरायणम् ।
श्रुत्युक्ताचाररहितं शिष्यत्वे परिवर्जयेत् ॥

आचार्य चरणद्वंद्वे दृढभक्तं जितेन्द्रियम् ।
परद्रव्य परस्त्रीषु पराङ्मुख मतन्द्रितम् ॥

वैदिकाचार निरतं सततं सत्यवादिनम् ।
शान्तं निष्कल्मषं शुद्धं हरिपूजा परायणम् ॥ ५०

संवत्सरत्रयं शिष्यं परीक्ष्य परमेश्वरि ।
दद्यामिमां महालक्ष्मी विद्यां सकल सिद्धिदाम् ॥

पुरा सरस्वती मूर्तिधारिणी वेदमातृका ।
अगस्त्य ब्राह्मणं प्राह प्रसन्नश्रियमिष्टदाम् ॥

तुभ्यं दास्याम्यहं गुप्तां कुरुष्व सततं द्विज ।
असूयकायानृजवे जडायानृतवादिने ॥

न प्रयच्छसि चेत्तुभ्यमस्मि वीर्यवती सदा ।
रक्षणीया त्वया नित्य मदत्वा पापकारिणे ॥

यदिगुप्ता त्वया विद्या महालक्ष्मीरियं द्विज ।
तदा महेन्द्रसदृशं पदं दास्यामि ते द्विज ॥ ५५

सरस्वत्येति गदितं पुरा विप्रोत्तमं प्रति ।
तस्मादेषा महालक्ष्मी नंप्रकाश्यापि कुत्रचित् ॥

महेन्द्र सदृशीं लक्ष्मीमिच्छन् विप्रोऽपि भूतले ।
जपेदिमां महालक्ष्मी माचार्यानुग्रहाच्छिवे ॥

आचार्य चरणद्वंद्व शुश्रूषा नित्यमादरात् ।
सर्वस्वेनापि कर्तव्या भोगमोक्ष फलाप्तये ॥

आचार्य सन्निधावेव स्थातव्यं नियतात्मभिः ।
पूज्यमाचार्य पादाब्ज द्वयमेव दिने दिने ॥

आचार्य एव स्तोतव्यो राजविद्वत्सभासु च ।
त्यजेत्स्वपितरं पत्नीं मातरं च सुतामपि ॥ ६०

महालक्ष्मी प्रदाचार्यं देहान्तेऽपि न संत्यजेत् ।
सेव्यमाचार्य पादाब्ज द्वयमेव दिने दिने ॥

जप्या प्रसन्न श्रीरेव भोग स्वर्गापवर्गदा ।
ब्रह्मानन्द रसावाप्ति मणिमादिगुणं श्रियम् ॥

अवश्य मिच्छता राज्यलक्ष्मो जप्या दिने दिने ।
एतदेव परं श्रेय एतदेव परं तपः ॥

एतदेव परं तीर्थं एतदेव परं फलम् ।
अयमेव महायाग इयमेव गतिः परा ॥

इति मत्वाऽन्वहं राज्यलक्ष्मी विद्यां जपेच्छुचिः ।
योजनानां सहस्रं वा गत्वाचार्यं द्विजोत्तमम् ॥ ६५

संसेव्य शतवर्षं वा प्राणैरर्थैश्च सुव्रते ।
प्रसन्न कमला विद्यां तदनुग्रहतो जपेत् ॥

कार्तवीर्यश्च सगरो मान्धाता च पुरूरवाः ।
रघुर्दशरथो राजा दुष्यन्तो भरतोऽपि च ॥

स्वायंभुवाद्या मनवस्सार्वभौमा नृपा अपि ।
राज्यलक्ष्मीमिमां जप्त्वा संसेव्याचार्यमादरात् ॥

दुर्लभं देवसंघैश्च संप्राप्ता श्रेय उत्तमम् ।
श्वेत द्वीपाधिपत्वं वा सुवर्णगिरि सम्पदम् ॥

य इच्छेत्तेन राज्यश्रीरेव जप्या दिने दिने ।
ब्रह्मा विष्णु महेशाद्या अपि त्रैलोक्य नायकाः ॥ ७०

प्रसन्न लक्ष्मी माहात्म्यं न हि वर्णयितुं क्षमाः ।
नास्ति शक्तिर्महर्षीणा मस्या माहात्म्यवर्णने ॥

मन्द प्रज्ञावतां भूमौ मनुजानां तु का कथा ।
प्रसन्न लक्ष्मी विद्येयं निमिवंश समुद्भवैः ॥

गौतमानुग्रहाज्जप्ता सर्वे मुक्तास्ततोऽभवन् ।
प्रसन्न लक्ष्मी स्तद्वंशे जनकस्याभवत्सुता ॥

तदाप्रभृति सर्वे ते भूपा वंशसमुद्भवाः ।
जनका इति विख्याता मुक्ता जीवन्त एव ते ॥

इयमेव परागौरी हिमवतस्सुता शिवा ।
इयमेव महावाणी सावित्री च सरस्वती ॥ ७५

वेदा अपि च वेदान्ता मम वक्त्र समुद्भवाः ।
अतः परं समुद्भूतं पुराणं च महत्तरम् ॥

धर्मशास्त्राणि सर्वाणि मुनिभिः कीर्तितान्यपि ।
एतत्समाऽधिका विद्या न दृष्टा कुत्रचित् श्रुता ॥

भ्रमन्ति मुनयोऽपीह महादारिद्रय दुखिताः ।
राज्यलक्ष्मीं न लब्धास्ते भोगस्वर्गापवर्गदाम् ॥

इयं कामदुधा नृणां सर्वकामफलप्रदा ।
इयं कल्पलता साक्षान्मनः संकल्प सिद्धिदा ॥

चिन्तारत्नमियं साक्षाच्चिन्तितार्थ फलप्रदा ।
ये सिद्धा मुनयोऽपीह दिव्यभोग समन्विताः ॥ ८०

जानीहि तान्महालक्ष्मी विद्यासक्तान् दिने दिने ।
वाचः पदानि चत्वारि पराख्यं प्रथमं पदम् ॥

पश्यन्त्याख्यं द्वितीयं स्यात्तृतीयं मध्यमाभिधम् ।
जानातीश्वर एवैतत्सरस्वत्याः पदत्रयम् ॥

महर्षयोऽपि जानन्ति भगवत्कृपयाऽन्विताः ।
वैखरी नामकं पश्चाच्चतुर्थं वाक्पदं विदुः ॥

वाचः पदानि चत्वारि ब्रह्मविष्णुमहेश्वराः ।
महर्षयोऽपि जानन्ति तपसा दग्ध किल्बिषाः ॥ ८५

चतुर्थं वैखरीरूपं मया यत्पदमीरितम् ।
प्रसिद्ध मेतदेवात्र भूतले गिरिकन्यके ॥

मानुषेषु प्रसिद्धं च पक्षिष्वपि पशुष्वपि ।
पिपीलिकासु नागेषु सर्वेषु च मृगेषु च ॥

आचार्यानुग्रहाद्राज्यलक्ष्मी विद्याजपात्सदा ।
विद्याजालमिदं सर्वं निर्गच्छत्यस्यवक्त्रतः ॥

किमत्र बहुनोक्तेन राज्यलक्ष्मी महामनोः
अधिकं सदृशंवाऽपि वस्तु विद्यात्मकं न हि ॥

महानुभावा मुनयः पुरातनाः
प्रसन्नलक्ष्मीं सकलार्थदात्रीम् ।
उपास्य धर्मं धनभोग मोक्षा-
नवापु रुत्कृष्ट पदं च देवि ॥ ९०

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
सप्तदशोऽध्यायः ॥

# अथ अष्टादशोऽध्यायः ॥

**श्रीदक्षिणामूर्तिरुवाच –**

शृणु देवि प्रवक्ष्यामि राज्यलक्ष्मी महामनोः ।
अनुष्ठानविधिं सम्यग्यत्कृत्वा सिद्धिमाप्नुयात् ॥

ऋषिर्ब्रह्मा समुद्दिष्टो दक्षो वाऽथ प्रजापतिः ।
गायत्रं छन्द इत्युक्तं समस्तजगदम्बिका ॥

जगत्त्रितय साम्राज्य महासिंह्यासनेश्वरी ।
महालक्ष्मीर्जगन्माला देवता कथिता शिवे ॥

श्रीरुद्धा भुवनेशानी बीजमन्त्र समीरितम् ।
हृदेव शक्तिरुद्दिष्टा विनियोगस्त्वभीष्टदः ॥

कमले हृदयं प्रोक्तं शिरः स्यात्कमलालये ।
शिखा प्रसोदते नैव कवचं त्रिभिरक्षरैः ॥ ५

नेत्रमस्त्रं च शेषेण श्रीबीजपुटितं पृथक् ।
माणिक्यप्रतिमप्रभां हिमनिभैस्तुङ्गैश्चतुर्भिर्गजै ॥

हस्तग्राहित रत्नकुम्भसलिलै रासिच्यमानां सदा ।
हस्ताब्जैर्वरदानमंबुजयुगाभीतिं दधानां हरेः ॥

कान्ती कांक्षित पारिजातलतिकां वन्दे सरोजाननाम् ।
सुधाम्भोनिधिमध्यस्थ मुद्यानवन मद्भुतम् ॥

पुन्नागपाटलाशोक चम्पकैरुपशोभितम् ।
मन्दवायु समुद्भूत पुष्पपंक्ति विराजितम् ॥

समेरुमाधवी बिल्व देवदारु लवङ्गकैः ।
सन्तानपारिजाताद्यैः पुष्पितैः कल्पभूषणैः ॥ १०

मातुलिङ्गैः कर्णिकारैश्चन्दनैर्वञ्जुलैरपि ।
अङ्कोल दाडिमी पूगैर्द्रुमैः कुरवकैरपि ॥

सर्वर्तुपुष्पसहितैर्नमद्भिः सुविराजितम् ।
तन्मध्ये पङ्कजैरम्यैः कुमुदोत्पलराशिभिः ॥

सुगन्धिभिश्च कल्हारैः फुल्लैः कुवलयैरपि ।
भ्रमरैर्हंस कारण्ड चक्रवाकादिभिर्वृते ॥

तन्मध्ये पुलिने रम्ये महासरसि शोभिते ।
सर्वतः पारिजाताद्यैश्शोभितं रत्नमण्डपम् ॥

चतुर्द्वारयुतं दिव्यहेमप्राकार शोभितम् ।
उद्यदर्कसहस्राभं भास्वरं चन्द्रशीतलम् ॥ १५

दिव्यरत्न समायुक्त कवाटाष्टकशोभितम् ।
दिव्यमाणिक्य सहित तुङ्गगोपुर संवृतम् ॥

हेमदण्ड शिलालम्बि द्विजपंक्ति परिष्कृतम् ।
नवरत्न समायुक्त स्तम्भपंक्ति विचित्रितम् ॥

दिव्यसाहस्र संशोभि दीपस्तंभ विराजितम् ।
तप्तहाटक संशोभि वातायन समन्वितम् ।

विचित्रांशुक सम्बद्धं काञ्चनैरपि कोटिशः ।
सुवर्ण किङ्किणी युक्तं रत्नमण्डप मुज्ज्वलम् ॥

मालती केतकी जाती चम्पकोत्पलकेसरैः ।
तुलसी मल्लिकावासी नन्द्यावर्त कदम्बकैः ॥ २०

दिव्यै रत्नैः पुष्पगणै रलङ्कृत महीतलम् ।
काश्मीरमृगनाभिभ्यां कस्तूर्या च तमालकैः ॥

चन्दनागरुकर्पूरै रामोदित दिगन्तरम् ।
इत्थं संचिन्त्य मनसा रत्नमण्डप मुज्ज्वलम् ॥

तन्मण्डपस्य मध्यस्थं पारिजातं सुरद्रुमम् ।
तदधो नवमाणिक्य सिंह्मासन मनुत्तमम् ॥

तत्रासीनं जगन्नाथं कालनीलाम्बुद प्रभम् ।
कामकोटि प्रतीकाशं पीताम्बर युगावृतम् ॥

पद्मराग महारत्न वज्रमाणिक्य बिन्दुभिः ।
खचितं तप्तसौवर्णं बिभ्राणं कुण्डलद्वयम् ॥ २५

किरीट हारकेयूर कटकादि विभूषितम् ।
कौस्तुभोद्भासितोरस्कं तुलसीवनमालया ॥

शोभितं पारिजातादि पुष्पमाल्य विराजितम् ।
प्रसन्नवदनं शान्तं राजीवायत लोचनम् ॥

शङ्खचक्राभयवरधरं योगि निषेवितम् ।
दिव्यमाणिक्य संबद्ध हेमकाञ्ची विराजितम् ॥

प्राचीनानामपि गिरामगोचर मनूपमम् ।
वन्दितं देवता वृन्दैस्संतुतं परमर्षिभिः ॥

नारायणं परानन्द सत्यचिद्घनमच्युतम् ।
तद्वामाङ्के महालक्ष्मीं बालार्क शतसन्निभाम् ॥ ३०

दाठिमी कुसुम प्रख्यां जपापुष्प समप्रभाम् ।
तप्त जाम्बूनद निभां विद्युत्साहस्र सन्निभाम् ॥

शिञ्जन्नूपुर संशोभि पादकम्पन मण्डिताम् ।
लाक्तालक पदाम्भोजाङ्गुलीयक विराजिताम् ॥

स्थलारविन्दप्रतिम पदाब्जयुगशोभिताम् ।
ब्रह्मरुद्रमहेन्द्रादि मौलिमाणिक्य कान्तिभिः ॥

विराजित पदाम्भोजां भक्तार्तिहरणोद्यताम् ।
कदलो ललितस्तम्भ सदृशोरु द्वयान्विताम् ॥

सुवर्ण बिन्दुसहित तप्तकार्तस्वरप्रभाम् ।
दधानामम्बरं पीतं मुक्तारत्न विराजितम् ॥ ३५

विश्वहार्यं सुमृदु जपाकुसुम सन्निभम् ।
रत्नकाञ्चन संबद्ध काञ्चीदाम विराजिताम् ॥

तनुमध्यां पृथुश्रोणीं निम्ननाभि समन्विताम् ।
स्वर्णकुम्भोपमप्रख्य पीनोत्तुङ्ग समन्विताम् ॥

विशालोरस्स्थलां राजत्कौस्तुभेन विराजिताम् ।
कस्तूरी कुङ्कुमयुत दिव्यचन्दन चर्चिताम् ॥

रत्नमुक्ताफलोपेत स्वर्णचिन्ताक शोभिताम् ।
महापदकसम्युक्तां पदकेन विभूषिताम् ॥

मुक्तावलीसमायुक्तामेकावली विराजिताम् ।
दिव्यरत्नसमायुक्त काञ्चनाङ्गुलि मुद्रिकाम् ॥ ४०

स्वर्णकेयूर सहितां वलयावलिशोभिताम् ।
सौवर्णकङ्कणलसत्कराम्बुज विराजिताम् ॥

प्रथमाभरणोपेत कम्बुग्रीव विराजिताम् ।
मुक्ताकाञ्चनसंन्नद्ध कञ्चुकेन विभूषिताम् ॥

स्मितवक्त्रां विशालाक्षीं पक्वबिम्बफलाधराम् ।
वज्रबिन्दुसमप्रख्य दन्तपङ्क्ति विभूषिताम् ॥

वाणीविलासनिलय रक्तजिह्वाग्रशोभिताम् ।
मुक्तारत्नसमाबद्ध नासिकाभरणान्विताम् ॥

तप्तसौवर्णताटङ्कवालीयुगल शोभिताम् ।
राजत्सौवर्णकुसुमकर्णां पङ्कजलोचनाम् ॥ ४५

कामकोदण्डसौन्दर्य निर्जितभ्रूलतायुताम् ।
ललाटपट्ट संराजत्संलग्न तिलकाङ्किताम् ॥

जातीचम्पक पुन्नाग पुष्पमाल्य विभूषिताम् ।
नीलभ्रमर सङ्काश केशपाश विभूषिताम् ॥

नवमाणिक्य संबन्द किरीटावृत मस्तकाम् ।
पद्मगर्भप्रभां पद्मं स्वर्णरत्न प्रपूरितम् ॥

बिभ्रतीं वसुपात्रं च मुक्तारत्नमयीं स्रजम् ।
जगत्सम्मोहनकरीं जगत्त्रय वशङ्करीम् ॥

अकलङ्कशरत्पूर्णचन्द्र बिम्ब समाननाम् ।
सर्वविद्यामयीं सर्वमहर्षिगणवन्दिताम् ॥ ५०

वाणी गौरीन्द्र पत्न्यादि सेवितां पार्श्वयोर्द्वयोः ।
अरुन्धत्यनसूयादि सतीभिः परिवेष्टिताम् ॥

सुवर्ण स्राविणा मूर्ध्नि श्वेतच्छत्रेण शोभिताम् ।
अथ चामरहस्ताभ्यां सखीभ्यां परिवेष्टिताम् ॥

शक्रादिमौलि माणिक्य विराजित पदाम्बुजाम् ।
सर्वयोगिजनस्तुत्यां ब्रह्मर्षिगण सेविताम् ॥

देवतावृन्द संसेव्यां महासिद्धौघ वन्दिताम् ।
जगत्त्रितय संपत्ति हेतुभूतां सनातनीम् ।

त्रैलोक्याकर्षणकरीं त्रैलोक्यह्लाद कारिणीम् ।
त्रैलोक्य रञ्जनकरीं जगन्मोहन विग्रहाम् ॥ ५५

अणिमादि गुणाधारां सर्वसाम्राज्य सिद्धिदाम् ।
दिव्यालङ्कार सुभगां दिव्यस्रग्वस्त्रशोभिताम् ॥

दिव्यचन्दनलिप्ताङ्गीं दिव्यकन्या परिष्टुताम् ।
नारायणाङ्कनिलयां नारायण मनोहराम् ॥

त्रिलोचनां चतुर्हस्तां सुप्रसन्नाननाम्बुजाम् ।
जगत्त्रितय साम्राज्य महासिंहासनेश्वरीम् ॥

महालक्ष्मीमहं नित्यं भजाम्यखिल सिद्धिदाम् ।
इत्थं ध्यायेन्महालक्ष्मीं त्रयीरूपां हरिप्रियाम् ॥

यद्वा मूलादिरन्ध्रान्तं बालार्कायुत सन्निभाम् ।
ज्वलन्तीं संविदं ध्यायेत्तेजोरूपां सनातनीम् ॥ ६०

निर्गुणां सगुणां वापि महालक्ष्मीं हरिप्रियाम् ।
ध्यात्वा हृत्पद्मनिलयां विद्यां श्रीहृदयाभिधाम् ॥

जप्त्वा नित्यं विशुद्धात्मा संपदामाश्रयो भवेत् ।
आचार्य पत्नीमथवा यदि शिष्यो जितेन्द्रियः ॥

महालक्ष्मीं त्रयीरूपां दिव्यालङ्कार शोभिताम् ।
दिव्य चन्दनलिप्ताङ्गीं दिव्यस्रग्वस्त्रशोभिताम् ॥

ध्यात्वा नारायणधिया ध्यायेदाचार्यमच्युतम् ।
आचार्यपत्नी ध्यानेन महालक्ष्मीधियाऽन्वहम् ॥

समस्ताभीष्ट फलदा भवत्यस्य हरिप्रिया ।
अनेनैव प्रमाणेन गुरुपत्नीं त्रयीमयीम् ॥ ६५

महालक्ष्मीं विजानीहि मा कुरुष्वाऽत्र संशयम् ।
तस्मादवश्यमाचार्यपत्नी सन्ततमादरात् ॥

महालक्ष्मी धियाऽभ्यर्च्या भूषणाच्छादनाशनैः ।
शुभव्रतेषु सर्वेषु पुण्यपर्वसु साधकैः ॥

आचार्यपत्नीमभ्यर्च्य भूषणाच्छादनाशनैः ।
पश्यत्येव श्रियं साक्षाच्चतुर्भ्यामेव साधकः ॥

ताटङ्काभरणद्वन्द्वं वालीयुगलमुत्तमम् ।
अथ सौवर्णचिन्ताकं नासिकाभरणं शुभम् ॥

अङ्गुलीयक मुख्यानि दिव्यान्यान्याभरणानि च ।
मृदुवस्त्रयुगं श्लक्ष्णं प्रतिमासं हिमाद्रिजे ॥ ७०

दत्वा प्राप्नोति महतीं सिद्धिं चामरदुर्लभाम् ।
यत्र कुत्रापि सम्पाद्य वत्सरे वत्सरेऽपि वा ॥

आचार्यपत्न्यै श्रीबुद्ध्या प्रदत्वाऽऽकल्पसंचयम् ।
पश्यत्येव स्वचक्षुर्भ्यां महालक्ष्मीं हरिप्रियाम् ॥

आचार्यपत्न्यो बह्व्यश्चेत्पुत्रिणी तत्र या भवेत् ।
सैव साक्षान्महालक्ष्मीर्मा कुरुष्वात्र संशयम् ॥

अन्या आचार्यपत्न्यश्च विज्ञेया मातृसन्निभाः ।
यदि भर्त्रा विरहिता गुरुपत्नी हिमाद्रिजे ।

बहुदूरस्थितावापि मायायास्सन्निधौ शिवे ।
समर्प्याभरणादीनि तदात्मजकरेऽर्पयेत् ॥ ७५

आचार्यपुत्र पत्न्यै वा प्रदद्यात्साधकोत्तमः ।
अकलङ्केन मनसा विवाहाद्युत्सवेष्वपि ॥

आचार्यपत्नीमभ्यर्च्य पुरतो भूषणादिभिः ।
आचार्यमपि सम्पूज्य ततः कुर्यान्महोत्सवम् ॥

इत्थं ध्यात्वा महालक्ष्मीं विद्यां श्रीहृदयाभिधाम् ।
जप्त्वा पञ्चशतं नित्यं चतुश्शतमथापि वा ॥

त्रिशतं वा जपं कृत्वा घृतं हुत्वा दिने दिने ।
शुभान्येव लभेन्नित्यं सर्वापद्भ्यो विमुच्यते ॥

समस्तदुरितौघास्तं न स्पृशन्ति कदाचन ।
अलक्ष्मीः कलहाधारा तद्गेहे न वसेत्क्वचित् ॥ ८०

तद्गृहे पशुवृद्धिः स्याद्धनवृद्धिर्दिने दिने ।
प्रत्यहंधान्यवृद्धिः स्याच्छ्रेयोवृद्धिश्च सन्ततम् ॥

मुक्तारत्नौघ संकीर्णा धनधान्य समाकुला ।
गजाश्व संकुला दासीदाससंघ समाकुला ॥

अचलातद्गृहे लक्ष्मीरितिष्ठत्याचन्द्रतारकम् ।
तदन्वय समुद्भूता अपि लक्ष्मी समन्विताः ॥

श्रेयोराशि समाकीर्णा आयुरारोग्य संयुताः ।
सम्पदामाश्रया देवि भवन्त्याचन्द्रतारकम् ॥

स यत्र वर्तते देवि क्षेत्रे वालयेऽपि वा ।
तत्कोल्लापुरमेवोक्तं लक्ष्मीक्षेत्रमभीष्टदम् ॥ ८५

इहा मुत्राऽपि लक्ष्मीवान्निर्गुणोऽपि गुणान्वितः ।
अवाप्नोत्यक्षयान्भोगान्दिव्यानपि मानुषान् ॥

तद्वंश्यानामपि शिवे भवेन्मुक्तिस्सनातनी ।
ध्यानसूक्तमिदं लक्ष्म्या उक्तं सकलसिद्धिदम् ॥
सर्वदुःखहरं धन्यं पूजनं चाऽथ वक्ष्यते ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
अष्टादशोऽध्यायः ॥

# अथैकोनविंशोऽध्यायः ॥



**श्रीदक्षिणामूर्तिरुवाच –**

शृणु देवि प्रवक्ष्यामि श्रियोऽर्चनविधिं परम् ।
यत्कृत्वा मन्दभाग्योऽपि भाग्यवानिह जायते ॥

ब्राह्मे मुहूर्ते उत्थाय साधकः शयने स्थितः ।
आचार्यचरणांभोज द्वितयं सर्वसिद्धिदम् ॥

कृताञ्जलिपुटो ब्रह्मरंध्रे द्वादशधा नमेत् ।
आचार्य पादुका विद्यां दश द्वादशधाऽपि वा ॥

स्मृत्वा स्वगुरु पादाब्जद्वितयं स्वर्णनिर्मितम् ।
राजतं वा स्वचक्षुभ्यां दृष्ट्वा नत्वा च सादरम् ॥

तुलसीं वा नदीं वाऽपि पश्यन्विष्णुपरायणः ।
आचार्यवदनं दृष्ट्वा पूर्वमाचार्य पादयोः ॥ ५

नमेदाचार्य सान्निध्ये शौचं कुर्याच्च तत्परम् ।
स्नात्वा सन्ध्यामुपास्याऽथ प्रजप्त्वा वेदमातरम् ॥

सवितारमुपस्थाय श्रीमदष्टार्णमादरात् ।
यथा शक्त्या प्रजप्त्वाऽथ विद्यां श्रीहृदयाभिधाम् ॥

जप्त्वा पञ्चशतं नित्यं चतुःशतमथापि वा ।
प्रसन्नलक्ष्मीस्तोत्रेण स्तुत्वा श्रीहृदयेन वा ॥

प्रसन्नलक्ष्मीहृदयं कोल्लाष्टकमुदीरितम् ।
अगस्त्येन पुरा गौरि रम्ये कोल्लापुरे शुभे ॥

आथर्वणं महद्गुह्यं लक्ष्मीहृदयमिष्टदम् ।
भार्गवेण पुरा दृष्टं मन्त्ररूपं वरानने ॥ १०

नित्यहोमं समाप्याऽथ ज्वलिते जातवेदसि ।
अष्टाविंशतिधा हुत्वा लक्ष्मीहृदय विद्यया ॥

यागागारं प्रविश्याऽथ स्मृत्वाऽऽचार्यपदद्वयम् ।
आचार्यपादुकापूजां कृत्वा सर्वोपचारकैः ॥

क्षीरं वा शर्करामाज्यं दत्त्वा नैवेद्यमादरात् ।
यथाशक्ति धनं नित्यं निष्कं निष्कार्धमेव वा ॥

तदर्धं वा तदर्धं वा चिह्नकं वा तदर्धकम् ।
तदर्धं वार्पयेद्धीमा नाचार्य चरणद्वये ॥

राजतं वा यथाशक्त्या ताम्रं ताम्बूलमेव वा ।
आचार्य चरणद्वंद्व सन्निधौ प्रसमर्प्य च ॥ १५

उद्वास्याथ महालक्ष्मीं चक्रे संपूजयेत्सुधीः ।
या पूर्वमुक्ता साम्राज्ञी श्रीविद्या लोकनायिका ॥

यदुक्तं तन्महच्चक्रमयोध्या नगराभिधम् ।
ब्रह्मानन्द सुखावाप्तिकरं सकलसिद्धिदम् ॥

समतस्तदुरित ध्वंसि सर्वपुण्यफलप्रदम् ।
जगदाकर्षणकरं जगत्त्रयवशङ्करम् ॥

अणिमादि गुणावाप्तिकरं त्रैलोक्यमोहनम् ।
सर्वसम्पदधिष्ठानं सर्वविद्यावशङ्करम् ॥

पुत्रप्रपौत्र तत्पौत्राद्यभिवृद्धिकरं सदा ।
पादुकाञ्जन खड्गादि सिद्धिकरं परम् ॥ २०

समस्तोपद्रवहरं समस्तभय नाशनम् ।
समस्तविघ्न शमनं सर्वकल्याण सिद्धिदम् ॥

सर्वाशुभहरं पुंसां समस्ताघ विभेदनम् ।
सर्वसौभाग्य जयदं सर्वशत्रु विमर्दनम् ॥

अपमृत्यु प्रशमनं कान्तिमेधाभिवर्द्धनन् ।
महारहस्यं लोकेषु दीर्घायुष्य फलप्रदम् ॥

आरोग्यजननं पुंसां रोगशोकनिवारणम् ।
समस्तैश्वर्य फलदं सर्वकामफलप्रदम् ॥

श्रीचक्रं तन्महत्समर्चयित्वा दिने दिने ।
समस्तदेवताचार्यास्साङ्गं फलमवाप्नुयात् ॥ २५

सर्वविद्यामयं यस्माच्छ्रीचक्रं सर्वसिद्धिदम् ।
श्रीचक्रसन्निधौ सर्वविद्या सिद्धिः प्रजायते ॥

मध्यप्रपूजनं वाऽपि कृत्वा सन्ततमादरात् ।
त्रिशतं ललितां जप्त्वा श्रीदेवीं सर्वसिद्धिदाम् ॥

लक्ष्मीहृदयविद्यां च जप्त्वा पञ्चशतं शुचिः ।
जरामरण निर्मुक्तो दीर्घमायुष्यमुत्तमम् ॥

अणिमादि गुणैश्वर्यं धनसंपत्तिमक्षयाम् ।
सौभाग्यं कामसदृशं पुत्रपौत्रादिसम्पदम् ॥

दिव्यानपि महाभोगा निहाप्यासाद्य साधकः ।
लक्ष्मीपतिप्रसादेन कुलसाहस्र संयुतः ॥ ३०

अयोध्यानगरे तिष्ठत्यन्ते नात्र विचारणा ।
श्रीपीठ पूजया ब्रह्म नारायण महेश्वराः ॥

शक्राद्या अष्ट दिक्पालास्तं च लक्ष्मीः सरस्वती ।
मातरं चण्डिकाद्याश्च भास्कराद्या नवग्रहाः ॥

पूजिता अपि सन्तुष्टा भवन्त्यस्य फलप्रदाः ।
अयोध्यापुरनामेदं श्रीदेवीचक्रमुत्तमम् ॥

येन सम्पूज्यते नित्यं त्रैलोक्यं येन पूजितम् ।
श्रीदेवी जगतां धात्री त्रयीरूपाऽत्र सुन्दरी ॥

पूज्यते सततं येन स सर्वज्ञो जगत्पतिः ।
लक्ष्मीं प्रसन्न लक्ष्मीं वा त्रिशक्त्याख्यामथेन्दिराम् ॥ ३५

साम्राज्यलक्ष्मीमथवा पूजयित्वा दिने दिने ।
सिद्धिं प्राप्नोति महतीं योगिनामपि दुर्लभाम् ॥

लक्ष्मीनारायणावत्र साङ्गावरण संयुतौ ।
पूजनीयौ विशेषेण कल्याणार्थिभिरादरात् ॥

भवानी शङ्करौ यद्वा साङ्गावरणसंयुतौ ।
पूजितौ सर्वफलदौ भवेतां नाऽत्र संशयः ॥

महालक्ष्मीं समभ्यर्च्य प्रत्येकमथवा शिवे ।
श्रीपीठेऽत्र महद्भाग्यं प्राप्नोत्यमरदुर्लभम् ॥

अथाशक्तो महालक्ष्मीं पीठेऽन्यत्राथवार्चयेत् ।
तत्पीठमपि वक्ष्यामि शृणुष्वैकाग्रमानसा ॥

त्रिकोणमथ षट्कोणं द्वादशारमतः परम् ।
वृत्तं च षोडशदलं भूपुर द्वितयान्वितम् ॥ ४०

प्रणवं विलिखेन्मध्ये साध्यकर्मविदर्भितम् ।
कोणत्रयेऽथ श्रीबीजं शक्तिं च भुवनेश्वरीम् ॥

षडङ्गान्याग्निकोणादि कोणषट्के क्रमाल्लिखेत् ।
द्वादशार्णं महालक्ष्म्या द्वादशारे लिखेदथ ॥

षोडशस्वर संयुक्तं कुर्यात्षोडश पत्रकम् ।
त्वरिताया मन्त्रवर्णैः भूपुरं वेष्टयेद्द्विधा ॥

द्वितीयमपि भूगेहं तथैव परिवेष्टयेत् ।
भूपुरद्वयकोणेषु हक्षौ लेख्यौ प्रयत्नतः ॥

उक्तमेतन्महालक्ष्म्या यन्त्रं दुरितभेदनम् ।
समस्तैश्वर्य फलदं सर्वदारिद्रचभेदनम् ॥ ४५

सर्वदुःखप्रशमनं समस्तशुभसिद्धिदम् ।
बहुनाऽत्र किमुक्तेन परमस्मान्न विद्यते ॥

अत्र मूर्ति समावाह्य श्रियो हृदयविद्यया ।
कल्पयेदुपचारांश्च रत्नसिह्मासनादिकान् ॥

अर्चयेद्दक्षिणे पार्श्वे श्रियः शङ्करनन्दनम् ।
गणाधिपं महात्मानं सिद्धिलक्ष्मो समन्वितम् ॥

अग्रतः पुष्पधन्वानं रतिदेव्या समन्वितम् ।
पुष्पाञ्जलिकरे कामं यजेत्पर्वतकन्यके ॥

अङ्गानि पूर्वमुक्तेषु स्थानेषु विधिवद्यजेत् ।
धरा च श्री सरस्वत्यौ दुर्गा च रतिरप्यथ ॥ ५०

गायत्री देव्युषा चेति पद्महस्ताः शुभूषणाः ।
पादप्रक्षालनोद्युक्ते जह्नुसूर्यसुते पुरः ।

अर्चयित्वा शंखपद्मौ निधी च धृतचामरौ ।
अभ्यर्च्य पार्श्वयुगले वरुणं यादसां पतिम् ॥

पश्चाद्भागे स्वर्णदण्डयुतच्छत्रधरं यजेत् ।
सम्पूज्य मेषराश्यादीनर्चयित्वा ततः परम् ॥

अर्कमिन्दुं कुजं सौम्यं जीवं भार्गवमप्यथ ।
शनिं राहुं च केतुं च यजेदेतान्नवग्रहान् ॥

अर्चयेद्दिग्गजान् दिक्षु चतुर्दन्त विभूषितान् ।
ऐरावतं पुण्डरीकं वामनं कुमुदाञ्जनौ ॥ ५५

पुष्पदन्तं सार्वभौमं सुप्रतीकमिति क्रमात् ।
महेन्द्राद्यष्ट दिक्पालानष्ट दिक्ष्वथ पूजयेत् ॥

ब्राह्माणमूर्ध्वदिग्भागे यजेद्विष्णुमधोऽपि च ।
वज्रशक्त्याद्यायुधानि दशदिक्ष्वथ पूजयेत् ॥

इत्थमावरणैरेतां महालक्ष्मीं हरिप्रियाम् ।
अभ्यर्च्य धूपदीपाद्यै रथ नीराजनादिभिः ॥

संप्राप्नोति महद्भाग्यं शाश्वतं नात्र संशयः ।
कल्पयित्वाऽथवामूर्ति लक्ष्मी हृदय विद्यया ॥

दत्वा सिह्मासनादीनि समभ्यर्च्याथ विद्यया ।
अष्टाविंशतिधा पश्चात्कुर्यादाचरणार्चनम् ॥ ६०

श्रीधरं च हृषीकेशं वैकुण्ठं विश्वरूपकम् ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥

पत्रमूलेषु सम्पूज्य दलमध्ये ततः परम् ।
गायत्रीं पार्वतीं चान्द्री मीश्वरीं कर्मकारिकाः ।।

तदग्रेष्यर्चयेद्वार्णान् महालक्ष्म्याः क्रमादमून् ।
अनुरागं विसंवादं विजयं वल्लभं मदम् ॥

पोषं बलं च तेजश्च महेन्द्रादि दिगीश्वरान् ।
दिक्ष्वभ्यर्च्य तदस्त्राणि बाह्यदिक्षु समर्चयेत् ।।

अनेन विधिना देवीं महालक्ष्मीं यजन्ति ये ।
एतेषु निवसेल्लक्ष्मी रस्मरन्तीं निजालयम् ।। ६५

येन केनाऽपि विधिना प्रत्यहं साधकोत्तमः ।
प्रसन्नलक्ष्मीमभ्यर्च्य निधिस्सकल सम्पदाम् ।।

भूत्वा सकल विद्यानामाश्रयो दुर्लभानपि ।
भुक्त्वेह सकलान्भोगानन्ते यातिपरं पदम् ।।

अथवान्यन्महद्गुह्यमर्चनं शृणु वल्लभे ।
अष्टाविंशाक्षरी याद्या लक्ष्मीनारायणी शुभा ।।

समस्तवेद तन्त्रेषु गुप्त्वा तत्वार्थवेदिभिः ।
कथिता या महालक्ष्मीं महानारायणी शिवे ।।

तां त्रिवारं समुच्चार्य लक्ष्मीमेतां समुच्चरन् ।
सालग्राम शिलायुक्ते श्रीचक्रे सुमनोहरे ॥ ७०

श्रीश्रीपती समावाह्य द्वादशाक्षरविद्यया ।
चतुर्विंशति संख्याकानुपचारान् प्रकल्पयेत् ।।

केशवादि चतुर्विंशन्नामभि स्सादरं विभुम् ।
नारायणं समभ्यर्च्य नमः शक्त्याख्यमालया ।

समभ्यर्च्य महालक्ष्मीं ब्रह्मविद्यामतः परम् ।
अष्टोत्तरशतं नित्यमष्टाविंशतिधाऽपि वा ।।

उच्चार्य पूजयित्वाऽथ दत्वा नैवेद्यमादरात् ।
राजोपचारैस्सकलैः प्रत्यहं परिपूजयन् ।।

अश्वमेधशतस्यादौ प्रत्यहं फलमश्नुते ।
अणिमादि गुणैश्वर्यं वाचां सिद्धिं च दुर्लभाम् ।। ७५

प्राप्नोति च महद्भाग्यं आयुरारोग्यमक्षयम् ।
पुत्रपौत्रवतीं ऋद्धिं भोगानपि सुदुर्लभान् ।।

अवाप्य शाश्वतं धाम व्रजत्यन्ते न संशयः ।
लक्ष्मीनारायणार्चेयं मतिगुप्ताऽपि वैदिकी ।।

प्रकाशितेयं कल्याणि न कुत्रापि प्रकाशय ।
अनया ब्रह्मविष्ण्वादि पदं न हि सुदुर्लभम् ।।

अष्टाविंशाक्षरीं विद्यामपि गुप्तां च शैलजे ।
लक्ष्मीनारायणीं स्मृत्वा दशधाऽपि दिने दिने ।।

राज्यलक्ष्मीं महाविद्यां योजयत्यन्वहं शुचिः ।
तुलापुरुष साहस्रं सौवर्णं तेन तत्कृतम् ॥ ८०

साङ्गदक्षिणया युक्तं प्रत्यहं भवति ध्रुवम् ।
वाजिमेध सहस्रं च साङ्गदक्षिणयाऽन्वितम् ॥

कृतं तेन न सन्देहो भूप्रादक्षिण्यमप्यथ ।
प्रत्यहं शैलतनये विश्वासं कुरु सन्ततम् ॥

श्रीपीठमथवाऽभ्यर्च्य प्रत्येकं प्रत्यहं शुचिः ।
अष्टाविंशाक्षरी विद्यां लक्ष्मीनारायणीमथ ॥

स्मृत्वा प्रसन्नलक्ष्मीं च सालग्राम शिलान्विते ।
प्रसन्न कमलायन्त्रे लक्ष्मीनारायणौ विभू ॥

समभ्यर्च्य विशुद्धात्मा प्रत्यहं साधकोत्तमः ।
अष्टाविंशाक्षरीं विद्यां लक्ष्मीनारायणाभिधाम् ॥ ८५

अष्टाविंशतिधा स्मृत्वा विद्यां श्रीहृदयाभिधाम् ।
अष्टाविंशतिधा पश्चात्प्रजप्त्वा प्रत्यहं शिवे ॥

महादान सहस्रस्य वाजिमेध शतस्य च ।
गजदान सहस्रस्य धेनुदानायुतस्य च ॥

फलं प्राप्य विशुद्धात्मा धनदेन समः श्रिया ।
वाचस्पति समः सर्वविद्याभिः पुत्रपौत्रकैः ॥

कश्यपेन समो भूत्वा कान्त्या कन्दर्पसन्निभः ।
महेन्द्रसदृशो भोगैरायुषा ब्रह्मसन्निभः ॥

स्वच्छन्दमरणो भूत्वा कुलसाहस्र संयुतः ।
भगवत्सन्निधिं याति देहान्ते भगवत्प्रियः ॥ १०

प्रसन्नलक्ष्मी विद्याया माहात्म्यमघनाशनम् ।
न हि वर्णयितुं शक्यमपि सेन्द्रैस्सुरासुरैः ॥

यत्र तिष्ठति सा लक्ष्मीस्तत्रैव सततं सुखम् ।
पुत्रपौत्राभिवृद्धिश्च धनधान्यादिसम्पदः ॥

नित्यं धर्माभिवृद्धिश्च तस्माल्लक्ष्मीं सदार्चयेत् ।
प्रसन्नलक्ष्मी पूजाया माहात्म्यं किञ्चिदीरितम् ।
श्रेयस्करमिहामुत्र किं पुनः श्रोतुमिच्छसि ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
एकोनविंशोऽध्यायः ॥

---

# अथ विंशोऽध्यायः ॥

श्रीदेव्युवाच–

श्रीरेव त्रिपुरा प्रोक्ता ललिता जगदम्बिका ।
लक्ष्मीरपि महालक्ष्मीस्त्रिदशाख्या जगत्पते ॥

साम्राज्यलक्ष्मीरपि च श्रीरेव कथिता त्वया ।
सर्वविद्यामयं प्रोक्तामयोध्यानगराभिधम् ॥

श्रीचक्रं जगतां नाथ तत्स्वरूपं महीतले ।
वद मे कृपया नाथ यदि तेऽस्ति कृपा मयि ॥

श्रीदक्षिणामूर्तिरुवाच –

श्रियो देव्याः प्रवक्ष्यामि पीठानां गिरिकन्यके ।
महीतलेऽस्या नामानि शृणुष्वावहिता भव ॥

कोल्लापुरे महालक्ष्मी बोध्या पर्वतकन्यके ।
तथा सन्नतिपीठस्था महालक्ष्मीर्हरिप्रिया ॥ ५

श्रीशैले भ्रामरी ख्याता विजयश्रीप्रदायिनी ।
पाण्डुरङ्गे त्रिशक्त्याख्या लक्ष्मी विठ्ठलवल्लभा ॥

सह्याद्रावथ वीराख्या रेणुका रूपिणी रमा ।
योगिन्यलंबुसे ख्याता योगसिद्धिप्रदायिनी ॥

काञ्चिका नगरे प्रोक्ता कामाक्षी शङ्करप्रिया ।
मीनाक्षीति समाख्याता दक्षिणे मथुरापुरे ॥

चिदम्बरेऽपि विख्याता शिवकाम्याख्यसुन्दरी ।
शेषाचले महालक्ष्मीर्विख्याता गिरिकन्यके ॥

उज्जयिन्यां महाकाली महाकालस्य वल्लभा ।
लङ्कापुरेऽर्चिता नित्यं शाङ्करी शङ्करप्रिया ॥ १०

कामरूपे महापीठे कामाक्षी कामरूपिणी ।
महेन्द्रपर्वते दुर्गा महिषासुरमर्दिनी ॥

पद्माक्षीति समाख्याता मुनिभिस्सिद्धपर्वते ।
गङ्गासागरसङ्गेऽपि विख्याता कमलालया ॥

तत्रैव पार्वती ख्याता शङ्करार्धशरीरिणी ।
नीलाचले समाख्याता सुभद्रा भुक्तिमुक्तिदा ॥

मायादेवीति विख्याता नरनारायणप्रिया ।
चित्रकूटाचले ख्याता जानकी रामवल्लभा ॥

रुक्मिणी द्वारकायां च जगन्माता हरिप्रिया ।
मथुरा नगरे कृष्णमाता देवक कन्यका ॥ १५

यशोदा गोकुले प्रोक्ता राधा बृन्दावने वने ।
सुभद्रा हस्तिनापुरे विन्ध्ये शुम्भनिर्बर्हिणी ॥

दुर्गादेवीति विख्याता विन्ध्याद्रि शिखरे शुभे ।
सीतारामाश्रमे प्रोक्ता वैदेही राघवप्रिया ॥

गङ्गाद्वारे महाक्षेत्रे सीता जनककन्यका ।
हिमवत्पर्वते ख्याता श्रीदेवी ललिताम्बिका ॥

विख्याता श्रीपुरे साक्षान्महात्रिपुरसुन्दरी ।
मेरौ सरस्वती ख्याता तारा किष्किन्धपर्वते ॥

मतङ्ग पर्वते ख्याता श्रीदेवी मन्त्रिणी स्मृता ।
वराह पर्वते ख्याता भूदेवी कमलालया ॥ २०

कुरुक्षेत्रेऽपि विख्याता पार्वती शङ्करप्रिया ।
अयोध्यानगरे ख्याता जानकीति हरिप्रिया ॥

श्रीरङ्ग पर्वते ख्याता श्रीदेवी कमलालया ।
ख्याता सिद्धिवटे साक्षात्सीता दाशरथिप्रिया ॥

त्र्यम्बक गिरौ ख्याता रुद्राणी शङ्करप्रिया ।
तुलजा नगरे ख्याता भवानी रूपिणी रमा ॥

चक्रराजात्मका न्यासां पीठानि गिरिकन्यके ।
एतत्स्मरणतो वापि पापराशिः प्रणश्यति ॥

एतानि सिद्धक्षेत्राणि सन्त्यन्यान्यपि भूतले ।
स्मृत्वा नामान्यमूनीह भवति क्षीणकल्मषः ॥ २५

प्रसन्नलक्ष्मी पीठानि सर्वाण्येतानि सुन्दरि ।
श्रीचक्ररूपाण्युक्तानि सर्वसिद्धिकराण्यलम् ॥

शुचिर्जितेन्द्रियो नित्यं गुरुशुश्रूषणे रतः ।
राजलक्ष्मी महाविद्यां प्रजप्त्वा नियतव्रतः ॥

दिवस त्रितयेनैव महतीं सिद्धिमाप्नुयात् ।
सन्त्यन्यान्यपि पीठानि सिद्धिदानि महीतले ॥

तानि तुभ्यं प्रवक्ष्यामि शृणुष्वावहिता प्रिये ।
कुम्भकोण महद्धाम सेतुबन्धस्ततः परम् ॥

अनन्तशयनं पुण्यं चन्द्र पुष्करिणीतटम् ।
वीरराघव धामाऽथ क्षेत्रं परमपावनम् ॥ ३०

अहोबलं महत्क्षेत्र मेलापुरमतःपरम् ।
गोमन्तकं महद्धाम मूकाम्बाक्षेत्रमप्यथ ॥

कान्यकुब्ज महद्धाम वेदारण्यमतःपरम् ।
कालहस्तीश्वरक्षेत्रं मङ्गलाचल नामकम् ॥

वराहशिखरं पुण्यं वेदाद्रिशिखरं ततः ।
क्षेत्र धर्मपुरं नाम्ना काशेश्वरमतःपरम् ॥

रत्नाद्रि शिखरं पुण्यं लक्ष्मीशक्षेत्रमप्यथ ।
नाम्नाऽथ जानकीक्षेत्रं वाशिष्टा सिन्धुसङ्गमः ॥

द्राक्षा रामाभिधक्षेत्रं ब्रह्मेश्वरमतःपरम् ।
नारायणाभिधं क्षेत्रं सिह्माद्रिशिखरं तथा ॥ ३५

श्रीकूर्मपदमप्युक्तं मार्कण्डेय पदाभिधम् ।
आनन्देशाभिधं क्षेत्रमोङ्कार क्षेत्रमप्यथ ॥

पञ्चप्रयाग क्षेत्राणि केदारक्षेत्रमप्यथ ।
गोवर्धनाद्रिशिखरं प्रभासक्षेत्रमुत्तमम् ॥

जंकुमार्गं महाक्षेत्रं गङ्गासागर सङ्गमः ।
कापिलाख्यं पदं पुण्यं भरताश्रम नामकम् ॥

नन्दिग्रामाभिधं क्षेत्रं महदत्यन्तपावनम् ।
बदरीकाननं पुण्यं सर्वभ्योऽपि महत्तरम् ॥

यत्रास्ते भगवान् साक्षाद्योगारूढः श्रियः पतिः ।
त्रयाणामपि लोकानां हिताय जगतीपतिः ॥ ४०

पालयन्निखिलं लोकं शिष्टानां हितमाचरन् ।
सर्गस्थित्युपसंहार कर्ताऽसौ वसति प्रभुः ॥

भाग्योदयेन तत्क्षेत्रं लभ्यते सुकृतात्मभिः ।
ब्रह्महत्यादि पापौघैरपि तत्क्षेत्रदर्शनात् ॥

सद्य एव विमुक्तः स्यान्महापातकवानपि ।
तत्र साक्षान्महायोगी हरिर्नारायणोऽच्युतः ॥

वैकुण्ठ लोकादागत्य वसत्यमरवन्दितः ।
एकैक दिवसं वा स्थित्वा निश्चलमानसः ॥

महालक्ष्मीमिमां जप्त्वा चक्षुर्भ्यां पश्यति प्रियम् ।
उक्तानि दिव्यक्षेत्राणि महासिद्धिकराण्यपि ॥ ४५

तीर्थानि संप्रवक्ष्यामि सिद्धिदानि महीतले ।
जाह्नवी सरितां श्रेष्ठा यमुना च सरस्वती ॥

गोदावरी कृष्णवेणी कावेरी सरितां वरा ।
नर्मदा च महापुण्या चन्द्रभागा शतद्रुका ॥

पयोष्णी च तथा सिन्धुर्नदी परमपावनी ।
तुङ्गभद्रा भीमरथी पम्पाख्यं च सरोवरम् ॥

महेन्द्रादि सरोवर सान्निध्ये गौतमीतटम् ।
सप्तगोदावरीतीरं जानकीकुण्डमप्यथ ॥

रामह्रदं महापुण्यं रामतीर्थमनुत्तमम् ।
पुष्कराख्यं महत्तीर्थं सुवर्णमुखरीतटम् ॥ ५०

लक्ष्मीसरोवरं पुण्यं फल्गुनीतीर्थमप्यथ ।
उत्तमं सरयूतीरं तापी तीरमतःपरम् ॥

मन्दाकिनीतटं पुण्यं तीर्थं वाशिष्टसंज्ञितम् ।
गोकर्णं नैमिशारण्यं गौरीतीर्थमतःपरम् ॥

शिवगंगा महापुण्या धनुष्कोटिरतःपरम् ।
गौतमी सिन्धु सङ्गाख्यं वेणीसिन्धु समागमः ॥

तुलसीकाननं पुण्यं बिल्वद्रुमवनं परम् ।
गोमतीतटमप्युक्तं गण्डकीतीर्थमुत्तमम् ॥

कमलालयतीर्थं च सावित्रीतीर्थमुत्तमम् ।
एतान्यन्यानि पुण्यानि सन्ति क्षेत्राणि भूतले ॥ ५५

राज्यलक्ष्मी स्वरूपाणि सर्वसिद्धिकराण्यलम् ।
चक्रराजस्य सान्निध्यं तीर्थं महदुदीरितम् ॥

नारायणं बृहच्चक्र सान्निध्यं च ततः परम् ।
उत्तमाचार्य सान्निध्यं तीर्थानामुत्तमं शिवे ॥

सालग्रामशिलाचक्र सान्निध्यं श्रीमयं विदुः ।
तुलसीवनमध्यं च तीर्थं महदुदीरितम् ॥

बिल्ववृक्षवनं पुण्यं महासिद्धिकरं स्मृतम् ।
प्रसन्नलक्ष्मी रूपाणि सर्वाण्येतानि सुन्दरि ॥

दर्शनादप्यथैतेषां भवेत्सिद्धिश्च शाश्वती ।
उक्तानि लक्ष्मी पीठानि चक्रराजात्मकानि च ॥ ६

एकाहमपि जप्त्वा वा विद्यां श्रीहृदयाभिधाम् ।
अवश्यं सिद्धिमाप्नोति महतीं नात्र संशयः ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
विंशोऽध्यायः ॥

# अथ एकविंशोऽध्यायः ॥

श्रीदक्षिणामूर्तिरुवाच—

पुरश्चरण कर्माहं प्रवक्ष्यामि ततः शिवे ।
यदकृत्वा नरो विद्या सिद्धिं न लभते क्वचित् ॥

लक्षमेकं कृते प्रोक्तं त्रेतायां तु द्विलक्षकम् ।
त्रिलक्षं द्वापरे प्रोक्तं चतुर्लक्षं कलौ युगे ॥

कायेन मनसा वाचा दुरितासक्तबुद्धयः ।
कलौ युगे सदा मर्त्याः परस्त्रीधनलोलुपाः ॥

तस्मादल्पजपेनैषां मन्त्रसिद्धिर्न जायते ।
पुरोदितेषु पीठेषु तीर्थेष्वपि मम प्रिये ॥

पुरश्चरणकृद्भूमौ सिद्धिं विन्दत्यनुत्तमाम् ।
तुलसीवन मध्ये वा बिल्वद्रुमवनेऽपि वा ॥ ५

अश्वत्थतरुमूले वा भगवन्मन्दिरेऽपि वा ।
भवानीमन्दिरे वाऽपि कमलायतनेऽपि वा ॥

शङ्करस्यालये वाऽपि मन्दिरे वा गणेशितुः ।
आचार्यं सन्निधीकृत्य पुरश्चरणमारभेत् ॥

अपि कीकट देशेषु सान्निध्यं श्रीगुरोर्यदि ।
बदरी काननं प्रोक्तं तदेवाशु फलप्रदम् ॥

आचार्यं सन्निधीकृत्य नित्यकर्मरतः शुचिः ।
शान्तो दान्तो जितक्रोधो मौनी सन्ध्यासु संयतः ॥

फलेषु निस्पृहो भूत्वा पाषण्डालयवर्जितः ।
नास्तिकैर्वेदबाह्यैर्वा न संभाषापरः क्वचित् ॥ १०

मातृबुद्धिः परस्त्रीषु परद्रव्येष्वलोलुपः ।
रजस्वलान्त्यजादीनामसंभाषण तत्परः ॥

चान्द्रायणव्रती वा स्यात् प्राजापत्य परोऽपि वा ।
तप्त कृच्छ्र परो वाऽपि पञ्चगव्याशनोऽपि वा ॥

क्षीराशी वा फलाशी वा शाकाहार परोऽपि वा ।
कन्दमूल फलाशी वा हविरश्नन्नथापि वा ॥

एकभक्ताशनो वाऽपि स्वाचार्यानुज्ञया शिवे ।
महालक्ष्म्या जपेद्विद्यां शुद्धो निर्मलमानसः ॥

यामत्रितय पर्यन्तं जपेन्नित्यं प्रसन्नधीः ।
असद्गोष्ठीमिसंबद्धालापं पैशुन्यमेव च ॥ १५

अक्षक्रीडामथ द्यूतं दुर्जनैरपि सङ्गमम् ।
अवेदशास्त्र निष्ठां च वर्जयेन्मतिमान्नरः ॥

निन्दां भगवतो वेद निन्दामाचार्य निन्दनम् ।
शृणुयान्न क्वचिद्याग निन्दां च दुरितप्रदाम् ॥

जन्तुमात्रेप्यहिंसायामासक्त हृदयस्सदा ।
समदर्शी च सर्वत्र मित्रारि तनयेषु च ॥

सभ्यैरपि न भाषेत जपहोमादिकर्मसु ।
चक्रराजार्चनं नित्यं कुर्वाणो नियतव्रतः ॥

चतुर्लक्षं महाविद्यां प्रजप्त्वा साधकोत्तमः ।
दशांशं तर्पयेद्धीमान् पयसेक्षुरसेन वा ॥ २०

गुडोदकेन वा देवि तर्पयेदुदकेन वा ।
तद्दशांशं हुनेदग्नौ कमलैर्घृतमिश्रितैः ॥

मधुत्रितय संमिश्रैरथ बिल्वफलैस्तु वा ।
सुवासिन्यः शतं भोज्याः तावन्तो ब्राह्मणा अपि ॥

आचार्यं चरणाम्भोजे स्वर्णभार सहस्रकम् ।
निष्कसाहस्रमथवा शतनिष्कमथापि वा ॥

दत्वा सिद्धिं सुमहतीं त्रैलोक्येवाऽपि दुर्लभाम् ।
राज्यलक्ष्म्या अवाप्नोति देहान्तेऽपि परांगतिम् ॥

महतीयं पुरश्चर्या महासिद्धिकरी शुभा ।
असाध्यमपि देवानामपि द्वीपान्तरस्थितम् ॥ २५

पुरश्चरणकृत्येन साध्यतेऽनेन सुव्रते ।
अत्राशक्तः पुरश्चर्यां कुर्याल्लघ्वीं यतव्रतः ॥

तद्विधानं प्रवक्ष्यामि शृणुष्वावहिता शिवे ।
शरदाद्याश्विने मासि व्रतं परमपावनम् ॥

नवरात्राभिधनाम्ना समस्तदुरितापहम् ।
सर्वकल्मषरोगघ्नं सर्वदुःख विभेदनम् ॥

महादारिद्र्यदलनं पावनं भुक्ति मुक्तिदम् ।
राज्यलक्ष्मी महाविद्या सिद्ध्यर्थं नियतव्रतः ॥

नवरात्रव्रतं कुर्यात्तदवश्यं मम प्रिये ।
दुःख प्रणाशनं धन्यं तुष्टि पुष्टिकरं परम् ॥ ३०

सर्वकल्याणजननं नवरात्रव्रतं शिवम् ।
तद्विधानमथो वक्ष्ये शृणुष्वावहिता प्रिये ॥

प्रतिपद्दिनमारभ्य दिनमेकैकमीश्वरि ।
रविपर्वसमं प्राहुरागमार्थ विशारदाः ॥

तत्र मूलर्क्षमारभ्य विष्णुतारान्तमन्वहम् ।
अर्धोदयसमं प्राहुर्वेद वेदान्त वेदिनः ॥

तत्रापि नवमी तुल्या रविपर्वशत प्रभा ।
महती समाख्याता महासिद्धि फलप्रदा ॥

विजयादशमी यत्र जयलक्ष्मी प्रदायिनी ।
सर्वसिद्धिकरी प्रोक्ता भोगस्वर्गापवर्गदा ॥ ३५

प्रतिपद्दिवसे तत्र प्रातरुत्थाय वाग्यतः ।
कृत्वाऽऽदौ मङ्गलस्नानमाचार्याज्ञा पुरस्सरम् ॥

गणाधिपं महात्मानं विघ्नसंघ विभेदनम् ।
आदावभ्यर्च्य यत्नेन नत्वाचार्यपदाम्बुजम् ॥

श्रीमदष्टाक्षरी विद्यां पञ्चशताधिकम् ।
चक्रराजं समभ्यर्च्य साङ्गावरण संयुतम् ॥

सालग्राम शिलाचक्रमथवा गिरिकन्यके ।
लघुश्रीचक्रसहितं विधिना संप्रपूजयेत् ॥

अष्टाविंशतिधा नित्यं श्रीमदष्टार्ण विद्यया ।
हुत्वा प्रसन्नलक्ष्म्याऽथ गव्यमाज्यं सुनिर्मलम् ॥ ४०

अष्टोत्तरशतं हुत्वा ततः पञ्चदशार्णया ।
अष्टाविंशतिधा हुत्वा चतुःश्रीमनुभिर्घृतम् ॥

एकैकशस्तद्धुत्वा स्तोत्रमाथर्वणं शुभम् ।
पञ्चावृत्त्यधिकं चत्वारिंशदावृत्तिमप्यथ ॥

नवरात्रे जपेदेकोत्तरवृद्धिक्रमेण वा ।
त्रिशतं द्विशतं वापि शतं वा ब्रह्मविद्यया ॥

श्री श्रीशावर्चयेद्धीमान् भोजयेच्च सुवासिनीः ।
पञ्चत्रयस्तथैकावा प्रत्यहं नियतव्रतः ॥

श्री श्रीपतिधिया यद्वा भोजयेन्मिथुनं शिवे ।
नित्यमाचार्यं पादाब्जे दद्याद्द्रव्यं यथारुचि ॥ ४५

यद्वाचार्यप्रियां साक्षान्महालक्ष्मीधिया शिवे ।
नित्यमभ्यर्चयेन्माल्य भूषणाच्छादनाशनैः ॥

अशक्तो मन्दभाग्योऽपि याचित्वा शूद्रकानपि ।
महानवम्यामाचार्यपत्नीं वस्त्रैश्च भूषणैः ॥

अर्चयित्वा विशेषेण तत आचार्यमर्चयेत् ।
वाणीमभ्यर्चयेन्नित्यं पुस्तकेषु यतव्रतः ॥

महानवम्यां प्राप्तायां प्रातरुत्थाय वाग्यतः ।
स्नात्वा कृत्वाह्निकं पश्चाज्ज्वलिते जातवेदसि ॥

अष्टाविंशतिधा हुत्वा गायत्र्या जातवेदसि ।
श्रीमदष्टाक्षरेणाऽथ घृतं पञ्चशतं ततः ॥ ५०

हुत्वा प्रसन्न लक्ष्म्याऽथ सहस्रं त्रिशताधिकम् ।
मधुत्रितय संमिश्रं तिलबिल्वदलान्वितम् ॥

गव्याज्य संप्लुतं हुत्वा भगवद्रश्मिभिर्घृतम् ।
सकृद्धुत्वाऽथ ललिता रश्मि विद्याभिरादरात् ॥

हुत्वा पञ्चदशाक्षर्या घृतं त्रिशतमादरात् ।
अष्टोत्तरशतं वापि हुत्वा गव्याज्यमप्यथ ॥

लक्ष्म्या प्रसन्न लक्ष्म्याऽथ त्रिशक्त्या च ततः परम् ।
साम्राज्य लक्ष्म्या जुहुयादष्टाविंशतिधाऽऽदरात् ॥

जयादिहोमं कृत्वाऽथ प्रायश्चित्ताहुतीस्ततः ।
ब्रह्मार्पणाहुतिं कृत्वा प्रणम्याग्निमतः परम् ॥ ५५

अथ पञ्चशतं लक्ष्मी लक्ष्मीशौ कुसुमैर्यजेत् ।
चक्रराजार्चनं साङ्गं कृत्वा तत्सन्निधौ शिवे ॥

आचार्यचरणद्वंद्वं प्रणिपत्य यथाविधि ।
षष्टिचिह्नक सौवर्णं पद्मरागविनिर्मितम् ॥

वज्रबिन्दु समायुक्तं कुण्डलद्वयमर्पयेत् ।
स्वर्णभारं ततो दद्याद्दक्षिणार्थं गुरोः शिवे ॥

तदर्धं वा तदर्धं वा निष्कद्वादशकं तु वा ।
सूक्ष्मं वस्त्रयुगं दद्याद् गृह्णीयादाशिषश्शुभाः ॥

आचार्यपत्न्यै श्रीबुद्ध्या ताटङ्काभरणं शुभम् ।
कनत्कनक चिन्ताकं नासाभरणमप्यथ ॥ ६०

दद्यादवश्यमन्यानि भूषणान्यपि साधकः ।
ताटङ्काभरणं वापि चिन्ताकं हैमजं तु वा ॥

एकमाभरणं दद्यादशक्तः साधकः शिवे ।
सूक्ष्मं वासस्ततो दद्यान्महालक्ष्मीधिया ततः ॥

सुवासिन्यः शतं भोज्यास्तदर्धं वा तदर्धकम् ।
यद्वा पञ्चदशाभ्यर्च्यास्सुवासिन्यो नवापि वा ॥

श्रीश्रीपतिधिया यद्वा मिथुनानि समर्चयेत् ।
दक्षिणाभिश्च तांबूलैर्ब्राह्मणानपि तोषयेत् ॥

इत्थं कृते न सन्देहो व्रतं संपूर्णतामियात् ।
दरिद्रोऽपि व्रतं कृत्वा स्वाचार्यचरणद्वये ॥ ६५

आदौ धेनुद्वयं दत्वा बहुक्षीरं सवत्सकम् ।
दक्षिणामर्पयेद्धीमान् सुवर्णं निष्कपञ्चकम् ॥

एकं वासोऽपि वा दद्याद्गुरुपत्न्यै रमाधिया ।
तस्मिन् दिने फलाशी वा कन्दमूलाशनोऽपि वा ॥

भूत्वा परेद्युर्गुरुणा सह भुञ्जीत वाग्यतः ।
इत्थं कृत्वा पुरश्चर्यां नवरात्रव्रते शुभे ॥

राज्यलक्ष्मी महाविद्या सिद्धिमाप्नोत्यनुत्तमाम् ।
अग्निष्टोम सहस्रस्य वाजपेय शतस्य च ॥

तुलाहिरण्यगर्भादि महादानशतोद्भवम् ।
फलं प्राप्य विशुद्धात्मा नारायणसमन्विताम् ॥ ७०

पश्यत्यसौ महालक्ष्मीं तस्मिन् संवत्सरे ध्रुवम् ।
जन्मकोटि समुद्भूतैर्महापापैश्च दारुणैः ॥

विमुक्तो महदारोग्यं दीर्घमायुष्यमक्षयम् ।
अवाप्य धनधान्यौघ मुक्तारत्न समाकुलाम् ॥

गजाश्व पशु सङ्कीर्णां महालक्ष्मीमचञ्चलाम् ।
सन्तति व्यापिनीं लब्ध्वा सर्वसौभाग्यसंयुतः ॥

कामवत्सुन्दरो भूत्वा विद्याभिर्जीवसन्निभः ।
भूत्वा समृद्धि महतीं पुत्रपौत्रादिसंकुलाम् ॥

सम्प्राप्याष्ट गुणैश्वर्यं स्वच्छन्दमरणो भुवि ।
भुक्त्वाऽथ मानुषान् दिव्यान् भोगानपि सुदुर्लभान् ॥७५

कुलानां शतमुद्धृत्य निमग्नं नरकेषु च ।
दिव्यकन्याशतयुतं विमानं कामगं शुभम् ॥

आरुह्य भगवद्धाम यात्यन्ते नात्र संशयः ।
नवरात्रव्रतमिदं सर्वसिद्धिकरं शुभम् ॥

उक्तं समासतः सिद्धिकरं चान्यत्प्रवक्ष्यते ।
सप्तम्यां रविसंक्रान्तिर्भानुवासर संयुता ॥

जयचूडामणिर्नाम्ना योगो लभ्य उदाहृतः ।
अर्कसंक्रमणं तत्र ब्राह्मे काले भवेद्यदि ॥

राजराजं महायोगं वदन्ति परमर्षयः ।
नक्षत्रं भगदैवत्यं भवत्यत्र यदि प्रिये ॥ ८०

तत्र वक्तुं फलं शक्ता नाहं ब्रह्मापि वा हरिः ।
अथवोत्तर संक्रान्तिस्सप्तम्यामिन्दुवासरे ॥

सावित्र तार सहितः मध्याह्ने यदि लभ्यते ।
विजयाख्यं महायोगं वदन्तीमं महर्षयः ॥

ब्राह्मे काले मार्गशीर्षे सप्तम्यां भानुवासरे ।
धनुस्संक्रमणं भानोर्यद्येतद्ध समन्वितम् ॥

राजराजमहेन्द्राख्यं योगमाहुरिमं बुधाः ।
पुष्यमासेऽथ सप्तम्यामिन्दुवासर संयुता ।
मध्याह्ने झष संक्रान्तिर्यदि सावित्रसंयुता ॥

त्रैलोक्य चिन्तामणियोगमाहु-
रिमं महासिद्धिकरं प्रशस्तम् ।
समस्तसंपत्समवाप्तिहेतुं
समस्तपापौघ विनाशहेतुम् ॥ ८५

धन्यं यशस्यं कलिकल्मषघ्नं
दुःस्वप्नविध्वंसकरं पवित्रम् ।
चिन्तामणिं योगमुदाहरन्ति
धर्मार्थकामादि पुमर्थहेतुम् ॥

चापराशिं संक्रमते यदा भानुस्सहस्रगुः ।
उक्तयोग समायुक्तं तन्मासं सकलं शिवे ।
जयलक्ष्मीकरं योगमाहुर्दिव्या महर्षयः ॥

झषसंक्रान्तिपर्यन्तं प्रथमेऽत्र प्रवक्ष्यते ।
ब्राह्मे काले यदा भानुः संक्रमेद्धनुषः शिवे ॥

ततोत्थाय विशुद्धात्मा श्रीश्रीश द्वदशाक्षरीम् ।
स्मृत्वा नित्यं ततः स्नात्वा कृत्वा सन्ध्यादिकाः क्रियाः ॥

शालग्राम शिलाचक्रे चक्रराजसमन्विते ।
श्रीश्रीशा वर्चयेद्धीमान् स्वाचार्याज्ञा पुरस्सरम् ॥ १०

त्रिशतं वा शतं नित्यमर्घयेद्ब्रह्म विद्यया ।
बिल्वपत्रैः प्रशस्तैश्च पुष्पैर्वा तुलसीदलैः ॥

जम्बूप्रवालैर्दूर्वाग्रैश्शमीपत्रैरथापि वा ।
अभ्यर्च्य धूपदीपादीनुपचारान्समर्प्य च ॥

कृसरं शर्करायुक्तं सार्द्रकं गोघृतप्लुतम् ।
श्रीश्रीपतिभ्यां दत्वाऽथ श्रीदेव्यै च पृथक्त्वतः ॥

विधिवत्संस्कृते वह्नौ तत्रैव कृसरं शुभम् ।
मधुत्रितय संमिश्रं गव्येनाज्येन संप्लुतम् ॥

जुहुयाद्द्वेदमात्रादावष्टाविंशतिधा शिवे ।
श्रीमदष्टार्णया पश्चादष्टाविंशतिधा हुनेत् ॥ १५

कङ्करेण घृतेनाऽथ लक्ष्मीहृदयविद्यया ।
अष्टोत्तरशतं हुत्वा श्रियः पञ्चदशार्णया ॥

अष्टाविंशतिधा हुत्वा चतुःश्रीमनुभिस्ततः ।
अर्कावृत्त्या हुनेदाज्यं ततः श्रीहृदयं मनुम् ।
जपेत्पञ्चशतं नित्यं जप्त्वाष्टाक्षरमादितः ॥

प्रसन्नलक्ष्मीपति विद्यया ऽथ
हुत्वाऽर्कवारे घृतमेव गव्यम् ।
कोटी सहस्रायुत होमपुण्यं
दिने दिनेऽसौ लभते गिरीन्द्रजे ॥

विजयश्री महायोगे तस्मिन्मासि दिने दिने ।
कृत्वेदं मकरं भानुर्यदा संक्रमते शिवे ॥

तत्र प्रातः समुत्थाय कृतपूर्वाह्णिकक्रियः ।
त्रिशतं जुहुयादग्नौ रमाहृदय विद्यया ॥
अभ्यर्च्य पूर्ववच्छ्रीमदष्टाक्षर्यां ततः परम् ॥ १००

घृतं च त्रिशतं हुत्वा भगवद्रश्मिभिस्ततः ।
एकैकशो घृतं हुत्वा श्रीदेव्या रश्मिभिर्घृतम् ॥

हुत्वैकधा श्रियो देव्या विद्ययाष्टोत्तरं शतम् ।
हुत्वा श्रीमनुभिः पश्चादष्टाविंशतिधा हुनेत् ॥

ततो जप्त्वा यथाशक्त्या श्रीमदष्टाक्षरं मनुम् ।
महालक्ष्मी महानारायणी विद्यामतःपरम् ॥

जपेदष्टोत्तरशतमष्टाविंशतिधाऽपि वा ।
प्रसन्नलक्ष्मीहृदय विद्यां पञ्चशतं जपेत् ॥

झष संक्रमणे काले स्नात्वाचार्य पदद्वयम् ।
नत्वा पादोदकं पीत्वा विमुक्तः सर्वपातकैः ॥ १०५

आचार्य सन्निधावग्नि प्रतिष्ठाय ततः परम् ।
वेदमात्रा हुनेदादावष्टाविंशतिधा घृतम् ॥

अष्टाविंशतिधा ब्रह्मविद्ययापि हुनेद्घृतम् ।
भगवद्रश्मि विद्याभिः घृतमेकैकशो हुनेत् ॥

श्रीमदष्टार्णया पश्चात्त्रिशतं जुहुयाद्घृतम् ।
महालक्ष्मीमथावाह्य ज्वलिते जातवेदसि ॥

सर्वोपचारैराराध्य श्रियं देवीं हरिप्रियाम् ।
प्रसन्नया महालक्ष्म्या सहस्रं त्रिशताधिकम् ॥

तिलैर्गव्याज्य समिश्रैः बिल्वपत्रसमन्वितैः ।
मधुत्रितयसंयुक्तैर्हुत्वाऽऽचार्यस्य सन्निधौ ॥ ११०

ललितारश्मि विद्याभिः घृतमेकैकशो हुनेत् ।
श्रिया पञ्चदशाक्षर्या शतमष्टोत्तरं घृतम् ॥

हुत्वाऽथ लक्ष्मीमन्त्रेण श्रीदेवी हृदयेन च ।
त्रिशक्तिलक्ष्म्या साम्राज्य लक्ष्म्या च घृतमीश्वरि ॥

अष्टाविंशतिधा हुत्वा प्रत्येकं जातवेदसि ।
हुत्वा जयादिभिः पश्चात्तु कृत्वा ब्रह्मार्पणाहुतिम् ॥

अग्नि प्रदक्षिणीकृत्य नत्वा साष्टाङ्गमादरात् ।
आचार्यं चरणाम्भोज द्वितयं प्रणिपत्य च ॥

अलंकृत्य यथाशक्त्या सूक्ष्मं वासो युगेन च ।
कुण्डलद्वितयं दद्यात्कर्णयुग्मे ततः परम् ॥ ११५

अन्यदाभरणं वाऽपि कर्णयुग्मे समर्प्य च ।
वर्षाशनमितं द्रव्यं दातव्यं चरणद्वये ॥

एकविंशतिनिष्कं वा तदभावे सदर्धकम् ।
तदर्धं वाऽर्पयेद्धीमान् वित्तलोभं परित्यजेत् ॥

पञ्चाढकमिता मुद्गाः प्रेषणीया गुरोर्गृहे ।
आर्द्रकं च प्रदातव्यं पञ्चाढकमितं शिवे ॥

तदर्धं वा तदर्धं वा शाठ्यं तत्रापि सन्त्यजेत् ।
धेनुद्वयं प्रदातव्यं बहुक्षीरं सवत्सकम् ॥

अशक्तश्चेद्दरिद्रोऽपि निष्कपञ्चकमादरात् ।
आचार्यचरणद्वंद्वे दद्यात्सिद्ध्यर्थमीश्वरि ॥ १२०

आचार्यपत्न्यै श्रीबुद्ध्या ताटङ्काभरणं शुभम् ।
कनत्कनक चिन्ताकमर्पयेदथवा शिवे ॥

नासिकाभरणं तत्राशक्तो निष्केण निर्मितम् ।
दत्वा वस्त्रेण सन्तोष्य भोजयेच्च सुवासिनीः ॥

विभवे सति सौवर्णं कटकद्वयमुत्तमम् ।
करयुग्मेऽर्पयेद्धीमान् पलद्वय विनिर्मितम् ॥

पलमान सुवर्णेन निर्मितं वाऽर्पयेच्छिवे ।
अत्राशक्तोऽथ रौप्येण सुशुभ्रेण विनिर्मितम् ॥

पलद्वयमितं दद्यात्पलमानमथोऽपि वा ।
सुवासिनी शतं भोज्यं तदर्धं वा तदर्धकम् ॥ १२५

तदर्धं वा प्रसन्न श्रीधिया भोज्यं प्रयत्नतः ।
कूश्माण्डं बहुबीजाढ्यं श्रोत्रियाय द्विजातये ॥

धान्यस्योपरि संस्थाप्य तस्मिन्काले समर्पयेत् ।
स्थूलं सुदीर्घं कूष्माण्डं तस्मिन्काले मम प्रिये ॥

यदि दद्यात्स्वपत्नी वा स्वयञ्चैकाग्रमानसः ।
दक्षिणा सहितं भूमौ सद्यः पातकराशिभिः ॥

विमुक्तो यावद्बीजानि तावद्भिर्गिरि कन्यके ।
तावत्कल्पसहस्राणि वैकुण्ठे निवसत्यसौ ॥

बहुवित्तान्वितस्तत्र वसुधां बहुदक्षिणाम् ।
धेनु द्वादशकं दद्यात्तिलराशिं सदक्षिणम् ॥ १३०

दद्यान्महादानमपि राज्यश्री करुणाप्तये ।
यद्यद्दत्तं महायोगे तस्मिन्काले महेश्वरि ॥

तत्तन्मेरुसमं प्राहुः पुराणाः परमर्षयः ।
इत्थं कृत्वाऽत्र हवनं वर्षसाहस्रमादरात् ॥

पञ्चाग्निमध्यगो भूत्वा तपसा यत्फलं लभेत् ।
तत्फलं लभते नात्र सन्देहो मीनलोचने ॥

अस्मिन्मासि पुरश्चर्यां यः करोति जितेन्द्रियः ।
उक्तेनानेन विधिना वाजिमेधान् सहस्रशः ॥

कृत्वा यत्फलमाप्नोति ततोऽपि द्विगुणां शिवे ।
फलमाप्नोति तेजस्वी लक्ष्मीश्चास्य प्रसीदति ॥ १३५

आचार्यपत्न्यै श्रीबुद्ध्या तद्योगे गिरिकन्यके ।
समर्प्याभरणं हैमं सूक्ष्मवस्त्र समन्वितम् ॥

श्रियः पुत्र इति ज्ञेयो भूतले भाग्य संयुतः ।
इत्थं कृत्वा पुरश्चर्यामत्र योगेऽतिदुर्लभे ॥

जन्मकोटि समुद्भूतैरपि पातक राशिभिः ।
विमुक्तो हयमेधानां सहस्रार्जनजं फलम् ॥

महादान सहस्रस्याप्यक्षयं सुकृतं शिवे ।
लब्ध्वा नित्यं विशुद्धात्मा महदारोग्यमक्षयम् ॥

आयुष्यं चिरमासाद्य धनरत्नौघ सङ्कुलाम् ।
हस्त्यश्वरथ सङ्कीर्णां महतीं श्रियमक्षयाम् ॥ १४०

अवाप्य शक्रसदृशीं विद्याभिर्जीव सन्निभः ।
भूत्वा सिद्धयष्टकं प्राप्य पुत्रपौत्रवतीं श्रियम् ॥

साम्प्राप्य योगमष्टाङ्गं भूत्वा जातिस्मरश्चिरम् ।
दिव्यकन्या सहस्रेण सहितं सर्वभोगदम् ॥

विमानमधिरुह्यान्ते कुलसाहस्र संयुतः ।
अजरामरणो भूत्वा पञ्चविंशति वार्षिकः ॥

भगवत्सन्निधौ तिष्ठत्यन्ते भगवदाकृतिः ।
षड्विंशद्वत्सरैर्योग राजोऽयं लभ्यते शिवे ॥

अत्र दत्तस्य दानस्य हवनस्य कृतस्य च ।
नाहं शक्तः फलं वक्तुं सत्यं पङ्कजलोचने ॥ १४५

अथैक दिवसे सिद्धिर्महालक्ष्म्याः प्रवक्ष्यते ।
यच्छ्रुत्वा साधको भूमौ कृतकृत्यो भविष्यति ॥

मासि भाद्रपदे शुक्ले श्रवणर्क्ष समन्विते ।
एकादशी दिने सोमवासरेण समन्विते ॥

सौम्यवासरयुक्ते वा सुकर्म सहिते तथा ।
अतिगंडयुते वापि दिवा सन्ध्यासु वा निशि ॥

लक्ष्मी नारायणो नाम्ना महायोग उदाहृतः ।
अलभ्यः कथितो लोके सर्वकल्याण सिद्धिदः ॥

अत्र जप्तं हुतं दत्तं सर्वसिद्धिकरं स्मृतम् ।
नानेन सदृशो योगः कथ्यते परमर्षिभिः ॥ १५०

संप्राप्ते योगराजेऽस्मिन् भगवत्सहिता रमा ।
जपहोमादिकर्तॄणां महालक्ष्मीः प्रसीदति ॥

पुरश्चर्यां प्रवक्ष्यामि योगराजेऽत्र सिद्धिदे ।
अलभ्ययोगे संप्राप्ते दिवा वा सन्ध्ययोर्निशि ॥

कृत्वाऽऽदौ मङ्गलस्नानं नद्यां स्नात्वाऽथवा शिवे ।
आचार्य चरणद्वन्द्वं साष्टाङ्गं दण्डवन्नमेत् ॥

तदाज्ञां शिरसा धृत्वा लक्ष्मीनारायणौ विभू ।
चतुर्विंशति संख्याकैरुपचारैस्समर्चयन् ॥

अर्चयित्वा पञ्चशतं श्रीश्रीश द्वादशार्णया ।
ज्वलिते संस्कृते वह्नौ गुरुपादाब्ज सन्निधौ ॥ १५५

तिलैर्गव्याज्य संमिश्रैः श्रीमदष्टार्ण विद्यया ।
मधुत्रितय संमिश्रैश्शताधिक सहस्रकम् ॥

तिलैरेव हुनेदग्नौ बिल्वपत्र धृतान्वितैः ।
भगवद्विद्यया पश्चादष्टाविंशति वर्णया ॥

अष्टाविंशतिधा हुत्वा श्रीदेवीरश्मिभिर्धृतम् ।
एकैकशस्ततो हुत्वा श्रिया पञ्चदशार्णया ॥

एकैकशस्ततो हुत्वा चतुः श्रीमनुभिस्ततः ।
अष्टाविंशतिधा हुत्वा प्रत्येकं जातवेदसि ॥

केवलेन धृतेनैव ततो हुत्वा जयादिभिः ।
प्रायश्चित्ताहुतीः कृत्वा कुर्याद्ब्रह्मार्पणाहुतिम् ॥ १६०

अथाचार्य पदद्वन्द्वं प्रणिपत्याग्नि सन्निधौ ।
षष्टि चिह्नक सौवर्ण पद्मराग समन्वितम् ॥

कुण्डलद्वितयं रम्यमवश्यं वज्र बिन्दुभिः ।
अङ्कितं स्वगुरोः कर्णयुगे दातव्यमादरात् ॥

तत आचार्यपत्नी श्रीधिया भूषणसञ्चयैः ।
भूषितव्या प्रयत्नेन सूक्ष्मं वासस्समर्प्य च ॥

तिलास्समर्पितव्याश्च स्वाचार्यपदपङ्कजे ।
पञ्चाढक मितावापि चतुराढक संमिताः ॥

दातव्या अथवा शुभ्र तण्डुला द्रोणसम्मिताः ।
शतनिष्क सुवर्णं वा तदर्धं वा तदर्धकम् ॥ १६५

स्वर्णमावश्यकं देयं निष्कद्वादशकं तु वा ।
दत्वेत्थं दक्षिणाद्रव्यं कुण्डल द्वितयान्वितम् ॥

अचार्यचरणद्वंद्वे गां सवत्सां पयस्विनीम् ।
दद्यादवश्यं गिरिजे धनाढ्यश्चेत्प्रवक्ष्यते ॥

ग्रामद्वादशकं दद्याद् गोशतं च सदक्षिणम् ।
पारितोषिकदानेन सन्तोष्याचार्यमादरात् ॥

असान्निध्ये गुरोस्तस्य तनयाय महेश्वरि ।
दत्वोक्तं दक्षिणाद्रव्यं कुण्डल द्वितयान्वितम् ॥

निशि जागरणं कुर्याच्छ्री श्रीशार्चनतत्परः ।
पौराणिकं व्रतं येन कृतं तत्र मम प्रिये ॥ १७०

वाजपेयशतं तेन कृतं स्यान्नात्र संशयः ।
तस्मिन्दिने निराहारः क्षीराशी वा फलाशनः ॥

निशि जागरणं कृत्वा द्वादश्यां प्रातरुत्थितः ।
स्नात्वा कृताह्निकोऽभ्यर्च्य लक्ष्मीनारायणौ विभू ॥

चतुर्विंशक संख्याक ब्राह्मणांश्च सुवासिनीः ।
यद्वा द्वादश संख्याका मृष्टान्नैर्भोजयेद्व्रती ॥

ताम्बूल दक्षिणाद्यैश्च सन्तोष्य विधिवच्छुचिः ।
आचार्यादाशिषः प्राप्य भुञ्जीयाद्बन्धुभिस्सह ॥

लक्ष्मीनारायणे योगे पुरश्चर्यामिमां शिवे ।
यः करोति विशुद्धात्मा स सिद्धो भवति ध्रुवम् ॥ १७५

जन्मकोटि समुद्भूतैर्महापातक राशिभिः ।
कायेन मनसा वाचा ज्ञानाज्ञान कृतैरपि ॥

उपपातकसंघैश्च सद्य एव विमुच्यते ।
साङ्गदक्षिणया युक्त पुरश्चर्या शतोद्भवम् ॥

लक्ष्मीनारायणे योगे प्राप्नोति फलमुत्तमम् ।
अत्रावश्यं प्रदातव्या शालग्रामशिला शुभा ॥

लक्ष्मीनारायणे योगे शालग्राम शिलार्पणात् ।
ब्रह्माण्डकोटि दानस्य फलं प्राप्नोति शाश्वतम् ॥

लक्ष्मीनारायणे योगे कृत्वैकां वा तिलाहुतिम् ।
कोटि सहस्र होमस्य फलमक्षयमश्नुते ॥ १८०

वर्षाशनमितं द्रव्यं शतनिष्कमुदाहृतम् ।
तदर्धं वा तदर्धं वा वित्तलोभं परित्यजेत् ॥

वर्षाशनमितं द्रव्यं योगे लक्ष्मीशनायके ।
निष्कद्वादशकं वापि दत्वाऽऽचार्यपदाम्बुजे ॥

हिमवन्मेरुसदृश सुवर्णाचलदानजम् ।
फलमासाद्य शुद्धात्मा भगवत्किङ्करो भवेत् ॥

लक्ष्मीनारायणे योगे सौवर्णं कुण्डलद्वयम् ।
आचार्यकर्णयुगले दत्वा स्वर्णाचलार्पणात् ॥

यत्फलं लभते भूमौ तत्प्राप्नोत्यक्षयं फलम् ।
किञ्चासौ पितृसाहस्रं विमग्नं नरकार्णवे ॥ १८५

उद्धृत्य प्रापयत्याशु सप्तलोकं सनातनम् ।
आचार्यपत्न्यै ताटङ्काद्यलङ्कारं समर्प्य च ॥

श्रियं पश्यति चक्षुर्भ्यां साक्षाद्भगवदन्विताम् ।
लक्ष्मीनारायणे योगे धेनुं दत्वा पयस्विनीम् ॥

गवामयुतदानस्य समग्रं फलमश्नुते ।
लक्ष्मीनारायणे योगे पुरश्चरणमादरात् ॥

कृत्वाऽऽचार्यस्य सान्निध्ये श्रियमष्टगुणान्विताम् ।
महेन्द्रसदृशीं प्राप्य धनधान्यादि सङ्कुलाम् ॥

मुक्तारत्नादिसम्पूर्णां कन्दर्पसदृशः श्रिया ।
सर्वासामपि विद्यानां भूत्वा पारंगतोऽपि च ॥ १९०

समस्त सम्पदाधारो भूत्वा पुत्रादि संयुतम् ।
श्रेयोराशिमनुप्राप्य कल्याणानि दिने दिने ॥

चिरमायुष्यमासाद्य सर्वभोगसमन्वितः ।
जातिस्मरश्चिरं भूत्वा ब्रह्मदृष्ट्वा सनातनम् ॥

देहान्ते परमं धाम योगिनामपि दुर्लभम् ।
प्रयात्यत्र न सन्देहः सत्यं सत्यं मयोदितम् ॥

लक्ष्मीनारायणसमो योगोऽलभ्यो न विद्यते ।
अत्र यद्यत्कृतं कर्म तदनन्तफलं स्मृतम् ॥

इत्येकदिवसेनैव विद्यासिद्धिरुदीरिता ।
भूयोऽपि संप्रवक्ष्यामि विद्या सिद्धिकरं शिवे ॥ १९५

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
एकविंशोऽध्यायः ॥

—※—

## अथ द्वाविंशोऽध्यायः ॥

**श्रीदक्षिणामूर्तिरुवाच–**

श्रृणु देवि प्रवक्ष्यामि महालक्ष्मी महामनोः ।
भूयोऽपि सिद्धिदं कृत्यं यत्कृत्वा सिद्धिमान् भवेत् ॥

वत्सरादौ चैत्रमासे प्रतिपद्दिनमादितः ।
वासन्तं नवरात्राख्यं व्रतमस्ति महत्तरम् ॥

श्रेयस्करं महाघौघ विनाशकरमिष्टदम् ।
पुत्रपौत्रादि संपत्ति फलदं जयसिद्धिदम् ॥

समस्तसंपदां हेतुभूतं क्रतुफलप्रदम् ।
मुक्तारत्न सुवर्णादि द्रव्यराशिकरं गृहे ॥

यशस्करं पुष्टिकरं धन्यं कीर्तिप्रवर्धनम् ।
मासि चैत्राभिधे प्राप्ते प्रतिपद्दिनमादितः ॥ ५

श्रीरामजन्मनवमी यावत्तन्नवरात्रकम् ।
एकैकदिवसं तत्र महोदय समप्रभम् ॥

श्रीरामजन्मनवमी शतक्रतुफलप्रदा ।
तारं चादिति दैवत्यं बार्हस्पत्यमथापि वा ॥

तस्यां नवम्यां प्राप्तं चेत्सा महासिद्धिप्रदायिनी ।
तत्फलं न मया वक्तुं शक्यते वेधसाऽपि च ॥

सीतारामजयन्ती सा संप्रोक्ता सर्वसिद्धिदा ।
जपहोमादि जनितं फलं तत्र महत्तरम् ॥

न शक्यते मया वक्तुं ब्रह्मणा हरिणाऽपि च ।
श्रीरामजन्म दिवसं योऽवन्ध्यं कुरुते भुवि ॥ १०

स एव कृतकृत्योऽत्र भूतले गिरिकन्यके ।
श्रीरामजन्मदिवसे यत्किञ्चिदपि काञ्चनम् ॥

प्रदत्वाऽऽचार्यपादाब्जे महादानसहस्रजम् ।
फलं प्राप्य विशुद्धात्मा ब्रह्मसायुज्यमश्नुते ॥

अवश्यमिक्षुखण्डं वा कदलीफलमेव वा ।
श्रीरामजन्मदिवसे दत्वाऽऽचार्य पदाम्बुजे ॥

कल्पद्रुमवने रम्ये देहान्ते वसतिं व्रजेत् ।
श्रीमदष्टार्णमन्त्रेण राज्यलक्ष्म्यापि तद्दिने ॥

कृत्वैतामाहुतिं वह्नौ शतक्रतुफलं लभेत् ।
विधानं तत्र वक्ष्यामि वासन्ते नवरात्रके ॥ १५

प्रसन्नलक्ष्मीहृदय मन्त्रस्याष्टाक्षरस्य च ।
नवरात्रं यदा प्रोक्तं वासन्तं सर्वसिद्धिदम् ॥

प्रतिपद्दिवसे तत्र स्वाचार्याज्ञापुरस्सरम् ।
स्नात्वा तत्र विशुद्धात्मा कृतपूर्वाह्निकक्रियः ॥

जप्त्वा सहस्रं गायत्रीमथ पञ्चशतं तु वा ।
चतुःशतं वा द्वित्रिशतं ज्वलिते जातवेदसि ॥

वैदिके लौकिके वाऽपि वेदमाता घृतं गवाम् ।
अष्टाविंशतिधा हुत्वा द्वादश ब्रह्मविद्यया ॥

श्रीमदष्टार्णया पश्चादष्टोत्तरशतं हुनेत् ।
ततः प्रसन्नलक्ष्म्याऽपि हुनेदष्टोत्तरं शतम् ॥ २०

श्रीविद्यया घृतं पश्चादष्टोत्तरशतं हुनेत् ।
जपेत्पञ्चशतं नित्यं श्रीमदष्टाक्षरं मनुम् ॥

प्रतिपद्दिनमारभ्य दिवसाष्टकमादरात् ।
संकल्प्यार्कसहस्राणि जपेच्छ्रीहृदयं शिवे ॥

त्रिशतं प्रजपेन्नित्यमष्टाविंशोत्तरं श्रियः ।
सिंहासनेश्वरी पञ्चदशार्णमद्रिकन्यके ॥

राजराजेश्वरीं विद्यां लक्ष्मीनारायणाभिधाम् ।
अष्टोत्तरशतं नित्यमष्टाविंशतिधाऽपि वा ॥

जप्त्वा श्रीहृदयं स्तोत्रमाथर्वणमनुत्तमम् ।
जपेत्पश्चाधिकं चत्वारिंशदावृत्तिमादरात् ॥ २५

श्रीचक्रमर्चयेन्नित्यं शालग्रामशिलान्वितम् ।
महालक्ष्मीधिया नित्यं भोजयेच्च सुवासिनीः ॥

एकं वा मिथुनं नित्यं मृष्टान्नैस्तोषयेद्व्रती ।
ततः श्रीरामचन्द्रस्य नवम्यां प्रातरुत्थितः ॥

स्नात्वा जप्त्वाऽथ गायत्रीं नित्यहोमं समाप्य च ।
आचार्यं सन्निधौ पश्चात्संस्कृते जातवेदसि ॥

अष्टाविंशतिधा वेदमात्राऽऽदौ गोघृतं हुनेत् ।
अष्टाविंशतिधा हुत्वा श्रीश्रीश द्वादशार्णया ॥

श्रीमदष्टाक्षरेणाऽथ हुनेत्पञ्चशतं घृतम् ।
महालक्ष्मीमप्यावाह्य तस्मिन्नग्नौ त्रयीमयीम् ॥ ३०

चतुर्विंशति संख्याकानुपचारान् प्रकल्पयेत् ।
तदावरणदेवीनामेकैकामाहुतिं हुनेत् ॥

छन्द आर्षादिकं न्यस्य प्रसन्नश्रियमीश्वरीम् ।
यज्ञनारायणाङ्कस्थां ध्यात्वाऽत्र नियतव्रतः ॥

मधुत्रितय संमिश्रं तिलबिल्वदलान्वितम् ।
कदलीफलसंमिश्रं कापिलाज्य समन्वितम् ॥

शुद्धगव्याज्य युक्तं वा सहस्रं त्रिशताधिकम् ।
हुत्वा प्रसन्नलक्ष्म्याऽथ गव्येनाज्येन तत्परम् ॥

भगवद्रश्मिविद्याभिरेकैकामाहुतिं हुनेत् ।
अथ श्रियो महाराज्ञ्या रश्मिविद्याभिरादरात् ॥ ३५

एकैकामाहुतिं हुत्वा श्रियः पञ्चदशार्णया ।
अष्टोत्तरशतं गव्येनाज्येन जुहुयादथ ॥

राजराज महालक्ष्मी नारायण्या ततःपरम् ।
हुनेदष्टोत्तरशतमष्टाविंशतिधाऽपि वा ॥

राजराज महालक्ष्मी नारायण्या शुचि व्रते ।
जुहुयात्पर्वकालेऽथ एकामप्याहुतिं धृतम् ॥

सहस्रकोटिहोमस्य स लभेदक्षयं फलम् ।
पुरश्चरणहोमान्ते हुत्वाष्टाविंशदर्णया ॥

पुरश्चर्याशतफलं सद्यः प्राप्नोत्यसंशयम् ।
तस्मादवश्यं होतव्यमष्टाविंशतिवर्णया ॥ ४०

ततो जयादिभिर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
अग्निं प्रदक्षिणीकृत्य नमस्कृत्य गिरीन्द्रजे ॥

आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ।
कुण्डलद्वितयं हैमं षष्टिचिह्नकनिर्मितम् ॥

वज्रबिन्दु समायुक्तं पद्मरागसमन्वितम् ।
दद्यादाचार्यकर्णयुग्मेऽग्नि सन्निधौ ॥

पञ्चनारायणाख्योऽसौ रामो दाशरथिर्विभुः ।
जानकी सहितस्तस्य पुरश्चर्याशतोद्भवाम् ॥

ददाति बह्वीं सिद्धिं सद्य एव न संशयः ।
दुकूलयुगलं वाऽपि कार्पासमथवा मृदु ॥ ४५

अर्पयेद्धस्तयुगलं मुद्रिका अप्यनेकशः ।
दत्वा धनाढ्यो भूपो वा स्वर्णसाहस्रमर्पयेत् ॥

यद्वा वर्षशतं द्रव्यं निष्कद्वादशकं तु वा ।
तत्राऽशक्तोऽपि षाण्णिष्कं त्रिनिष्कं वा समर्पयेत् ॥

कदलीफलसंघं च तत्र श्रीगुरवेऽर्पयेत् ।
इक्षुदण्डगणोपेत नारिकेल फलान्वितम् ॥

अवश्यमर्पयेद्धीमानाचार्य चरणद्वये ।
दरिद्रो मन्दभाग्योऽपि भिक्षित्वा सर्ववर्णजान् ॥

निष्कत्रय सुवर्णं वा दत्वाचार्यपदाम्बुजे ।
कन्यां रूपवतीं दद्याच्छीलौदार्य गुणान्विताम् ॥ ५०

कुण्डलद्वितयं दातुमशक्तः कन्यकामपि ।
सूक्ष्मं वासस्समर्प्यादौ फलराशिमतःपरम् ॥

पञ्चनिष्कमितं द्रव्यमवश्यं गुरवेऽर्पयेत् ।
ददाति यदि तन्न्यूनं न सिद्धिमधिगच्छति ॥

न कार्यो दक्षिणालोभः सिद्धिमिच्छन्महत्तराम् ।
महालक्ष्मीधियाऽऽचार्यपत्नीमाकल्प्य संचयैः ॥

अवश्यमर्चयेद्धीमान् सुसूक्ष्मेण च वाससा ।
श्रीरामजन्मदिवसे य इत्थं व्रतमाचरेत् ॥

लक्ष्मीहृदयविद्यायाः प्राप्य सिद्धिं महत्तराम् ।
जानकीश प्रसादेन श्रियमैन्द्रीमचञ्चलाम् ॥ ५५

इहैवाऽऽसाद्य दीर्घायुर्धन रत्नौघ सङ्कुलाम् ।
पुत्र पौत्र समृद्धिं च कल्याणानि दिने दिने ॥

देहान्ते परमं धाम याति देवैश्च दुर्लभम् ।
तस्मिन् दिने निराहारः क्षीराशी वा फलाशनः ॥

कन्दमूलाऽशनो वाऽपि भूत्वा साधकपुङ्गवः ।
परेद्युः श्रीधियाऽभ्यर्च्य मृष्टैरन्नैस्सुवासिनीः ॥

जानकीश धिया विप्रान् भोजयित्वाऽथ साधकः ।
भुञ्जीत बन्धुभिस्सार्धं विप्रशेषान्नमादरात् ॥

वासन्ते नवरात्रे यः पुरश्चरणमुत्तमम् ।
करोति स भवेद्राम चन्द्रानुग्रहतो भुवि ॥ ६०

पारगः सर्वविद्यानां महेन्द्र सदृशः श्रिया ।
पुत्रपौत्रसमायुक्तो दीर्घायुष्य समन्वितः ॥

समस्तभोग सहितो नित्यं कल्याणसंयुतः ।
भूत्वा जातिस्मरः पश्चाद्रामं दृष्ट्वा जगत्पतिम् ॥

विमानवरमारुह्य देहान्ते कामगं शुभम् ।
कुलसाहस्र सहितो रमते हरि सन्निधौ ॥

अथान्यत्संप्रवक्ष्यामि सद्यः सिद्धिकरं भुवि ।
समस्त संपत्साम्राज्य हेतुभूतं गिरीन्द्रजे ॥

वैशाखे शुक्लपक्षे या तृतीयाऽक्षय संज्ञिता ।
बुधेन भृगुणा वाऽपि सहिता वह्निसंयुता ॥ ६५

प्रजापति युता वाऽपि समस्तफल सिद्धिदा ।
समस्ताघौघ शमनी सर्वपुण्य फलप्रदा ॥

दृष्टि त्रितय संख्याक दिवसं वत्सरे भुवि ।
अनया सदृशी नास्ति तिथिस्सकल सिद्धिदा ॥

जप्तमत्र हुतं दत्तं सर्वमक्षय सिद्धिदम् ।
अत्र जागर्ति सततं लक्ष्मीशः करुणानिधिः ॥

नारायणो महायोगी बदरीवनमध्यगः ।
स्वदर्शनोत्सुकान् दृष्ट्वा जनान् परमधार्मिकान् ॥

वदतीत्थं महायोगी तद्वदामि वचः शृणु ।
अक्षयाख्य तृतीयायां यो मामत्रागतो जनः ॥ ७०

स्नात्वा चालकनन्दायां मां पश्यति शुचिव्रतः ।
अवश्यं मम सायुज्यं दास्याम्यस्य न संशयः ॥

यत्र कुत्रापि वा भूमौ दिनेऽस्मिन्नक्षयाभिधे ।
श्रीमदष्टाक्षरीं विद्यां जपेद्यो नियतव्रतः ॥

जुहुयादाहुतिं वैकां लक्ष्मीहृदय विद्यया ।
तस्याऽक्षयां महासिद्धिमिह दत्वा महत्तराम् ॥

तद्वंश संभवानां च देहान्ते गतिमुत्तमाम् ।
अक्षयां संप्रदास्यामि वैकुण्ठे मम सन्निधौ ॥

अत्राऽऽचार्य पदाम्भोजे यं यमर्थं प्रयच्छति ।
सुवर्णं चित्रकं वा स्याद्दाम्य·याचलां श्रियम् ॥ ७५

अष्टाक्षरेण वा होमं लक्ष्मी हृदयविद्यया ।
अत्राक्षय दिने कृत्वा मदनुग्रहतो भुवि ॥

महतीं सिद्धिमासाद्य देवतैरपि पूज्यते ।
इत्याह भगवान्योगी हरिर्नारायणो विभुः ॥

नरेण सहितस्सर्व देवतानां च सन्निधौ ।
तस्मादवश्यं वैशाखे दिवसेऽक्षय संज्ञिते ॥

विशेषजपहोमादि कर्मकुर्यात् द्विजोत्तमः ।
यद्यक्षय महासिद्धिमिच्छत्यत्र नरो भुवि ॥

अक्षयायां तृतीयायामवश्यं व्रतमाचरेत् ।
एतद्व्रतसमं नान्यद्व्रतमस्ति फलप्रदम् ॥ ८०

अक्षयेष्टप्रदातृत्वादक्षयं दिवसं विदुः ।
अक्षयब्रह्म सायुज्य प्रदातृत्वेन चाक्षयम् ॥

दिवसं प्रोच्यते सद्भिर्ब्रह्माद्यैश्च महात्मभिः ।
अक्षयायां तृतीयायां प्रसन्नकमला मनोः ॥

महासिद्धिकरं वक्ष्ये पुरश्चरणमुत्तमम् ।
ब्राह्मे काले समुत्थाय ब्रह्मविद्यां प्रजप्य च ॥

रश्मिमालामनुस्मृत्य नत्वाऽऽचार्य पदाम्बुजम् ।
कृतशौचस्ततः स्नात्वा कृतसन्ध्या जपक्रियः ॥

आचार्य चरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ।
नित्यहोमं समाप्याथ श्रीमदष्टाक्षरं मनुम् ॥ ८५

जप्त्वा पञ्चशतं राज्यलक्ष्मी विद्यामतः परम् ।
शुचिः पञ्चशतं जप्त्वा गुरुपादाब्ज सन्निधौ ॥

वैश्वानरं प्रतिष्ठाप्य वेदमाता ततःपरम् ।
पञ्चविंशतिधा गव्यमाज्यं हुत्वा गिरीन्द्रजे ॥

गव्याज्यप्लुत दध्यन्नं श्रीमदष्टार्णविद्यया ।
हुत्वा पञ्चशतं देवि लक्ष्मीहृदय विद्यया ॥

पनसस्य फलैर्बीज रहितैर्मधु मिश्रितैः ।
घृतप्लुतैर्हुनेदग्नौ सहस्रं त्रिशताधिकम् ॥

तदभावे हुनेदग्नौ क्षीरान्नं त्रिमधुप्लुतम् ।
भगवद्रश्मिविद्याभिः घृतमेकैकशो हुनेत् ॥ ९०

राजराज महालक्ष्मी नारायण्या ततः परम् ।
अष्टाविंशतिधा हुत्वा ललिता रश्मिभिस्ततः ॥

घृतमेकैकशो हुत्वा श्रिया पञ्चदशार्णया ।
अष्टोत्तरशतं गव्येनाज्येन जुहुयादथ ॥

हुत्वा जयादिभिः पश्चात्कृत्वा ब्रह्मार्पणाहुतिम् ।
अग्निं प्रदक्षिणीकृत्य नमस्कृत्य च सादरम् ॥

चक्रराजं समभ्यर्च्य शालग्राम शिलामपि ।
श्रीश्रीशद्वादशार्णया यजेत्पञ्चशतं शिवे ॥

पनसस्य फलोपेतं सूपापूप फलान्वितम् ।
दध्यन्न सहितं देवि दध्यन्नं च समर्पयेत् ॥ ९५

ततऽऽचार्यमलङ्कृत्य प्रणिपत्य च सादरम् ।
दत्वा गोद्वितयं वत्स बहुक्षीर समन्वितम् ॥

वर्षाशनमितं द्रव्यं तदर्धं वा तदर्धकम् ।
त्रिनिष्कमथवा दत्वा गुरुपत्न्यै रमाधिया ॥

सूक्ष्मं वासोऽप्यलङ्कारं दत्वा संभोजयेद्द्विजान् ।
सुवासिनीश्च संभोज्य सिद्धिमाप्नोत्यनुत्तमाम् ॥

भगवत्सहिता तस्य महालक्ष्मीः प्रसीदति ।
सन्तति व्यापिनीं लक्ष्मीं धनधान्यादिसङ्कुलाम् ॥

अक्षयं महदारोग्यमायुष्यं च महत्तरम् ।
अक्षयामपि वाक्सिद्धिमक्षयां पुत्रसन्ततिम् ॥ १००

अक्षयानखिलान्भोगान् ददातीह हरिप्रिया ।
अक्षयं ब्रह्मसायुज्यं देहान्तेऽस्य प्रयच्छति ॥

श्रियः प्रसाद सिद्ध्यर्थमवश्यं दिवसेऽक्षये ।
वैशाखे मासि कर्तव्यं व्रतमेतदनुत्तमम् ॥

यद्वाऽक्षय तृतीयायामित्थं कृत्वा गिरीन्द्रजे ।
निष्कमेकं प्रदत्वा वा स्वाचार्य चरणद्वये ॥

पूर्णिमान्तं व्रतं कुर्यात्सिद्धिमिच्छन्महत्तराम् ।
अक्षयायां तृतीयायां कृत्वेत्थं होममादरात् ।

दत्वा निष्कद्वयं वाऽपि स्वाचार्य चरणद्वये ।
आचार्यपत्न्यै निष्कार्धं लक्ष्मी बुद्ध्या समर्प्य च ॥ २०५

श्रीमदष्टाक्षरी विद्यां प्रसन्न श्रीमहामनुम् ।
जप्त्वा पञ्चशतं नित्यं प्रत्येकं जातवेदसि ॥

अष्टाविंशतिधा हुत्वा वेदमात्रादितो घृतम् ।
श्रीमदष्टाक्षरेणाऽथ दध्यन्नं घृतमिश्रितम् ॥

अष्टोत्तरशतं हुत्वा रमाहृदय विद्यया ।
दध्यन्नमेव जुहुयात् षट्येनुघृतप्लुतम् ॥

भगवद्रश्मि विद्याभिर्घृतमेकैकशो हुनेत् ।
अष्टाविंशतिधा हुत्वा ततोऽष्टाविंशदर्णया ॥

सुन्दरी रश्मि विद्याभिर्घृतमेकैकशो हुनेत् ।
अष्टाविंशतिधा हुत्वा श्रियः पञ्चदशार्णया ॥ ११०

रमानारायण प्रीत्यै मिथुनं भोजयेदपि ।
पूर्णिमान्तमिदं कृत्वा पूर्णिमादिवसे ततः ॥

स्नात्वा प्रातर्विशुद्धात्मा कृतपूर्वाह्लिक क्रियः ।
समाप्यावश्यकं कर्म संस्कृते जातवेदसि ॥

अष्टाविंशतिधा वेदमात्राऽऽदौ जुहुयाद्घृतम् ।
दध्यन्नघृत संमिश्रं श्रीमदष्टार्ण विद्यया ॥

आदौ पञ्चशतं हुत्वा रमाहृदय विद्यया ।
दध्यन्नमेव जुहुयात्पनसस्य फलान्वितम् ॥

शताधिक सहस्रं च घृतमिश्रं गिरीन्द्रजे ।
भगवद्रश्मि विद्याभिरेकैकामाहुतिं हुनेत् ॥ ११५

गोघृतेनैव जुहुयादष्टाविंशतिवर्णया ।
अष्टाविंशतिधा पश्चाच्छ्रियो रश्मिभिरप्यथ ॥

एकैकशो हुनेदाज्यं मधुपञ्चदशार्णया ।
अष्टोत्तरशतं हुत्वा घृतेनैव गिरीन्द्रजे ॥

जयादि होमं कृत्वाऽथ प्रायश्चित्ताहुतीरपि ।
ब्रह्मार्पणाहुतिं कृत्वा नमस्कृत्वाऽथ पावकम् ॥

आचार्यं समलङ्कृत्य गन्धपुष्पाक्षतादिभिः ।
अवश्यमपि दातव्यं कुण्डलद्वयमादरात् ॥

कुण्डलद्वितयं दातुमशक्तो यदि पार्वति ।
मुक्तालङ्करणं वापि रत्नालङ्करणं तु वा ॥ १२०

यावच्छक्यमलङ्कारं दत्वाऽऽचार्यस्य कर्णयोः ।
पलमेकं सुवर्णं वा तदर्धं वा तदर्धकम् ॥

तत्राशक्तस्त्रिनिष्कं वा गुरुपादाम्बुजेऽर्पयेत् ।
अवश्यं गौः प्रदातव्या बहुक्षीरा सवत्सका ॥

आचार्यपत्नीं श्रीबुद्ध्या वासोऽलङ्करणादिभिः ।
अर्चयेदथवा लक्ष्मीं सन्निधौ सम्यगर्पयेत् ॥

प्रेषयेदर्पितद्रव्यं गुरवे तत्सुताय वा ।
तत्पत्न्यै वा सुतायै वा तत्पौत्रायाथवार्पयेत् ॥

आचार्यादाशिषः प्राप्य स्वयं भुञ्जीत वाग्यतः ।
पुरश्चर्याव्रतमिदं वैशाखे मासि पार्वति ॥ १२५

यः करोति विशुद्धात्मा देवतैरपि दुर्लभाम् ।
सिद्धिं प्राप्नोति महतीं सद्यः प्रत्ययकारिणीम् ॥

व्रतेन हीनोऽपि विमूढधीर्वा
मूर्खो दरिद्रः कृपणोपि वाऽथ ।
धनैश्च धान्यैर्मणिभिश्च संकुलां
लक्ष्मीमवाप्नोति रमा प्रसादात् ॥

अवश्यमाप्नोत्यनधीत विद्या
अपि श्रियोनुग्रहतोऽथ राज्यम् ।
रथाश्वमत्तेभ पदाति पूर्णां
राज्यश्रियं विन्दति वत्सरेऽत्र ॥

आकल्पमस्यान्वय संभवाश्च
विन्दन्ति राज्यश्रियमक्षयां च ।
आयुष्यमारोग्यं धनाभिवृद्धिं
वंशाभिवृद्धिं च महेन्द्र तुल्याम् ॥

अवाप्य लक्ष्मीमतुलांश्च भोगान्
योगं तथाष्टाङ्गमुपेत्य पश्चात् ।

कलेबरान्ते हरिपार्श्ववर्ती
निरञ्जनस्साम्यमुपैति दिव्यम् ॥ १३०

सहस्रशोऽप्यस्य कुले प्रसूता
रमा प्रसादान्निरयेऽपि मग्नाः ।
धातुः पदं यान्त्यति भोगयुक्ता
आरुह्य यानं गिरिराजकन्ये ॥

समस्त सिद्धिकरं नानेन तुल्यं गिरिराजकन्ये ।
श्रुतौस्मृतौ वाऽथ पुराणसंचये सद्यो रमानुग्रह दायकेन ॥

वैशाखमासे दिन मक्षयाख्य-
याऽऽरभ्य तत्पूर्णदिने समाप्य ।
नाप्नोति किं किं वरमिष्टजातं
श्रियः प्रसादाद्गिरिजेन्द्र कन्ये ॥

दक्षः पुलस्त्यः पुलहो वसिष्ठः
शुक्रोङ्गिराः कौशिक वंशदीपः ।
कृत्वा व्रतं प्राप्य महार्थसिद्धिं
चरन्ति लोकेषु विमुक्तबंधाः ॥

पुरश्चर्या व्रतमिदं वैशाखे मासि सिद्धिदम् ।
कृत्वाऽवश्यं नरः साक्षान्महालक्ष्मीं प्रपश्यति ॥ १३५

प्रसन्नायां जगद्धात्र्यामसाध्यं किं जगत्त्रये ।
ब्रह्मर्षयो वसिष्ठाद्याः शक्राद्याश्च दिगीश्वराः ॥

ब्रह्मादयोऽपि कृत्वैतद्व्रतमत्यन्त पावनम् ।
महालक्ष्मीप्रसादेन लक्ष्मीशानुग्रहादपि ॥

असाधारण सामर्थ्यं श्रियमष्टगुणान्विताम् ।
सम्प्राप्य भगवत्साम्यं सततं सुखिनोऽभवन् ॥

पुरश्चर्या व्रतं वक्ष्ये भूयोऽन्यरिसद्धिदायकम् ।
महापापौघ दलनं शतक्रतु फलप्रदम् ॥

सिंहराशिं सुराचार्ये गमिष्यति यदा शिवे ।
तत्रार्कदिवसं चादावन्ते पुष्कर संयुतम् ॥ १४०

गोदावर्यां महत्पुण्यं पर्वोक्तं परमर्षिभिः ।
कोटित्रितय तीर्थानि सार्धकोटियुतानि च ॥

सिंहस्थिते सुराचार्ये समायान्त्येव गौतमीम् ।
दिनद्वादशकं तत्र पुष्करस्तीर्थनायकः ॥

आदावन्ते समायाति सर्वपापौघभेदनः ।
भिक्षान्नमपि दत्वा वा गौतम्यां पुष्करागमे ॥

मेरुतुल्यान्नदानस्य फलमाप्नोति शाश्वतम् ।
ब्रह्मघ्नो वा सुरापायी स्तेयी वा गुरुतल्पगः ॥

तत्संयोगी वा पशुघ्नो वा बालघ्नस्तस्करोऽपि वा ।
विश्वस्त विषदाता च गर्भघाती सहस्रशः ॥ १४५

भ्रूणघ्नो वीरहा वापि मातृहा पितृहाऽपि वा ।
आहार नियमं कृत्वा योगे पुष्कर नामके ॥

गौतम्यां प्रातरुत्थाय स्नात्वा नित्यविशुद्धधीः ।
दिनद्वादशकान्मुक्तः सर्वपापैर्भवत्यसौ ॥

भाषारचित मंत्रं वा तत्र जप्त्वा दिने दिने ।
देवतानुग्रहं प्राप्य सिद्धिमिष्टां व्रजत्यसौ ॥

आचार्यायाथवाऽन्यस्मै यत्किञ्चिदपि काञ्चनम् ।
दत्वा मेरुसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ॥

एकामप्याहुतिं तत्र कृत्वा साधकपुङ्गवः ।
कोटि होमफलं नित्यं प्राप्नोति गिरिकन्यके ॥ १५०

अयं द्वादशभिर्वर्षैर्लभ्यते योगराट् शिवे ।
गोदावरी तटे रम्ये नाऽन्यत्र भुवि पार्वति ॥

पुरश्चर्याभिधं तत्र महासिद्धि प्रदायकम् ।
तत्कथयामि गिरिजे शृणुष्व सुसमाहिता ॥

यस्मिन्दिने सुराचार्यस्सिंहराशिं गमिष्यति ।
गोदावरी तटं गत्वा नमस्कृत्याऽथ गौतमीम् ॥

आचार्य चरणद्वन्द्वं प्रणिपत्य च दण्डवत् ।
गोदावर्यां ततः स्नात्वा कृतपूर्वाह्णिक क्रियः ॥

आचार्यं चरणद्वन्द्वं भूयोऽपि प्रणिपत्य च ।
अष्टोत्तरशतं हुत्वा गायत्र्याऽऽज्यं दिने दिने ॥ १५५

श्रीमदष्टाक्षरेणापि शतमष्टोत्तरं हुनेत् ।
क्षीरान्नं मधुसंमिश्रं कपिलाज्येन संप्लुतम् ॥

तिल बिल्वदलोपेतं लक्ष्मी हृदय विद्यया ।
अपि पञ्चशतं हुत्वा श्रीयुक्ताष्टर्णयाप्यथ ॥

अष्टाविंशतिधा हुत्वा भगवद्रश्मि मन्त्रकैः ।
घृतमेकैकशो हुत्वा सुन्दरी रश्मिभिस्ततः ॥

एकैकशो हुवेदाज्य मथ पञ्चदशार्णया ।
अष्टाविंशतिधा हुत्वा प्रायश्चित्ताहुतीस्त्यजेत् ॥

ब्रह्मार्पणाहुतिं कृत्वा नत्वाऽग्नि तत आदरात् ।
भोजयेन्मिथुनद्वन्द्वं श्रियं पञ्चशतं जपन् ॥ १६०

दिवसद्वादशके कुर्यान्महासिद्धिकरं व्रतम् ।
दानक्रमं प्रवक्ष्यामि दिनेषु द्वादशस्वथ ।

आद्ये गोपञ्चकं दद्याद्बहुदक्षिणयाऽन्वितम् ॥
पक्व सस्ययुतां भूमिं द्वितीये दिवसेऽर्पयेत् ।

पञ्चाढकमितं दद्यात्तिलराशिं तृतीयके ।
सहस्र दक्षिणायुक्तं वर्षद्रव्ययुतं तु वा ॥

पलमान सुवर्णं वा चतुर्थे दिवसेऽर्पयेत् ।
दुकूल युगलं वाऽपि कार्पास द्वितयं तु वा ॥

प्रदद्याद्दक्षिणायुक्तं पञ्चमे दिवसे शिवे ।
खारि द्वादशकं धान्यं यद्वा खारीचतुष्टयम् ॥ १६५

षष्ठे दिने व्रती दद्याद् बहुदक्षिणयाऽन्वितम् ।
सप्तमे दिवसे दद्याद् गुडं दक्षिणयाऽन्वितम् ॥

पञ्चाढकमितं यद्वा प्रदद्यादाढकं गुडम् ।
पलद्वादशकं रौप्यं चतुःपलमितं तु वा ॥

अष्टमे दिवसे दद्याल्लवणाचल मप्यथ ।
पञ्चाढकमितं वापि प्रदद्यान्नवमी दिने ॥

आन्दोलिकां मनोरम्यां बहुदशिणयाऽन्विताम् ।
हस्त्यश्व रथसंपूर्णां नवमे दिवसेऽर्पयेत् ॥

वर्षाशन मितद्रव्य सहितं नवमन्दिरम् ।
दशमे दिवसे दद्या द्वासोर्ण करणान्वितम् ॥ १७०

मुक्ताफलानि रत्नानि दद्यादेकादशे दिने ।
द्वादशे दिवसे दद्यात्सुवर्णानि सहस्रशः ॥

धनाढ्यो राजपुत्रश्च दीक्षामित्थं समाचरेत् ।
अथवाऽऽचार्य पादाब्जे दद्यादेकोत्तरं धनम् ॥

एकैकां धेनुमथवा दद्यात्प्रतिदिनं बुधः ।
कुण्डलादीनलङ्कारान् तस्मिन् योगे समर्पयेत् ।।

एकैकं निष्कमथवा पुष्करे गौतमीतटे ।
आचार्यायार्पयेत्स्वर्णं द्विगुणं द्वादशे दिने ।।

तत्राप्यशक्तो निष्कार्धं प्रत्यहं गुरवेऽर्पयेत् ।
तत्राप्यशक्त स्तत्रार्धं वित्तलोभं परित्यजेत् ।। १७५

सप्तद्वीपवतीं भूमिं धनधान्यादि सङ्कुलाम् ।
आचार्यायार्पयित्वाऽपि स्यादृणी प्रत्यहं शिवे ।।

दत्वा महीं समग्रां च धन रत्नौघ सङ्कुलाम् ।
वस्त्रप्रक्षालनाद्यैश्च पादसंवाहनादिभिः ।।

उच्छिष्ट मार्जनाद्यैश्च गृह संमार्जनादिभिः ।
शुश्रूषां नियतः कुर्यादवश्यं प्रत्यहं बुधः ।।

महापुष्करयोगेऽस्मिन् साक्षाल्लक्ष्मीधिया पुनः ।
आचार्यपत्नीं वासोभिर्भूषयेद्दिव्यभूषणैः ।।

युग्मद्वादशकं भोज्यं मृष्टान्नै र्द्वादशे दिने ।
इत्थं पुष्करयोगेऽस्मिन् कृत्वा गोदावरीतटे ।।

पुरश्चर्याव्रतं लक्ष्म्या लभेत्सिद्धिं महत्तराम् ।
साङ्गदक्षिणया युक्तपुरश्चर्या सहस्रजम् ।।

अवश्यं फलमाप्नोति संशयो नात्र विद्यते ।
धनधान्य गजाश्वादि संपूर्णां रत्नसङ्कुलाम् ॥

अचलां महतीं लक्ष्मीं वर्षात्प्रागेव साधकः ।
प्राप्य शक्र धनेशादि श्रियं तृणगणायते ॥

कन्दर्प सदृशः कान्त्या वृद्धोऽपि तरुणायते ।
पद्मराग शिरोरत्न द्विगुणीकृत रोचिषः ॥

प्रयच्छन्तोऽपि सर्वस्वं सेवन्ते चामराधिपाः ।
मन्दबुद्धिर्जडो वापि विद्यास्वष्टादशस्वपि ॥ १८५

भूत्वा पारंगतः साक्षाद्वाचस्पति समो भवेत् ।
स्वच्छन्दमरणोभूत्वा यम तत्किङ्करानपि ॥

तृणीकृत्य पदं याति शरीरान्ते श्रियःपतेः ।
पितुर्मातुश्च भार्याया निमग्नान्नरकार्णवे ॥

उद्धृत्य कुलसाहस्रं नयति ब्रह्म शाश्वतम् ।
वंशाभिवृद्धिमाकल्पं प्राप्नोति श्रीसमन्विताम् ॥

इत्थं पुष्कर योगेऽस्मिन् पुरश्चर्या मयेरिता ।
अनुग्रहकरी लक्ष्म्या नाऽपरास्ति श्रुतौ स्मृतौ ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
द्वाविंशोऽध्यायः ॥

## अथ त्रयोविंशोऽध्यायः ॥

श्रीदक्षिणामूर्तिरुवाच –

सद्यस्सिद्धिकरं भूमौ महालक्ष्म्या गिरीन्द्रजे ।
भूयोपि सम्प्रवक्ष्यामि श्रोतुं त्वं नियता भव ॥

अमावास्या पौर्णमासी महापर्वद्वयं स्मृतम् ।
अमाप्रतिपदोस्सन्धौ राहुग्रहणे रविर्यदि ॥

ग्रस्तोऽथ केतुनावापि ग्रहणं पर्व तद्विदुः ।
पूर्णा प्रतिपदोःसन्धौ राहुणा केतुनाह्यपि ॥

ग्रस्तस्स्याद्यदि शीतांशुस्सोमग्रहणमुच्यते ।
भानुवासर सम्युक्तमिन्दुवारयुतं तु वा ॥

चूडामण्यभिधं पर्व तदुक्तं परमर्षिभिः ।
प्रत्यक्षं सर्वलोकानां रवीन्दुग्रहणं शुभम् ॥ ५

सद्यः पातकराशिघ्नं सद्यः पुण्यफलप्रदम् ।
अपमृत्युप्रशमनं विजयश्री फलप्रदम् ॥

सद्यः सिद्धिकरं नैतत्सदृशं विद्यते भुवि ।
यत्किञ्चिदपि जप्तं वा हुतं दत्तमथापि वा ॥

रवीन्दुग्रहणे पुण्यं कोटि कोटि गुणं विदुः ।
जातकं मृतकं वात्र सूतकं नैव विद्यते ॥

महोदधौ वा नद्यां वा रवीन्दुग्रहणे शिवे ।
स्नानमाचरितं येन स सद्यः पापराशिभिः ॥

कोटिजन्मसमुद्भूतैरपि विप्रो विमुच्यते ।
गोचर्म सम्मिता भूमिर्येन तत्र प्रदीयते ॥ १०

बहुसस्य समायुक्ता दक्षिणा सहिता भुवि ।
सप्तद्वीपवतीं पृथ्वीं धनधान्यादि संकुलाम् ॥

शतकृत्वः प्रदत्वा यत् फलं प्राप्नोति भूतले ।
तदवश्यं फलं मर्त्यः प्राप्नोति भुवि साधकः ॥

सुवर्णमत्र यो दद्यादपि चिन्हुकमात्रकम् ।
हेमाद्रिसदृश स्वर्णदानस्य फलमश्नुते ॥

योऽत्रैकां गां बहुक्षीरां दद्याद्वत्स समन्विताम् ।
गोकोटिदानपुण्यं प्राप्नोत्यत्र न संशयः ॥

अग्नेरपत्यं प्रथमं हिरण्यं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
दत्तास्त्रयस्तेन भवन्ति लोका
यः काञ्चनं गां च महीं च दद्यात् ॥ १५

तुलाहिरण्यगर्भादि दानानामत्र पार्वति ।
महाफलप्रदः कालो ब्रह्मविद्भिरुदीरितः ॥

यं कञ्चिदपि वा मन्त्रमाचार्याज्ञा पुरस्सरम् ।
हुत्वा जप्त्वाऽत्र वाचार्य पादाब्जयुगले शिवे ॥

यत्किञ्चिदपि वा दत्वा दरिद्रोऽपि महत्फलम् ।
अवाप्य सिद्धिमाप्नोति श्रीप्रसादं व्रजत्यपि ॥

राजा वा राजपुत्रो वा धनाढ्यो वाऽत्र भूतले ।
यच्च यावच्च सर्वस्वं रवीन्दुग्रहणे शुभे ॥

दद्यादाचार्यपादाब्जे साक्षाद्ब्रह्म प्रपश्यति ।
पितरं मातरं वापि समुद्दिश्य मृतानपि ॥ २०

बहुक्षीरां सवत्सां गां यो ददात्यत्र साधकः ।
महापापौघ सहिता अपि ते पितरश्शिवे ॥

मग्नाश्च नरके घोरे विमुक्ता नरकार्णवात् ।
प्रयान्ति सद्य एवैते सत्यलोकं सनातनम् ॥

समस्तेष्वपि शास्त्रेषु पर्वग्रहणसन्निभम् ।
सद्यः सिद्धिकरं नोक्तं तस्मादत्र प्रवक्ष्यते ॥

एवं भूग्रहणात्पूर्वं दिनपञ्चकमादरात् ।
दिनत्रयं वा प्रयतो ब्रह्मचारी फलाशनः ॥

क्षीराशी वा हविष्याशी फलैर्बिल्वैर्घृतप्लुतैः ।
यद्वा घृतप्लुतैर्बिल्व पत्रैस्तिल समन्वितैः ॥ २५

अष्टोत्तरशतं हुत्वा श्रीमदष्टार्ण विद्यया ।
अष्टोत्तरशतं राज्यलक्ष्म्याऽपि जुहुयादथ ॥

सुन्दरी भगवद्विद्ययाऽपि द्वादशधा हुनेत् ।
केवलेन घृतेनैव श्रियः पञ्चदशार्णया ॥

अष्टाविंशतिधा हुत्वा प्राप्ते सूर्येन्दुपर्वणि ।
स्पर्शकाले महानद्यां सागरे वा सरस्यपि ॥

उष्णोदकेन वा स्नात्वा दुर्बलो रोगपीडितः ।
गुरुपादाब्जयुगलं प्रणम्य भुवि दण्डवत् ॥

वैश्वानरं प्रतिष्ठाप्य संस्कृतं विधिवच्छुचि ।
उत्पलैर्जुहुयादग्नौ तिल गव्याज्यमिश्रितैः ॥ ३०

अष्टोत्तरशतं पूर्वं श्रीमदष्टार्णविद्यया ।
अथ प्रसन्नलक्ष्म्या त्रिशताधिक सहस्रकम् ॥

जुहुयात्संस्कृते वह्नावुत्पलैर्घृतमिश्रितैः ।
उत्पलानामभावे तु बिल्वपत्रैः घृतप्लुतैः ॥

तिलमिश्रैः हुनेदग्नौ तदभावे गिरीन्द्रजे ।
हुनेच्छुद्धतिलैरेव घृतत्रिमधुमिश्रितैः ॥

भगवद्रश्मि विद्याभिः घृतमेकैकशो हुनेत् ।
ललितारश्मि विद्याभिरेकैका माहुतिं घृतम् ॥

हुत्वा पञ्चदशाक्षर्या श्रियोऽष्टाविंशतिं हुनेत् ।
प्रायश्चिताहुतीः कृत्वा कुर्याद्ब्रह्मार्पणाहुतिम् ॥ ३५

अग्निं प्रदक्षिणीकृत्य स्वाचार्य चरणद्वयम् ।
साष्टाङ्गं दण्डवन्नत्वा तत आकल्प्य संचयैः ॥

कुण्डलाद्यैरलंकृत्य वासोयुग्मं समर्प्य च ।
समर्पयेद्ग्राममेकं बहुधान्य धनान्वितम् ॥

सालग्रामशिलामेकां गोद्वयं पयसान्वितम् ।
शय्यां सोपस्करां दद्याद्गजानश्वान् पशूनपि ।

आन्दोलिकां च शिबिकां श्वेतच्छत्रं सचामरम् ॥
तुला हिरण्यगर्भादि दानान्यपि समर्पयेत् ॥

तेष्वशक्तस्य वक्ष्यामि दक्षिणाद्रव्यमीश्वरि ।
कुण्डलद्वितयं दत्वा गुरोः कर्णयुगे शिवे ॥ ४०

मुक्तालङ्करणं दद्यात्तत्राशक्तो गिरीन्द्रजे ।
रत्नालङ्करणं यद्वा रुद्राक्षाभरणं तु वा ॥

अवश्यमपि दातव्या सालग्रामशिलाऽमुना ।
गोचर्व्यसंमिता भूमिर्बहुसस्य समन्विता ॥

अवश्यमपि दातव्या शताढकमिता तु वा ।
तस्या अभावे तन्मूल्यं वर्षाशनमितं स्मृतम् ॥

एकविंशति निष्कं वा निष्कद्वादशकं तु वा ।
षण्णिष्कमथवा दद्याद्वित्तलोभं परित्यजेत् ॥

धेनुद्वयं प्रदातव्यमवश्यं गिरिकन्यके ।
तन्मूल्यमथवा दद्यात्ततः साक्षाद्रमाधिया ॥ ४५

दद्यादाचार्यपत्न्यै च ताटङ्काभरणादिकम् ।
युग्मद्वादशकं भोज्यं मृष्टान्नेन ततःपरम् ॥

आचार्यालिङ्गनं प्राप्य गृहीत्वाऽथ तदाशिषः ।
प्राप्नोति महतीं सिद्धिं योगिनामपि दुर्लभाम् ॥

प्रागेव वत्सराल्लक्ष्मीं धनधान्यादि संकुलाम् ।
मुक्तारत्नगणाकीर्णामचलां प्राप्नुयादसौ ॥

राजानो राजपुत्राश्च सचिवास्तस्य मन्त्रिणः ।
दासभूता भवन्त्यस्य प्रयच्छन्त्यपि वांछितम् ॥

पूज्यते सर्वलोकेषु सततं विजयी भवेत् ।
पुत्रपौत्रप्रपौत्राद्यैर्भोगान् भुङ्क्तेऽखिलानपि ॥ ५०

वाक्सिद्धिं महतीं प्राप्य सुराचार्य समप्रभाम् ।
दीर्घमायुष्यमासाद्य विमुक्तो रोगसंचयैः ॥

कुलसाहस्रसहितो दिव्यभोगसमन्वितः ।
अजरामरणो भूत्वा भगवत्सदृशाकृतिः ॥

दिव्यकन्याशतयुतो विमानं सर्वकामदम् ।
आरुह्य भगवद्धाम्नि वसत्यन्ते न संशयः ॥

ग्रहणद्वितये कृत्वा ग्रहणत्रितयेऽपि वा ।
पुरश्चर्यामिमां देवि महालक्ष्मीं हरिप्रियाम् ॥

साक्षात्पश्यति चक्षुर्भ्यां नारायणसमन्विताम् ।
अणिमादिगुणान् प्राप्य जातिं स्मृत्वाऽथ पौर्विकीम् ॥५५

महेन्द्रसदृशो लक्ष्म्या पुत्रपौत्र सुखान्वितः ।
ब्रह्मेन्द्राद्यमरान्नित्यं पश्यन् हर्षसमन्वितः ॥

स्वच्छन्दमरणो भूत्वा योगमष्टाङ्गसंयुतम् ।
सम्प्राप्य ब्रह्मसायुज्यं प्राप्नोत्येव सुनिश्चितम् ॥

वैष्णवर्क्षस्थिते भानौ वैष्णवर्क्ष समन्विता ।
माघमासाद्याऽमावास्या भानुवासर संयुता ॥

व्यतीपात समायुक्ता तत्रार्धोदय नामकः ।
अलभ्ययोग उक्तोऽयं लभ्यते बहुवत्सरैः ॥

इन्दुवासर युक्ता चेन्महोदय इति स्मृतः ।
योगद्वयमिदं प्राहुरलभ्यं भुवि दुर्लभम् ॥ ६०

सद्यः पातकराशिघ्नं सर्वरोगनिबर्हणम् ।
समस्तदुःखशमनं संसारार्णवतारकम् ॥

योगेऽस्मिन् समनुप्राप्ते गुरोराज्ञापुरस्सरः ।
स्नात्वा महोदधौ नद्यां तटाके वा गृहेऽपि वा ॥

समाप्य नैत्यकं कर्म विधिवत्संस्कृतेऽनले ।
अष्टोत्तरशतं हुत्वा वेदमात्रा घृतं गवाम् ॥

अष्टोत्तरशतं श्रीमदष्टार्णेनाथ पायसम् ।
मधुत्रितय संयुक्तं गव्याज्येन विमिश्रितम् ॥

त्रिशताधिक साहस्रं लक्ष्मीहृदय विद्यया ।
हुत्वाऽथ भगवद्रश्मि विद्याभि र्जुहुयाद् घृतम् ॥ ६५

ललिता रश्मि विद्याभिः शतमेकैकशो हुनेत् ।
श्रियः पञ्चदशाक्षर्या शतमष्टोत्तरं घृतम् ॥

हुत्वा चतुः श्रीमनुभिर्हुनेद् द्वादशधा घृतम् ।
सुन्दरी भगवद्विद्ययाऽष्टाविंशतिधाप्यथ ॥

हुत्वा जयादिभिर्हुत्वा प्रायश्चित्ताहुतिः क्रमात् ।
महाव्याहृतिभिर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥

अग्निं प्रदक्षिणीकृत्य स्वाचार्य चरणद्वयम् ।
सादरं प्रणिपत्याऽथ स्वर्णालङ्करणैः शुभैः ॥

अलङ्कृत्य ततः कांस्य पात्रे निक्षिप्य काञ्चनम् ।
शतमानं तदर्धं वा तदर्धं वा तदर्धकम् ॥ ७०

वित्तशाठ्यं परित्यज्य दत्वाचार्यं पदाब्जयोः ।
सवत्सां सुबहुक्षीरां दद्याद्गां च पयस्विनीम् ॥

चतुष्षष्टिपलं कांस्य पात्रं विंशत्पलं तु वा ।
नववस्त्र समायुक्तं भूषणादिभिरन्वितम् ॥

समर्पयेद्गुरोः पत्न्यै महालक्ष्मीधिया शिवे ।
सुवासिनीश्च विप्रांश्च यथाशक्त्याऽथ तोषयेत् ॥

लक्ष्मी हृदय विद्यायाश्श्रीमदष्टाक्षरस्य च ।
महात्रिपुरसुन्दर्याः संसिद्धिं प्राप्नुयात्पराम् ॥

अलभ्येऽर्धोदये प्राप्ते योगे यद्वा महोदये ।
इत्थं कुर्यात्पुरश्चर्यां विधिनाऽनेन साधकः ॥ ७५

शतक्रतुफलं सम्यक् साङ्गदक्षिणयान्वितम् ।
अवाप्य महतीं लक्ष्मीं पुरश्चर्या शतोद्भवाम् ॥

विमुक्तस्सर्व पापौघैस्सर्वदेवमयो भवेत् ।
ऐश्वर्यारोग्य सन्तानैः कश्यपेन समप्रभः ॥

अवाप्य महदैश्वर्यं मणिमादि गुणान्वितम् ।
कुलसाहस्रमुद्धृत्य भगवद्धाम्नि मोदते ॥

अर्धोदये च संप्राप्ते संप्राप्ते वा महोदये ।
शक्तश्चेत्सर्वदानानि दद्याद्विप्रेभ्य आदरात् ॥

पायसं कांस्य पात्रस्थं विप्रायाऽवश्यमर्पयेत् ।
तिलधेनुं घेनुदुग्धं गुडधेनुमथापि वा ॥ ८०

क्षीरिणी मथवा दद्याद् द्विमुखीं गां सदक्षिणाम् ।
धनाढ्यो लवणाद्यादि गिरि धान्यान्यथार्पयेत् ॥

तुला हिरण्यगर्भादि दानान्यपि समर्पयेत् ।
सुवर्णं राजतं गां च लवणं च तिलान्यपि ॥

दद्याद्वासो गुडमपि ग्रहणे च महोदये ।
दानान्येतानि विप्रेभ्यः श्रोत्रियेभ्यस्समर्पयेत् ॥

पलद्वयमितं रौप्य पात्रं पलमितं तु वा ।
सुवर्णरचितं पात्रं धनाढ्यश्चेत्समर्पयेत् ॥

यागद्रव्यं प्रदद्याद्यः स्वाचार्य पदपङ्कजे ।
सहस्रं त्रिशतं वापि शत वा द्वादशाश्रितम् ॥ ८५

महोदये वा ग्रहणे प्रदत्वा साधकोत्तमः ।
यत्पुण्यं समवाप्नोति तद्वक्तुं नैव शक्यते ॥

आचार्य पादयुगले नारायणधिया शिवे ।
साङ्गं यागधनं दत्वा कुलकोटि समन्वितः ॥

अवश्यं भगवद्धाम्नि मोदते नाऽत्र संशयः ।
ब्राह्मेमुहूर्त उत्थाय श्रीश्रीश द्वादशाक्षरीम् ॥

त्रिशतं द्विशतं वापि प्रजप्त्वाऽष्टोत्तरं शतम् ।
रश्मिमाला मनुस्मृत्य कृत्वा सन्ध्यादिकाः क्रियाः ॥

सहस्रं प्रजपेन्नित्यं श्रीमदष्टाक्षरं शुभम् ।
अथ पञ्चशतं वापि जप्त्वा वा त्रिशतं शिवे ॥ ९०

राज्यलक्ष्मी महाविद्यां श्रियः पञ्चदशार्णया ।
भृगुवारव्रतं कुर्वन् चक्रराजं समर्चयेत् ॥

धनेश सुरराजाभ्यां सदृशोमचलां श्रियम् ।
सम्प्राप्य चिरमायुष्य मारोग्यं च महत्तरम् ॥

कन्दर्पसदृशः कान्त्या विद्यया गुरुसन्निभः ।
भूत्वा भूपाल सान्निध्ये मान्य आचार्यवत्सदा ॥

प्रार्थितो भूपकन्याभिस्तरुणीभिश्च कामवत् ।
पुत्रपौत्रादि सहितो भोगान् दिव्यांश्च मानुषान् ॥

भुक्त्वा कलेबरान्तेऽसौ भगवद्धाम्नि मोदते ।
यस्तु द्वादश संख्याक लक्षं श्रीहृदयं जपेत् ॥ ९५

किमनेन द्विजाग्र्येण साध्यते न गिरीन्द्रजे ।
आकाशगमनं योगमष्टाङ्ग सहितं शुभम् ॥

अनेनैव शरीरेण कन्दर्पशत सन्निभः ।
आणिमादिगुणैश्वर्यं जातिस्मरणमक्षयम् ॥

ऋषित्वमथ सिद्धत्वं गन्धर्वत्वं च योगिताम् ।
देवत्वथ रुद्रत्वं प्राप्नोति ब्रह्मतामपि ॥

अनेनैव शरीरेण कन्दर्पशत सन्निभः ।
अजरश्चामरो भूत्वा पञ्चविंशति वार्षिकः ॥

तेजोमयतनुर्दिव्य कन्याभिः प्रार्थितोऽन्वहम् ।
श्वेतद्वीपादि लोकेषु मोदते दिव्य भोगवान् ॥ १००

श्री ऋष्यशृङ्ग उवाच—

प्रसन्नलक्ष्मी विद्याया दक्षिणामूर्तिना पुरा ।
उक्तानि साधनानीत्थं भक्तानां हितकाम्यया ॥

अन्येऽपि योगा अत्रैव पूर्वांशे समुदीरिताः ।
एकामपि महाविद्यां महालक्ष्म्या इमां शुचिः ।

प्रत्यहं प्रजपन् साक्षान्नारायण इवापरः ।
देववत्पूज्यते नित्यमिहामुत्रापि सर्वदा ॥

तद्वंशे मन्दभाग्यो वा दरिद्रो वा न जायते ।
अन्वयव्यापिनीं लक्ष्मीमाचन्द्रार्कं महत्तराम् ॥

तदन्वये वसत्येव सत्यं सत्यं न संशयः ।
लक्ष्मी हृदय विद्याया इति साधनमीरितम् ॥ १०५
त्रिशक्ति लक्ष्मी विद्यायास्ततो वक्ष्यामि साधनम् ।

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
त्रयोविंशोऽध्यायः ॥

# अथ चतुर्विंशोऽध्यायः ॥



**श्री देव्युवाच—**

प्रसन्न लक्ष्मी विद्याया विधानं श्रुतमादरात् ।
त्रिशक्ति लक्ष्मी विद्याया विधानं वद साम्प्रतम् ।

**श्रीदक्षिणामूर्तिरुवाच—**

त्रिशक्तिकमला विद्यां प्रवक्ष्यामि ततः शिवे ।
यस्या विज्ञानतः साक्षान्नारायणमयः पुमान् ॥

वांतं वह्निसमारूढमिन्दुवामाक्षि संयुतम् ।
आद्यं बीजमिति प्रोक्तं व्योमवामाक्षि संयुतम् ॥

वह्नि बिन्दुसमायुक्तं द्वितीयं बीजमुद्धृतम् ।
व्यञ्जनाढ्यं महीयुक्तं चतुर्थस्वर संयुतम् ॥

बिन्दुना सहितं बीजं तृतीयमिदमीरितम् ।
त्रिशक्त्याख्या महालक्ष्मीरियं विद्या समीरिता ॥ ५

लक्ष्मी गिरीन्द्रजा वाणी रूपैषा सर्वसिद्धिदा ।
सर्वपापौघ संहर्त्री सर्वपुण्य फलप्रदा ॥

सर्वविद्यामयी सर्वतीर्थ क्रतुमयी परा ।
ब्रह्मविष्णुमहेशाद्यैरपि नित्यमुपासिता ॥

मुक्तारत्न सुवर्णादि वृष्टिकर्त्री गृहे सताम् ।
साम्राज्य सिद्धिदा धर्मवित्तकामफलप्रदा ॥

नित्यानन्द सुखप्राप्ति हेतुभूता सनातनी ।
त्रिशक्ति लक्ष्म्यां सिद्धायां नासाध्यं त्रिजगत्स्वपि ॥

भक्तानां निधिपालेन्द्र राज्यलक्ष्मी प्रदायिनी ।
श्रीदेव्याः पश्चिमे भागे महासिंहासनेश्वरी ॥ १०

ऋषिरस्याः समुद्दिष्टो ब्रह्मा लोकपितामहः ।
सम्मोहन ऋषिर्वास्याः कथितो ब्रह्मवित्तमैः ॥

च्छन्दो गायत्रमुद्दिष्टं पाङ्क्तं छन्दोऽथवा शिवे ।
त्रिशक्त्याख्या महालक्ष्मी देवता हरिवल्लभा ॥

आद्यं बीजमिति प्रोक्तं शक्तिः श्रीभुवनेश्वरी ।
कीलकं कामराजं स्याद्विनियोगस्तु सिद्धये ॥

द्विरावृत्या षडङ्गानि बीजैरेव न्यसेद्बुधः ।
सुधाम्भोनिधिमध्यस्थ रत्नद्वीपे मनोहरे ॥

नवहेमस्फुरद्भूमौ रत्नकुट्टिम मण्टपे ।
पारिजातवनान्तस्थे सर्वतस्समलङ्कृते ॥ १५

महापद्माटवीमध्य रत्नसिंहासने शुभे ।
नारायणाङ्क निलयां विद्युत्कोटि समप्रभाम् ॥

तप्तकार्तस्वराभासां बालार्कशत सन्निभाम् ।
स्फुरद्रत्न लसत्स्वर्ण किरीटावृत मस्तकाम् ॥

रत्नकङ्कणकेदार ग्रैवेयकाङ्गद शोभिताम् ।
वालीयुगल ताटङ्क स्वर्णचिन्ताक भूषिताम् ॥

शरत्सम्पूर्णचन्द्राभवदनां पद्मलोचनाम् ।
सन्तप्त काञ्चन प्रख्यदुकूल परिवेष्टिताम् ॥

स्मितसंभाषिणीं स्वर्णकलशोपम सुस्तनीम् ।
सुवर्णपादकटक हेमकाञ्चीगुणान्विताम् ॥ २०

अनेकरत्न खचित नानाभूषणभूषिताम् ।
बालाङ्कुशाब्ज युगल पाशचापानि बिभ्रतीम् ॥

चारुचामर हस्ताभ्यां सखीभ्यां पार्श्वयोर्द्वयोः ।
वीज्यमानां सुरस्त्रीभिर्माणिक्यादर्श पाणिभिः ॥

ताम्बूल सहित स्वर्णपात्रहस्ताभिरावृताम् ।
दिव्यरत्नमयस्वर्ण पेशोहस्ताभिरादरात् ॥

निषेवितांघ्रियुगलां ब्रह्मरुद्रादि देवतैः ।
सम्पूजित पदां नित्यं भक्तत्राणपरायणाम् ॥

महालक्ष्मीं त्रिजगतां मातरं परमेश्वरीम् ।
त्रयीमयीमहं वन्दे शरणागतवत्सलाम् ॥ २५

त्रिशक्त्याख्यां महालक्ष्मीमित्थं ध्यात्वा दिने दिने ।
त्रिसहस्रं जपेद्विद्यां सहस्रद्वितयं तु वा ।।

अष्टोत्तर सहस्रं वा त्रिशतं वा शतं तु वा ।
अष्टाविंशतिधा वापि जप्त्वा सिद्धिमवाप्नुयात् ।।

षट्कोणं पूर्वमालिख्य मध्ये विद्यां लिखेत्सुधीः ।
द्विरावृत्त्या त्रिबीजानि कोणषट्के क्रमाल्लिखेत् ।।

बाह्ये वसुदलं कुर्याद्दीर्घस्वर विभूषितम् ।
चतुरस्रं चतुर्द्वार भूषितं मण्डलं लिखेत् ।।

श्रियमावाहयेन्मध्ये विद्यामेतां समुच्चरन् ।
उपचारैस्समाराध्य ततोऽङ्गावरणं यजेत् ।। ३०

पूर्ववत्परमेशानि परिवारानथाऽर्चयेत् ।
अग्रकोणं समारभ्य महालक्ष्मीं हरिप्रियाम् ।।

गिरिजां शङ्करं पश्चाद्रतिं कन्दर्पमप्यथ ।
षट्कोणं पार्श्वयुगले शङ्खपद्मनिधी यजेत् ।।

अष्टपत्रे महेशानि ब्राह्मीं माहेश्वरीं तथा ।
कौमारीं वैष्णवीं पश्चाद्वराह मदनामथ ।।

माहेन्द्रीमपि चामुण्डां महालक्ष्मीमतः परम् ।।
महेन्द्राद्याः समभ्यर्च्याश्चतुरश्राष्टदिक्ष्वथ ।।

त्रिशक्तिरूपिणीं लक्ष्मीमित्थमभ्यर्च्य साधकः ।
बीजत्रय महाविद्यां जपेत्सर्व समृद्धये ॥ ३५

महात्रिपुरसुन्दर्याः पश्चाद्भागेऽथवा शिवे ।
चक्रराजं समभ्यर्च्य सिद्धिमिष्टां व्रजत्यसौ ॥

समस्तजगदाधारे चतुर्वेदात्मके शुभे ।
सर्वोपचारैराराध्य श्रीदेवीं चक्रनायके ॥

त्रिमूर्तीनां त्रिशक्तीनां प्रत्यहं साङ्गमर्चनात् ।
अवश्यं फलमाप्नोति चक्रराजस्य सन्निधौ ॥

यं कञ्चिदपि वा मन्त्रं जप्त्वा नित्यं यतव्रतः ।
अवश्यं महतीं सिद्धिं प्राप्नोत्यत्र न संशयः ॥

श्रीचक्रपूजा श्रीदेव्याः क्रियते येन नित्यशः ।
ब्रह्मविष्णु महेशाद्याः शक्राद्याश्च दिगीश्वराः ॥ ४०

लक्ष्मी सरस्वती गौरी शचीमुख्याश्च शक्तयः ।
साङ्गं सम्पूजितं तुष्टा भवन्ति प्रत्यहं शिवे ॥

श्रीचक्रपूजको नित्यं स चक्रान्तरमर्चयेत् ।
उपासते यः प्राधान्यादेकमप्यत्र सन्मनुम् ॥

तेनार्चनं प्रकर्तव्यं तत्तद्यन्त्रे गिरीन्द्रजे ।
श्रीचक्रसन्निधौ यन्त्रान्तरं नित्यं समर्चयेत् ॥

सर्वदेवमयी देवी श्रीदेवी ललिताम्बिका ।
सर्वविद्या पीठमयं श्रीचक्रं कथितं बुधैः ॥

तस्मादवश्यं श्रीपीठमर्चयन् प्रत्यहं शुचिः ।
समस्तदेवतार्चायाः साङ्गं सुकृतमश्नुते ॥ ४५

इत्थमभ्यर्च्य विधिना त्रिशक्ति हरिवल्लभाम् ।
लक्षत्रयं जपेद्विद्यां विजितेन्द्रिय मानसः ॥

दशांशं तर्पयेद्धीमान् पयसेक्षुरसेना वा ।
दशांशं किंशुकैर्हुत्वा गाव्याज्य त्रिमधुप्लुतैः ॥

दत्वा निष्कशतं साक्षाद्विद्या सिद्धिमवाप्नुयात् ।
मकरस्थे रवौ माघे यद्वार्क दिनमादितः ॥

पञ्चविंशति साहस्रमेकादश्यन्तमादरात् ।
एकादश्यां हुनेदाज्य मधुत्रितय मिश्रितैः ॥

त्रिसहस्रं संस्कृतेऽग्नौ कमलैरुत्पलैस्तु वा ।
अथवा बिल्वपत्रैश्च पायसेनाथवा हुनेत् ॥ ५०

वर्षाशनमितं द्रव्यं दत्वाऽऽचार्य पदाम्बुजे ।
विद्या सिद्धिमवाप्नोति नात्र कार्या विचारणा ॥

सर्वसम्मोहनकरी महावाक् सिद्धिदायिनी ।
अणिमादि गुणैश्वर्य प्रदा पापौघ भञ्जिनी ॥

त्रिशक्ति लक्ष्मी विद्येयं सर्वराज वशङ्करी।
नाभिदघ्नजले स्थित्वा सूर्यमण्डलमध्यगाम्॥

सहस्र त्रितयं जप्त्वा नित्यं नियतमानसः।
मण्डलात्तद्दिने साक्षान्महालक्ष्मीं प्रपश्यति॥

धनधान्यादि संपूर्णां गजाश्वरथसङ्कुलाम्।
मुक्तारत्नौघ सहितां सन्ततिव्यापिनीं श्रियम्॥ ५५

तस्मै ददात्यवश्यं सा लक्ष्मीर्भगवदन्विता।
तिलैराज्ययुतैर्हुत्वा षट्सहस्रं यतव्रतः॥

निरामयश्चिरायुः स्याद्विगतायुरपि ध्रुवम्।
मधुत्रितय संमिश्रं पायसं ज्वलितेऽनले॥

सहस्रपञ्चकं हुत्वा ज्वलिते जातवेदसि।
सर्वविद्यानिधिरयं सर्वैश्वर्यनिधिर्भवेत्॥

पौर्णमास्यां जपित्वाऽमुं सहस्रत्रितयं मनोः।
पायसं जुहुयादग्नौ त्रिशतं त्रिमधुप्लुतम्॥

गुरुपादाब्जयुगले यत्किञ्चिदपि दक्षिणाम्।
दत्वाऽथ हुतशिष्टाशी तस्यां निशि भवेद्व्रती॥ ६०

वर्षत्रयं द्विवर्षं वा वर्षमेकमथापि वा।
पुरश्चर्याव्रतमिदं कृत्वा साधकपुङ्गवः॥

शङ्खपद्मादिभिर्निधिभिर्मूर्तिमद्भिरुपस्थितैः ।
सेव्यते प्रत्यहं साक्षाद्धनरत्नौघवर्षिभिः ॥

आरभ्योत्तर नक्षत्रे श्रीमन्त्रं साङ्गमादरात् ।
सहस्र त्रितयं जप्त्वा त्रिशक्ति जुहुयाद्घृतम् ॥

पञ्चम्यां विशदाम्भोजैरष्टोत्तरशतं हुनेत् ।
रक्तोत्पलैर्हुनेदग्नौ पूर्णिमायां शतत्रयम् ॥

इत्थं संवत्सरं कृत्वा पुरश्चर्याव्रतं बुधः ।
अवाप्य महतीं लक्ष्मीं महेन्द्रधनद प्रभाम् ॥ ६५

कन्दर्प समसौभाग्यमायुरारोग्यमुत्तमम् ।
अवाप्य सकलान् लोकान्नरनारी नृपादिकान् ॥

यावज्जीवं वशीकुर्याद्देवानपि च किं नरान् ।
गङ्गाप्रवाह सदृशीं वाग्विभूतिमवाप्य च ॥

जीवन्नेव विमुक्तोऽसौ ब्रह्मसायुज्यभाग्भवेत् ।
आश्विने नवरात्रे वा वासन्ते वा समाहितः ॥

पञ्चविंशति साहस्रं जप्त्वा विद्यामिमां श्रियम् ।
महानवम्यां ज्वलिते वह्नौ मधुघृतप्लुतम् ॥

सहस्र त्रितयं हुत्वा पायसं तिलमिश्रितम् ।
आचार्यपत्नीमाचार्यमभ्यर्च्याभरणादिभिः ॥ ७०

आचार्यपादयुगले दत्वा वर्षमितं धनम् ।
महतीं सिद्धिमासाद्य भगवत्सहितां श्रियम् ॥

दृष्ट्वा समृद्धिमासाद्य देवानामपि दुर्लभाम् ।
व्यासवाल्मीकि सदृशो विद्याभिर्धनसम्पदा ॥

धनदप्रतिमो भूत्वा कान्त्या मदन सन्निभः ।
भुक्त्वेह विपुलान् भोगान् देहान्ते याति सत्पदम् ॥

त्रिशक्ति लक्ष्मी विद्यायामेवं भक्तियुतोऽन्वहम् ।
सहस्रत्रितयं जप्त्वा सहस्र द्वितयं तु वा ॥

त्रिशताधिक साहस्रं जप्त्वा यद्वाऽन्वहं शुचिः ।
समस्त पापराशिभ्यो विमुक्तो भाग्यसम्पदा ॥ ७५

आधारस्सर्व विद्यानां पुत्रपौत्र सुखान्वितः ।
अवाप्यात्यन्त सौभाग्यं वशीकृत्य जगत्त्रयम् ॥

चिरायुस्सकलान् भोगान् भुक्त्वा दिव्यांश्च मानुषान् ।
देहान्ते परमं धाम याति विष्णोः सनातनम् ।

त्रिशक्ति लक्ष्मी माहात्म्यमिति ते कथितं मया ।
साम्राज्य लक्ष्मी विद्याया माहात्म्यमथ वक्ष्यते ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
चतुर्विंशोऽध्यायः ॥

# अथ पञ्चविंशोऽध्यायः ॥

**श्रीदक्षिणामूर्तिरुवाच-**

साम्राज्यलक्ष्मी विद्याया माहात्म्यं गिरिकन्यके ।
सर्वार्थसिद्धिदं वक्ष्ये समस्तदुरितापहम् ॥

चन्द्रं बीजं समुद्धृत्य व्योमसादनमप्यथ ।
लक्ष्म्या बीजं शिवाबीजं वह्निवामाक्षिमण्डितम् ॥

बिन्दुयुक्तं वरारोहे साम्राज्यश्रीरुदीरिता ।
श्रीरुद्रेष्टा महाविद्या सप्तवर्णाब्जलोचने ॥

विष्णूपासित विद्येयं महासिंहासनेश्वरी ।
उपासकानां साम्राज्य श्रीकरी भुक्तिमुक्तिदा ॥

महापातकराशिघ्नी महादारिद्र्यभेदिनी ।
महासारस्वतकरी महासौभाग्यसिद्धिदा ॥ ५

पौलोमश्रियं वापि श्रियं यक्षपतेरपि ।
दद्यादुपासकस्येयं भूतले गिरिकन्यके ॥

पूजिता सर्वसौभाग्यदायिनी भोगसिद्धिदा ।
प्रतप्ता सकलाभीष्ट प्रदोग्ध्री कामधुग्यथा ॥

हुता सकलवाक्सिद्धिकरी सर्वसमृद्धिदा ।
धर्ममर्थं च कामं च कैवल्यं चाणिमादिकम् ॥

इच्छतेयं महाविद्या जप्तव्याऽवश्यमादरात् ।
ऋषिर्नारायणस्साक्षाच्छन्दो गायत्रमीरितम् ॥

त्रैलोक्यमोहिनी सर्वसाम्राज्य फलदायिनी ।
महालक्ष्मीर्जगन्माता देवताऽत्र समीरिता ॥ १०

बीजं कूढं समाख्यातं शक्तिः श्रीबीजमुच्यते ।
श्रिया षड्दीर्घयुतया वांगन्यासमथाचरेत् ॥

क्षीराम्भोनिधिमध्यस्थ द्वीपे मणिमये शुभे ।
सन्तानपारिजातादि सुरद्रुमसमावृते ॥

अधस्तात्कल्पवृक्षस्य पीठे स्वर्णमये शुभे ।
नवमाणिक्यखचिते मुक्ताविद्रुमभूषिते ॥

आसीनस्य परेशस्य श्रीपतेः परमात्मनः ।
अंके वामे समासीनामतसीकुसुमप्रभाम् ॥

नीलोत्पलनिभां यद्वा तप्तकार्तस्वर प्रभाम् ।
बालादित्यशतप्रख्यां नानाभूषणभूषिताम् ॥ १५

दिव्यपीताम्बरधरां दिव्यचन्दन चर्चिताम् ।
सन्तानपारिजातादि पुष्पमाल्यविराजिताम् ॥

शङ्ख चक्र गदा पद्म शार्ङ्गबाणधरां करैः ।
अभयं च प्रयच्छन्तीं वरानिष्टांश्च बिभ्रतीम् ॥

श्रियमष्टभुजां साक्षात्सर्वसाम्राज्य नायिकाम् ।
चामरादर्शहस्ताभिः छत्रहस्ताभिरादरात् ॥

सेवितां सुरकन्याभिः स्मितपूर्वाभिभाषिणीम् ।
शक्रादिमौलिमाणिक्य विराजितपदाम्बुजाम् ॥

सुन्दरोभिस्सुरस्त्रीभिः पार्श्वयोस्समलंकृताम् ।
त्रयीमयीं महालक्ष्मीं भजे सिह्मासनेश्वरीम् ॥ २०

समस्तसंपत्साम्राज्य नायिकां श्रियमीश्वरीम् ।
ध्यात्वा संपूज्य सततं चक्रराजे मनोहरे ॥

श्रीदेव्याः सन्निधौ नित्यं यजेत्साम्राज्यनायिकाम् ।
तत्राऽशक्तोऽथ यंत्रेस्मिन्नर्चयेत्साधकोत्तमः ॥

त्रिकोणमष्टकोणं वै चतुरस्रं समालिखेत् ।
चतुर्द्वारसमायुक्तं यन्त्रं साम्राज्य सिद्धिदम् ॥

मूलविद्यां समुच्चार्य मूर्ति संकल्प्य साधकः ।
आवाह्योपचरेत्सर्वैः उपचारैर्मनोहरैः ॥

पूर्ववद्यजेद्देवि षडङ्गावरणं ततः ।
त्रिकोणमध्ये साम्राज्य श्रियमभ्यर्च्य सादरम् ॥ २५

कोणत्रयेऽथ सावित्रीं गायत्रीं च सरस्वतीम् ।
अष्टदीर्घस्वरयुता ब्राह्माद्या अष्टमातरः ॥

अभ्यर्च्या अष्टकोणेषु भक्तानां सर्वसिद्धिदाः ।
इन्द्रादीनथ दिक्पालान् चतुरश्राष्टदिक्ष्वपि ॥

अभ्यर्च्य पूजयेत्सर्वं साम्राज्यश्रियमिष्टदाम् ।
लक्षत्रयं पुरश्चरेत् साम्राज्यश्रीफलाप्तये ॥

दशांशं तर्पयेद्विद्वान् मधुना पयसापि वा ।
तद्दशांशं हुनेदग्नौ किंशुकैराज्यमिश्रितैः ॥

गुरवे दक्षिणां दत्वा धेनुद्वादशकं शिवे ।
मंत्रसिद्धिमवाप्नोति लभते वाञ्छितं फलम् ॥ ३०

अथवा नवरात्रेषु पञ्चविंशत्सहस्रकम् ।
जप्त्वा पलाशकुसुमैराज्यत्रिमधुतोलितैः ॥

हुत्वा सहस्रत्रितयमाचार्यचरणाब्जयोः ।
समर्प्य धेनुदशकं विद्यासिद्धिमवाप्नुयात् ॥

जप्त्वा लक्ष्मीमिमां मंत्री घृतत्रिमधुमिश्रितैः ।
हुत्वा रक्ताम्बुजैरग्नौ सार्वभौमो भवेद्ध्रुवम् ॥

घृतत्रिमधुसंमिश्रं पायसं ज्वलितेऽनले ।
हुत्वा द्वादशसाहस्रं राज्यलक्ष्मीमचञ्चलाम् ॥

आसाद्य मन्दभाग्योऽपि राजराजो भविष्यति ।
शालिभिर्जुह्वतो नित्यमष्टोत्तरसहस्रकम् ॥ ३५

सप्तद्वीप समायुक्त भूपतित्वमनुत्तमम् ।
अवाप्य मण्डलेनाऽसौ धनदेन समो भवेत् ॥

सहस्रं प्रत्यहं जप्त्वा हुत्वा घृतमथो शतम् ।
राज्यश्रियमवाप्नोति सर्वविद्यानिधिर्भवेत् ॥

कदम्बकुसुमैर्हुत्वा द्वादशाहं सहस्रकम् ।
कन्दर्पसदृशः कान्त्या नरनारीनृपादिकान् ॥

यावज्जीवं वशीकुर्याद्गन्धर्वानमरानपि ।
किमत्र बहुनोक्तेन सर्वमस्या अवाप्नुयात् ॥

नैतया सदृशी काचिद्विद्याऽस्ति भुवनत्रये ।
विधानमेतद्विद्यानां चतसृणां चोदीरितम् ।
श्रोतुमिच्छसि किं भूयो वद मत्प्राणवल्लभे ॥ ४०

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
पञ्चविंशोऽध्यायः ॥

---

# अथ षड्विंशोऽध्यायः ॥



**श्रीदेव्युवाच—**

भगवत्याश्श्रियो रश्मिमाला जप्या त्वयेरिता ।
रश्मिमालाभिधं सूक्तं श्रियः प्रब्रूहि मे प्रभो ॥

**श्रीदक्षिणामूर्तिरुवाच —**

शृणु देवि प्रवक्ष्यामि रश्मिमालां श्रियः शिवे ॥

यस्याः स्मरणमात्रेण नित्यं प्रातस्समाहितः ।
समस्त पातकैर्मुक्तस्सर्वसौभाग्यवान् भवेत् ॥

आद्या सकलवेदानां माता सकलसिद्धिदा ।
अभयङ्करमाहेन्द्री द्वितीया च समीरिता ॥

सावित्राष्टाक्षरी विद्या तृतीयाकान्तिवर्धिनी ।
प्रणवाख्या महाविद्या ब्रह्मसायुज्य सिद्धिदा ॥ ५

ततस्तुरीया गायत्री सायुज्य फलदायिनी ।
चक्षुष्मती ततो विद्या वरदेष्ट फलप्रदा ॥

गन्धर्वराज विद्या च विवाह फलदायिनी ।
शतद्रुस्तोम विद्या च मार्गसङ्कटभक्षिणी ॥

ततस्तारा महाविद्या सकलापच्छमनीस्मृता ।
नामत्रय महाविद्या विघ्नसङ्घ विभेदिनी ॥

महागणेश विद्या च प्रत्यूहगणभेदिनी ।
उमामहेश विद्याऽथ समस्ताभीष्ट सिद्धिदा ॥

मृत्युञ्जय दशार्णाऽथ मृत्युभीति निवारिणी ।
ततः श्रुतधरी विद्या सर्वविद्या फलप्रदा ॥ १०

मातृकाख्या महाविद्या सर्वज्ञत्व फलप्रदा ।
कामेश्वर महाविद्या शिवतादात्म्यसिद्धिदा ॥

संपत्सरस्वती विद्या महासंपत्प्रदायिनी ।
कालसङ्कर्षणी विद्या दीर्घायुष्य फलप्रदा ॥

परशम्भुमहाविद्या नित्यानन्द सुखप्रदा ।
ततः परकला विद्या महावाक् सिद्धिदायिनी ॥

ततः कुमारिका विद्या समस्तेप्सित सिद्धिदा ।
अन्नपूर्णाभिधा विद्या बह्वन्न फलदायिनी ॥

अश्वारूढा महाविद्या सर्वलोकवशङ्करी ।
ततः श्रीषट्कार्णा विद्या श्रीविद्या सिद्धिदायिनी ॥ १५

श्रीदेव्या मूलविद्याऽथ समस्त फलभोगदा ।
लघुश्यामा ततो विद्या नरनारी वशङ्करी ॥

वाग्वादिनी ततो विद्या वाचां सिद्धिकरी परा ।
नकुली नाम विद्याऽथ सर्वविद्या फलप्रदा ॥

श्यामला पादुका पश्चाच्छ्यामा विद्याफलप्रदा ।
राजश्यामा ततो विद्या मनोरथ फलप्रदा ॥

विद्याऽथ लघुवाराही सर्ववैरि निकृन्तनी ।
विद्याऽथ स्वप्नवार्तालि स्वप्ने वक्ति शुभाशुभम् ॥

तिरस्करणवाराही तिरस्करण कारिणी ।
वार्तालि पादुका पश्चाद्वार्तालि सिद्धिदायिनी ॥ २०

विद्याऽथ राजवार्तालि भक्तानुग्रहकारिणी ।
अथ श्रीपूर्ति विद्याख्या श्रीकरी मुक्तिदायिनी ॥

महती पादुका पश्चाच्चतुर्वर्ग फलप्रदा ।
षड्विघ्नदेवताः पश्चाच्छ्रियो देव्याः फलप्रदाः ॥

राजश्यामा महाविद्या विघ्नदेवी ततः परम् ।
विघ्नौघ शमनी पश्चाद्वार्तालि विघ्नदेवता ॥

रश्मिमालेति संप्रोक्ता श्रीदेव्यास्सर्व सिद्धिदा ।
एतासां मन्त्रमालां यः प्रातः प्रातर्दिने दिने ॥

सकृद्द्वेधा त्रिधा वापि योऽनुस्मरति साधकः ।
स सर्वपातकौघेभ्यो विमुक्तोऽनुदिनं शिवे ॥

अवाप्य महतीं लक्ष्मीं वाक् सिद्धिमतुलामपि ।
सौभाग्यं महदासाद्य भुक्त्वा भोगान् यथेप्सितान् ॥

ब्रह्मसायुज्यमाप्नोति देहान्ते नात्र संशयः ।
एकामपि महाविद्यामत्र योऽनुदिनं जपेत् ॥

स महाभाग्य सहितः समस्ताभीष्टभाग्भवेत् ।
श्रीदेव्या सिद्धि कामेन रश्मिमाला दिने दिने ॥

सकृद्द्वेधा त्रिधा वापि स्मर्तव्या सर्वसिद्धिदा ।
विद्यानामत्र सर्वासां नाममात्रं प्रकाशितम् ॥

तत्तत्तन्त्रेषु मुनिभिस्तत्तन्माहात्म्यमीरितम् ।
एतास्सकल विद्याश्च संज्ञयैव समीरिताः ॥ ३०

श्रीदेव्यास्सर्वराज्ञित्वाद्रश्मिभूता स्मृता इमाः ।
श्रीदेव्युपासको नित्यं चक्रराजार्चने रतः ॥

रश्मिमालामनुस्मृत्य सकृद्वापि दिने दिने ।
सिद्धिं सकल विद्यानां प्राप्नोत्यत्र न संशयः ॥

जगत्त्रितय साम्राज्ञी श्रीदेवी परमेश्वरी ।
यस्य सिद्धा भवत्यस्य नासाध्यं त्रिजगत्स्वपि ॥

रश्मिमाला प्रदातारमाचार्यं परमं शुभम् ।
साक्षाद्ब्रह्मधिया नित्यमर्चयेन्नान्यथा शिवे ॥

श्रीदेवी रश्मिमालायाः प्रदातैव पिताऽबिके ।
ज्येष्ठभ्राता पितृपिता पोषकोऽपि च तत्पिता ॥ ३५

स एव बन्धुस्स सखा स आचार्यो महान् गुरुः ।
स एव धाता विष्णश्च स एव परमेश्वरः ॥

इत्येवं मत्वा सततं रश्मिमाला प्रदं गुरुम् ।
आचार्यमर्चयेद्धीमान् रत्नैरर्थैर्दिने दिने ॥

रश्मिमाला स्वरूपं ते श्रिय उक्तं वरानने ।
इतः परं गिरिसुते किंभूयः श्रोतुमिच्छसि ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
षड्विंशोऽध्यायः ॥

---

# अथ सप्तविंशोऽध्यायः ॥

**श्रीदेव्युवाच –**

भगवन्देवदेवेश सर्वज्ञ जगती पते ।
सुगुप्तमपि वेदेषु पुराणेष्वखिलेष्वपि ॥

उक्तं त्वयाऽऽदरान्मह्यं मयाऽपि श्रुतमादरात् ।
साम्प्रतं प्रष्टुमिच्छामि हृदये किञ्चिदस्ति मे ॥

वेदाध्ययन हीनानां ब्राह्मण्यं न हि विद्यते ।
यागानुष्ठान हीनाश्च विप्राः साधारणाः स्मृताः ॥

अर्थविबोध हीनायेऽपारगाश्च श्रुतौ स्मृतौ ।
तेऽपि साधारणाः प्रोक्ता विप्रा वेदविदोऽपि च ॥

संसारं दुःखभूयिष्ठं बहुपातक सङ्कुलम् ।
सम्प्राप्य न निवर्तन्ते बहुजन्म शतैरपि ॥

अष्टार्णोपासना प्रोक्ता भवसागर तारिणी ।
तत्रापि रश्मिविद्यानां मालासूक्तमुदीरितम् ॥

न्यासजालं च कथितं चक्रावरण पूजनम् ।
श्रीदेव्युपासना प्रोक्ता रश्मिमाला समन्विता ॥

श्रीचक्रार्चन संयुक्ता भवसागर तारिणी ।
जडानां मन्दबुद्धीनां विद्याग्रहण धारणे ॥

न शक्तिर्विद्यते देव कथं तेषां गतिः परा ।
वेदाध्ययन हीनाश्च यागानुष्ठान वर्जिताः ॥

वेदार्थ बोधहीनाश्च तेषां का वा गतिः प्रभो ।
संसार सागरे तार हेतुभूतं सनातनम् ॥

चतुर्णामपि वेदानां पारायण फलप्रदम् ।
वेदार्थबोधफलदं सर्वक्रतु फलप्रदम् ॥

श्रीमदष्टार्ण विद्यायाः श्रीविद्यायाश्च शङ्कर ।
साङ्गानुष्ठान जनितं फलदं स्मृतिमात्रतः ।
अस्ति चेद्दक्षिणामूर्ते तन्मह्यं वद शङ्कर ॥

**श्री ऋश्यशृङ्ग उवाच –**

इत्युक्तो गिरिजादेव्या शंकरो लोकशङ्करः ।
हिताय सर्वलोकानां कथयामास तत्वतः ॥

**श्री दक्षिणामूर्तिरुवाच –**

शृणुष्वावहिता देवि भद्रे कल्याणि सुन्दरि ।
त्वया पृष्टमिदं गुप्तमपि वेदेषु सन्ततम् ॥

कृपया ते प्रवक्ष्यामि रामेण यदुदीरितम् ।
साकेत नगरे पूर्वं दिव्यप्रासाद शोभिते ॥ १५

सुरम्ये मन्दिरे हेमरत्न हर्म्य सुशोभिते ।
सन्तान पारिजातादि वनमध्ये मनोहरे ॥

नवरत्नमये स्वर्ण दिव्य सिह्मासने शुभे ।
आसीनं जानकीनाथं रामं दाशरथिं विभुम् ॥

किरीट हारकेयूर कुण्डलादि विभूषितम् ।
पीताम्बरधरं श्रीमत्कौस्तुभोद्भासितोरसम् ॥

स्मितवक्त्रं विशालाक्षं वीरासन समाश्रितम् ।
कन्दर्प कोटि लावण्यं जानक्या सहितं विभुम् ॥

सौमित्रि भरताद्यैश्च संसेवित पदाम्बुजम् ।
आञ्जनेयादि कपिभिस्सुमन्त्राद्यष्टमन्त्रिभिः ॥ २०

वसिष्ठवामदेवाद्यैः सेवितं च महर्षिभिः ।
अभिषिक्तं महीपालैर्दिक्पालैरखिलैरपि ॥

लीलानराकृतिं देवं त्रिजगद्रक्षणोद्यतम् ।
द्रष्टुमभ्याययौ ब्रह्मा त्रिजगत्सर्वकृद्विभुः ॥

सनकाद्यैर्महायोगि नायकैर्मानसैः सुतैः ।
मरीचि दक्षमुख्यैश्च प्रजापतिभिरावृतः ॥

देवैर्मुनिवरैः साक्षाद्वाग्देव्या च समन्वितः ।
तमागतं विधातारं विज्ञाय जगतां पतिः ॥

मायामानुष देहत्वात् प्रत्युत्थायार्घ्यमाददे ।
आलिङ्गितो विधात्राऽथ दिव्यरत्नासनं शुभम् ॥ २५

ददौ हिरण्यगर्भाय पुत्रेभ्योऽपि यथाक्रमम् ।
वन्दितोऽथ वसिष्ठाद्यैर्ब्रह्मर्षिभिरकल्मषैः ॥

सौमित्रि भरताद्यैश्च विधाता लोकनायकः ।
तुष्टाव जानकीनाथं रामं दाशरथिं विभुम् ॥

**ब्रह्मोवाच —**

अमूर्तं यत्परंधाम निर्गुणं च निरञ्जनम् ।
सत्यानन्द चिदाकारं तमः पारे प्रतिष्ठितम् ॥

वेदान्तवेद्यं विमलं परं ब्रह्मेति कथ्यते ।
तत्त्वमेव जगन्नाथ निविष्टं यद्गुहास्वपि ॥

सदाशिवात्मकं वह्निचन्द्ररूपं सनातनम् ।
ब्रह्मविष्णु शिवादीनामपि कारणमद्भुतम् ॥ ३०

त्रयीमयं त्रयीवेद्यं कारणं जगतो भवान् ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥

विराट् स्वराट् च सम्राट् च त्वमेव रघुनन्दन ।
तव निःश्वसितं वेदा वेदान्ता निखिला अपि ॥

पुराण धर्मशास्त्राणि त्वत्त आविर्भवन्त्युत ।
संसारतारकं ब्रह्मवाच्यं च प्रणवेन यत् ॥

तत्त्वमेव महाबाहो विश्वरूपं परात्परम् ।
तव शक्तिरियं सीता जगन्माता त्रयीमयी ॥

सविता सर्वजगतां स्वतः सर्वमिदं ततम् ।
अणीयानणुतोऽपि त्वं महतोऽपि महानसि ॥ ३५

त्वन्मुखादग्निरिन्द्रश्च चन्द्रमा मनसोऽभवत् ।
त्वन्नेत्रादुदभूद्भानुर्द्यौरासीच्छिरसस्तव ॥

ब्राह्मणास्त्वन्मुखाज्जाता बाहुभ्यां क्षत्रियास्तथा ।
ऊरूद्भवास्तथा वैश्याश्शूद्राः पद्भ्यामुदीरिताः ॥

अहं त्वन्नाभिसंभूतो रुद्रो मन्यु समुद्भवः ।
गौर्याद्याश्शक्तयस्सर्वास्त्वच्छक्त्यंश समुद्भवाः ॥

वेदा अपि च वेदान्ता अहं रुद्रोऽपि देवताः ।
ऋषयश्च महाभागास्सिद्धा अपि जगत्पते ॥

तवायुता युतांशांश माहात्म्यमपि तत्वतः ।
न विजानन्ति राजेन्द्र किं पुनर्मानवा भुवि ॥ ४०

मया शङ्कर शक्राद्यैरपि संप्रार्थितो भवान् ।
मानुषाकृतिमाश्रित्य लोकानां हितकारणात् ॥

अवतीर्णोऽसि कौसल्यागर्भाद्दशरथान्नृपात् ।
वर्णितुं केन वा शक्यं गुणजालं तव प्रभो ॥

रामस्त्वं सर्वलोकानामभिरमोऽसि भूतले ।
यत्रानन्द चिदाकारे त्वद्रूपे सर्वयोगिनः ॥

रमन्ते सततं तस्माद्रामोऽसि ब्रह्मरूपधृत् ।
निग्रहाय च दुष्टानां रक्षणाय सतां परम् ॥

स त्वं दाशरथिर्भूत्वा कोटिशो रजनीचरान् ।
हत्वा समस्तलोकानां कृत्वा भयनिवारणम् ॥ ४५

अभिषिक्तोऽस्ययोध्यायां श्रिया देव्याऽनयान्वितः ।
आदिर्नारायणस्साक्षाद्भवान् सर्वजगत्पतिः ॥

प्रसीद सततं मह्यं जानकीनायक प्रभो ।
स्तवेनानेन सन्तुष्टो भगवान्जानकी पतिः ।
ब्रह्माणमब्रवीद्वाक्यं धातारं परमेश्वरः ॥

**श्रीभगवानुवाच –**

कच्चित्ते कुशलं ब्रह्मन्न च भर्गो तपस्यपि ।
अग्निहोत्रेषु यज्ञेषु त्वत्सुतेषु महात्मसु ।।

समस्तवेदाध्ययने योगेऽष्टाङ्ग संयुते ।
किमर्थमागतोऽसि त्वं पुत्रैरेतैर्महात्मभिः ।।

किंवाऽभीष्टं प्रदास्यामि तुभ्यं ब्रह्मन् वद प्रभो ।
इत्थं भगवता ब्रह्मा प्रेरितस्तपसां निधिः ।
उवाच वचनं रामं परमात्मानमच्युतम् ।। ५०

**ब्रह्मोवाच –**

एते सिद्धा महाभागा जितक्रोधा जितेन्द्रियाः ।
मानसा मम पुत्राश्च सनकाद्या दिगम्बराः ।।

देवर्षयो नारदाद्या बालखिल्या अपि प्रभो ।
संशयं परिपृच्छन्ति मां सर्वजगतो हितम् ।।

क्रत्वनुष्ठानरहिता वेदाध्ययनवर्जिताः ।
अग्निहोत्रैर्विरहिताश्श्रौताचार विवर्जिताः ।।

तिष्ठन्ति बहवो विप्रा अशक्ता अपि कर्मसु ।
दरिद्राः कृपणा मूढा दानधर्मविवर्जिताः ।।

एतेषां नरकान्मुक्तिः कल्पान्तेऽपि न विद्यते ।
अध्येतव्यास्सदा वेदा धर्मः कार्योऽपि वैदिकः ।। ५५

अवश्यमपि कर्तव्या यागास्संपूर्णदक्षिणाः ।
अवश्यमपि देयानि दानान्यपि महीतले ॥

अभ्यस्तव्यो महायोगो नित्यमष्टाङ्ग संयुतः ।
तीर्थयात्रापि कर्तव्या स्नातव्यं तीर्थकोटिषु ॥

संसार तारकोपायो भवत्येतैस्सुकर्मभिः ।
कथं संसारमग्नानां अशक्तानां जगत्पते ॥

संसार तारणोपायः कथं नरकमोचनम् ।
श्रीमदष्टार्णया वापि श्रियः पञ्चदशार्णया ॥

एकेन जन्मना मुक्तिरुक्ता सर्वश्रुतिष्वपि ।
तत्रापि रश्मिमालाख्य सूक्तमस्ति महत्तरम् ॥ ६०

न्यासजालं तथा पूजा मन्त्र बाहुल्यमस्त्यपि ।
एकविद्योपासनया यद्याचार्य कृपावशात् ॥

धर्मार्थ काममोक्षादि पुमर्थाः सकला अपि ।
सिद्ध्यन्ति चेन्महाभाग तदेभ्यो वद मे प्रभो ॥

गुरुशुश्रूषया विद्या स्मरणादपि केवलम् ।
यदि क्रतुफलं सिद्ध्येद्वेदाध्ययनजं फलम् ॥

सप्तकोटि महामन्त्र पुरश्चर्या फलं तथा ।
यदि सिद्ध्यति विश्वेश तादृशीं सर्वसिद्धिदाम् ॥

राजविद्यां मम ब्रूहि मत्सुतेभ्यश्च सादरम् ।
इति पृष्टस्तदा रामो भगवानिन्दिरा पतिः ॥ ६५

सस्मार सर्वसिद्धानामधिपं कपिलं विभुम् ।
कर्दमस्य सुतं सर्व सिद्धाधिप मधुश्च्युतम् ॥

योगाभ्यास रतं शान्तं जगत्त्रय हितैषिणम् ।
सांख्यायनो महायोगी तस्य संसृतिमात्रतः ॥

तत्रागतस्तथैवासौ सिद्धयोगि गणावृतः ।
द्वादशादित्य सङ्काशस्तपसां निधिरच्युतः ॥

तं दृष्ट्वा विस्मितास्सर्वे सहसोत्थाय वाग्यताः ।
प्रणेमुः सर्वजगतामधिपं कपिलं मुनिम् ॥

जानकी पतिना तत्र पाद्यार्घ्यैरपि पूजितः ।
साङ्ख्याचार्यो महायोगि रामं प्राह जगत्पतिम् ॥ ७०

आहूतोऽस्मि त्वया साक्षान्नारायण रघूत्तम ।
तवैवांश समुद्भूतोऽस्म्यहं योगविदां वरः ॥

किं वक्तव्यं मया स्वामिन्नाज्ञापय जगत्पते ।
इत्युक्तः कपिलेनासौ रामो दाशरथिर्विभुः ।
उवाच स्वांश संभूतं कपिलं कर्दमात्मजम् ॥

**श्रीभगवानुवाच —**

भवान्नारायणोऽनन्तस्सर्वज्ञः परमेश्वरः ।
सर्वयोगविदाचार्यः सर्वलोकहिते रतः ॥

सनकाद्या महाभागा ब्रह्मपुत्रा यतव्रताः ।
पितामहेन सहिता अत्रिभृग्वादयोऽप्यमी ॥

संशयं परिपृच्छन्ति मां सर्वजगती पतिम् ।
अहं मानुषयोनिस्थो राजासनगतोऽस्म्यहम् ॥ ७५

सर्वज्ञस्सर्व विद्यानामधिपस्त्वं सनातनः ।
नारायणोऽसि विद्यानां हेतुस्त्वमसि सुव्रत ॥

अहं नोपदिशाम्येभ्यो राजेन्द्रत्वान्महामते ।
मत्सन्निधौ भवानेभ्यः कथयस्व गुरुर्भवान् ॥

इत्युक्तो भगवान् योगी रामेण परमात्मना ।
विह्वलः किन्त्विहोवाच रामं दाशरथिं विभुम् ॥

**श्रीकपिलाचार्य उवाच—**

भवान्नारायणो विष्णुः सर्वज्ञः परमेश्वरः ।
आदिमध्यान्त रहितस्सत्यानन्दचिदात्मकः ॥

संसार तारकस्साक्षाद्ब्रह्मरूपी निरञ्जनः ।
अरूपो विश्वरूपस्त्वं पुरुषः प्रकृतेः परः ॥ ८०

योगिध्येयो महायोगी विधिविष्णवीश रूपधृत् ।
ब्रह्मविष्णु महेशानामप्याचार्यो भवानसि ॥

प्रायो मानुषदेहं त्वमास्थाय जगतीपते ।
धर्मसंस्थापनार्थाय रघोरन्वय संभवः ॥

राजासन गतोऽसि त्वं मर्त्यधर्ममुपाश्रितः ।
देवता ऋषयस्सिद्धा वयं ब्रह्मादयोप्यमी ॥

त्वदाज्ञाकराः स्वामिन्नाज्ञाचेत्तव भूपते ।
त्वदंश संभवत्वेन सर्वज्ञोऽस्मि सनातनः ॥

आज्ञया तव राजेन्द्र गुप्तं सर्वश्रुतिष्वपि ।
एतेभ्यो ब्रह्मपुत्रेभ्यो रहस्यं कथयाम्यहम् ॥ ८५

श्रुत्वा भगवतो वाक्यं ब्रह्मपुत्रा महर्षयः ।
सन्तुष्टा विस्मिता भूत्वा प्रणेमुः कपिलं विभुम् ॥

इति श्रीमदनुत्तर ब्रह्मतत्त्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे सौभाग्य विद्योदये उत्तरभागे
सप्तविंशोऽध्यायः ॥

---

# अथ अष्टाविंशोऽध्यायः ॥

श्रीदक्षिणामूर्तिरुवाच–

शृणु देवि प्रवक्ष्ये तत् "नारायणजगद्गुरो" ।
किञ्चित्प्रष्टुं समुद्युक्ता वयमत्र समागताः ॥

ग्रहणे सर्वविद्यानामायासः स्याद्द्विजन्मनाम् ।
ततोऽप्यधिक एव स्याद्वेदानां ग्रहणेऽपि च ॥

ततोऽप्यधिक आयासो वेदार्थस्यावबोधने ।
अनुष्ठाने क्रतूनां स्यादायासश्च ततोऽधिकः ॥

यागार्थं दक्षिणा द्रव्यार्जने कष्टं महत्तरम् ।
श्रुत्युक्तकर्मभिः क्षीणो पातकौघेऽतिदुस्तरे ॥

बहुजन्मशतेनास्य भवेज्जाति स्मृतिः शुभा ।
ब्रह्मदर्शन संसिद्धिरन्यजन्मनि जायते ॥ ५

एतेषु शक्तोऽशक्तो वा श्रीमदष्टाक्षरीं शुभाम् ।
जप्त्वा साङ्गमथाचार्यमर्चयित्वा दिने दिने ॥

जीवन्मुक्तो भवेदित्थं सर्ववेदेषु निश्चितम् ।
सरहस्यां तथा साङ्गां श्रियः पञ्चदशाक्षरीम् ॥

आचार्यानुग्रहाज्जप्त्वा मुक्त इत्यपि निश्चितम् ।
न्यासपूर्वादिकं सर्वमत्रापि बहुलं प्रभो ॥

अत्राप्यशक्तः संसारं तरिष्यति कथं भुवि ।
वेदस्याध्ययनाभावे यागसिद्धिर्न विद्यते ॥

बहुलद्रव्यसाध्यस्य कर्ता यागस्य नास्त्यपि ।
श्रीमदष्टार्णविद्यायास्साङ्गोपास्ति विना प्रभो ॥ १०

नासिद्धिः कथिता सर्वशास्त्रेषु जगतीतले ।
अशक्तानां दरिद्राणां मन्दानां च महीतले ॥

संसारतरणोपाय अनायासाद्भवेन्न वा ।
इहापि सर्वसौभाग्य संपत्तिः सकलेप्सितम् ॥

यदि सिद्ध्यत्यनायासात्तदुपायं वदस्व नः ।
इत्थमुक्तो महायोगी कपिलो जगतां पतिः ।
सनकादीन् महाभागानुवाच कपिलः प्रभुः ॥

श्रीकपिलाचार्य उवाच –

सम्यक्पृष्टं महाभागा ब्रह्मपुत्रास्तपोधनाः ।
यूयं सकलविद्यानां पारगा दीर्घदर्शिनः ॥

अयं सीतापतिः स्वामी परमात्मा जगत्पतिः ।
भजध्वमेनं संसारतारकं ब्रह्मसंज्ञितम् ॥ १५

एष नारायणः स्वामी महाविष्णुः श्रियःपतिः ।
अस्य निश्वसितं वेदाः सरहस्यास्सनातनाः ॥

एतदंशांशसंभूता प्रकृतिर्जगदम्बिका ।
एतत्कटाक्षलेशेन विश्वं सर्वमुदेत्यपि ॥

अस्य क्रोधाग्निलेशेन विश्वं सर्वं प्रलीयते ।
गुहासु सर्वभूतानां निविष्टः परमेश्वरः ॥

आदित्यमण्डलगतः कालस्य जनकोऽप्यसौ ।
वेदानधीत्य सकलामिष्ट्वा यागान् सदक्षिणान् ॥

मन्त्रराजं प्रजप्त्वाऽपि गुरुं सन्तोष्य सादरम् ।
एतत्कैङ्कर्य सिद्ध्यर्थं प्रार्थयन्ति महर्षयः ॥ २०

जपहोमादिभिर्दानैः यागैस्संपूर्णदक्षिणैः ।
योगिनः प्रार्थयन्त्येतत्सायुज्यं सर्वसौख्यदम् ॥

अमूर्तं यत्परं ब्रह्म सत्यानन्दादिलक्षणम् ।
मानुषाकृतिमापन्नं तदेतद्रामनामकम् ॥

वेद्योऽयं सकलैर्वेदैः वेदान्तैरखिलैरपि ।
इज्योऽयमखिलैर्यागैः संपूर्णवरदक्षिणैः ॥

ध्येयोऽयं योगनिरतैः हृदयाम्बुजमध्यमे ।
अयं वेदमयो मन्त्रमूर्तिर्यज्ञमयो विभुः ॥

गायत्री प्रतिपाद्योऽयं श्रीमदष्टार्णरूपधृत् ।
इयं सीता महाभागा चिच्छक्तिः श्रीरुदीरिता ॥ २५

सर्ववेदान्ततत्त्वज्ञैस्त्रयीरूपा सनातनी ।
एतदंशांशसंभूतो ब्रह्मायं विश्वसर्गकृत् ॥

एतत्क्रोधांशसंभूतो रुद्रस्संकर्षणात्मकः ।
यज्वानो दक्षिणायुक्ता वेदाध्ययन तत्पराः ॥

एतत्कैङ्कर्यसिद्ध्यर्थं वांछन्ति सततं भुवि ।
अधीत्य सकलान्वेदानिष्ट्वापि सकलान्क्रतून् ॥

उपासनां विना ब्रह्मसायुज्यं न हि विद्यते ।
ब्रह्मतादात्म्यसंसिद्धिराचार्यानुग्रहं विना ॥

आचार्यानुज्ञया ब्रह्म परं नारायणात्मकम् ।
रामाभिधं महद्धाम समुपास्य विचक्षणाः ॥ ३०

लभन्ते ब्रह्मसायुज्यमेकेनैव हि जन्मना ।
पुण्यं पापमिति प्रोक्तं द्विविधं कर्म भूतले ॥

स्वर्गसौख्यप्रदं पुण्यं पापं नरकदुःखदम् ।
वेदस्याध्ययनं पुण्यं वेदानामर्थचिन्तनम् ॥

श्रुत्युक्ताचारसंपत्तिस्तन्निषिद्धस्य वर्जनम् ।
सम्पूर्णदक्षिणायुक्तं यागकर्मफलप्रदम् ॥

समस्तकल्मषघ्नं च स्वर्गेऽनन्तसुखप्रदम् ।
जपश्शङ्करविद्याया वेदमातुर्जपोऽन्वहम् ॥

निवासहेतुस्सत्याख्ये लोके नित्यसुखप्रदः ।
श्रीविद्याया जपो नित्य ब्रह्मविद्या जपोऽन्त्रहम् ॥ ३५

महासंहारकालान्तं सत्यलोकसुखप्रदः ।
श्रीमदष्टार्णविद्याया न्यासरश्मिसमन्वितम् ॥

जपहोमादिकं साङ्गं वैकुण्ठपुरभोगदम् ।
क्षीणे समस्तपापौघे बहुजन्मभिरार्जिते ।
धर्मेष्वेवाचलाबुद्धिर्जायते द्विजपुंगवाः ॥

स्वकर्मनिष्ठः शतजन्मनोऽन्ते
धातृत्वमाप्नोति ततः शिवत्वम् ।
नारायणोपास्तिरतोऽभ्युपैति
ततःपरं शाश्वतमच्युतत्वम् ॥

ब्रह्महा च सुरापायी स्तेयी च गुरुतल्पगः ।
तत्संयोगीति विख्याताः पञ्चपातकिनस्त्वमी ॥

जनकघ्नोऽथ मातृघ्नो भ्रातृघ्नो गोघ्न एव च ।
विश्वस्तविषदाता च बालघ्नो गर्भघातकः ॥ ४०

स्त्रीघ्न एते समुद्दिष्टा ब्रह्मघ्ना एव दारुणाः ।
एकादश स्युर्मद्यानि तालजादीनि भूतले ॥

सुरासमानि प्रोक्तानि तत्पानान्मद्यपः स्मृतः ।
आचार्यपत्नी तत्पुत्री स्वमाता स्वभगिन्यपि ॥

भ्रातृपत्नी पुत्रपत्नी राजपत्नी स्वपुत्रिका ।
एता मातर इत्युक्तास्तत्सङ्गाद्गुरुतल्पगः ॥

चौर्येण यो हरेत्स्वर्णमुक्तारत्नादिकं द्विजाः ।
विद्याचौर्यं दुकूलानां चौर्यं स्तेयमुदीरितम् ॥

ब्रह्महत्या समानानि वक्ष्यामि दुरितान्यथ ।
आचार्यनिन्दाश्रवणं स्वयमाचार्यदूषणम् ॥ ४५

आज्ञोल्लङ्घनं तस्य विद्याचौर्यमतःपरम् ।
ब्रह्महत्या समानि स्युः पातकानि द्विजोत्तमाः ॥

इत्यादि पापबाहुल्यं विद्यते शास्त्रचोदितम् ।
आकल्पं नरके दुःखमेतेषां कर्मणां फलम् ॥

धर्मशास्त्रेषु यत्प्रोक्तं भेषजं तन्निवर्तकम् ।
तत्कृत्वैव विमुक्तः स्यात्पापेभ्यो नान्यथा द्विजाः ॥

निवृत्तिः सर्वपापानां यदा भवति भूतले ।
तदेव परमं ज्ञानमुत्पत्स्यति कलेबरे ॥

आचार्य कृपया श्रीमदष्टाक्षर जपादिभिः ।
उत्पस्यति महद्ज्ञानमपवर्गप्रदायकम् ॥ ५०

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रस्य संवादं प्राप्ते काले द्विजर्षभाः ॥

ब्राह्मणो भार्गवः कश्चित्सुतमाह महामतिः ।
कृतोपनयनं शान्तं सुमतिं जडरूपिणम् ॥

वेदानधीत्य सुमते यथानुक्रममादितः ।
गुरुशुश्रूषण व्यग्रो भिक्षान्नकृतभोजनः ॥

ततो गार्हस्थ्यमाश्रित्य यागानिष्ट्वा सदक्षिणान् ।
इष्टमुत्पादयापत्य माश्रयेथावने ततः ॥

वर्तेथास्त्वं ततो वत्स परिव्राण्णिष्परिग्रहः ।
एवमाप्स्यसि तद्ब्रह्म यत्र गत्वा न शोचसि ॥ ५५

**श्री कपिलाचार्य उवाच–**

इत्येवमुक्तो बहुशो जडवन्नाह किञ्चन ।
पिता पुत्रं सुबहुशः प्राह प्रीत्या पुनः पुनः ॥

इति पित्रा सुतः स्नेहादलोभमधुराक्षरम् ।
संचोद्यमानो बहुशः प्रहस्येदमथाब्रवीत् ॥

तातैतद्बहुशोऽभ्यस्तं यत्त्वयोद्योपदिश्यते ।
तथैवान्यानि शास्त्राणि शिल्पानि विविधानि च ॥

जन्मनामयुतं साग्रं मम स्मृतिपथं गतम् ।
निर्वेदाः परितोषाश्च ये च वृद्ध्युदये तथा ॥

शत्रुमित्रकलत्राणां वियोगास्सङ्गमास्तथा ।
मातरो बहुधा दृष्टाः पितरो बहवस्तथा ॥ ६०

अनुभूतानि दुःखानि सुखानि च सहस्रशः ।
बान्धवा बहवः प्राप्ताः पितरश्च पृथग्विधाः ॥

विण्मूत्र पिच्छिले स्त्रीणां कोष्ठे मयोषितम् ।
गर्भदुःखान्यनेकानि बालत्वे यौवने तथा ॥

वृद्धत्वे यान्यवाप्तानि तानि सर्वाणि संस्मरे ।
ब्राह्मणक्षत्रियविशां शूद्राणां च योनिषु ॥

पुनश्च पशुकोटानां मृगाणामथ पक्षिणाम् ।
तथैव राजभृत्यानां राज्ञामाहवशालिनाम् ॥

समुत्पन्नश्च गेहेषु तथैवावरवेश्मसु ।
भृत्यतां दासतां चापि गतोऽस्मि बहुशो नृणाम् ॥ ६५

स्वामित्वमीश्वरत्वं च दरिद्रत्वं गतस्तथा ।
हृतं मया हृतं चान्यैः हृतवान् घातितस्तथा ॥

दत्तं ममान्यैरन्येभ्यो मया दत्तमनेकशः ।
पितृमातृसुतभ्रातृकलत्रादिकृतेन च ॥

हृष्टो सकृत्तथा दैन्यादश्रु धौताननो गतः ।
इत्थं संसारचक्रेऽस्मिन् भ्रमता तात सङ्कटे ॥

ज्ञानमेतन्मया प्राप्तं मुक्ति संसिद्धिहेतुकम् ॥
विज्ञातो यत्र सर्वोऽपि ऋग्यजुस्साम संज्ञितः ॥

क्रियाकलापो विगुणो न सम्यक् प्रतिभाति मे ।
तस्मादुत्पन्नबोधस्य वेदैः किं मे प्रयोजनम् ॥ ७०

षट्प्रकारक्रिया दुःखसुखहर्षरसैः स्वयम् ।
गुणैश्च वर्जितं ब्रह्मन् तत्प्राप्स्यामि परं पदम् ॥

रसतर्षभयोद्वेग हर्षानन्यज वागुरा ।
विज्ञानान्यमृगग्राहि सङ्गपाशसमाकुला ॥

तस्माद्यास्याम्यहं तात त्यक्त्वैमं दुःखसन्निधिम् ।
त्रयीधर्ममधर्माख्यं किंपाकफल सन्निभम् ॥

तस्य तद्वचनं श्रुत्वा हर्षविस्मयगद्गदः ।
पिता प्राह महाभागं स्वसुतं हृष्टमानसः ॥

किमेतद्भाषसे वत्स कुतस्ते ज्ञानसंभवः ।
केन ते जडतापूर्वमिदानीं च प्रबुद्धता ॥ ७५

किं नु शापविकारोऽयं मुनिदेवकृतस्तव ।
यत्ते ज्ञानं तिरोभूतमाविर्भावमुपागतम् ॥

पुत्र उवाच—

श्रृणु तात यथावृत्तं ममेदं सुखदुःखदम् ।
यश्चाह मासमन्यस्मिन् जन्मन्यस्मात् फलं च तत् ॥

अहमासं पुरा विप्रो न्यस्तात्मा परमात्मनि ।
आत्मनिष्ठा चिचरिषुर्यश्च निष्ठां परां गतः ॥

सततं योगयुक्तस्य सतताभ्यास सङ्गमात् ।
यत्संयोगात्सतत्स्वभावाद्विचारण निबोधनात् ॥

तस्मिन्नेव परा प्रीतिमामासीद्युञ्जतः परे ।
आचार्यतां च सम्प्राप्तः शिष्यसन्देह हृत्तमः ॥ ८०

ततः कालेन महता रोगसंपीडितो भृशम् ।
अथायातो महायोगी साक्षाच्छिष्यो विवस्वतः ॥

याज्ञवल्क्य इति प्रोक्तः सर्व योगविदां वरः ।
तं दृष्ट्वाऽतिथिमायान्तं याज्ञवल्क्यं महामतिम् ॥

दत्तवानर्घ्यपाद्यादि रोगसंपीडितोऽप्यहम् ।
ब्रह्मसायुज्यसिद्ध्यर्थं याच्ञां च कृतवानहम् ॥

धनधान्यादिकं वस्तु दासीदासादिकं तथा ।
गोमहिष्यादिकं मुक्तारत्नराशि गृहे स्थितम् ॥

तत्पादाब्जे निवेद्याहं ब्रह्मदर्शनसिद्धिदम् ।
विद्याज्ञानं मम ब्रूहीत्येवं प्राथितवानहम् ॥ ८५

ततोऽनुगृह्य भगवान् याज्ञवल्क्यो महामुनिः ।
राजराजेश्वरीं विद्यां लक्ष्मीनारायणीं पराम् ॥

दत्तवान्मे महायोगी भगवत्पद हेतुकीम् ।
तामेवानुस्मरन् विद्यां तद्दिने पारमेश्वरीम् ॥

एकान्तत्वमुपागत्य तामेवानुस्मरन् हृदि ।
अज्ञाता निष्टसद्भावो विपन्नश्च प्रमादतः ॥

एकाह्नि राजविद्यायाः स्मरणाद्‌धुतपूजनात् ।
उत्क्रान्तिकालादारभ्य स्मृतिलोपो न मेऽभवत् ॥

यावद्द्यायुतं चैव जन्मनां स्मृतिमागतम् ।
पूर्वाभ्यासेन तेनैव सोऽहं तात जितेन्द्रियः ॥ १०

यतिष्यामि तथा कर्तुं न भविष्ये यथा पुनः ।
ज्ञानदानफलं ह्येतद्यज्जातिस्मरणं मम ॥

न ह्येतत्प्राप्यते तात त्रयीधर्माश्रितैर्नरैः ।
सोऽहं पूर्वाश्रमादेवमिष्ट्वा धर्ममुपागतः ॥

तमेव गुरुमाचार्यं स्मरामि सततं हृदि ।
एकान्तत्वमुपाश्रित्य यतिष्याम्यात्ममोक्षणे ॥

तत्रैवाहं गमिष्यामि यत्र योगी गुरुर्मम ।
तद्ब्रूहि त्वं महाभाग यत्ते संशयितं हृदि ॥

एतावताऽपि ते प्रीतिमुत्पाद्यानृण्यमाप्नुयात् ।
पिता प्राह ततः पुत्रं श्रद्दधानश्च तद्वचः ॥
भवता यद्वयं पृष्टास्संसारगहनाश्रयम् ॥ १५

**पुत्र उवाच–**

श्रृणु तात यथाह्येतदनुभूतं मया सकृत् ।
संसारचक्रमजरं स्थितिर्यत्र न विद्यते ॥

सोऽहं वदामि ते सर्वं तवैवानुज्ञया पितः ।
उत्क्रान्तिकालादारभ्य यथा नान्यो वदिष्यति ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे राजराजविद्या माहात्म्ये उत्तरभागे
अष्टाविंशोऽध्यायः ॥



## अथ एकोनत्रिंशोऽध्यायः ॥

**पुत्र उवाच–**

श्रृणु तात मयैवान्य जन्मनामयुते पुरा ।
अनुभूतं महत्कर्म फलं वक्ष्यामि तच्छृणु ॥

ऊष्मा प्रकुपितः काये तीव्रवायुसमन्वितः ।
भिनत्ति मर्मस्थानानि दीव्यमानो निरञ्जनः ॥

उदानो नाम पवनस्तत ऊर्ध्वं प्रवर्तते ।
भुक्तानामम्बुभक्षाणामधोगति निरोधकृत् ॥

ततो येनाम्बुदानानि कृतान्यन्न संस्थास्तथा ।
दत्तास्स तस्यामाह्लादं सपदि प्रतिपद्यते ॥

अन्नानि येन दत्तानि श्रद्धापूतेन चेतसा ।
सोऽपि तृप्तिमवाप्नोति विनाप्यन्नेन वै तदा ॥ ५

येनानृतानि नोक्तानि प्रीतिभेदः कृतो न च ।
आस्तिकः श्रद्धानश्च स सुखं मृत्युमृच्छति ॥

देवब्राह्मण पूजासु निरतायेऽनसूयकाः ।
शुद्धावदान्या धीमन्तस्ते नरा सुखमृत्यवः ॥

यो न कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।
यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति ॥

अनाहारदायिनोदाहं क्षुधं चानन्न दायिनः ।
प्राप्नुवन्ति नराःकाले तस्मिन्मृत्यावुपस्थिते ॥

शीतेन याति जलदास्तापेनोदकदूषिणः ।
प्राणिषु वेदनाकर्तारोऽन्ये चोद्वेगकारिणः ॥ १०

मोहज्ञान प्रहर्तारः ततश्चालोकहारिणः ।
कूटसाक्षी मृषावादी चाशास्यान्नानुशास्ति यः ॥

ते मोहमृत्यवः सर्वे तथावै वेद निन्दकाः ।
विभीषणाः पूतिगन्धाः कुन्तमुद्गर पाणयः ॥

आगच्छन्ति दुरात्मानो यमस्य पुरुषास्तथा ।
प्राप्तेषु कुपथं तेषु जायते तस्य वेपथुः ॥

क्रमत्यविरतं सोऽथ भ्रातृमातृ सुतान्स्मरन् ।
सास्यवागस्फुटा तात एकवर्णा विभाव्यते ॥

दृष्टि भ्राम्यति त्रासात् श्वासाच्छुष्यति चाननम् ।
ततः स वेदनाविष्टस्तच्छरीरं विमुञ्चति ॥ १५

वाय्वग्नि सारि तद्रूपं देहमन्यत्प्रपद्यते ।
तत्कर्मजं पातनोत्थं समातृ पितृ सम्भवम् ॥

तत्प्रमाणावयोऽवस्था संस्थानं प्राग्भवं यथा ।
ततो दूता यमस्याशु पाशैर्बध्नाति दारुणैः ॥

दण्ड प्रहारसंभ्रान्तं कर्ष्यते दक्षिणां दिशम् ।
कुशकण्टक वल्मीक शङ्कुपाषाण कर्कशे ॥

तथा प्रदीप्तज्वलने क्वचच्छ्वभ्र शतोत्कटे ।
प्रदीप्तादित्य तप्तेव दह्यमानस्तदंशुभिः ॥

कृष्यते यमदूतैश्च शिवा सन्नादभीषणे ।
विकृष्यमाणस्तद्घोरैर्भक्ष्यमाणः शिवाशतैः ॥ २०

प्रयाति दारुणे मार्गे पापकर्मा यमालयम् ।
छत्रोपानत्प्रदातारो ये च वेश्म प्रदा नराः ॥

ते यान्ति मनुजामार्गं सुखेनैव तथान्नदः ।
एवं क्लेशाननु भवन् कृच्छ्रगः पापपीडितः ॥

नीयते द्वादशाहेन धर्मराज पुरं नरः ।
कलेबरे दह्यमाने महान्तं दाहमृच्छति ॥

भक्ष्यमाणे तथैवाति च्छिद्यमाने सुदारुणे ।
क्लिद्यमानेप्यविरतं जन्तुर्दुःखमुपाश्नुते ॥

स्वेन कर्मविपाकेन देहान्तर गतेऽपि सन् ।
तत्र यद्बान्धवास्तोयं प्रयच्छन्ति तिलैस्सह ॥ २५

यद्यत्पिण्डं प्रयच्छन्ति नीयमानस्तदत्ति सः ।
तेनाभ्यङ्गं बान्धवानामङ्गसंवाहनं च यत् ॥

तेन चाप्यद्यते जन्तुर्यश्चाश्नन्ति स्वबान्धवाः ।
भूमौ स्वपद्भिर्नात्यर्थं क्लेशमाप्नोति बान्धवैः ॥

दानं ददद्भिश्च तथा जन्तुराप्यायते मृतः ।
तस्मादन्नानि देयानि प्रेत तृप्त्यर्थमादरात् ॥

भूहिरण्यवस्त्रादीन्यात्म शक्त्यनुसारतः ।
नीयमानः स्वकंगेहं द्वादशाहं स पश्यति ॥

उपभुङ्क्ते तथा दत्तं तोयपिण्डादिकं भुवि ।
द्वादशाहात्परं घोरं वायसं भीषणाकृतिम् ॥ ३०

याम्ये पश्यत्यथोजन्तुः कृष्यमाण इतस्ततः ।
गतम्पत्नोऽतिरक्ताक्षं भिन्नाञ्जन समप्रभम् ॥

मृत्युकालान्तकादीनां मध्ये पश्यत्यसौ यमम् ।
दंष्ट्राकरालवदनं भ्रुकुटी कुटिलाकृतिम् ॥

विरूपैर्भीषणैर्वक्त्रैर्वृतव्याल शतैरपि ।
दण्डासक्तं महाबाहुं पाशहस्तं सुभैरवम् ॥

तन्निर्दिष्टां ततो याति गतिं जन्तुः शुभाशुभाम् ।
रौरवे कूटसाक्षी तु याति पश्चादनृतो नरः ॥

तस्य स्वरूपं वदतो रौरवस्य निशामय ।
योजनानां सहस्रे द्वे रौरवोऽति प्रमाणतः ॥ ३५

जानुमात्र प्रमाणं च तत्र श्वभ्रं सुदुस्तरम् ।
तत्राङ्गार च योपेतं कृतं तद्धरणीसमम् ॥

ज्वलता चाति तीव्रेण तापितां वरभूमिना ।
तन्मध्ये पापकर्माणं विमुञ्चन्ति यमानुगाः ॥

सदह्यमानस्तीव्रेण वह्निना तेन धावति ।
पदे पदे च पादोऽस्य शीर्यते जायते पुनः ॥

अहो रात्रेणोद्धरणं पादयोश्च स गच्छति ।
एवं सहस्रं विस्तीर्णं योजनानां विमुच्यते ॥

ततोऽन्यत्पापशुद्ध्यर्थं तादृग्द्विरपगच्छति ।
ततः सर्वेषु निस्तीर्णः पापी निष्पक्वमश्नुते ॥ ४०

कृमिकीट पतङ्गेषु श्वापदैक शफादिषु ।
गत्वा दुर्मर्णि तापेषु गोश्वशवेनषु तथैव च ॥

अन्यासु चैव पापासु दुःखदासु च योनिषु ।
मानुष्यं प्राप्य कुब्जो वा कुत्सितो वा मनोऽपि वा ॥

चण्डाल पुल्कसाद्यासु नरो योनिषु जायते ।
अवशिष्टैन पापेन पुण्येन च समन्वितः ॥

ततः शुभतरां जातिं लभते तदनन्तरम् ।
ततश्चारोहिणीं योनिं शूद्रवैश्य नृपादिकाम् ॥

विप्रदेवेन्द्रतां चापि कदाचिदवरोहिणीम् ।
एवं हि पापकर्माणो नरकेषु पतन्त्यधः ॥ ४५

यथा पुण्यकृतो यान्ति तन्मे निगदतः शृणु ।
ते पुण्येन विनिर्दिष्टा यान्ति पुण्यां गतिं नराः ॥

प्रगीता गन्धर्वगणाः प्रनृत्ताप्सरसां गणः ।
हारनूपुर माधुर्य शोभितान्यमलानि च ॥

प्रपीत्याशुचिमातानि दिव्यगन्धस्रगुज्ज्वलाः ।
तस्माच्च प्रच्युता राज्ञामन्येषां च महात्मनाम् ॥

जायन्ते नीरुजां गेहे सद्वृत्त परिपालकाः ।
भोगान्संप्राप्नुवन्त्युग्रान् तथा यान्त्यूर्ध्वमन्यथा ॥

अवरोहिणीं वा संप्राप्य पूर्ववद्यान्ति मानवाः
एतत्ते सर्वमाख्यातं यथा जन्तुर्विपद्यते ॥ ५०

ततः शृणुष्व विप्रर्षे यथागर्भं प्रयात्यसौ ।
निषेके मानवस्त्रीणां बीजं प्राप्ते रजस्यथ ॥

विमुक्तमात्रो नरकात्स्वर्गाद्वापि प्रपद्यते ।
नाभिमूले ततः स्थैर्यं याति बीजद्वयं हि तत् ॥

कललत्वं बुद्बुदत्वं ततः पेशित्वमेव च ।
पेश्यां यथाऽणुबीजस्य अङ्कुरस्तद्वदुच्यते ॥

अङ्गानां च तथोत्पत्तिः पञ्चानामनुभागशः ।
उपाङ्गान्यङ्गुली नेत्र नासास्य श्रवणानि च ॥

प्ररोहं यान्ति चाङ्गेभ्यस्तद्वत्तेभ्यो नखालकाः ।
त्वक् च रोमाणि जायन्ते केशाश्चैव ततः परम् ॥ ५५

स समं वृद्धिमायाति तेनैवोद्भव कोशकम् ।
नारिकेल फलं यद्वत् सकोशं वृद्धिमृच्छति ॥

तद्वत्प्रयात्यसौ वृद्धिं सकोशोऽधोमुखस्थितः ।
तले तु जानुपार्श्वाभ्यां करयोन्यस्थि वर्धते ॥

अङ्गुष्ठावुपरिन्यस्य जान्वोरग्रे तलाङ्गुलीः ।
जानुपृष्ठे तथा नेत्रे जानुमध्ये च नासिका ॥

स्फिजौ पार्श्व द्वयस्थौ च बाहुजङ्घे बहिःस्थिते ।
एवं वृद्धि क्रमाद्याति जन्तुः स्त्रीगर्भ संस्थितः ॥

अदृष्टश्चोदरे जन्तुर्यथारूपं तथा स्थितः ।
काठिन्यमग्निना याति भुक्तपीतेन जीवति ॥ ६०

पुण्यापुण्याश्रयमयी स्थितिर्जन्तोस्तथोदरे ।
नाडीचाप्यायनी नाम नाभ्यां तस्य निबद्धयते ॥

स्त्रीणां तथाऽन्तः सुषिरे सा निबद्धोपजायते ।
क्रामन्ति भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ॥

तैराप्यायित देहोऽसौ जन्तुर्वृद्धिमुपैति वै ।
स्थितिं तत्र प्रयान्त्यस्य वसाः संसार भूमयः ॥

ताभिर्निर्वेदमायाति पीडयमान इतस्ततः ।
पुनर्नैव करिष्यामि मुक्तमात्र इहोदरात् ॥

तथा तथा करिष्यामि गर्भं नाप्स्याम्यहं यथा ।
शङ्खचक्रगदापाणिं पीतवाससमच्युतम् ॥ ६५

नारायणं महात्मानं सर्गस्थिति लयाधिपम् ।
चिन्तयन्नेव दुःखौघाद्भविष्यामि विमोचितः ॥

इति चिन्तयते स्मृत्वा जन्तुर्दुःख शतानि वै ।
याति पूर्वानुभूतानि दैवभूतात्मकानि वै ॥

ततः कालक्रमाज्जन्तुः परिवृत्यैत्यधोमुखः ।
नवमे दशमे वाऽपि मासि संजायते ततः ॥

निष्क्रम्यमाणो वातेन प्राजापत्येन पीड्यते ।
निष्क्रमन्नेव विलपन् तदा दुःखेन पीडितः ॥

निष्क्रान्तश्चोदरान्मूर्छामसह्यां प्रतिपद्यते ।
प्राप्नोति चेतनां चासौ वायुस्पर्शयुतः पुनः ॥ ७०

ततश्च वैष्णवी माया समास्कन्दति मोहिनी ।
तथाऽपि मोहितात्माऽसौ ज्ञानभ्रंशमवाप्नुते ॥

भ्रष्टज्ञातो बालभावं ततो जन्तुः प्रपद्यते ।
रुदन्मत्कुणबाधादि पीडितो भृशमातुरः ॥

ततः कौमारकावस्थां तारुण्यमपि चञ्चलम् ।
प्राप्य कामातुरो नित्यं तरुणी सङ्गलोलुपः ॥

न पारलौकिकं धर्मं मनसाऽपि स्मरत्यसौ ।
वृद्धतामपि सम्प्राप्य श्लेष्म वातादि पीडितः ॥

श्रुत्वा मृत्युमवाप्नोति पुनर्जन्म पुनर्मृतिम् ।
ततः संसार चक्रेऽस्मिन् भ्राम्यते घटीयंत्रवत् ॥ ७५

कदाचित्स्वर्गमाप्नोति कदाचिन्नरकं तथा ।
स्वर्गं च नरकं चैव कदाचिद्द्वयमश्नुते ॥

कदाचिदत्रैव पुनर्जातः स्वं कर्म चाश्नुते ।
कदाचिद्धुत कर्मा च इतः स्वल्पेन गच्छति ।।

कदाचिदल्पैश्च ततो जायते च शुभाशुभैः ।
स्वर्गलोके च नरके भुक्त प्रायैर्द्विजोत्तमैः ।।

नरकेषु महद्दुःखमेतद्यत्स्वर्ग वासिनः ।
दृश्यन्ते तात मोदन्तः पात्यमानैस्तु नारकैः ।।

स्वर्गेऽपि दुःखमतुलं पदारोहण कालतः ।
प्रभृत्यहं पतिष्यामीत्येतन्मनसि वर्तते ।। ८०

नरकांश्चैव संप्रेक्ष्य महद्दुःखमवाप्यते ।
एतां गतिमहं गन्तेत्यहर्निशमनिर्वृतः ।।

गर्भवासे महद्दुःखं जायमानस्य चाधिकम् ।
जातस्य बालभावे च वृद्धत्वे दुःखमेव च ।।

कामेर्ष्या क्रोध संबन्धे यौवने दुःखमुत्तमम् ।
दुःख प्राया वृद्धता च मरणे दुःखमुत्तमम् ।।

कृष्यमाणैर्याम्यैश्च नरकेषु च यात्यतः ।
पुनश्च गर्भे जन्माऽथ मरणं नरकं तथा ।।

इत्थं संसारचक्रेऽस्मिन् जन्तवो घटीयन्त्रवत् ।
भ्राम्यन्ते प्राकृतैर्बन्धैर्बद्धवत्सन्ति चासकृत् ।।

नास्ति तात सुखं किञ्चिदत्र दुःख शताकुले ।
एवं मोक्षाय यतता कथं सेव्या त्रयीमयी ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदार्थसंग्रहे राजराज विद्यामाहात्म्ये उत्तरभागे एकोनत्रिंशोऽध्यायः ॥

# अथ त्रिंशोऽध्यायः ॥

**पितोवाच –**

साधु वत्स त्वयाऽऽख्यातं संसार गहनं परम् ।
ज्ञानप्रदान संभूतं समाश्रित्य महत्फलम् ॥

तत्र ते नरकास्सर्वे यथा वै रौरवस्तथा ।
वर्णितास्तन्ममाचक्ष्व विस्तरेण महामते ॥

**पुत्र उवाच –**

रौरवस्ते समाख्यातः प्रथमं नरको मया ।
महारौरव संज्ञं तु श्रृणुष्व नरकं पितः ॥

योजनानां चतुःपञ्चसहस्राणि समन्ततः ।
तत्र ताम्रमयी भूमिरधस्तस्या हुताशनः ॥

तत्ताप तप्ता सा सर्वा प्रोद्यद्विद्युत्समप्रभा ।
विभासते महारौद्रा दर्शन स्पर्शनादिषु ॥ ५

तस्यां बद्धः कराभ्यां च पद्भ्यां चैव यमानुगैः ।
मुच्यते पापकृन्मध्ये लुठमानस्स गच्छति ॥

काकैर्बकैर्वृकोलूकैर्वृश्चिकैर्मशकैस्तथा ।
भक्ष्यमाणस्तथा गृध्रैर्दन्तमार्गे विकृष्यते ॥

दह्यमानः पितर्मातर्भ्रातस्तातेति चाकुलः ।
वदत्य सकृदुद्विग्नो न शान्तिमुपगच्छति ॥

एवं कस्मान्नरैर्मोक्षः कथं भ्रान्तैरवाप्यते ।
वर्षायुतायुताप्याय यैः कृतं दुष्टबुद्धिभिः ॥

तथान्यस्तु तमो नाम सोऽतिशीतः स्वभावतः ।
महारौरवद्दीर्घस्तथान्धमहसा वृतः ॥ १०

शीतार्तास्तत्र धावन्ति नरास्तमसि दारुणे ।
परस्परं समासाद्य परिरभ्याश्रयन्ति च ॥

दन्तास्तेषां च भक्ष्यन्ते शीतार्ति परिपीडिताः ।
क्षुत्तृष्णार्ति बलोद्विग्नास्तथा चान्येप्युपद्रवाः ॥

... ... ... ... ... ... ।
मज्जासृग्गलितं तस्मादश्नान्तं च क्षुधान्विताः ॥

असह्यमाना भ्राम्यन्ते परस्पर समागमे ।
एवं तत्रापि सुमहाक्लेशस्तमसि मानवैः ॥

प्राप्यते ब्राह्मण श्रेष्ठ यावद्दुष्कृत संक्षयः ।
निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः ॥ १५

तस्मिन् कुलालचक्राणि भ्रमन्त्यविरतं ततः ।
तेष्वारोप्य निकृष्यन्ते कालसूत्रेण मानवाः ॥

यमानुगानां हस्तेन चापादतल मस्तकम् ।
न तेषां जीवित भ्रंशो जायते द्विज सत्तम ॥

छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्त्यपि ।
एवं वर्ष सहस्राणि भ्राम्यन्ते पापकर्मिणः ॥

तावद्यावदशेषं वै तत्पापसंक्षयं ततः ।
अप्रतिष्ठं च नरकं शृणुष्व गदतो मम ॥

यत्रस्थैर्नारकैर्दुःखमसह्यमनुभूयते ।
तान्येव तत्र चक्राणि घटीयन्त्राणि चाप्युत ॥ २०

दुःखस्य हेतुभूतानि पापकर्मकृतां नृणाम् ।
चक्रेष्वारोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः ॥

यावद्वर्ष सहस्राणि तेषां स्थितिरनन्तरा ।
घटीयन्त्रेषु चैवान्ये बद्धास्तोयघटा यथा ॥

भ्राम्यन्ते मानवारक्तमुद्गिरन्ति पुनः पुनः ।
आन्त्रैर्मुखेषु निष्क्रान्तैर्नेत्रैरान्त्रावलम्बिभिः ॥

दुःखानि ते प्राप्नुवन्ति यान्यसह्यानि जन्तुभिः ।
असिपत्रवनं नाम नरकं शृणु चापरम् ॥

योजनानां सहस्रं यो ज्वलदग्न्यास्तृतावनिः ।
सप्तसूर्यकरैश्छन्नैः कल्पान्तानलदारुणैः ॥

प्रापयन्ति तदा तत्र प्राणिनो नरकौकसः ।
तन्मध्ये च वनं शीतमसिपत्रं विभाव्यते ॥

पत्राणि तत्र खड्गाश्च तीक्ष्णानि द्विजसत्तम ।
श्वानश्च तत्र शबला स्वनन्त्य युतशोऽभितः ॥

महावक्त्रा महादंष्ट्रा व्याघ्रा इव महाभयाः ।
ततस्तद्वनमालोक्य शिशिरच्छायमग्रतः ॥

प्रयान्ति प्राणिनस्तत्र तृट्तापपरिपीडिताः ।
हा तात हा मातरिति क्रन्दतोऽतीव दुःखिताः ॥

घट्टमानांघ्रियुगला धरणिस्थेन वह्निना ।
तेषां गतानां तत्रापि यत्र याति समीरणः ॥

प्रवाति ते निपात्यन्ते तेषां खड्गास्तथोपरि ।
ततः पतन्ति ते भूमौ ज्वलत्पावक सञ्चये ॥

लेलिह्यमाने वान्यत्र व्याप्ताशेष महीतले ।
सारमेयास्ततः शीघ्रं शातयन्ति शरीरिणः ॥

तेषां खण्डानिरुदता मनेकान्यतिभीषणाः ।
असिपत्रवनं तत्र ममैतत्कीर्तितं तव ॥

अतः परतरं घोरं तप्तकुम्भं निबोध मे ।
समन्ततस्तप्तकुम्भा वह्निज्वाला समावृताः ॥

ज्वलदग्निमयास्तप्त तैलायश्चूर्णपूरिताः ।
तेषु दुष्कृतकर्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ॥

क्वाथ्यन्ते विस्फुटद्गात्र गलन्मज्जा जलानिलाः ।
स्फुटत्कपाल नेत्रास्थि खिद्यमाना विभीषणैः ॥ ३५

गृध्रैरुत्पाद्यमुच्यन्ते पुनस्तेष्वेव वेशितैः ।
पुनः शिमिशिमायन्ते तिलेनैक्यं व्रजन्ति ते ॥

द्रवीभूतैः शिरो नेत्रैस्स्नायु मांसत्वगस्थिभिः ।
ततो याम्यैर्भटैराशु दर्वीघटनवत्तथा ॥

कृतावर्तैं महावातैः क्वथ्यन्ते पापकर्मिणः ।
एष ते विस्तरेणोक्तस्तप्तकुंभो मया पितः ॥

अहं वैश्यकुले जातो जन्म यस्मात्तु सप्तमे ।
समतीते गवां रोधं निपाने कृतवान् पुरा ॥

विपाकात्कर्मणस्तस्य नरकं भृशदारुणम् ।
सम्प्राप्तोऽस्मि शिवाघोर मयोमुख खगाकुलम् ।। ४०

यन्त्रपीडित वक्त्रासृक् प्रवाहोद्भूतकर्दमम् ।
विकृष्यमाणो दुष्कर्म स्तनितार्तिरवाकुलम् ।।

पात्यमानस्य मे तस्य साग्रं वर्षशतं गतम् ।
महातापार्ति तप्तस्य तृष्णादावार्दितस्य च ।।

अथाह्लादकरः सद्यः पवनस्सुखलीनतः ।
करम्भवालुकातप्त मध्यस्थस्समुपागतः ।।

तत्संपर्कादशेषाणां माऽभवद्यातना नृणाम् ।
मम चापि यथा स्वर्गे स्वर्गिणां निर्वृतिः परा ।।

किमेतदिति चाह्लाद विस्तार स्तिमितेक्षणैः ।
दृष्टमस्माभिरासन्नं नररत्नमनुत्तमम् ।। ४५

याम्यश्च पुरुषो घोरो दण्डहस्तोऽति सुप्रभः ।
पुरतो दर्शयन्मार्गमित एहीति मानद ।।

पुरुषस्स तदा दृष्ट्वा यातनाशत सङ्कुलम् ।
.........नरकं प्राप्तोऽस्मि नरकं परम् ।।

विपश्चिदिति विख्यातो जनकानामहंकुले ।
जातो विदेह विषये सम्यङ्मनुज पालकः ।।

यज्ञैर्मयेष्टं बहुभिर्धर्मतः पालिता मही ।
नोत्सृष्टश्चैव संग्रामो नातिथिर्विमुखो गतः ॥

पितृदेवर्षिभृत्याश्च न च निश्वासिता मया ।
कृता स्पृहा न च मया परस्त्री विधवादिषु ॥ ५०

पर्वकालेषु पितरः सिद्धिकाले च देवताः ।
पुरुषं स्वयमायान्ति निधानमिव मानवः ॥

यतस्ते विमुखा यान्ति निश्वस्य गृहमेधिनः ।
... ... ... ... ... ॥

तत इष्टं च पूर्तं च धर्मौ द्वावपि नश्यतः ।
पितृनिश्वासो ध्वंसेत सप्त जन्मार्जितं शुभम् ॥

त्रिजन्मसंभवं देव निःश्वासो हन्त्यसंशयम् ।
तस्माद्दैव्यै च पित्र्ये च नित्यमेवोद्यतो भवेत् ॥

सोऽहं कथमिमं प्राप्तो नरकं भृशदारुणम् ।

**पुत्र उवाच –**

इति पृष्टस्तदा तेन शृण्वतां नो महापुमान् ॥ ५५

उवाच पुरुषो याम्यो घोरोऽथ प्रस्तुतं वचः ।

**किङ्कर उवाच –**

महाराज यथात्थत्वं तथैतन्नात्र संशयः ॥

किन्तु स्वल्पं कृतं पापं भवता स्मारयामि तत् ।
त्वयेष्टं सकलैर्यज्ञैस्संपूर्णवर दक्षिणैः ।।

महादानानि दत्तानि श्रोत्रियेभ्यस्त्वयाऽऽदरात् ।
आचार्यपितृमुख्याश्च सततं पूजितास्त्वया ।।

श्रीमदष्टाक्षरी विद्या त्वया सम्यगुपासिता ।
भगवद्रश्मि सहिता काले काले महीपते ।।

चन्द्रसूर्यग्रहे भानुसङ्क्रमेषु भृगोर्दिने ।
विशेषतो जपं होमं कृत्वाऽऽचार्यस्य दक्षिणाम् ।। ६०

दत्वा सहस्रशः स्वर्णपशुरत्नसमाकुलम् ।
दिव्यालङ्कारवासोभिराचार्यदयिता त्वया ।।

महालक्ष्मी धिया साक्षात् पूजिता मासि मास्यपि ।
आचार्यपुत्रास्सततं रत्नैरर्थैश्च पुष्कलैः ।।

उपासितास्त्वया सम्यक् पौत्रा नप्तृमुखा अपि ।
आचार्यानुज्ञया सर्वं प्रत्यहं दत्तमेव च ।।

आचार्यनिन्दा कर्तॄणां सम्यक् शिक्षा त्वया कृता ।
तत्रैकस्मिन् दिने राजन् दरिद्राय द्विजातये ।।

दीनाणां सहस्राणि पञ्चदेहीति ते गुरुः ।
उक्तवान् भवताप्यस्मै दत्तं त्रिन्यूनमादरात् ।। ६५

दारुणं नरकं दृष्टं तेन पापेन भूपते ।
विद्यते पापलेशस्ते नान्यः कश्चन सुव्रत ॥

तदेहि गच्छ पुण्यानामुपभोगाय पार्थिव ।

**राजोवाच —**

यास्यामि देवानुचर यत्र मां तु नयिष्यसि ॥

किञ्चित्पृच्छामि तन्मे त्वं यथावद्वक्तुमर्हसि ।
वज्रतुण्डा अमी काकाः पुंसां नयन हारिणः ॥

पुनः पुनश्च नेत्राणि तद्वदेषां भवन्ति च ।
किं कर्म कृतवन्तश्च कथमेतज्जुगुप्सितम् ॥

हरन्त्येषां तथा जिह्वां जायमानां पुनस्तथा ।
किं कर्म कृतवन्तश्च येनैतद्दुःख भोगिनः ॥ ७०

करपत्रेण पात्यन्ते तस्मादेतेति दुःखिताः ।
करम्भवालुकास्वेते तथैते क्वाथ्य तैलगाः ॥

अयोमुखैः खगैश्चैव कृष्यन्ते किं विधौ वद ।
विशिष्ट देहबन्धार्ति महाराव विराविणः ॥

आयश्चञ्चुनिपातेन सर्वाङ्गक्षति दुःखिताः ।
किमेतन्निश्वसन्तोऽपि तुद्यन्तेऽहर्निशं नराः ॥

एताश्चान्याश्च दृश्यन्ते यातनाः पाप कर्मणाम् ।
येन कर्मविपाकेन तन्ममोद्देशतो वद ॥

**किङ्कर उवाच –**

यन्मां पृच्छसि भूपाल पापकर्म फलोदयम् ।
ततोऽहं संप्रवक्ष्यामि संक्षेपेण यथातथम् ॥ ७५

पुण्यापुण्ये तु पुरुषः पर्यायेण समश्नुते ।
भुञ्जतश्च क्षयं याति पुण्यं पापं तथापि च ॥

न तु भोगादृते पापं पुण्यं वा कर्ममानवम् ।
परित्यजति भोगांश्च पुण्यपापे निबोध मे ॥

दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद् भयम् ।
मृतेर्मृतिं तथा यान्ति दरिद्राः पापकारिणः ॥

उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ॥

व्यालकुञ्जरदुर्गाणि सर्पचौरभयानि च ।
हताः पापेन गच्छन्ति पापिनः किमतः परम् ॥ ८०

सुगन्धिमाल्य सद्वस्त्रु सीधुपानाः शुभासनाः ।
स्तूयमानास्सदा यान्ति पुण्याः शून्याटवीष्वपि ॥

अनेक जन्मसाहस्र जन्मसञ्चयसञ्चितम् ।
पुण्यापुण्यं नृणां तद्वत्सुखदुःखाङ्कुरोद्भवम् ॥

यथा हि बीजं भूपाल पयांसि संप्रतीक्षते ।
पुण्यात्पुण्यं तथा कालदेशाद्यं कर्मवीक्षते ॥

स्वल्पं पापं कृतं पुंसां देशकालोपपादितम् ।
पादन्यासासहं दुःखं कण्टकोत्थं प्रयच्छति ॥

तत्प्रभूततरस्थलं शङ्कुकीलक संभवम् ।
दुःखं यच्छति तद्वच्च शिरोरोगादि दुःखदम् ॥

अपथ्याशन शीतोष्ण श्रमतापादिकारकम् ।
तथान्यान्यप्यपेक्षेत पापानि फलसंगमे ॥

एवं महान्ति पापानि दीर्घरोगादिकक्रमे ।
तद्वच्च तानि कृच्छ्राणि बन्धनानि फलाय वै ॥

अल्पं पुण्यं शुभं गन्धं हेलया संप्रति यच्छति ।
स्पर्शं वाप्यथवा शब्दं रूपं रसमथापि वा ॥

चिराद्गुरुतरं यद्वन्महान्तमपि कालजम् ।
एवं च सुखदुःखानि पुण्यपापोद्भवानि च ॥

भुञ्जानोऽनेक संसारे स भवानिह तिष्ठति ।
जातिदेशा विरुद्धानि ज्ञानाज्ञान कृतानि च ॥ १०

तिष्ठन्ति तत्र पक्वानि लिङ्गमात्रेप्यन्तरात्मनि ।
कर्मणा मनसा वाचा न कदाचित्क्वचिन्नरः ॥

अकुर्वन् पातकं कर्म पुण्यं वाप्यवतिष्ठते ।
यद्यदाप्नोति पुरुषस्सुख दुःखमथापि वा ॥

प्रभूतमथवा स्वल्पं विक्रिया वा स्वचेतसः ।
तावता यातना पुम्सः पापं प्राप्याथवेतरम् ॥

उपभोगात्क्षयं याति भुज्यमानमिवाशनम् ।
एवमेते महापापं यातनाभिरहर्निशम् ॥

क्षपयन्ति नराघोरं नरकोत्तरवर्तिनः ।
तथैव राजन्पुण्यानि स्वर्गलोकेऽमरैः सह ॥ ९५

गन्धर्व सिद्धाप्सरसां गीताद्यैरुपभुञ्जते ।
देवत्वेऽथ मनुष्यत्वे तिर्यक्त्वे च शुभाशुभम् ॥

पुण्यपापोद्भवं भुङ्क्ते सुखदुःखोपलक्षणम् ।
यत्तु पृच्छसि मां राजन् यातनाः पापकर्मणाम् ॥

केन केन विपाकेन तत्ते वक्ष्यामि लेशतः ।
दुष्टेन चक्षुषा दृष्टाः परदारा नराधमैः ॥

मानसेन च दृष्टेन परद्रव्यं च सस्पृहैः ।
वज्रतुण्डाः खगास्तेषां हरन्त्येते विलोचने ॥

पुनःपुनश्च संभूतिरक्ष्णोरेषां भवत्यपि ।
यावदक्षिनिमेषैस्तु पापमेभिर्नृभिः कृतम् ॥ १००

तावद्वर्षाणि नेत्रार्तिमेते प्राप्स्यन्त्यवारिताम् ।
असच्छास्त्रोपदेशास्तु यैर्दत्ता यैश्च मंत्रिताः ॥

सम्यक् पृष्टे विनाशाय रिपूणामपि मानवे ।
यैः शास्त्रमन्यथा प्रोक्तं यैरसद्वागुदाहृता ॥

त इमे पर्वतस्याग्रात् पतन्त्येव पुनः पुनः ।
देव वेद द्विजातीनां गुरोर्निन्दा च यैः कृता ॥

हरन्ति तेषां जिह्वां च जायमानां पुनः पुनः ।
तावतोवत्सरानेव वज्रतुण्डास्सुदारुणाः ॥

श्रीमदष्टार्ण विद्याया आचार्यस्य महात्मनः ।
यावत्यो घटिका निन्दा श्रुताऽदृष्टापि वा कृता ॥ १०५

तावत्कल्प सहस्राणि जिह्वामेषां पुनःपुनः ।
हरन्ति विष्टां वदने कर्णयोर्निक्षिपन्त्यपि ॥

श्रीमदष्टाक्षरी विद्यां श्रियःपञ्चदशाक्षरीम् ।
ये गृहीत्वा तदाचार्यं नार्चयन्ति दिने दिने ॥

तस्योदरं खड्गपत्रैर्भागशः खण्डयन्त्यमी ।
यावत्यो नाडिकास्तावत्कल्पेषु शतशः पितः ॥

आचार्यमपरामृश्य गृहस्थो यो दिने दिने ।
भुङक्ते स कल्पसाहस्रं विष्टां भुङ्क्ते न संशयः ॥

विवाहं यागकार्येषु पुरश्चर्यादि कर्मसु ।
सम्पूर्णदक्षिणाऽऽचार्यं पादाब्ज युगले शुभे ॥ ११०

भिक्षित्वाऽपि न यैर्दत्ता पत्नीपुत्रादि पोषकैः ।
शुष्क कण्ठांस जिह्वाश्च क्षुत्पिपासा समन्विताः ॥

त एते कल्पसाहस्रं मज्जन्ति नरकार्णवे ।
मित्रभेदस्तथा पित्रा पुत्रस्य स्वजनस्य च ॥

याज्युपाध्यायतोर्मात्रा सुतस्य सहचारिणः ॥
भार्यापत्योश्च ये केचिद्भेदं कुर्युर्नराधमाः ॥

त इमे पश्य पात्यन्ते करपत्रेण पार्थिव ।
पर तापकारा ये येच चाह्लाद निषेधकाः ॥

तालवृन्तानिलस्नान चन्दनोशीरहारिणः ।
प्राणान्तिकं ददुस्तापमदुष्टानां च ये नराः ॥ ११५

करम्भवालुका संस्थास्त इमे पापभोगिनः ।
भुङ्क्ते श्राद्धे तु योऽन्यस्य नरो योऽन्यनिमन्त्रितः ॥

दैवे वाप्यथवा पित्र्ये सद्विधाकृष्यते खगैः ।
मर्माणियश्च साधूनां वदन्वाग्भिर्निकृन्तति ॥

तमेव वधमानास्तु खड्गास्तिष्ठन्त्यवारिताः ।
यः करोति तु पैशुन्यमन्यवागन्यथामतिः ॥

पात्यते हि द्विधा जिह्वा तस्य सन्निहितैः शरैः ।
मातापित्रोर्गुरूणां च येऽवज्ञांचक्रुरुद्धताः ॥

त इमे पूय विण्मूत्र गर्ते मज्जन्त्यधोमुखाः ।
देवतातिथि भृत्येषु मुनिष्वभ्यागतेषु च ॥ १२०

अभुक्तवत्सु येऽश्नन्ति तदक्षित्वग्निणाक्षिषु ।
दुष्टास्ते पूयनिर्यासं सूचीवक्त्रास्तु भुञ्जते ॥

जायन्ते गिरिवष्मणिः पश्यैते यादृशानराः ।
एकपङ्क्त्यां तु यो विप्रमथवोत्तरवर्णजम् ॥

विषपं भोजयन्तीह विद्भुजास्त इमे यथा ।
गोब्राह्मणाग्नयः स्पृष्टा यैरुच्छिष्टैर्नरेश्वर ॥

तेषामेतेऽग्निकुम्भेषु प्रज्वलत्सहिताः कराः ।
सूर्येन्दु तारका दृष्टा यैरुच्छिष्टैस्तु कामतः ॥

तेषां याम्यैर्नरैर्नेत्र न्यस्तो वह्निः समेधते ।
गौरग्निर्जननी विप्रो ज्येष्ठो भ्राता पिता स्वसा ॥ १२५

जामयो गुरवो वृद्धाः स्पृष्टायैस्तु पदा नृभिः ।
विद्धांघ्रयस्ते निगडैर्लोहैरग्नि प्रतापितैः ॥

अङ्गारराशि मध्यस्थैस्तिष्ठन्त्या जानु दाहिनः ।
पायसं कृसरं चागं देवान्नानि च यानि वै ॥

भुक्तानि यैरसंस्कृत्य तेषामान्त्राणि पापिनाम् ।
निपातितानां भूपृष्ठे विद्युताग्नि निरीक्षताम् ॥

सन्देशैरपकृष्यन्ते पुनर्याम्यैर्मुखात्ततः ।
आचार्यनिन्दा कर्णाभ्यां यैस्सकृद्वा निशामिता ॥

अयोमयानि शूलानि तत्कर्णेषु पुनः पुनः ।
आकल्पं पूरयन्त्येते याम्या विलपतामपि ॥ १३०

प्रपादेव विप्रौको देवालय सभाशुभाः ।
भद्रा विध्वंसमानीताः क्रोधलोभानुवर्तिभिः ॥

तेषामेते शितैश्शस्त्रैर्मुहुर्विलपतां त्वथ ।
पृथक्कुर्वन्ति ते याम्याः शरीरादतिदारुणाः ॥

गोब्राह्मणार्कमार्गेषु ये च मेहन्ति मानवाः ।
तेषामेतानि कृष्यन्ते गुदे चान्त्राणि वायसैः ॥

दत्वा कन्यां य एकस्मै द्वितीयाय प्रयच्छति ।
सत्वेवं नैकधाच्छिन्नः क्षारनद्यां स वाह्यते ॥

स्वपोषणपरो यस्तु परित्यजति मानवः ।
पुत्र मित्र कलत्रादि बन्धुवर्गमकिञ्चनम् ॥ १३५

दुर्भिक्षे संभ्रमे वाऽपि सोऽप्येवं यमकिङ्करैः
उत्कृत्य दत्तानि मुखे स्वमांसान्यश्नुते क्षुधा ॥

पुत्र मित्र कलत्रादि बन्धुपोषण तत्परः ।
दुर्भिक्षे संभ्रमे वाऽपि स्वाचार्यं भगवन्मयम् ॥

आचार्यपत्नी पुत्रादीन् परित्यजति यो नृप ।
तस्य वक्त्रे मलं मूत्रमाकल्पं यमकिङ्कराः ॥

पूरयन्त्युदरं चास्य खण्डयन्ति पुनः पुनः ।
शरणागतं यस्त्यजन् लोभादुत्कोच जीवनः ॥

सोऽप्येवं यन्त्र पीडाभिः पीड्यते यमकिङ्करैः ।
सुकृतं ये प्रयच्छन्ति यावज्जीव कृते नराः ॥ १४०

ते पिष्यन्ते शिलापेषं यथैते पापकारिणः ।
न्यासापहारिणो बद्धाः सर्वगात्रेषु बन्धनैः ॥

कृमिवृश्चिक काकोलैर्भज्यन्तेऽहर्निशं नराः ।
क्षुत्तापतृट् तप्तजिह्वातालवो वेदनातुराः ॥

दिवा मैथुन निष्णाता परदाररताश्च ये ।
तथैव कण्टकैस्तीक्ष्णैरायसैः पश्य शाल्मलीम् ॥

आरोपिता वितुन्नाङ्गा प्रभूतासृग्व्यथाविलाः ।
मूषायामपि पश्यैतान् दह्यमानान्यमानुगैः ॥

पुरुषैः पुरुष व्याघ्र परदाराभिमर्शिनः ।
उत्कन्यायमधः कृत्वा तच्चौर्याध्ययनं नरः ॥ १४५

गृह्णाति शिल्पमथवा सोऽप्येवं शिरसा शितम् ।
विशत्क्लेशमवाप्नोति यममार्गेऽतिपीडितः ॥

क्षुत्क्षामोऽहर्निशं भारपीडारूषित मस्तकः ।
श्लेष्ममूत्र पुरीषाणि यैरुत्सृष्टानि वारिणि ॥

त इमे श्लेष्मविण्मूत्र दुर्गन्धिनरके गताः ।
परस्परं च मांसानि भक्षयन्ति क्षुधार्दिताः ॥

इमे कृमित्वमापन्ना भुज्यन्तेऽत्र पिपीलकैः ।
यतिः प्रतिग्रहादानाद्याजनान्नित्यसेवनात् ॥

पाषाणमध्ये कीटत्वं नीरसं तत्समश्नुते ।
पश्यतो यस्य कस्यापि मित्राणामतिथेस्तथा ॥ १५०

एको मृष्टान्नभोजी स्याज्ज्वल दङ्गार सञ्चये ।
वृकैर्भयङ्करैः स्पृष्टो नित्यमन्योऽभुज्यते ॥

मृष्टमन्नं नृपैतेन यतो लौल्येन भक्षितम् ।
अन्धोऽथ बधिरोमूको भ्राम्यते च क्षुधातुरः ॥

अकृतज्ञोऽधमः पुम्सामपकारेषु वर्तते ।
अयं कृतघ्नो मित्राणामपकारी सुदुर्मतिः ॥

तमः कूपे विलपति ततो यास्यति शोषणम् ।
करम्भवालुका तप्तः ततो यन्त्रावपीडितः ॥

असिपत्रवनं तस्मात्कर पत्रेण पाटनम् ।
कालसूत्रं तथा छेदोऽनेकाश्चैव यातनाः ॥ १५५

प्राप्य निष्कृतिमेतस्मान्न वैदिकार्थमेष्यति ।
श्राद्ध सङ्गतिनो विप्रास्समुपेत्य परस्परम् ॥

स्पृष्ट्वा संमिश्रितं तोयं पिबन्त्यब्द सहस्रकम् ।
स्वर्णस्तेयी च विप्रघ्नस्सुरापो गुरुतल्पगः ॥

अधश्चोर्ध्वं च दीप्ताग्नौ दह्यमानस्समन्ततः ।
तिष्ठन्नब्द सहस्राणि बहूनि च पुनः पुनः ॥

जायन्ते मानवाः कुष्ठ क्षय रोगादि चिह्निताः ।
मृताः पुनश्च नरकं पुनर्जाताश्च तादृशम् ॥

व्याधि मृच्छन्ति कल्पान्त परिमाणं नराधिप ।
ब्रह्मघ्नो वा पितृघ्नो वा सुरापगुरुतल्पगौ ॥ १६०

निष्कृतिर्धर्मशास्त्रेषु मन्वादिभिरुदीरिता ।
नास्त्याचार्यद्रुहो वेद धर्मशास्त्रेषु निष्कृतिः ॥

महाप्रलयकालान्तमाचार्यद्रोहकारिणः ।
नरके वसतिः प्रोक्ता मन्वाद्यैर्धर्मपारगैः ॥

गोघ्नः पुनर्नरो याति नरकं हि त्रिजन्मनि ।
अथोपपातकानां च सर्वेषामिति निश्चयः ॥

इति पापफलं दृष्टं मया नरकवासिनाम् ।
याम्येन पुरुषेणोक्तं नृपालाय विपश्चिते ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे राजराजेश्वरी विद्यामाहात्म्ये उत्तरभागे
त्रिशोऽध्यायः ॥

# अथ एकत्रिंशोऽध्यायः ॥

किङ्कर उवाच—

श्रृणु राजन् महाभाग पातकौघविभेदनम् ।
धर्मं धर्मभृतां श्रेष्ठ वेदशास्त्रेषु निश्चितम् ॥

सुखमिच्छन्निहाऽमुत्र वेदोक्तं धर्ममुत्तमम् ।
आचरन् सर्वपापेभ्यो विमुक्तः सुखमश्नुते ॥

गन्धपुष्पाक्षतादीनि नित्यं दत्वा द्विजातये ।
विमुक्त उपपापेभ्यो गन्धर्वैस्सह मोदते ॥

कदली पनसादीनि फलानि रसवन्ति च ।
श्रोत्रियेभ्यः प्रदत्वाऽसौ सर्वंपाप विवर्जितः ॥

विद्याधराणां लोकेषु वसेद्युगचतुष्टयम् ।
अभ्यागतादिभ्यो यो ददात्यन्नं दिने दिने ॥ ५

शक्रलोकं समासाद्य यावन्मन्वन्तरं वसेत् ।
दत्वा वासांसि शुद्धात्मा श्रोत्रियेभ्यो दिने दिने ॥

अलकापुरमासाद्य कल्पान्त भोगवान् भवेत् ।
अलङ्कारांश्च रत्नानि श्रोत्रियेभ्यः समर्प्य च ॥

कुबेरार्धासनं प्राप्य मोदते कालमक्षयम् ।
अश्वदानं तु यः कुर्याच्छ्रोत्रियाय द्विजातये ॥

सावित्रं लोकमासाद्य कल्पान्तं दिव्यभोगवान् ।
गजदानं तु यः कृत्वा वेदवेदाङ्गवेदिने ॥

इन्द्रार्धासनमारूढो भवेद्भोगसमन्वितः ।
ददात्यान्दोलिकां यस्तु सर्वोपस्कारसंयुताम् ॥ १०

विमानवरमारूढस्सप्तलोकं व्रजत्यसौ ।
पयस्विनीं सवत्सां गां यो ददाति द्विजातये ॥

शिवलोकमवाप्नोति दिव्यकन्याशतान्वितः ।
द्विमुखां गां नरो दत्वा साङ्गदक्षिणयाऽन्विताम् ॥

महापापोपपापौघैस्सद्य एव विमुच्यते ।
विमानवरमारूढस्सिद्धदेव मुनिस्तुतः ॥

दिव्यकन्यासहस्रेण सहितो ब्रह्मलोकभाक् ।
तुलापुरुषमुख्यानि महादानानि सुव्रतः ॥

कृत्वा ब्रह्मपदे दिव्ये पूज्यते सर्वदेवतैः ।
गोचर्यं संमितां भूमिं बहुसस्य समन्विताम् ॥ १५

यो ददाति द्विजाग्र्याय महापापोपपातकैः ।
विमुक्तः सकलान् भोगानिह लब्ध्वाऽपि दुर्लभान् ॥

कुलसाहस्र सहित आरूढो दिव्यपुण्यकम् ।
संस्तुतस्सकलैर्देवैर्दिव्यकन्याशतान्वितः ॥

प्रयात्यसौ परं धाम यद्गत्वा न निवर्तते ।
द्विजाः सकलवर्णेभ्यः पूज्याः श्रेष्ठा महीतले ॥

तेभ्यो वेदविदः श्रेष्ठास्तेभ्योऽपि ज्ञानिनोऽधिकाः ।
ज्ञानिनोऽप्यधिकाः प्रोक्ता यज्वानो भूरिदक्षिणाः ॥

यज्वभ्योऽपि ब्रह्मविदश्श्रेष्ठाः पूज्या महीतले ।
यद्दत्तं ब्रह्मविदे किञ्चिदेके कस्मिन्दिने नृप ॥ २०

कल्पायुत महासौख्यप्रदं तत्परमे पदे ।
सहस्रब्रह्मविद्भ्यो यो ददाति धनमक्षयम् ।
सहसा-ब्रह्मकल्पान्तं प्राप्नोति धनमक्षयम् ॥

भूषणानि च रत्नानि महीं सस्य समन्विताम् ।
कल्पायुतं समुद्धृत्य मग्नं च नरकार्णवे ॥

तद्विष्णोः परमं धाम यात्यक्षय सुखान्वितम् ।
दरिद्राय द्विजायाऽपि विवाहधनमादरात् ॥

दत्वा फलमवाप्नोति पूर्वोक्तं नात्र संशयः ।
शतं विवाह्य विप्राणां धनं दत्वा सुपुष्कलम् ॥

(अङ्ककाः २४ आरभ्य ६६ पर्यन्तं न दृश्यन्ते ।)

अवश्यं वैष्णवं धाम प्रयात्यत्र न संशयः ।
शतसाहस्रसंख्याक ब्रह्मविद्भ्यो दिने दिने ॥ २५

दत्वा सुवर्णलक्षाणि मुक्तारत्नादिसञ्चयम् ।
दरिद्राणां सहस्रं च विवाह्य धनसञ्चयैः ॥

आचार्यचरणाम्भोजे निष्कं दत्वाऽपि काञ्चनम् ।
ततोऽधिकफलं प्राप्य भगवत्किङ्करो भवेत् ॥

श्रीश्रीपति द्वादशार्णा येन दत्ता महीपते ।
स आचार्यं इति प्रोक्तस्सर्वतत्वार्थवित्तमैः ॥

रश्मिमालासमायुक्त श्रियः पञ्चदशाक्षरीम् ।
येन दत्ता महाभाग ततोऽप्याचार्य उत्तमः ॥

भगवद्रश्मि सहिता श्रीमदष्टाक्षरी शुभा ।
दीयते येन कृपया स साक्षाद् भगवन्मयः ॥ ३०

ताभ्यामप्यधिकः प्रोक्तो महानाचार्य ईश्वरः ।
तमेव साक्षाद्ब्रह्माणं तमेवाच्युतमीश्वरम् ॥

नारायणं विजानीहि मा कुरुष्वात्र संशयम् ।
राजराजेश्वरो नाम्ना लक्ष्मीनारायणीं शुभाम् ॥

गुप्तां सकलवेदेषु सर्वशास्त्रेषु गोपिताम् ।
ददाति हि तमाचार्यमाहुस्सर्वविदं बुधाः ॥

अयमेव जगत्कर्ता ब्रह्माविष्णुर्महेश्वरः ।
सर्वज्ञोऽयं बृहद्भानुर्भोगस्वर्गापवर्गदः ॥

आचार्येभ्यः प्रदत्तं यत्काञ्चनं चिह्नकं तु वा ।
सहस्रमेरु दानेभ्योऽप्यधिकं विद्धि भूपते ॥ ३५

पात्राणामुत्तमं पात्रं तीर्थानामपि चोत्तमम् ।
आचार्यमेव जानीहि साक्षाद्भगवदाकृतिम् ॥

स्वर्णमेरुसहस्रं वा तुलादानशतं तु वा ।
निष्कमात्र प्रदानेन स्वाचार्य चरणाम्बुजे ॥

न तुल्यमुक्तं मुनिभिर्ब्रह्मविद्भिः पुरातनैः ।
परनिन्दा कृतघ्नत्वँ परमर्मोपघट्टनम् ॥

नैष्ठुर्यं निर्घृणत्वं च परदारोपसेवनम् ।
परस्वहरणासक्तिः देवतानां च कुत्सनम् ॥

निकृत्या वञ्चनं नृणां कार्पण्यं च नृणां वधः ।
आचार्यनिन्दाश्रवणं तदाज्ञोल्लङ्घनं तथा ॥ ४०

वेदनिन्दा धर्मशास्त्रेष्वविश्वासश्च सन्ततम् ।
चिह्नं नारकिणामेतदेकैकमपि वा नृप ॥

लक्षणानि विजानीयान्मुक्तानां नारकादनु ।
दयाभूतेषु सद्भावः परलोक प्रतिक्रिया ॥

सत्या भूतहिता चोक्तिर्वेदप्रामाण्यदर्शनम् ।
गुरुदेवर्षिसिद्धार्थिपूजनं साधुसङ्गमः ॥

सत्क्रियाभ्यसनं मैत्री मतिर्बुद्धोऽपि पण्डितः ।
अन्यानि दैव सद्धर्म क्रियाभूतानि यानि च ॥

स्वर्गच्युतानां चिह्नानि पुरुषाणामपापिनाम् ।
एतदुद्देशतो राजन् भवतः कथितं मया ॥ ४५

स्वकर्मफलभोक्तॄणां पुण्यानां पापिनां तथा ।
तदेह्यन्यत्र गच्छावो दृष्टं सर्वं त्वयाऽधुना ॥

त्वया हि दृष्टो नरकस्तदेह्यन्यत्र गच्छताम् ।
ततस्तमग्रतः कृत्वा स राजा गन्तुमुद्यतः ॥

ततश्च सर्वैरुत्कृष्टं यातनातापिभिर्नृभिः ।
प्रसाद कुरु देवेश तिष्ठ तावन्मुहूर्तकम् ॥

त्वदङ्गसङ्गी पवनो मनो ह्लादयतीह नः ।
परितापं च गात्रेभ्यः पीडा बाधाश्च कृत्स्नशः ॥

अपहन्ति नरव्याघ्र कृपां कुरु महामते ।
एतत् श्रुत्वा वचस्तेषां तं याम्यं पुरुषं नृपः ॥ ५०

पप्रच्छ कथमेतेषामाह्लादो मयि तिष्ठति ।
किं मया कर्म तत्पुण्यं मर्त्यलोके महत्कृतम् ॥

आह्लाददायिनी पुष्टिर्यस्येदं तदुदीरय ।

**याम्य उवाच—**

पितृ देवातिथि प्रेष्य शिष्टेनान्नेन ते ननु ॥

पुष्टिमभ्यागतं यस्मात्तद्गतं मनो यतः ।
ततस्त्वद्गात्र संपर्कात्पवनोह्लाददायकः ॥

पापकर्मकृतं राजन् यातना न प्रबाधते ।
अश्वमेधादयो यागास्त्वयेष्टा विधिवद्यतः ॥

श्रीमदष्टाक्षरी विद्या त्वया नित्यमुपासिता ।
भगवद्रश्मिसहिता सद्गुरोः कृपया नृप ॥ ५५

समस्तवेदवेदान्त सारभूतार्थ संग्रहा ।
राजराजेश्वरी विद्या लक्ष्मीनारायणी परा ॥

उपासिता त्वयाऽऽचार्य कृपा लब्धा दिने दिने ।
आचार्यपत्नी पुत्रादि भुक्तशिष्टं दिने दिने ॥

आदराद्भवता भुक्तं किं वाचार्यपदद्वये ।
मणिमुक्ता सुवर्णादि सर्वस्वं भवताऽर्पितम् ॥

ततस्त्वद्दर्शनाद्याम्याद्यन्त्र शस्त्राग्नि वायसाः ।
पीडनछेददाहादि महादुःखस्य हेतवः ॥

सुखत्वमागता राजन् तेजसाऽपहृतास्तव ।

**राजोवाच—**

यन्मत्सन्निधावेतान् यातना न प्रबाधते ॥ ६०

ततो भद्रमुखात्राहं स्थास्ये स्यात्समीर इवाचलः ।

**भद्रमुख उवाच—**

एहि राजेन्द्र गच्छावो निजपुण्य समार्जितान् ॥

भोक्तुं भोगानपास्येमा यातनाः पापकर्मणाम् ।

**राजोवाच—**

न स्वर्गे ब्रह्मलोके वा तत्सुखं लभ्यते नरैः ॥

यदार्तजननिर्वाण दानोत्थमिति मे मतिः ।
तस्मान्न तान्त्यास्यामि पापा एते सुदुःखिताः ॥

मत्सन्निधानात्सुखिनो भवन्ति नरकौकसः ।
धिक् तस्य जीवितं पुम्सः शरणार्थिनमागतम् ॥

यो नार्तमनुगृह्णाति वैरिपक्षमपि ध्रुवम् ।
यज्ञदाने तपांसीह परत्र च न भूतये ॥ ६५

भवन्ति तस्य यस्यार्त परित्राणे न मानसम् ।
न तस्य यस्य कठिनं मनो बालातुरादिषु ॥

वृद्धेषु च न तं मन्ये मानुषो राक्षसो हि सः ।
एतेषां सन्निकर्षात्तु यदग्निपरितापजम् ॥

ततोऽग्र गन्धजं वापि दुःखं नरकसंभवम् ।
क्षुत्पिपासोद्भवं दुःखं यच्च मूर्छाप्रदं महत् ॥

एतेषां प्राणदानात्तु मन्ये स्वर्गसुखात्परम् ।
प्राप्स्यन्त्येते यदि दुःखं बहवो दुःखिते मयि ॥

किं वा प्राप्तं मया न स्यात्तस्मात्त्वं व्रज मा चिरम् ।

**पुरुष उवाच –**

एष धर्मश्च शक्रश्च त्वां नेतुं समुपागतौ ॥ ६०

अवश्यं यस्माद्गन्तव्यं तस्मात्पार्थिव गम्यताम् ।

**धर्म उवाच –**

नयामि त्वामहं स्वर्गं त्वया सम्यगुपासितः ॥

विमानमेतदारुह्य मा विलम्बस्व गम्यताम् ।

राजोवाच –

नरके मानवा धर्मं पीड्यमानास्सहस्रशः ॥

त्राहीत्यमी हि क्रन्दन्ति मामतो न व्रजाम्ह्यम् ।

इन्द्र उवाच –

कर्मणा नरकप्राप्तिरत्रैषां पापकर्मिणाम् ॥

स्वर्गस्त्वया च गन्तव्यो नृपपुण्येन कर्मणा ।

राजोवाच –

यदि जानासि धर्मत्वं त्वं वा देव शतक्रतो ॥

यम यावत्प्रमाणं तु नूनं तद्वक्तुमर्हसि ।

धर्म उवाच –

अब्बिन्दवो यथाम्भोधे यथा ख इव तारकाः ॥ ७५

यथा वै वर्षतो धारा गङ्गायां सिकता यथा ।
असंख्येयास्तथा राजन् यथा योनिषु जन्तवः ॥

तथा तवापि पुण्यस्य संख्या नैवोपपद्यते ।
श्रीमदष्टाक्षरो विद्या रश्मिमाला समन्विता ॥

उपासिता त्वया नित्यं जपहोमादिकर्मभिः ।
लक्ष्मी नारायणी नाम्ना राजराजेश्वरी परा ॥

गुप्ताप्याचार्य कृपया त्वया सम्यगुपासिता ।
अप्याचार्यपदद्वन्द्वे प्रत्यहं वांछितं धनम् ॥

त्वया दत्तं महाराज दिव्यालङ्करणैः शुभैः ।
महालक्ष्मी धिया साक्षात्सर्वपर्वसु पूजिता ॥ ८०

आचार्यपुत्राः पौत्राश्च सम्यक्सन्तोषितास्त्वया ।
अनेन सुकृतेनैषां यातना विलयं गताः ॥

मातृवंशसहस्रं च पितृवंशसहस्रकम् ।
ब्रह्मलोकगतं राजन् गुरुसन्तोषणात्तव ॥

अनुकम्पामिमामद्य नारकेष्विह कुर्वतः ।
तदेव शतसाहस्रं संख्यामुपगतं तव ॥

तद्गच्छ त्वं नृपश्रेष्ठ तल्लोकतुममरालयम् ।
एते तु नरके पापं क्षपयन्तु स्वकर्मजम् ॥

**राजोवाच –**

कथं स्पृहां करिष्यन्ति सत्संपर्काय मानवाः ।
यदि मत्सन्निधावेषामुत्कर्षो नापि जायते ॥ ८५

तस्माद्यत्सुकृतं किञ्चिदाचार्यचरणार्चनात् ।
ममास्ति ते सुराधीश वेदप्रामाण्यमस्ति चेत् ॥

मुच्यन्तां तेन नरकात् पापिनो यातनारताः ।

**धर्मशक्रावूचतुः –**

एवमुच्चतरं स्थानं त्वया वाह्यं महीपते ॥

एतांश्च नरकात्पश्य विमुक्तान् पापकर्मिणः ।

**पुत्र उवाच–**

ततोऽपतत्पुष्पवृष्टिस्तस्योपरि महीपतेः ॥

आगता भगवद्दूताश्चक्रशङ्खादिचिह्निताः ।
विमानमधिरोप्यैनं दिव्यभोगसमृद्धिदम् ॥

अनयन् भगवद्धाम यत्र साक्षाच्छ्रियःपतिः ।
अहं चान्ये च ये तत्र यातनाभ्यः परिच्युताः ॥ १०

स्वकर्मफले निर्दिष्टे ततो योन्यन्तरं गताः ।
पुराऽनुभवजं ज्ञानं अवाप्योदीरितं मया ।
अतःपरं महाभाग किमन्यत्कथयामि ते ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदार्थसंग्रहे राजराजविद्या माहात्म्ये उत्तरभागे
एकत्रिंशोऽध्यायः ॥

# अथ द्वात्रिंशोऽध्यायः ॥

—※—

**पितोवाच –**

कथिता मे त्वया वत्स संसारस्य व्यवस्थितिः ।
स्वरूपमपि देहस्य घटीयन्त्रवदन्वये ॥

तदेवमेतदखिलं ममावगतमीदृशम् ।
किं मया पुत्र वै कार्यं वद चास्मिन् व्यवस्थिते ॥

**पुत्र उवाच–**

यदि मद्वचनं तात श्रद्दधास्य विशङ्कितः ।
राजराजेश्वरी विद्यां सलक्ष्मीनारायणां पराम् ॥

आचार्यानुग्रहाल्लब्ध्वा जीवन्मुक्तो भविष्यसि ।
श्रीमदष्टाक्षरीमादौ जपन्विद्यां दिने दिने ॥

राजराजेश्वरीं पश्चाद्यथाशक्त्यान्वहं जपन् ।
इहाप्यष्टगुणैश्वर्यं प्राप्याखिल मनोरथान् ॥ ५

अवश्यं भगवद्धाम प्राप्स्यसे वंशसंयुतः ।
यतो नावर्तते भूमौ संसारे दुःखसङ्कुले ॥

**पितोवाच –**

श्रीमदष्टाक्षरी का वा त्वयोक्ता सर्वसिद्धिदा ।
राजराजेश्वरी विद्या का त्वयोक्ता फलप्रदा ॥

अनयोर्विद्ययोः पुत्र माहात्म्यमखिलं वद ।
अनधीत्यापि वा वेदान् वेदाध्ययनजं फलम् ॥

महायज्ञानकृत्वाऽपि क्रतूनां फलमक्षयम् ।
कथं सम्प्राप्यते पुंभिस्तत्सर्वमखिलं वद ॥

**पुत्र उवाच –**

शृणु तात प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
हिताय सर्वजगतां भवसागर तारकम् ॥ १०

भूत्वा द्विजातिस्सततं श्रौत संस्कार संयुतः ।
नित्यं सन्ध्यामुपासीत त्रिषु कालेषु सुव्रतः ॥

अध्येतव्यस्सदा वेदः सषडङ्ग पदक्रमः ।
होतव्यमग्नौ सततं सायं प्रातर्यतात्मना ॥

ब्रह्मयज्ञादि कार्यं च यागान् कुर्याद्दिने दिने ।
धर्मशास्त्र पुराणानि द्रष्टव्यानि दिने दिने ॥

धर्म एव मतिः कार्या श्रुत्युक्ते नियतात्मना ।
एते धर्मा गृहस्थस्य दुरितं घ्नन्त्यहेतवः ॥

सम्यग् ज्ञानोदयः पुंसां दुरितस्य निवारणः ।
अवश्यमपि कर्तव्या यागास्संपूर्णदक्षिणाः ॥ १५

अक्षयस्वर्ग फलदास्सर्वपाप निवर्तकाः ।
अमरैर्भुज्यते स्वर्गसुखं शाश्वतमक्षयम् ॥

तदेव भुज्यते पुण्यकर्तृभिः पापवर्जितैः ।
साङ्ग दक्षिणया युक्त यागकर्त्रा निरन्तरम् ॥

वेदाध्ययन निष्ठेन सावित्री निरतात्मना ।
चतुर्युग शतं स्वर्ग सौख्यमक्षयमुत्तमम् ॥

माहेन्द्रे भुज्यते लोके महेन्द्र सदृशश्रिया ।
अग्निहोत्र रतः सायं प्रातर्वेदरतः शुचिः ॥

नित्यान्नदान निरतो भुक्त्वा स्वर्गसुखे पदः ।
पुनर्भूतलमासाद्य सत्कर्मनिरतस्सदा ॥ २०

पुनः स्वर्गसुखं भुङ्क्ते पुनर्भूतलमाश्रितः ।
सावित्री जापनिरतः पितृमातृ प्रपूजकः ॥

वेदाध्ययन निष्ठश्च तदर्थज्ञान तत्परः ।
साङ्गदक्षिणया युक्त यागकर्ता महीतले ॥

नित्यान्नदान निरतश्चाहिंसा निरतोऽन्वहम् ।
सत्यलोकं समासाद्य सुखं तत्पान्तमक्षयम् ॥

पुनर्भूतलमासाद्य महर्षीणां कुले शुभे ।
उत्पन्नः सर्वविद्यानां पारगोऽतिथिपूजकः ॥

मातापितृ गुरुभ्रातृ पूजको फन्धुपोषकः ।
सत्कर्म निरतो दान्तो देहान्ते रुद्रलोकभाक् ॥ २५

तत्राऽपि सुचिरं कालं स्थित्वा भूयोऽपि भूतले ।
महर्षीणां कुले जातस्सर्वविद्या सुनिष्ठितः ॥

जातिस्मृतिमनुप्राप्य नित्यमाचार्य सेवया ।
ब्रह्मज्ञानं समासाद्य तद्विष्णोः परमं पदम् ॥

प्राप्तोऽस्ति पुनरावृत्ति रहितं नात्र संशयः ।
नानायोनिषु सम्भूय प्राप्य जन्म शतान्यपि ॥

भुक्त्वा भोगान् पुनर्भूमौ भुक्त्वा सर्वाश्च यातनाः ।
मलमूत्रादि संकीर्णगर्भेषु बहुलेष्वसौ ॥

स्थित्वा योनिमुखाद् भूमिं प्राप्य कर्मवशादसौ ।
बाल्य यौवन कौमार वार्द्धकादीननुक्रमात् ॥ ३०

अनुभूय ततो मृत्युं प्राप्य कालवशाद् भुवि ।
पुण्य पाप वशात्स्वर्ग सुखं दुःखं च नारकम् ॥

भुक्त्वा भूयो पुनर्जन्म कर्मशेषाद् व्रजत्यसौ ।
ब्रह्मार्पणधिया कृत्वा कर्म वेदेषु चोदितम् ॥

पञ्चभिर्ब्रह्मभिः पश्चाद् ब्रह्मभूतो भविष्यति ।
वैदिकाचार निरत आचार्य चरणार्चकः ॥

ब्रह्मविद्यां जपन्नित्यं श्रीश्रीश द्वादशाक्षरीम् ।
दिव्यरूपधरः पश्चात्कल्पान्तं ब्रह्मलोकभाक् ॥

श्रीमदष्टाक्षरीं जप्त्वा नित्यमाचार्य सेवकः ।
तद्विष्णोः परमं धाम प्रयात्यत्र न संशयः ।। ३५

राजराजेश्वरीं जप्त्वा लक्ष्मीनारायणीं शुभाम् ।
प्राणैरर्थैर्धिया वाचा कायेन मनसाऽपि च ।।

आचार्यचरणद्वन्द्व सेवको नित्यमादरात् ।
कुलसाहस्र सहितो दिव्यभोगसमन्वितः ।।

अयोध्यानगरं साक्षाद्भगवत्पदमेत्यसौ ।
मूलमाचार्यशुश्रूषा भुक्तेर्मुक्तेश्च भूतले ।।

सर्वस्वमपि वा दत्वा कन्यकाश्च मनोहराः ।
किङ्करान् तनयान् दत्वा स्वयं तत्पादकिङ्करः ।।

[illegible] ।

कर्णौ पिधाय गन्तव्यमशक्तेन महीतले ।
एकमप्यनृतं वाक्यं संभाष्याचार्य सन्निधौ ॥

जन्मादि संचितात्पुण्याद् भ्रष्टो भवति साधकः ।
आचार्य चरणद्वन्द्व संनिधौ निष्कमात्रकम् ॥ ४५

अपि वाचा प्रतिज्ञातं आसीनो दूरसन्निधौ ।
मासाभ्यन्तरतो देयं तदूर्ध्वं वृद्धि संयुतम् ॥

मुक्तारत्न गजाश्वादि धनधान्यं महीतले ।
आचार्याय प्रतिज्ञानं मनसा कर्मणा गिरा ॥

मासात्प्रागेव दातव्यं मासत्रितयतोऽपि वा ।
मासपञ्चकतः प्राग्वा देयं वृद्धि समन्वितम् ॥

तदूर्ध्वं मेरुसङ्काशधनं वाऽऽचार्य पादयोः ।
प्रदत्वा तदृणान्मुक्तः कल्पान्तेऽपि भवेन्नहि ॥

स्वर्णस्तेय सहस्रं वा कृत्वा श्रुत्युक्त निष्कृतिम् ।
कृत्वा शुद्धिमवाप्नोति वचसा गुरुसन्निधौ ॥ ५०

प्रतिज्ञात मदत्वाऽसौ प्राङ्मास त्रितयाद् भुवि ।
अपि निष्कृति साहस्रैर्न शुद्धिं प्राप्नुयात्पराम् ॥

एतद् गुह्यतरं प्रोक्तं मा कुरुष्वात्र संशयम् ।
यदिच्छसि महासिद्धिमत्र निःसंशयो भव ॥

आचार्य निन्दकैः संगं दूरतः परिवर्जयेत् ।
संभाषणमपि त्याज्यं तैराचार्यनिन्दकैः ॥

यत्राचार्यस्तुति कथा तद्धर्म गुणकीर्तनम् ।
अवश्यं तत्र गन्तव्यं श्रोतव्यमपि सादरम् ॥

प्रातःप्रातः समुत्थाय दृढभक्तिसमन्वितः ।
आचार्यतोषणे यत्नं कृत्वा सिद्धिं परां व्रजेत् ॥ ५५

कनत्कनक चिन्ताकं ताटङ्कयुगलं तु वा ।
कटक द्वितयं वाऽपि वालीयुग्ममथापि वा ॥

कर्षद्वयमितं वाऽपि कर्षस्वर्णमितं तु वा ।
आचार्यपत्न्यै यो दद्यात् षण्मासे वत्सरे तु वा ॥

महालक्ष्मीधिया साक्षात्स माहेन्द्रश्रियं भुवि ।
भुक्त्वा तदन्ते परमं शाश्वतं प्राप्नुयात्पदम् ॥

आचार्यपुत्र पौत्रादीनप्याचार्यवदर्चयेत् ।
आचार्य तत्वं सकलवेद शास्त्रेषु गोपितम् ॥

आचार्य चरणद्वन्द्व भक्तिरेव महितले ।
भुक्तेर्मुक्तेर्महद्बीजं नान्यदुक्तं मनीषिभिः ॥ ६०

इत्थमाचार्य पादाब्ज दृढभक्तो दिने दिने ।
श्रीमदष्टाक्षरीं जप्त्वा राजराजेश्वरीं पराम् ।
अनुस्मृत्य सकृद्वापि ब्रह्मभूतो भविष्यति ॥

इति द्वात्रिंशोऽध्यायः ॥

# अथ त्रयस्त्रिंशोऽध्यायः ॥

पुत्र उवाच–

शृणु तात प्रवक्ष्यामि राजराजेश्वरीं पराम् ।
प्रथमस्या स्त्रयी बीजं श्रीबीजं तदनन्तरम् ॥

लोकेश्वरी कामराजं कूटत्रयमतःपरम् ।
भूयोऽपि श्रियमुच्चार्यं श्रीमदष्टाक्षरीं ततः ॥

उच्चरेद्राजराजश्री लक्ष्मी नारायणी शुभा ।
विद्येयमुक्ता भक्तानां भोगस्वर्गापवर्गदा ॥

सर्वविद्या महाराज्ञी सर्वसिंह्यासनेश्वरी ।
महापातकराशिघ्नी सर्वपुण्यफलप्रदा ॥

सर्ववेदमयी सर्वपुराणस्मृति रूपिणी ।
सर्वदर्शनसिद्धान्त रूपिणी योगरूपिणी ॥ ५

सर्वकर्ममयी सर्वतीर्थयाग स्वरूपिणी ।
साम्राज्ञी सर्वविद्यानां समस्तापन्निवारिणी ॥

चतुर्णामपि वेदानां प्रथमं बीजमादितः ।
परब्रह्मात्मकं धाम महर्षिभिरुदीरितम् ॥

शुद्धकैवल्यफलदं सद्यः पापौघभेदनम् ।
पश्चात्त्रिशक्ति लक्ष्मीः स्याद्विद्याबीजत्रयात्मिका ॥

त्रैलोक्यमोहिनी सर्वपुरुषश्रीवशङ्करी ।
सर्वसंपत्करी सर्व विद्यासिद्धिफलप्रदा ॥

ततः श्रियो महाविद्या त्रिकूट परमेश्वरी ।
गङ्गातरङ्गकल्लोल महावाक् सिद्धिदायिनी ॥ १०

अणिमादिगुणैश्वर्यप्रदा पातकभञ्जिनी ।
घुटिका पादुकाद्यष्टसिद्धिदा भुक्तिमुक्तिदा ॥

एकाक्षरी श्रियः पश्चाद्विद्या चिद्रूपिणी परा ।
नित्यानन्द महासिद्धिप्रदा दारिद्र्यनाशिनी ॥

श्रीमदष्टाक्षरी पश्चाद्भोगस्वर्गापवर्गदा ।
ब्रह्मविद्या त्रिशक्तिश्री कूटत्रितयी चिद्युता ॥

राजराजेश्वरी नाम्ना लक्ष्मीनारायणी स्मृता ।
ऋषयोऽपि न जानन्ति राजराजेश्वरीमिमाम् ॥

नाङ्गन्यास करन्यासौ न पुरश्चरणादिकम् ।
राजराजाख्यविद्यायां आगमेषु प्रपठ्यते ॥ १५

सिद्धविद्यामिमां प्राहुः पुराणाः परमर्षयः ।
राजराजमनोर्नित्यं सकृत्स्मरणतोऽपि वा ॥

चतुर्णामपि वेदानां साङ्गपारायणात्फलम् ।
शतक्रतुफलं साङ्गं भवत्यस्य न संशयः ॥

महादानसहस्रस्य कुरुक्षेत्रे रविग्रहे ।
भवत्येव फलं राजराजविद्या स्मृतेः सकृत् ॥

साङ्गदक्षिणया युक्तं वाजपेय सहस्रकम् ।
कृतं तेन न सन्देहो राजविद्यास्मृतेः सकृत् ॥

प्रदक्षिणीकृत्य महीं प्रत्यहं यत्फलं लभेत् ।
राजराजमहाविद्यास्मृतेस्तल्लभ्यते सकृत् ॥ २०

गङ्गादि सर्वतीर्थेषु स्नात्वा यत्फलमश्नुते ।
राजराजमहाविद्या स्मरणात्तत्सकृल्लभेत् ॥

चिन्तामणि सहस्रं वा पारिजातशतं तु वा ।
कामधेनु सहस्रं वा कल्पद्रुमशतं तु वा ॥

राजराजमहाविद्या कलां नार्हति षोडशीम् ।
एकवारमपि स्मृत्वा राजराजेश्वरीं पराम् ॥

यत्फलं समवाप्नोति तत्क्रतूनां शतैरपि ।
न शक्यते पदं लब्धुं महादानैश्च कोटिशः ॥

अष्टाङ्गयोगयुक्तस्य या गतिस्समुदाहृता ।
सा गतिर्लभ्यते राजविद्यानुस्मरणात्सकृत् ॥ २५

सुन्दरीवल्लभाख्येयं विद्या सिंहासनेश्वरी ।
महानारायणीं विद्यां केचिदाहुर्महर्षयः ॥

अनुत्तरब्रह्मविद्यां केचिदाहुः पुरातनाः ।
प्रवदामो वयं राजराजाख्यां सर्वसिद्धिदाम् ॥

वैखरी मातृका प्रोक्ता पञ्चाशद्वर्णरूपिणी ।
वेदास्सकलशास्त्राणि पुराणागमराशयः ॥

वैखरी मातृकोद्भूता वैखरी परमा कला ।
या कूटत्रितयाकारा श्रियः पञ्चदशाक्षरी ॥

अस्या एवांशसंभूता विद्या अष्टादशापि च ।
ब्रह्मविद्या त्रिशक्तिश्री कूटत्रितयमिश्रिता ॥ ३०

राजराजेश्वरीं विद्यां लक्ष्मीनारायणीं पराम् ।
सकृत्स्मरणतोवाऽपि प्रत्यहं सर्वसिद्धिदाम् ॥

अधीतास्सकला वेदा इष्टा यागास्सदक्षिणाः ।
कृतास्तेनान्वहं भक्त्या भवन्त्यत्र न संशयः ॥

गायत्री लक्षजापेन यत्फलं प्राप्यते द्विजैः ।
अवश्यं तत्फलं राजराजविद्या सकृत्स्मृतेः ॥

प्राप्यते प्रत्यहं भक्त्या संशयो नात्र विद्यते ।
श्रियः पञ्चदशाक्षर्यां लक्षजापेन यत्फलम् ॥

सुन्दरीवल्लभाख्यायाः सकृत्तत्स्मरणाल्लभेत् ।
समस्तन्याससहितं श्रीमदष्टाक्षरं मनुम् ॥ ३५

जप्त्वा पञ्चायुतं साङ्गं लभते यत्फलं द्विजः ।
तत्फलं लभते राजराजविद्या सकृज्जपात् ॥

दत्वा सहस्रं धेनूनां साङ्गदक्षिणयान्वितम् ।
राजराजमनुं जप्त्वा तत्फलं सकृदश्नुते ॥

अथ वैश्वात्म्य संसिद्धि हेतुभूता सनातनी ।
इयमेव महाविद्या राजराजेश्वरी शुभा ॥

चराचरसमेतानि भुवनानि चतुर्दश ।
राजराजमनोर्जापि देहे तिष्ठन्ति सन्ततम् ॥

राजराजमहाविद्या प्रजापी यत्र भूतलम् ।
तदेवालकानन्दायास्तटं बदरिकाश्रमम् ॥ ४०

राजराजेश्वरी विद्या जापी यत्राश्रमे वसेत् ।
जाह्नव्यादीनि तीर्थानि तत्रैव निवसन्ति हि ॥

नाभिषेको न दीक्षा वा राजराजेश्वरीगृहे ।
शुश्रूषैव सदाचार्य पादयोस्सर्वसिद्धिदा ॥

सप्तद्वीपवती भूमिं सरत्नाकर मेखलाम् ।
धनधान्यगवाश्वादि सहितां रत्नसंकुलाम् ॥

दत्त्वाऽपि प्रत्यहं शिष्य आचार्य चरणाब्जयोः ।
पत्नी पुत्रादि सहितः शुश्रूषा निरतो भवेत् ॥

धेनूनामयुतं वापि स्वर्णकोटिमथापि वा ।
दत्वा प्रत्यहमाचार्यं चरणाब्जयुगे शुभे ॥ ४५

शुश्रूषा निरतो नित्यं प्राणैरर्थैः धिया भवेत् ।
प्रदात्रे सर्वरत्नानामपि वित्तस्य कोटिशः ॥

दात्रे ग्रामसहस्रस्य राजराजेश्वरी शुभा ।
लक्ष्मीनारायणी विद्या न दातव्या कथञ्चन ॥

सप्तकोटिमहाविद्या साङ्ग न्यासादिसंयुता ।
कोटिशोऽनेन जप्त्वाऽस्य राजराजेश्वरी जपात् ॥

राजराजेश्वरी विद्या प्रदातैव महागुरुः ।
अयमेवाऽपरो ब्रह्मा रुद्रो विष्णुः प्रजापतिः ॥

नारायणोऽसौ भगवान् परमस्मान्न विद्यते ।
संसेव्य वर्षसाहस्रं प्राणैरर्थैर्धियाऽन्वहम् ॥ ५०

अवश्यमपि जप्तव्या राजराजेश्वरी शुभा ।
दात्रे सर्वस्य च प्राणकन्यकानां महागुरोः ॥

प्रदातव्या महाविद्या राजराजेश्वरी शुभा ।
पुरश्चर्या सहस्रं वा वाजिमेधशतं तु वा ॥

आचार्यकरुणालेश कलां नार्हति षोडशीम् ।
आचार्यसन्निधौ स्थेयं कार्यमाचार्यतोषणम् ॥

कर्तव्याऽऽचार्यशुश्रूषा स्मर्तव्याऽऽचार्यपादुका ।
आचार्यचरणद्वन्द्व सामीप्यं सर्वसिद्धिदम् ॥

समस्तपातकहरं भोगस्वर्गापवर्गदम् ।
तदेव दिव्यक्षेत्रं स्यात्तदेव बदरीवनम् ॥ ५५

तदेव जाह्नवीतीरं तदेव यमुनातटम् ।
तदेव तीरं वाग्देव्यास्तत्कुरुक्षेत्रमीरितम् ॥

तदेव नैमिशारण्यं तत्तीर्थं पुष्कराभिधम् ।
सर्वतीर्थस्नानफलमिच्छता नियतात्मना ॥

आचार्यचरणद्वन्द्व जलं पेयं प्रयत्नतः ।
श्रीमदष्टार्ण विद्यादि सिद्धिमिच्छन्महत्तराम् ॥

आचार्यदक्षिणां दद्याद्वित्तरत्नादिसंकुलाम् ।
प्रसादार्थं जगन्मातुर्बह्वलङ्करणैः शुभैः ॥

आचार्यपत्नी संपूज्या महालक्ष्मीधिया सदा ।
ब्रह्मविष्णवादिदेवानामप्यनुग्रहमिच्छता ॥ ६०

आचार्यपुत्रास्संपूज्या वासोऽलङ्करणादिभिः ।
चतुर्णामपि वेदानां नित्यं पारायणात्फलम् ॥

अश्वमेधफलं नित्यं साङ्गदक्षिणयान्वितम् ।
गो सहस्रप्रदानस्य फलं दक्षिणयान्वितम् ॥

श्रीश्रीश द्वादशाक्षर्याः श्रीमदष्टाक्षरस्य च ।
श्रियः पञ्चदशाक्षर्याः पुरश्चार्याफलं शुभम् ॥

इच्छता प्रत्यहं जप्या राजराजेश्वरी शुभा ।
दश द्वादशधा वापि जप्या सर्वफलप्रदा ॥

अणिमादिगुणैश्वर्यं पादुकाद्यष्टकं तथा ।
धर्मार्थं काममोक्षांश्च प्राप्तुमिच्छन् यतव्रतः ॥ ६५

राजराजेश्वरीविद्यां सकृद्वापि स्मरेच्छुचिः ।
परकायप्रवेशादि सामर्थ्यमणिमादिकम् ॥

सुन्दरीवल्लभाख्या या सकृज्जप्तुश्च सिद्धयति ।
वेदानामादिभूतत्वात्प्रणवस्य महामनोः ॥

स्मरणादन्वहं साक्षात् पर ब्रह्म प्रकाशते ।
त्रिशक्ति लक्ष्मी विद्यायाः स्मरणादन्वहं भुवि ॥

महालक्ष्मीर्जगन्माता पार्वतीशंकरप्रिया ।
अथ कामकला साक्षाच्छक्तिः श्रीपरमेश्वरी ॥

तुष्टा भक्तस्य वरदा भवत्यस्य न संशयः ।
अथ त्रिकूटा सम्पूर्णा श्रियः पञ्चदशाक्षरी ॥ ७०

भूतलं पुरमाद्यं स्याद्द्वितीयं तु भुवः पदम् ।
तृतीयं स्वर्गलोकाख्यं पुरमत्र समीरितम् ॥

अग्नित्रयं त्रयो वेदाः शक्तित्रितयमप्यथ ।
ब्रह्मेश विष्णुत्रितयं स्वरत्रितयमप्यथ ॥

पुष्करत्रितयं चापि पदानां त्रितयं हरेः ।
तेजस्त्रयं च त्रिपुरा नामोक्तं श्रिय इष्टदम् ॥

नामेदमाद्यं श्रीदेव्यास्त्रिपुरेति महत्तरम् ।
एतद्गुह्यतरं नाम वेदान्तेषु श्रुतिष्वपि ॥

सुन्दरीति पदं पश्चात्सर्वश्रुति मनोहरम् ।
अन्यासां दिव्यकन्यानां सुन्दर्याख्या न विद्यते ॥ ७५

सुभगा सुन्दरीत्येतच्छ्रियो नामादिमं स्मृतम् ।
ललितेति महन्नाम श्रियःसर्वफलप्रदम् ॥

नामान्येतानि गुप्तानि श्रियो देव्याः श्रुतिष्वपि ।
श्रियो देव्या महच्छब्दो विश्वाधिक्यं वदत्यपि ॥

महात्रिपुर शब्दान्ते सुन्दरीति श्रियः परम् ।
न वक्तव्यमिदं गुप्तं पुत्रायाऽपि कदाचन ॥

महाश्री सुन्दरी देवो महात्रिपुर सुन्दरी ।
नामद्वयमिदं देव्याः श्रिय उक्तं महत्तरम् ॥

इयमेव त्रयी रूपा मातृकावर्ण रूपिणी ।
एतस्याः स्मरणान्नित्यमुमालक्ष्मीः सरस्वती ॥ ८०

दुर्गाचिद् भद्रकाल्याद्या भवन्त्यखिल सिद्धिदाः ।
अधीताश्चतुरो वेदा भवन्त्यस्य दिने दिने ॥

शतकोटि महायागास्तेनेष्टाः पूर्णदक्षिणाः ।
सप्तकोटि महामन्त्रा अपि जप्तास्सहस्रशः ॥

भवन्ति प्रत्यहं तेन दक्षिणा हेमसंयुताः ।
तत एकाक्षरी साक्षाच्छ्रीदेव्याश्चित्कला शुभा ॥

परा ब्रह्ममयी विश्वमातृका परमेश्वरी ।
चिच्छक्तिः श्रीरिति ज्ञेया शक्तिर्नारायणी परा ॥

याऽस्य ब्रह्मणोऽभिन्ना चिच्छक्तिः श्रीरियं परा ।
एतदभ्यासतो नित्यं चिद्रूपी पुरुषो भवेत् ॥ ८५

श्रीशब्दवाच्या श्रीदेवी लक्ष्मीस्त्रिपुरसुन्दरी ।
मातृका च महालक्ष्मीर्ललिता परमेश्वरी ॥

श्रीविद्या राज्यलक्ष्मीश्चेत्याहुर्दिव्या महर्षयः ।
कूट त्रितय वाच्येयं श्रीस्त्रयी रूपिणी परा ।

तदन्ते भगवद्विद्या श्रीमदष्टाक्षरी शुभा ।
श्रीमदष्टाक्षरी वाच्य ब्रह्मनारायणाभिधम् ॥

विश्वगर्भनिरातङ्कं सर्गस्थित्यादिकारणम् ।
सर्वविद्यामयं सर्वबीजभूतं परात्परम् ॥

स्वर्गापवर्गदं भक्त्या जपतां सर्वसिद्धिदम् ।
स्वभाव प्रणवाख्येयं श्रीमदष्टाक्षरी परा ॥ ९०

गुप्ता लक्ष्मी महाबीज सहितेयं फलप्रदा ।
प्रणवाद्य त्रिशक्तिश्री सुन्दरी श्रीसमन्विता ॥

श्रीमदष्टाक्षरी विद्या सुन्दरी वल्लभाभिधा ।
राजराजेश्वरी नाम्ना सर्वविद्यामयी स्मृता ॥

आचार्यानुग्रहाल्लब्धा विद्येयं विश्वनायिका ।
ददात्यष्टगुणैश्वर्यं विद्याजालं मनोहरम् ॥

अथर्वण महावेद सारभूता सनातनी ।
राजराजेश्वरी विद्या सत्यानन्द चिदात्मिका ॥

जप्ता दिने दिने रत्नधनधान्यौघ वर्षिणी ।
लक्ष्मी नारायणी राजराजविद्या दिने दिने ॥ ९५

जप्यते येन शुचिना स एव परमेश्वरः ।
स एव सर्गसंहारस्थितिकर्ता जगत्पतिः ॥

आचार्यस्सर्वलोकानां स एव हरिरच्युतः ।
निधयः शंख पद्माद्या स्तद्द्वारि निवसन्ति हि ॥

अणिमा महिमाद्यष्ट सिद्धयोऽस्य कलेबरम् ॥
प्रविशन्त्यङ्गनाद्याश्च सिद्धन्त्यस्य न संशयः ।

जन्मकोटि सहस्राणामपि तस्य स्मृतिर्भवेत् ।
राजराजेश्वरी विद्या जप्तारं प्रत्यहं शुचिः ॥

महर्षयो वसिष्ठाद्या अर्चयन्ति हरिं यथा ।
शक्रवित्तेश मुख्याश्च तं सेवन्ते दिगीश्वराः ॥ १००

सम्मानयन्ति सिद्धाश्च नारदाद्या महर्षयः ।
लक्ष्मीस्तन्मन्दिरे साक्षात्तिष्ठत्याभूत संप्लवम् ॥

किङ्करीवास्य जिह्वायां नृत्यत्येव सरस्वती ।
यावदाचार्य पादाब्जे सुवर्णं संप्रयच्छति ॥

तावन्त्यस्य पुरश्चर्या कृत्यानि कथितान्यहो ।
सुवर्णस्य सुवर्णत्वं त्रिशाच्चिह्नक मानतः ॥

रविसंक्रमणे वाऽपि दर्शे पूर्णदिनेऽपि वा ।
व्यतीपातेऽपि वा भानु ग्रहणे सोम कर्षणे ॥

महर्षयो वसिष्ठाद्या अर्चयन्ति हरिर्यथा ।
शक्र वित्तेश मुख्याश्च तं सेवन्ते दिगीश्वराः ॥ १०५

पञ्चम्यां भृगुवारे वा योगे च हरिपद्मयोः ।
द्वादश्यां कार्तिके वाऽपि राजराजाख्यविद्यया ॥

हुत्वा त्रिशतमाज्येन स्वाचार्यचरणद्वये ।
सुवर्णमेकं दत्वाऽथ गुरुपत्नीपदाम्बुजे ॥

सुवर्णं तत्र दत्वाऽपि पुरश्चर्या फलप्रदा ।
कृत्वातीव भवति सद्यः प्रत्ययकारिणी ॥

इत्यस्याः प्रभावोऽयं सद्यस्सकलसिद्धिदः ।
वर्णितुं केन शक्यः स्याद्वेदानामप्यगोचरः ॥

त्यक्त्वा सकल वेदांश्च धर्मशास्त्राणि यानि च ।
त्यक्त्वा सर्वपुराणानि सर्वोपनिषदोऽपि च ॥ ११०

भगवद्रश्मि सूक्तं च रश्मिसूक्तमपि श्रियः ।
न्यासजालमपि त्यक्त्वा राजराजेश्वरीमिमाम् ॥

लक्ष्मी नारायणीं जप्त्वा वेदाध्ययनजं फलम् ।
वेदपारायणफलं शास्त्राध्ययनजं फलम् ॥

सर्वतीर्थस्नानफलं वेदान्ताध्ययनात्फलम् ।
शतक्रतु फलं नित्यं सर्वदान फलं परम् ॥

श्रीमदष्टाक्षरी विद्या पुरश्चर्या फलं शुभम् ।
श्रियो विद्या पुरश्चर्या फलं साङ्गं दिने दिने ।
लभते नात्र सन्देहो मा कुरुष्वात्र संशयम् ॥

आथर्वणो वेदयुतो महात्मा
वेदांश्च शास्त्राणि पुराणसंघान् ।
दृष्ट्वा महामंत्रमु त्रिवेदी
सारं कृतार्थो भवेदीशरूपी ॥ ११५

आथर्वणो वेदिसुतो महात्मा
वेदांश्च शास्त्राणि पुराणसंघान् ।
धर्मस्य पुत्रो भगवान् महात्मा
जप्त्वाऽथ पश्चाद्दषितामवाप ॥

स एव साक्षाद् भगवान् मुकुन्दो
विद्यां प्रभावादभवन्महात्मा ।

श्रीरामः श्रीपतिः श्रीमान् श्रीभूमीवल्लभस्तथा ।
श्रीकान्तः श्रीमहायोगी श्रीनारायण उच्यते ।
श्रीनारायणशब्देन समः शब्दो न विद्यते ॥

श्रीनारायणनामाऽपि स्मृत्वा जप्त्वा दिने दिने ।
विमुक्तः पापराशिभ्यो जीवन्मुक्तो न संशयः ॥

नारायण समं नाम पातकौघ विभेदनम् ।
नास्ति नास्त्येव नास्त्येव सत्यं सत्यं वदाम्यहम् ॥ १२०

नारायणपरा वेदा नारायणपरा मखाः ।
नारायणपरं शास्त्रं नारायणपरा स्मृतिः ॥

मातङ्गः पुलकसोऽपि पञ्चमः श्वपचोऽपि वा ।
श्रीनारायणनामान्तं स्मृत्वा मुक्ति प्रयाति हि ॥

तदप्याचार्य वक्त्राब्जात्प्राप्तव्यं नान्यथा 'गुरो' ।
पञ्चाक्षरीमिमां विद्यां प्राहुर्नारायणी पराम् ॥

शुद्धोऽप्यशुद्धस्सततं स्मृत्वा पञ्चाक्षरीमिमाम् ।
परां गतिमवाप्नोति योगिनामपि दुर्लभाम् ॥

किं पुनः श्रीमदष्टार्ण विद्याजप रतात्मनाम् ।
राजराजेश्वरी विद्या जप होम रतात्मनाम् ॥ १२५

प्रभावो वर्णितुं नैव शक्यते विधिनापि वा ।
राजराजेश्वरी विद्या स्मर्तापि सकृदन्वहम् ॥

सुराणामपि बन्धुः स्यान्महर्षीणां यतात्मनाम् ।
आचार्यकृपया लब्धां राजराजेश्वरीमिमाम् ॥

दश द्वादशधा वाऽपि योऽनुस्मरति सन्ततम् ।
स गुरुः स पतिः प्रोक्तः स दैवज्ञः स साधकः ॥

स यज्वा स द्विज श्रेष्ठः स तपस्वी महामतिः ।
स पूतात्मा स पृथ्वीशः स भ्राता स पिता तथा ॥

स एव माता बन्धुश्च सोऽग्निहोत्री परन्तपः ।
स महात्मा स देवश्च स योगी स महामुनिः ॥ १३०

स ब्रह्मापि विधाता च स विष्णुः स शिवस्स्मृतः ।
स एव जगतां सर्गस्थिति संहार कृद्विभुः ॥

तद्वंश्य एव भूलोके पावनः संप्रकीर्तितः ।
तस्यैव माता सततं धन्या प्रोक्ता महीतले ॥

कृतकृत्यो पितैवास्य पूतास्तन्मित्रबान्धवाः ।
मुक्तिं न यान्ति न सन्देहः पितरोऽस्य पितामहाः ॥

किमत्र बहुनोक्तेन वक्ष्ये वेदार्थ संग्रहम् ।
राजराजेश्वरी विद्या समावाप्यधिका न हि ॥

या माहेन्द्री महालक्ष्मीर्धनदश्रीरचञ्चला ।
या वारुणी राज्यलक्ष्मीर्वैवस्वतगृहे रमा ॥ १३५

या विधातुर्गृहे लक्ष्मी या लक्ष्मीश्शंभुमन्दिरे ।
राजराजेश्वरी जप्तुर्गृहे तिष्ठति सा ध्रुवम् ॥

वासिष्ठादिषु या विद्या या विद्या जीवसंस्थिता ।
गन्धर्वेषु च या विद्या या विद्या दैवतेषु च ॥

या विद्या ब्रह्म वक्त्रस्था सा विद्याऽस्य मुखे भवेत् ।
आचार्यदक्षिणैवास्याः पुरश्चर्याऽभिधीयते ॥

श्रियः पञ्चदशाक्षर्या अष्टाणीयाश्च होमतः ।
कोटिशो यत्फलं प्रोक्तं आगमेषु महर्षिभिः ॥

एकाहुत्या राजराज विद्यायास्तत्फलं स्मृतम् ।
श्रीमदष्टाक्षरी विद्या पुरश्चर्यादि कर्मसु ॥ १४०

श्रियः पञ्चदशाक्षर्या पुरश्चर्यादि कर्मसु ।
हुत्वा द्वादशधा वापि राजराजाख्यविद्यया ॥

अर्कसंख्यपुरश्वर्यां फलं प्राप्नोति शाश्वतम् ।
चक्षुर्भ्यां तत्परं ब्रह्म पश्यत्येव महीतले ॥

किङ्करा अस्य दिक्पालाश्चिन्तामणिगणानपि ।
कल्पद्रुम सहस्रं च कामधेनुशतं तथा ॥

प्रयच्छन्त्यणिमाद्यष्ट गुणैश्वर्यं च शाश्वतम् ।
इदमेव तपोऽत्युग्रमिदमेव महद्व्रतम् ॥

इयमेव पराविद्या इयमेव परा गतिः ।
एतदेव परं श्रेय एतदेव परं फलम् ॥ १४५

इयमेव परा दीक्षा महायोगोऽयमुत्तमः ।
अयमेव परो योग इदमेव महद्व्रतम् ॥

इयमेव परा विद्या ब्रह्मज्ञानं महत्तरम् ।
राजराजेश्वरी विद्यां मत्वेत्थ सततं स्मरेत् ॥

राजराजेश्वरी जप्या कर्तव्यं गुरुपूजनम् ।
द्वयमेव महन्मुक्ति बीजमन्यन्न विद्यते ॥

कथयित्वेति सुमतिः पित्रे ब्रह्मविदां वरः ।
याज्ञवल्क्यं महात्मानं स्वपित्रा सहितोऽन्वगात् ॥

गोमहिष्यादिकं सर्वं धनधान्यादिकं तथा ।
समर्प्य याज्ञवल्क्याय सर्वस्वं दक्षिणाधनम् ॥ १५०

कृत्वाऽऽचरण शुश्रूषां वर्षत्रितयमादरात् ।
उच्छिष्टमार्जनाद्यैश्च पाद संवाहनादिभिः ॥

वस्त्र प्रक्षालनाद्यैश्च निर्निद्रौ तस्य सेवकौ ।
तत्पत्नी किङ्करो भूत्वा भूषणाद्यैस्समर्चकौ ॥

तोषयन्तौ च तत्पुत्रान् भिक्षित्वाप्यर्थ संचयैः ।
राराजेश्वरी विद्यां प्राप्तवन्तौ गुरोर्मुखात् ॥

गुरु शुश्रूषकौ नित्यं श्रियमष्ट गुणान्विताम् ।
अवाप्य सर्वश्रेयांसि ब्रह्मदृष्ट्वा सनातनम् ॥

कुलसाहस्रमुद्धृत्य प्रापतुः परमं पदम् ।

**श्रीकपिलाचार्य उवाच –**

राजराजेश्वरी विद्या प्रभावो ब्रह्मनन्दनाः ।
ईदृशो वर्णितुं नैव शक्यते हि मयाप्यहो ॥ १५५

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदसारार्थसंग्रहे राजराजेश्वरी लक्ष्मीनारायणविद्यामाहात्म्ये उत्तरभागे त्रयस्त्रिंशोऽध्यायः ॥

# अथ चतुस्त्रिंशोऽध्यायः ॥

**श्रीकपिलाचार्य उवाच –**

एतदुक्तं मया तत्वं वेदसारार्थसंग्रहम् ।
आगमेषु पुराणेषु नैतस्माद्विद्यते परम् ॥

अयं नारायणो योगी भगवान् परमेश्वरः ।
भूत्वा दाशरथिर्भूमौ श्रीराम इति कथ्यते ॥

भूतलादुत्थिता साक्षाच्छ्रीरियं परमा कला ।
अनया रममाणोऽसौ श्रीराम इति कथ्यते ॥

राजराजेश्वरी विद्या वाच्योऽयं पुरुषोत्तमः ।
श्रीनारायणनामाघमस्यैव प्रथितं श्रुतौ ॥

नारायणाभिधं ब्रह्मपरं वेदान्तसंग्रहम् ।
नारायण परंब्रह्म तत्वं नारायणः परम् ॥ ५

नारायणः परंज्योतिरात्मा नारायणः परः ।
बहुजन्मार्जितैः पुण्यसंचयैः पापनाशनैः ॥

नारायणानुस्मरणे दृढभक्तिः प्रजायते ।
द्वितीयमपि सर्वाघ भेदनं भुक्तिमुक्तिदम् ॥

श्रीरामनाम वेदेषु सम्यग्दृष्टं महर्षिभिः ।
तृतीयं वासुदेवाख्यमस्य नाम निगद्यते ॥

नामत्रितयतो नान्यदस्ति सर्वफलप्रदम् ।
महापातक युक्तोऽपि स्मृत्वा नारायणं सकृत् ॥

अवाप्तवान् परं तत्वमजामीलो द्विजाधमः ।
वेदाचार परिभ्रष्टः किराती संगतश्चिरम् ॥ १०

श्रीरामनाम सततं स्मृत्वा नारदादेशतः ।
वाल्मीकिः प्रथितः साक्षादभूदृषिकुलाधिपः ॥

ध्रुवादयो महाभागा वासुदेव पदाश्रयात् ।
अवापुः परमं धाम शक्राद्यैरपि दुर्लभम् ॥

येयं सीता महाभागा प्रादुर्भूता महीतलात् ।
साक्षात्पञ्चदशार्णेयं श्रीर्देवी सर्वमातृका ॥

विच्छक्तिः प्रथमं नाम श्रीरित्येव निगद्यते ।
द्वितीयं तु महालक्ष्मी नामधेयमुदीरितम् ॥

मही श्रीसुन्दरी नाम तृतीयं गुप्तमुच्यते ।
सीतानाम चतुर्थं स्याज्जानकीत्यपि तत्परम् ॥ १५

नारायणस्य श्रीदेव्या बहुनामानि सन्त्यपि ।
समस्ताघ हराणि स्युस्सद्य एव द्विजोत्तमाः ॥

नामान्येतानि जप्तृणां सद्यो मुक्तिकराणि हि ।
श्रीनारायण नामाद्यं लक्ष्मीनारायणेत्यथ ॥

श्रीवासुदेवनामाऽथ श्रीरामेत्यथ गीयते ।
तस्माच्छ्री संयुता जप्या श्रीमदष्टाक्षरी शुभा ॥

आथर्वणी सकृद्वापि प्रत्यहं सर्वसिद्धिदा ।
राजराजेश्वरी जप्तुर्न व्रतं नास्त्युपोषणम् ॥

न वेदाध्ययनापेक्षा न यागो न तपस्तथा ।
न रश्मिमालाध्ययनं न्यासापेक्षा हि वा नहि ॥ २०

श्रियः पञ्चदशाक्षर्याः श्रीमदष्टाक्षरस्य च ।
राजराजेश्वरी स्मरणात्सर्वसिद्धिरीरिता ॥

राजराजेश्वरी विद्या सर्वविद्या स्वरूपिणी ।
सर्वयोगमयी सर्व धर्मशास्त्र स्वरूपिणी ॥

सर्वक्षेत्रमयी सर्वतीर्थक्रतुमयी परा ।
सर्ववेदमयी सर्वमहर्षि ब्रह्मरूपिणी ॥

सर्वविश्वमयी सर्वशक्तिपीठ स्वरूपिणी ।
लक्ष्मीनारायणीमेनां राजराजेश्वरीं पराम् ॥

समस्त जगतां धात्रीं विद्या सिह्मासनेश्वरीम् ।
आचार्य कृपया लब्धामष्टाविंशतिधाऽन्वहम् ॥ २५

दश द्वादशधा वापि यः स्मरेत्साधकोत्तमः ।
जल्पो जपफलं निद्रा समाधिरभिधीयते ॥

प्रादक्षिण्यं भुवः प्रोक्तं गतिरस्य न संशयः ।
शिल्पं समस्तं मुद्राणां रचना भवति ध्रुवम् ॥

भोजनं नित्यहोमः स्यात्प्रणामस्तूपवेशनम् ।
चिन्ताऽस्य भगवद्ध्यानं तत्क्रिया तप उच्यते ॥

तस्मादेतादृशी विद्या प्राणैः कण्ठगतैरपि ।
अवश्यमपि गोप्तव्या निधानमिव तस्करात् ॥

सर्वस्वमपि दातव्यं पशुरत्नधनादिकम् ।
कन्यका अपि दातव्या रूपवत्यः स्वलङ्कृताः ॥ ३०

पुत्रा अपि प्रदातव्या विद्याविनय संयुताः ।
साध्वी स्वपत्नो तरुणी सर्वावयव सुन्दरी ॥

साप्यर्थिने प्रदातव्या राज्यश्रीरप्यचञ्चला ।
शिरोऽपि प्राणसहितं दातव्यमवनीतले ॥

राजराज महाविद्या न दातव्या कथञ्चन ।
राज्यप्रदाय राज्ञे वा भ्रातृपुत्राय बन्धवे ॥

राजराजेश्वरी विद्या न दातव्या महीयसी ।
प्राणानपि च सर्वस्वं पत्नीं पुत्रांश्च कन्यकाः ॥

आचार्यचरणाधीना यः करोति महीतले ।
निर्मत्सरोऽनहंकारी जितक्रोधो जितेन्द्रियः ॥ ३५

आचार्य चरणद्वन्द्व कैङ्कर्य निरतः सदा ।
शिष्यत्वे स परिपूर्णो नान्यो राज्यप्रदोपि च ॥

मितं ददाति जनको मितं माता मितं सुतः ।
इहामुत्रा मिताभीष्ट प्रदाताऽऽचार्य उच्यते ॥

आचार्याज्ञां समुल्लंघ्य सकृदप्यवनीतले ।
मित्रपुत्रकलत्रादि संपन्नः प्रच्युतोऽचिरात् ॥

भूत्वा निरन्तरं दुःखी देहान्ते शुनको भवेत् ।
सहस्रजन्मसु श्वानो गर्दभः स्यात्ततः परम् ॥

आचार्याज्ञामनुल्लंघ्य निरन्तरमनन्यधीः ।
इहाऽपि सकलैश्वर्ययुतो नित्य सुखाश्रयः ॥ ४०

अवश्यं मुक्तिमाप्नोति सहस्रकुल संयुतः ।
आचार्य चरणद्वन्द्व सन्निधौ चिह्नकं तु वा ॥

काञ्चनानां सहस्रं वा दास्यामीति द्विजोत्तमैः ।
यदा वाचा प्रतिज्ञातं तदृणं महदीरितम् ॥

तन्मासाभ्यन्तरे देयं तदूर्ध्वं वृद्धि संयुतम् ।
तन्मासत्रितयादर्वाग्देयं वृद्धि समन्वितम् ॥

तदूर्ध्वं द्विगुणं देयं षण्मासात्त्रिगुणं स्मृतम् ।
वत्सरात्पञ्चगुणितं तदूर्ध्वं नास्ति निष्कृतिः ॥

इहामुत्र परं सौख्यं महदैश्वर्यमक्षयम् ।
ब्रह्म तादात्म्य संसिद्धि य इच्छेत्साधको भुवि ।। ४५

स आचार्यपद द्वन्द्व किङ्करः स्याद्दिने दिने ।
य इच्छेत्परमं दुःखमन्ते नरकयातनाम् ।।

आचार्याज्ञां समुल्लंघ्य तेन स्थेयं महीतले ।
पितृमातृवधे ब्रह्मवधे निष्कृतिरुच्यते ।।

गुर्वाज्ञा लङ्घने नृणां न निष्कृतिरुदीरिता ।
पत्नीपुत्रकलत्रादि निरन्तर सुखान्वितः ।।

मुक्तारत्न गजाश्वादि संपदः स्युः पदे पदे ।
आचार्यस्य कृपालेशान्नान्यथा ब्रह्मनन्दनाः ।।

यदि सद्गुरु कारुण्यं शिष्यस्य प्रत्यहं भुवि ।
इहाऽपि सकलैश्वर्यमन्ते मुक्तिस्तु शाश्वती ।। ५०

आचार्य पूर्णकरुणा लब्धा सकलसिद्धिदा ।
राजराजेश्वरी विद्यां योऽनुस्मरति सन्ततम् ।।

भोगो योगायते तस्य पापं च सुकृतायते ।
मोक्षायते च संसारो राजराजेश्वरी जपात् ।।

राजराजमहाविद्या स्मरणाद्ब्रह्मनन्दनाः ।
ब्रह्मविष्णुमहेशादि पदं चास्य न दुर्लभम् ।।

पितृमातृ सहस्रेण सममाचार्यं दैवतम् ।
आचार्यं सदृशं दैवं विद्यते यदि भूतले ॥

राजराज महाविद्या सदृशी वर्ण्यते तदा ।
रत्नमेरुसनं दानं यदि तिष्ठति पापहम् ॥ ५५

राजराज महाविद्या सदृशी वर्ण्यते तदा ।
जाह्नवी सदृशं तीर्थमस्ति चेत्पातकापहम् ॥

शेषाचलसमं क्षेत्रमस्ति चेत्सर्वसिद्धिदम् ।
वाराणसीसमं क्षेत्रमस्ति चेन्मुक्ति दायकम् ॥

बदरीवन सङ्काशं यदि सद्यः फलप्रदम् ।
राजराज महाविद्या सदृशी विद्यते तदा ॥

बहुनाऽत्र किमुक्तेन राजराजेश्वरी परा ।
सर्वविद्यामयी प्रोक्ता सर्व ब्रह्माण्ड नायिका ॥

तस्मादिमां महाविद्यामाचार्य वदनाम्बुजात् ।
परिपूर्णकृपां लब्ध्वा योऽनुस्मरति सन्ततम् ॥ ६०

स विराट्पुरुषः साक्षाद् भवेन्नारायणात्मकः ।
राजराजमहाविद्या माहात्म्यमघनाशनम् ।
इति किञ्चिन्मया प्रोक्तमथ वक्ष्यामि साधनम् ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे राजराज विद्यामाहात्म्ये उत्तरभागे
चतुस्त्रिंशोऽध्यायः ॥

---

# अथ पञ्चत्रिंशोऽध्यायः ॥

—※—

**श्रीभगवानुवाच –**

राजराजमहाविद्यानुष्ठानविधिमिष्टदाम् ।
वक्ष्ये ब्रह्मसुता यूयं शृणुध्वं श्रद्धयान्विताः ॥

ब्राह्मे मुहूर्ते उत्थाय शयनस्थित एव हि ।
आचार्यचरणद्वन्द्वं ध्यायेद्ब्रह्मबिले शुभे ॥

ब्रह्मरन्ध्रे सहस्रारकमले विकसद्दले ।
शुद्धस्फटिकसङ्काशं वराभयकरान्वितम् ॥

प्रसन्नवदनं शान्तं दिव्याभरणभूषितम् ।
अर्धनारी नरमयं ब्रह्मविष्णुरूपधरं तु वा ॥

महेश्वराकृतिं वाऽपि साक्षान्नारायणात्मकम् ।
ध्यात्वाऽऽचार्यं महात्मानं सर्वज्ञं करुणानिधिम् ॥ ५

तत्पदाब्जयुगं भूयो भूयो नत्वाऽथ सादरम् ।
तत्पादपद्मयुगल गलत्पीयूषबिन्दुभिः ॥

आत्मानं प्लावितं ध्यात्वा विमुक्तः सर्वपातकैः ।
मूलादिब्रह्मरन्ध्रान्तं भानुकोटिशतप्रभाम् ॥

तप्तजाम्बूनदप्रख्यां ज्वलन्तीं परसंविदम् ।
ध्यात्वा तत्तेजसः पुञ्जपिञ्जरीकृतविग्रहः ॥

आचार्यचरणाम्भोजारूढश्रीपादुकायुगम् ।
सौवर्णं राजतं वापि दृष्ट्वा जप्त्वा च पादुकाम् ॥

तुलसीं श्रोत्रियद्वन्द्वं पश्येत्सप्त महामुनीन् ।
महानदीं ज्वलद्वह्निं दृष्ट्वा स्मृत्वा श्रियःपतिम् ॥ १०

प्रक्षालितकरांघ्रिश्च ब्रह्मविद्यामथो जपेत् ।
यद्वा ब्राह्मे समुत्थाय मुहूर्ते यतमानसः ॥

पूर्वमाचार्यवक्त्राब्जं दृष्ट्वा पादाब्जयोर्नमेत् ।
असान्निध्ये गुरोः पादारूढश्रीपादुकां नमेत् ॥

ततो नद्यादिकं पश्येत्पादुकामन्त्रमुच्चरन् ।
अष्टाविंशतिधा स्मृत्वा दश द्वादशधाऽपि वा ॥

ब्रह्मविद्यां जपेत्पश्चाच्छ्रीश्रीश द्वादशाक्षरीम् ।
भगवद्रश्मिसूक्तं च स्मृत्वा त्रिनैकधाऽपि वा ॥

श्रियो रश्मिस्रजं पश्चात् स्मरेत्त्रेधाऽपि वा सकृत् ।
रश्मिमालाभिधं सूक्तं श्रियः पूर्वमुदीरितम् ॥ १५

अथ सिह्मासन महाविद्यां च संस्मरेत्सकृत् ।
अष्टाविंशतिधा जप्त्वा श्रियः पञ्चदशाक्षरीम् ।
संस्मरेत्सुप्रभातादि स्तोत्रं भगवतः प्रियम् ॥

ब्रह्मामुरारिस्त्रिपुरान्तकश्च
भानुश्शशी भूमिसुतो बुधश्च ।

गुरुश्च शुक्रश्शनिराहुकेतवः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

भृगुर्वसिष्ठः क्रतुरंगिराश्च
मनुः पुलस्त्यः पुलहश्च गौतमः ।
रैभ्यो मरीचित् श्यवनो महर्षिः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

सनत्कुमारस्सनकः सनन्दन-
स्सनातनोऽप्यासुरि पिङ्गलौ च ।
सप्त स्वरास्सप्तरसातलाश्च
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

पृथ्वी सगन्धा सरसास्तथापः
स्पर्शी च वायुर्ज्वलितं च तेजः ।
नभः सशब्दं महता सहैव २०
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

सप्तार्णवास्सप्त कुलाचलाश्च
सप्तर्षयो द्वीपपराश्च सप्त ।
भूरादि कृत्वा भुवनानि सप्त
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

इत्थं प्रभाते प्रवरं विचित्रं
स्मरेत्पठेद्यः शृणुयाच्च भक्त्या ।

दुःस्वप्नराश्योघंहसुप्रभातो
भवेच्च सत्यं भगवत्प्रसादात् ॥

पठेद्यः सुप्रभाताख्यं प्रातर्भगवतः प्रियम् ।
सर्वसंपदधिष्ठाता भूत्वा मुक्तिमवाप्नुयात् ।
प्रजपेद्भगवद्धर्मं यदि शक्तः शुचिस्तदा ॥

विमुक्तः सकलापद्भ्यो नारायणमयो भवेत् ।
बहिर्निर्गत्य मूत्रादि विसर्जनकरस्ततः ॥

खादिरेणाथ काष्ठेन दन्तधावनमाचरेत् ।
अपामार्गेण वा कुर्यादिच्छन् सौभाग्यमुत्तमम् ॥ २५

स्नानं कुर्यात्ततो नद्यां तडागे वा समाहितः ।
आर्द्रेण वाससा वाऽपि परिमृज्य कलेबरम् ॥

सन्ध्योपास्ति ततः कुर्यात्सर्वपापौघ भञ्जनीम् ।
सन्ध्योपास्ति परित्यज्य योऽन्यत्र कुरुते रतिम् ॥

स शूद्रवद्बहिष्कार्यस्सर्वस्माद्विप्रकर्मणः ।
ऋषयो दीर्घसन्ध्यत्वात्सर्वैर्दीर्घायुषो भवेत् ॥

माता सकल विद्यानां सावित्री परमा कला ।
बहुशस्तामुपास्यैव विद्योपास्ति समाचरेत् ॥

सहस्रं प्रजपेद्यस्तु गायत्रीं वेदमातरम् ।
तं वसिष्टांशसंभूतं जानीध्वं ब्रह्मनन्दनाः ॥ ३०

सहस्रं प्रजपेद्यस्तु पङ्क्तिपावनपावनः ।
नित्यमथ पञ्च शतं तु वा ... ... ... ॥

चतुः शतं जपेद्यद्वा त्रिशतं द्विशतं तु वा ।
अष्टाविंशाधिकं नित्यं शतं वा प्रजपेत्सुधीः ॥

शतमष्टोत्तरं नित्यं यो जपेत्साधकोत्तमः ।
तं ब्राह्मणं विजानीयात्सर्वकर्मसु पावनम् ॥

सावित्रीं यो जपेदेककालं द्विशतमादरात् ।
स महापुरुषश्श्रेष्ठो ब्राह्मणोत्तम उच्यते ॥

एककालं जपेद्यस्तु त्रिशतं वेदमातरम् ।
ऋषिः स उक्तो विद्वद्भिः पङ्क्तिपावनपावनः ॥ ३५

वेदमातरमभ्यस्य चतुःशतमथान्वहम् ।
महर्षिः सर्वलोकेषु स विप्रः कथ्यते बुधैः ॥

एककालं पञ्चशतं सावित्रीं यो जपेच्छुचिः ।
ब्रह्मर्षिस्स महानुक्तो दैवतैरपि पूजितः ॥

सहस्रमेककालं यः प्रजपेद्वेदमातरम् ।
स एव भगवान् साक्षान्नारायण इति स्मृतः ॥

ब्रह्मर्षिभिर्वसिष्ठाद्यैरपि संपूज्यते स हि ।
पतितानां सहस्रं च स पावयति पावनः ॥

सहस्रं त्रिशतं वाऽपि चतुःपञ्चशतं तु वा ।
द्विशतं वा शतं वाऽपि सावित्रीं वेदमातरम् ॥ ४०

यथाशक्त्या प्रजप्त्वादावुपस्थाय दिवाकरम् ।
अजपास्मरणं कृत्वा यथाशक्त्या च मातृकाम् ॥

कृत्वा नारायणीं सन्ध्यां श्रीमदष्टाक्षरीं शुभाम् ।
यथाशक्त्या प्रजप्त्वाऽथ सूक्तं नारायणाभिधम् ॥

आदित्याभिमुखो जप्त्वा सकृद्द्वेधा त्रिधापि वा ।
पञ्चधा रविवारं वा जप्त्वा श्रीगुरुपादुकयोः ॥

नमस्कृत्याग्निमाराध्य वेदमात्राधृतं शुभम् ।
हुत्वा द्वादशधा पश्चाच्छ्रीमदष्टार्णविद्यया ॥

अष्टोत्तरशतं नित्यमष्टाविंशतिधाऽपि वा ।
हुत्वाऽथ वासुदेवेन वैष्णवेन घृतं हुनेत् ॥ ४५

श्रीद्वादशार्णया पश्चाद्राज्यलक्ष्म्याऽथवा ततः ।
आज्यं द्वादशधा हुत्वा वस्वक्षर्याऽथवा श्रिया ॥

हुनेद्द्वादशधा पश्चाद्राजराजाख्यविद्यया ।
दशधा पञ्चधा वाऽपि हुनेद्व्याहृतिभिस्ततः ॥

ब्रह्मार्पणाहुतिं कृत्वा वह्निं हुत्वा ततः परम् ।
ततः श्रियो देव्या घृतैः पञ्चदशार्णयाऽपि च ॥

अष्टाविंशतिधा हुत्वा चतुःश्रीमनुभिस्ततः ।
एकामप्याहुतिं कृत्वा राजराजाख्यविद्यया ॥

हुत्वा द्वादशधाऽध्येन हुत्वा च व्याहृतिभिः परम् ।
प्राणानायम्य यत्नेन समासीनस्सुखासने ॥ ५०

श्रीमदष्टाक्षरीविद्या जपसंकल्पमुच्चरेत् ।
छन्द आर्षादिकं न्यस्य न्यासजातं ततो न्यसेत् ॥

यद्वा षडङ्गं विन्यस्य वैष्णवीं मातृकां पराम् ।
विन्यस्य दशधा वर्णन्यासं कृत्वा ततःपरम् ॥

चिद्वये मातृकान्यासं कृत्वा ध्यात्वा श्रियःपतिम् ।
श्रीमदष्टाक्षरीविद्या सहस्रं त्रिशताधिकम् ॥

शताधिकसहस्रं वा जपेत्पञ्चशतं तु वा ।
चदुःशतं वा त्रिशतं द्विशतं वा शतं जपेत् ॥

सायं प्रातश्च मध्याह्ने ब्राह्मे कालेऽथवा निशि ।
नारायणानुस्मरणमपि पातकभञ्जनम् ॥ ५५

नारायणेति यन्नाम नित्यं स्मृतमपि द्विजैः ।
तेन धन्यतरं लोके नास्ति नास्ति तपोधनाः ॥

नारायणानुस्मरणं जपहोमादिकर्मसु ।
क्षुतप्रस्स्वलनाद्येषु कृतं संपूर्णसिद्धिदम् ॥

ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ।
तत्संयोगी भ्रूणहा वा पितृमातृविघातकः ॥

नारायणानुस्मरणं कृत्वा प्रत्यहमादरात् ।
परां गतिमवाप्नोति विमुक्तः पापराशिभिः ॥

नारायणानुस्मरणे चतुर्वर्णाश्च पञ्चमाः ।
अत्राधिकारिणः प्रोक्ताः पापैर्मुक्ता भवन्त्यपि ॥ ६०

नाधिकारो भवत्येषां वेदवाक्यश्रुतावपि ।
श्रीनारायणनामाद्यं ब्रह्मणः परमात्मनः ॥

वेदवेदान्तशास्त्रौघसारभूतं सनातनम् ।
श्रीनारायणनामाद्यं स्मृत्वा स्मृत्वांत्यजा अपि ॥

एतत्कलेबरं त्यक्त्वा द्विजातित्वमवाप्नुयुः ।
भूत्वा द्विजातयः पश्चादाचार्य वदनाम्बुजात् ॥

श्रीमदष्टाक्षरीं लब्ध्वा गतिं प्राप्स्यन्त्यनुत्तमाम् ।
श्रीमदष्टाक्षरीं विद्या जपतो यादृशी गतिः ॥

तुला पुरुषकोट्यापि तादृशी न गतिर्भवेत् ।
नारायणानुस्मरणादपि नृणां गतिः पराः ॥ ६५

श्रीमदष्टार्णजप्तॄणां गतिः शक्या न वर्णितुम् ।
अयं नारायणो योगी बदरीवनमध्यगः ॥

धर्मपुत्रः प्रसन्नात्मा सर्वलोक गुरुः स्मृतः।
यतीनां वन्दने काले श्रीमदष्टाक्षरीं पराम्॥

उच्चार्यैव नमन्त्यत्र परां गतिमभीप्सवः।
तस्मादवश्यमष्टार्णा वेदवेदान्तसंग्रहा॥

आचार्यकरुणा प्राप्ता जप्या स्वर्गापवर्गदा।
अवैदिकं वृथा जप्यं वृथा दानमदक्षिणम्॥

अनाचार्ये वृथा दानं वृथा हुतमनग्निषु।
तस्मात्सकलवेदान्तसारभूतार्थसंग्रहा॥ ७०

वैदिकी श्रीमदष्टार्णा जप्या सर्वफलप्रदा।
श्रीमदष्टाक्षरीवाच्यं वस्तु ब्रह्मात्मकं परम्॥

निष्कलङ्कं निरुपमं सत्यानन्दचिदात्मकम्।
निरञ्जनं निराधारं नित्यशुद्धं सनातनम्॥

चतुर्वेदमयं शब्दब्रह्मरूपं परात्परम्।
गुणातीतं गुणाधारं विधिविष्णु शिवार्चितम्॥

अनन्तमचलं सूक्ष्मं मनो वाचामगोचरम्।
श्रीमदष्टाक्षरी विद्याऽनुसंधानात्प्रकाशते॥

श्रीमदष्टाक्षरीं विद्यामष्टोत्तरशतं जपन्।
अन्वहं मुच्यते पापैर्ब्रह्महत्यादिकैरपि॥ ७५

द्विशतं यो जपेन्नित्यं श्रीमदष्टाक्षरीं पराम् ।
ब्रह्महत्या सुरापानस्तेयगुर्वङ्गनागमैः ॥

पितृमातृवधाद्यैश्च महापातकसंचयैः ।
उपपातकजालैश्च दुस्साध्यैरपि दुष्कृतैः ॥

वार्धके यौवने बाल्ये जाग्रत्स्वप्नसुषुप्तिषु ।
मनसा कर्मणा वाचा ज्ञानाज्ञानकृतैरपि ॥

उपपातकजालैश्च नरकप्राप्तिहेतुभिः ।
विमुक्तो नात्र सन्देहो गतिं प्राप्नोत्यथाक्षयाम् ॥

त्रिशतं यो जपेन्नित्यं श्रीमदष्टाक्षरं मनुम् ।
सर्ववेदेषु यत्पुण्यं सर्वक्रतुषु यत्फलम् ॥ ८०

सर्वदानेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
तदक्षयफलं प्राप्य लभतेऽनुत्तमां गतिम् ॥

श्रीमदष्टाक्षरीं नित्यं प्रजपेद्यश्चतुःशतम् ।
तस्य देहे सदा तिष्ठन्त्यणिमाद्यष्टसिद्धयः ॥

अचञ्चला महालक्ष्मीर्धनधान्यादिसङ्कुला ।
तद्गृहे निवसत्येव यावदाचन्द्रतारकम् ॥

दीर्घमायुष्यमारोग्यं जायतेऽस्य दिने दिने ।
धर्मार्थकाममोक्षाख्याः पुरुषार्थाश्चतुर्विधाः ॥

तत्कराब्जे वसन्त्येव संशयो नात्र विद्यते ।
जप्त्वा पञ्चशतं नित्यं श्रीमदष्टाक्षरीं पराम् ॥ ८५

पादुकाञ्जनखड्गादिसिद्ध्यष्टकमनुत्तमम् ।
प्राप्नोत्यवश्यमैश्वर्यमणिमादिगुणान्वितम् ॥

शङ्खादिनिधयस्तस्य द्वारे तिष्ठन्त्यचञ्चलाः ।
किङ्करीवास्य जिह्वायां ब्रह्मपत्नी विजृम्भते ॥

तं पालयति मातेव महालक्ष्मीः सुतं यथा ।
भूत्वा जातिस्मरः शीघ्रं स्वच्छन्दमरणोऽपि च ॥

पितुर्मातुः स्वपत्न्याश्च कुलैर्द्वादशभिर्युतः ।
कलेबरान्ते विशति तद्वैकुण्ठपदं हरेः ॥

शताधिकं जपेद्यस्तु सहस्रं प्रत्यहं शुचिः ।
स एवोक्तो महायोगी साक्षान्नारायणो विभुः ॥ ९०

स एव सर्वजगतामाचार्य ऋषिरुच्यते ।
पूता भवन्ति सर्वेऽस्य दर्शनादपि पापिनः ॥

तत्संभाषणतो नृणामग्निष्टोमफलं लभेत् ।
वर्षादूर्ध्वं महेन्द्राद्या अपि साक्षाद्दिगीश्वराः ॥

किङ्करा अपि तिष्ठन्ति सिद्धाः किंपुरुषा अपि ।
तमर्चयन्ति मुनयो विश्वामित्रादयोऽपि च ॥

तं पालयन्ति ब्राह्माद्या मातरो भैरवा अपि ।
पारिजातादयो वृक्षाः कामधेनुगणा अपि ।

चिन्तामण्यादिरत्नानि तद्गृहे निवसन्ति हि ।
तद्वंशसंभवानां च मुक्तिलक्ष्मीरचञ्चला ॥ ९५

हस्ताम्बुजे वसत्येव नात्र कार्या विचारणा ।
स एव धाता विष्णुश्च शङ्करः परमेश्वरः ॥

स एव जगतः कर्ता हर्ता पालयितापि च ।
तमेव सततं विप्रा जानीत हरिमच्युतम् ॥

त्रिशताधिकसाहस्रं श्रीमदष्टाक्षरीं पराम् ।
यो जपेत्प्रत्यहं शुद्धः तस्य पुण्यफलं पराम् ॥

न शक्यते मया वक्तुं ब्रह्मरुद्रादिकैरपि ।
श्रीमदष्टाक्षरी विद्यामित्थं जप्त्वा दिने दिने ॥

वासुदेवमहाविद्यां वैष्णवीं च षडक्षरीम् ।
यथाशक्त्या प्रजप्त्वाऽथ रमाया द्वादशाक्षरी ॥ १००

लक्ष्मी हृदयविद्यां वा श्रीषडर्णमथापि वा ।
अष्टार्णा वा महालक्ष्म्याः शतमष्टोत्तरं जपेत् ॥

शक्तश्चेत्साधको नित्यं श्रियः पञ्चदशाक्षरीम् ।
त्रिशतं द्विशतं वापि शतमष्टोत्तरं तु वा ॥

अष्टाविंशतिधा वाऽपि जप्त्वा पश्चाद्दिने दिने ।
राजराजेश्वरी विद्यां सुन्दरी वल्लभाभिधाम् ॥

अनुत्तर ब्रह्मविद्यामष्टाविंशाक्षरीं पराम् ।
लक्ष्मीनारायणीं पश्चाच्छतमष्टोत्तरं जपेत् ॥

अष्टाविंशतिधा वाऽपि जपेद्द्वादशधाऽन्वहम् ।
राजराजाख्यविद्याया यावदावृत्तिरन्वहम् ॥ १०५

श्रीमदष्टार्णविद्यायास्तावल्लक्ष जपात्फलम् ।
उक्तमागमशास्त्रेषु ब्रह्मविद्भिः पुरातनैः ॥

राजराजमहाविद्यामष्टाविंशतिधाऽन्वहम् ।
प्रजप्त्वा श्रीमदष्टार्णविद्यायास्साङ्गदक्षिणम् ॥

अष्टाविंशति संख्याक वेदपारायणात्फलम् ।
अष्टाविंशति संख्याक महादानफलं शुभम् ॥

प्राप्नोति नात्र सन्देहो प्रत्यहं ब्रह्मनन्दनाः ।
राजराजमहाविद्या सकृत्स्मरणतोऽन्वहम् ॥

चतुर्णामपि वेदानां तावत्पारायणैः फलम् ।
शतक्रतुफलं साङ्गमष्टाविंशतिसंख्यया ॥ ११०

राजराजमहाविद्यामष्टाविंशतिधा जपात् ।
अक्षयं समवाप्नोति साक्षाद्ब्रह्ममयो हरिः ॥

असौ नारायणः साक्षाद् भगवानच्युतो हरिः ।
अश्वमेधसहस्रं च महादानयुतं तथा ॥

भूप्रदक्षिणसाहस्रं राजराजाख्यविद्यया ।
ब्रह्मणा तुलितं पूर्वं तथा वेद चतुष्टयात् ॥

सुन्दरी वल्लभा राजराजविद्याऽधिका भवेत् ।
राजराजेश्वरीं विद्यां सुन्दरीवल्लभाभिधाम् ॥

अष्टोत्तरशतं जप्तुः फलं वक्तुं न शक्यते ।
राजराजेश्वरी जप्तुर्वेदयज्ञशतैरपि ॥ ११५

न प्रयोजनमस्तीह ब्रह्मानन्द प्रदानतः ।
राजराजेश्वरी जप्तुर्जातकं मृतकं तु वा ।
नाशौचं विद्यते तस्य पूर्णाऽऽचार्यकृपा यदि ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे राजराज विद्यामाहात्म्ये उत्तरभागे
पञ्चत्रिंशोऽध्यायः ॥

# अथ षड्त्रिंशोऽध्यायः ॥



**श्रीभगवानुवाच —**

ऋषिरस्या महायोगी धर्मपुत्रो जगत्पतिः ।
साध्यो नारायणो योगी सर्वज्ञो भगवान् विभुः ॥

संमोहनस्तथा नन्द भैरवश्चर्षितां गतौ ।
गायत्रमथ गायत्रं दैवतं पङ्क्तिरित्यपि ॥

छन्द उक्तं महायोगी सुन्दरी वल्लभो विभुः ।
लक्ष्मीनारायणः स्वामी देव उक्तः पुरातनैः ॥

लक्ष्मीनारायणप्रीत्यै विनियोग उदाहृतः ।
नाङ्गन्यासकरन्यासौ नाङ्गिनी चान्यदेवता ॥

स्वयमेव पुरा प्राह परब्रह्ममयी परा ।
लक्ष्मीनारायणी विद्या राजराजेश्वरी कला ॥ ५

सकृत्स्मरति वा नित्यं नियतो यो दृढव्रतः ।
तस्याहं भगवद्युक्ता महाश्री सुन्दरी रमा ॥

दासीवन्मन्दिरे तस्य वसाम्याचन्द्रतारकम् ।
इत्थं भगवतीगीतं शृण्वतश्च श्रियः पतेः ॥

अश्वमेधसहस्रं च समग्रवरदक्षिणम् ।
महेन्द्रपुरसाम्राज्य भोगदं च जपिष्वथ ॥

राजराजेश्वरीविद्या स्मरणं वान्वहं सकृत् ।
ब्रह्मानन्दसुखप्राप्ति हेतुभूतमनश्वरम् ॥

राजराजेश्वरीविद्यामाचार्याज्ञा पुरस्सरम् ।
प्रजप्तुः श्रीमदष्टार्णा श्रियः पञ्चदशाक्षरी ॥ १०

न्यासं विना पुरश्चर्यां विनापि ब्रह्मनन्दनाः ।
सिद्धा भवति भक्तानां सर्वसिद्धिप्रदायिनी ॥

छन्द आर्षादिमात्रं वा विज्ञाय ब्रह्मनन्दनाः ।
श्रीमदष्टाक्षरीं जप्त्वा सिद्धो भवति साधकः ॥

राजराजेश्वरीं जप्त्वा स्वाचार्यचरणद्वये ।
बहुलां दक्षिणां दत्वा धनधान्यादिसङ्कुलाम् ॥

पुरश्चरणकृत्येन विनापि ब्रह्मनन्दनाः ।
श्रीमदष्टाक्षरी विद्या सिद्धिं प्राप्नोति शाश्वतीम् ॥

विरजायाः परे पारे सुधाम्भोनिधिमध्यमे ।
रत्नद्वीप मनोरम्ये पारिजातवनावृते ॥ १५

कल्पभूरुहसन्तान हरिचन्दनसंवृते ।
अयोध्यानगरे तत्र दिव्यप्रासादशोभिते ॥

अनेकयोजनोत्तुङ्गरत्नहर्म्यविराजिते ।
बहुयोजनविस्तीर्णे भगवत्किङ्करान्विते ॥

नित्यमुक्तैस्समाकीर्णे सिद्धसाध्यगणावृते ।
तन्मध्ये मण्डपे तप्तजाम्बूनदविभूषिते ॥

नवमाणिक्यखचिते तन्मध्ये सुमनोहरे ।
नवमाणिक्यसाहस्रस्तम्भकान्तिविराजिते ॥

चिन्तामणिमये तत्र मण्डपे भगवत्प्रिये ।
भगवत्किङ्करश्रेष्ठैस्सर्वतः समलङ्कृते ॥ २०

ब्रह्मविष्णुमहेशाद्यैश्चतुर्द्वारेषु शोभिते ।
दुर्गागणपतिक्षेत्रपालभैरवशोभिते ॥

शङ्खपद्मादिनिधिभिस्सर्वतस्समलङ्कृते ।
मध्ये सिंहासने रम्ये पारिजातस्य मूलगे ॥

नवरत्नमये तप्तजाम्बूनदविभूषिते ।
तत्राऽऽसीनं महात्मानं कालनीलाम्बुदप्रभम् ॥

कोटिमन्मथसङ्काशं सुन्दरास्यं चतुर्भुजम् ।
नवरत्नमयश्रीमज्जाम्बूनदकिरीटिनम् ॥

कस्तूरीतिलकोपेतललाटं कुटिलालकम् ।
पद्मपत्रविशालाक्षं कामचापसमभ्रुवम् ॥ २५

उद्यदर्कशतप्रख्यकुण्डलद्वयशोभितम् ।
स्मितवक्त्रं विशालाक्षं दाडिमी सदृशद्विजम् ॥

कम्बुग्रीवं महोरस्कं केयूराङ्गदभूषितम् ।
अङ्गुलीयकरत्नैश्च मुक्ताहारेण शोभितम् ॥

कौस्तुभोद्भासितोरस्कं वनमाला विराजितम् ।
शङ्खचक्राभयवरकरं श्रीवत्सवक्षसम् ॥

विद्युत्पुञ्जप्रतीकाशपीताम्बरधरं विभुम् ।
वीरासनसमासीनं वरेण्यं वरदं विभुम् ॥

नारायणं जगन्नाथं परं श्रीसममच्युतम् ।
अस्य वामाङ्कपर्यङ्कस्थिता देवी त्रयी मयी । ३०

महालक्ष्मीर्जगन्माता तप्तजाम्बूनदप्रभा ।
विद्युत्कोटिप्रतीकाश पीताम्बरयुगावृता ॥

नवमाणिक्यसहितकिरीटावृतमस्तका ।
ललाटपट्टसंराजत्कस्तूरीतिलकाङ्किता ॥

कुटिलालकसंयुक्ता दिव्यमाला विभूषिता ।
दिव्यचन्दनलिप्ताङ्गी राजीवायतलोचना ॥

अञ्जनाञ्चितनेत्रान्ता नीलोत्पलदलेक्षणा ।
मुक्ताफलसमायुक्तहेमताटङ्कभूषिता ॥

रत्नमुक्ताफलोपेत स्वर्णवाली युगान्विता ।
पद्मरागसमायुक्त नासिकाभरणान्विता ॥ ३१

स्मितवक्त्रा विशालाक्षी पूर्णेन्दुसदृशानना ।
पक्वबिम्बफलप्रख्या धरयुग्मविभूषिता ॥

दाडिमीबीजवज्राभदन्तपङ्क्तिविभूषिता ।
मुक्ताहारयुतग्रीवा पदकादिविभूषिता ॥

चतुर्भुजा स्वर्णघठमुक्तामाला लसत्करा ।
पद्मादर्शकरा स्वर्णचिन्ताकादिविभूषिता ॥

कटकाङ्गदकेयूररत्नभूषणभूषिता ।
सुवृत्तविमलोत्तुङ्गहेमकुम्भनिभस्तनी ॥

तनुमध्या पृथुश्रोणी निम्ननाभिविभूषिता ।
कदली ललितस्तम्भ सुकुमारोरुशोभिता ॥ ४०

सौवर्णपादकटकाङ्गुलीयकविभूषिता ।
महार्हाभरणोपेता सर्वसाम्राज्यनायिका ॥

अयोध्यापुरसाम्राज्यनायिका विश्वमोहिका ।
महाश्री सुन्दरी देवी दक्षिणेऽस्य श्रियःपतेः ॥

उद्यत्सूर्यसहस्राभा जपाकुसुमसन्निभा ।
पद्मरागमहारत्नसन्निभा विश्वनायिका ॥

दिव्यरत्नाम्बरधरदिव्यचन्दनचर्चिता ।
इक्षुकार्मुकपुष्पेषु पाशाङ्कुशलसत्करा ॥

हारकेयूरकटकमुद्रिकाभिरलङ्कृता ।
स्वर्णकाञ्चीगुणोपेता रत्नकञ्चुकसंयुता ॥ ४५

नवरत्नसमायुक्तसौवर्णमकुटावृता ।
पद्मपत्रविशालाक्षी दिव्यकुण्ठलशोभिता ॥

आद्या भूषणचिन्ताकमुक्तावलिविभूषिता ।
सुवृत्तहेमकुम्भाभस्तनयुग्मविराजिता ॥

सर्वविद्यामयी सर्वमहासिम्हासनेश्वरी ।
सर्वसंमोहनकरी सर्वलोकवशङ्करी ॥

त्रैलोक्याकर्षणकरी देवता बृन्दवन्दिता ।
तप्तजाम्बूनदप्रख्या जाम्बूनदविभूषिता ॥

त्रिपुत्रा त्रिपुरेयादिदिव्यशक्तिभिरावृता ।
ब्रह्मविष्णुमहेशेन्द्रवन्द्यमानपदाम्बुजा ॥ ५०

त्रिशक्तिलक्ष्मीरस्यैव वामभागे श्रियःपतेः ।
इन्द्रगोपकसङ्काशा विद्युत्साहस्रसन्निभा ॥

मातुलुङ्गगदा पद्महेमकुम्भलसत्करा ।
दिव्यपीताम्बरधरा किरीटादिविभूषिता ॥

कनत्कनकचिन्ताकहारनूपुरशोभिता ।
दिव्यस्रग्वस्त्रसंछन्ना दिव्यगन्धविभूषिता ॥

ताम्बूलचर्वणासक्तमुखपद्मविराजिता ।
राजीवपत्रसदृशनेत्रयुग्मविभूषिता ॥

सौवर्णवाली युगला ताटङ्कद्वयभूषिता ।
प्रसन्नवदना सुभ्रूः सुस्मिताननपङ्कजा ॥ ५५

रत्नमुक्ताफलोपेतकाञ्चीदामविराजिता ।
सुधापूरित सौवर्णकलशोपमसुस्तनी ॥

शुद्धमुक्ताफलश्रीमद्रत्नकञ्चुकशोभिता ।
अङ्गुलीयककेयूरदिव्यकङ्कणभूषिता ॥

गौरी लक्ष्मी महावाणी रूपिणी वेदमातृका ।
इच्छा ज्ञान क्रियाशक्ति रूपिणी पररूपिणी ॥

ब्रह्मरुद्रमहेन्द्रादिसेव्यमान पदाम्बुजा ।
त्रिमूर्तिरूपा त्रय्यन्तरूपिणी च त्रयी मयी ॥

त्रैलोक्यरूपा त्रैलोक्यरूपिणी च त्रयी मयी ।
त्रिशक्ति लक्ष्मीः साम्राज्यलक्ष्मीर्विश्वम्भरप्रिया ॥ ६०

चामरद्वयधारिण्यौ वामदक्षिणयोः शुभे ।
नीलादेवी महीदेव्यौ दिव्याकल्पविभूषिते ॥

दिव्यचामरहस्ताश्च विमलाद्याश्च शक्तयः ।
दिव्याभरणसंपन्ना दिव्यस्रग्वस्त्रसंवृताः ॥

नारायणस्य जगतां नाथस्य कमलापतेः ।
पश्चाद्भागे स्थिता देव्यः स्मितवक्त्राम्बुजाः शुभाः ॥

पार्श्वयोरीशधातारौ गौरी वाणी समन्वितौ ।
सुवर्णरत्नसंबद्धश्वेतच्छत्रवरो विभुः ॥

पश्चाद्भागे स्थितो विष्णुर्लक्ष्मीयुक्तो जगत्पतिः ।
मूर्तिमन्तश्चतुर्वेदाश्चतुर्दिक्ष्वस्य संस्थिताः ॥ ६५

यज्ञेश्वरो जगत्स्वामी सर्वयज्ञमयो विभुः ।
साम्राज्यलक्ष्मीसहितः पुरतोऽस्य विराजते ॥

क्रतवो दक्षिणा युक्ता मूर्तिमन्तस्त्रयीमयाः ।
दिव्यरूपधरा भान्ति पुरतोऽस्य श्रियःपतेः ॥

महाश्री सुन्दरी देव्या महालक्ष्म्या समन्वितम् ।
त्रिशक्तिलक्ष्म्या सहितं नीलाभूमि समन्वितम् ॥

विमलाद्यष्ट महिषी सहितं परमेश्वरम् ।
मूर्तिमद्भिश्चतुर्वेदैः संस्तुतं जगतां पतिम् ॥

श्रीयुक्तवासुदेवाद्यैश्चतुर्दिक्षु विराजितम् ।
ब्रह्मविष्णुमहेशेन्द्र प्रमदामर सेवितम् ॥ ७०

अनन्तविहगाधीश विष्वक्सेनादिभिर्वृतम् ।
सर्वयज्ञपतिं सर्वजगतां पतिमच्युतम् ॥

आदित्यमण्डलान्तस्थं परमं पुरुषं विभुम् ।
सत्यानन्दचिदाकारं तमः पारे प्रतिष्ठितम् ॥

नारायणं जगन्नाथमनन्तं परमेश्वरम् ।
आश्रये परमात्मानं योगिध्येयं श्रियःपतिम् ॥
अर्धाङ्गं श्रीपतिं यद्वा ध्यायेन्नारायणं विभुम् ।

सन्तप्तहेमनवरत्नविभूषणाढ्यं
पीताम्बरं सुवदनं वरमाल्यभूषम् ।
पद्मादिशङ्खविलसत्करपङ्कजाढयं
अर्धेन्दिरेशमनिशं हरिमाश्रयामः ॥

योगासनं विविधभूषणभूषिताङ्गं
योगीन्द्रमानस समर्चितपादपद्मम् ।
हेमाबुजाभममलं कमलायताक्ष-
मर्धेन्दिरेशमनिशं हरिमाश्रयामः ॥ ७५

माणिक्यमुक्ताफलशोभिकण्ठं
पत्नीवरं माल्यसुगन्धियुक्तम् ।
किरीटचक्राब्जविभूषणाढ्य-
मर्धाङ्गलक्ष्मीपतिमाश्रयामः ॥

आदर्शशङ्खजलजारिलसत्कराब्ज-
मन्योन्यपार्श्वकरपल्लवभूषणाढ्यम् ।
रामं सुवर्णतनुमीशविथीन्द्रवन्द्य-
मर्धेन्दिरेशमनिशं हरिमाश्रयेऽहम् ॥

नारायणं महात्मानं राजराजेश्वरीविभुम् ।
इत्थं लक्ष्मीपतिं ध्यात्वा हृदयाम्बुजमध्यमे ॥

राजराजेश्वरीं विद्यां सकृद्वाप्यन्वहं जपन् ।
सर्वासामपि विद्यानां पुरश्चर्या फलं शुभम् ॥

संप्राप्तसर्वपापौघैर्विमुक्तः सुखमश्नुते ।
अवाप्य सर्वश्रेयांसि ब्रह्मसायुज्य सिद्धिभाक् ॥ ८०

आचार्यमेव हृत्पद्मे यद्वा नारायणात्मकम् ।
श्रीरूपिण्या स्वपत्न्या च सहितं परमेश्वरम् ॥

राजराजमहाविद्यां जपन्निखिल सिद्धिभाक् ।
जगत्त्रितय साम्राज्यहेतुभूतां सनातनीम् ॥

राजराजेश्वरीं नित्यं जप्त्वा नारायणो भवेत् ।
गुप्तमेतदपि ध्यानसूक्तं युष्मभ्य आदरात् ॥

कथितं सर्वपापघ्नं सर्वपुण्यफलप्रदम् ।
प्रत्यहं ध्यानसूक्तं वा पठेद्वानन्यमानसः ।
महतीं सिद्धिमासाद्य प्राप्नोति भगवत्पदम् ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे राजराज माहात्म्ये उत्तरभागे
षड्त्रिंशोऽध्यायः ॥

# अथ सप्तत्रिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

उपासनाक्रमं वक्ष्ये साधकानां हिताय वः ।
मयोक्तविधिनोपास्य जीवन्मुक्तो भवेत्पुमान् ॥

ब्राह्मे मुहूर्ते उत्थाय स्मृत्वा श्रीगुरुपादुकाम् ।
ब्रह्मविद्यां प्रजप्त्वाऽथ श्रीश्रीश द्वादशाक्षरीम् ॥

रश्मिमालामनुस्मृत्य त्रेधा वा पञ्चधैकधा ।
सुप्रभातमहास्तोत्रं पठित्वा तदनन्तरम् ॥

नारायणाभिधं वर्म शक्तश्चेत्प्रजपेत्तथा ।
नारायणात्मकं दिव्यं कवचं वज्रपञ्जरम् ॥

ब्राह्मे कालेऽथवा प्रातर्मध्याह्ने सायमेव वा ।
निशायामर्धरात्रे वा स्वाचार्याज्ञा पुरस्सरम् ॥ ५

प्रजप्त्वा सर्वविघ्नौघैर्विमुक्तो दुरितैरपि ।
सिद्धिमाप्नोति महतीं त्रैलोक्ये चापि दुर्लभाम् ॥

श्रियः पञ्चदशार्णाया रश्मिसूक्तमतःपरम् ।
अनुस्मृत्य सकृद्वापि श्रियः पञ्चदशाक्षरीम् ॥

अष्टाविंशतिधा जप्त्वा बहिर्निर्गत्य साधकः ।
कृतशौचस्ततः स्नात्वा सन्ध्यां कृत्वा ततःपरम् ॥

नित्यहोमं समाप्याऽथ भूयोप्याचार्य पादुकाम् ।
धृताञ्जलिपुटो नत्वा श्रीमदष्टाक्षरीं शुभाम् ॥

न्यासपूर्वं जपेन्नित्यं सहस्रं त्रिशताधिकम् ।
सहस्रमथवा पञ्चशतं वाऽपि चतुःशतम् ॥ १०

त्रिशतं वा जपेन्नित्यमथवाष्टोत्तरं शतम् ।
नो चेदधोगतिं प्राप्तो भविष्यति न संशयः ॥

वासुदेव द्वादशार्णं वैष्णवीं च षडक्षरीम् ।
यथाशक्त्या प्रजप्त्वाऽथ द्वादशार्णं श्रियो जपेत् ॥

महालक्ष्मीं जपेद्यद्वा ततः पञ्चदशाक्षरीम् ।
अष्टोत्तरशतं नित्यमष्टाविंशतिधापि वा ॥

लक्ष्मी विद्या चतुष्कं च दश द्वादशधा जपेत् ।
राजराजेश्वरीविद्यां महासिह्मानेश्वरीम् ॥

अष्टाविंशतिधा नित्यं संस्मरेत्साधकोत्तमः ।
अथवा समये ब्राह्मे संस्मृत्याचार्यपादुकाम् ॥ १५

ब्रह्मविद्यां प्रजप्त्वाऽथ भगवद्रश्मिमालिकाम् ।
स्नात्वा सन्ध्यामुपास्याऽथ श्रीमदष्टाक्षरीं शुभाम् ॥

न्यासपूर्वां जपेन्न्यासरहितां वा जपेच्छुचिः ।
वासुदेव महाविद्यां वैष्णवीं च षडक्षरीम् ॥

यथाशक्त्याऽथ संस्मृत्य कमलाद्वादशाक्षरीम् ।
लक्ष्मी हृदयविद्यां वा प्रजप्त्वाष्टोत्तरं शतम् ॥

राजराजेश्वरी विद्यां जपेत्पूर्णफलाप्तये ।
अत्राप्यशक्तो भगवद्ब्रह्मविद्यां दिने दिने ॥

संस्मृत्य सप्तधा ब्राह्मे नित्यं सन्ध्यामुपास्य च ।
नित्यहोमं च निर्वर्त्य श्रीमदष्टाक्षरीं पराम् ॥ २०

षडङ्गमातृकान्यासकेशवन्यासपूर्विकाम् ।
चिद्रूपमातृकापूर्वमवश्यं प्रत्यहं जपेत् ॥

अत्राप्यशक्तो दैवार्षच्छन्दांसि न्यस्य वाऽन्वहम् ।
श्रीमदष्टाक्षरीं विद्यामाचार्याज्ञा पुरःसरम् ॥

त्रिशताधिकसाहस्रं सहस्रं वाऽन्वहं जपेत् ।
जपेत्पञ्चशतं यद्वा त्रिशतं वा चतुःशतम् ॥

द्वादशार्णां श्रियः पश्चाज्जपेदष्टोत्तरं शतम् ।
लक्ष्मीहृदयविद्यां वा यथाशक्त्या प्रजप्य च ॥

राजराजेश्वरी विद्यामष्टाविंशतिधाऽन्वहम् ।
प्रजपन् सर्ववेदानां पारायणफलं शुभम् ॥ २५

गायत्री लक्षजापस्य फलमक्षयमुत्तमम् ।
ब्रह्मविद्या लक्षजपफलं च प्राप्नुयान्महत् ॥

राजराजेश्वरी विद्या स्मरणादन्वहं द्विजाः ।
भगवद्रश्मिसूक्तस्य सहस्रावृकं वर्म वक्ष्येऽथ ब्रह्मनन्दनाः ॥

यज्जप्त्वा प्रत्यहं धीमान्नारायणमयो भवेत् ।
ऋषिर्नारायणो योगी धर्मपुत्रो जगत्पतिः ॥

देवी गायत्री छन्दः श्रीलक्ष्मीनारायणो विभुः ।
परमात्मा महायोगी देवता समुदीरितः ॥

पादजानूरुयुगले चोदरे हृदि वोरसि ।
वक्त्रे मूर्ध्न्यानुपूर्व्येण श्रीमदष्टाक्षरीं न्यसेत् ॥ ३०

शिरः प्रभृतिपादान्तं भूयोप्यष्टाक्षरान्न्यसेत् ।
प्रणवाद्यान् सर्ववर्णान्नमोन्तान् विन्यसेद्बुधः ॥

ओङ्कारं हृदि विन्यस्य विकारं मूर्ध्नि विन्यसेत् ।
षवर्णं च भ्रुवोर्मध्ये शिखायां णाक्षरं तथा ॥

वेकारं नेत्रयुगले नकारं सर्वसन्धिषु ।
मकारमस्त्रं विन्यस्य सविसर्गषडङ्गकम् ॥

मन्त्रमूर्तिर्भवत्साक्षात् नारायणमयः पुमान् ।
ध्यायेत्स्वहृदयाम्भोजे देवदेवं जगत्पतिम् ॥

ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणस्सरसिजासन सन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुः धृतशङ्खचक्रः ॥ ३५

अर्धाङ्गश्रीपतिं यद्वा ध्यायेन्नारायणं विभुम् ॥

हस्तैर्बिभ्रत्सरसिजगदाशङ्खचक्राणि बिभ्रत्
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरतां कल्पमाश्लेष लोभा-
देकीभूतं वपुरवतु नः पुण्डरीकाक्षलक्ष्म्योः ॥

त्रैष्टुभोऽयं महामन्त्रो ध्यानश्लोक उदीरितः ।
गच्छंस्तिष्ठन् जपन् भुञ्जन् जाग्रन्नपि हसन्नपि ॥

ध्यानश्लोकममुं स्मृत्वा व्रजत्येव महद्यशः ।
राजराजेश्वरीविद्या जपहोमादिकर्मसु ॥

श्रीमदष्टाक्षरी विद्या जपहोमादिकर्मसु ।
ध्यानमन्त्रममुं स्मृत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ ४०

स्वात्मानमथवा ध्यायेन्नारायण मनामयम् ।
यच्छक्तिसहितं सर्वविद्यातेजस्तपोमयम् ।
नारायणी वर्मविद्यां प्रयतोऽथ समुच्चरेत् ॥

ओं हरिर्विदध्यान्मम सर्वरक्षां
न्यस्तांघ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासि गदेषु चापं
पाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥

जलेषु मां रक्षतु मत्स्यमूर्ति
यादो गणेभ्यो वरुणस्य पाशात् ।
स्थले च मायावटु वामनोऽव्या
त्रिविक्रमः खेऽवतु विश्वरूपः ॥

दुर्गेष्वटव्याजिमुखादिषु प्रभुः
पायान्नृसिम्होऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं
दिशो विनेदुर्न्यपतंश्च गर्भाः ॥

रक्षत्यसौ माऽध्वनि यज्ञकल्पः
स्वदंष्ट्रयोन्नीतधरो वराहः ।
रोमाद्रिकूटेष्वथ विप्लवेषु
सलक्ष्मणोऽव्याद्भरताग्रजो माम् ॥ ४५

मामुग्रविषमादखिलप्रमादात्
नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः
पायाद्गुणेशः कपिलः कर्मबन्धात् ॥

सनत्कुमारोऽवतु कामदेवाद्
शीर्षामापथि देवे हेलनात् ।
देवर्षयः पुरुषार्चनान्तरान्
कूर्मो हरिर्मां निरसादशेषात् ॥

धन्वन्तरिर्भगवान्पात्वपथ्या
द्द्वन्द्वाद्भयादृषभो निर्जितात्मा ।
यज्ञश्च लोकादवताज्जनान्ता-
द्बलोगणात्क्रोधवशादहीन्द्रः ॥

द्वैपायनो भगवानप्रबोधा-
द्बुद्धश्च पाषण्डगणात्प्रमादात् ।
कल्किः कलेः कालमलात्प्रपातु
धर्मावनायोरुकृतावतारः ॥

मां केशवो गदया प्रातरव्या-
द्गोविन्द आसंगवमात्तवेणुः ।
नारायणः प्राह्ण उदात्तशक्ति-
र्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ ५०

देवोऽपराह्णे मधुहोग्रधन्वा
सायं त्रिधामाऽवतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे
निशीथ एकोऽवतु पद्मनाभः ॥

श्रीवत्सधामा परात्र ईशः
प्रत्यूष ईशोऽसि धरो जनार्दनः ।
दामोदरो व्यादनुसन्ध्यं प्रभाते
विश्वेश्वरो भगवान् कालमूर्तिः ॥

चक्रं युगान्तानलतिग्मनेमि
भ्रमन्समन्ताद्भगवत्प्रयुक्तम् ।
दन्दग्धि दन्दग्ध्यरिसैन्यमाशु
कक्षं यथा वातसखो हुताशनः ॥

गदेशनिस्पर्शन विस्फुलिङ्गे
निष्पिण्ड्य निष्पिण्ड्य जितप्रियासि ।
कूष्माण्ड वैनायक यक्षरक्षो
भूतग्रहांश्चूर्णय चूर्णयारीन् ॥

त्वं यातु धानप्रमथप्रेतमातृ
पिशाचा विप्रग्रहघोरदृष्टीन् ।
नरेन्द्र विद्रावयकृष्णसर्पतो
भीमस्वनोरेहृदयानिकम्पयन् ॥ ५५

त्वं तिग्मधारासि वरारिसैन्यं
ईशप्रयुक्तो यमछिन्धि छिन्धि ।
चक्षूंषि चर्म न छत्तुचंद्र छादय
द्विषामघानां हर पापचक्षुषाम् ॥

यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽन्येभ्य एव च ।
सर्वाण्येतानि भगवन्नाम रूपास्त्रकीर्तनात् ॥

प्रयान्तु संक्षयं सद्यो यो नः श्रेयः प्रतीपकाः ।
गरुडो भगवान् स्तोत्रकृद्‌भ्यः छन्दोमयः प्रभुः ॥

रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ।
सर्वाफमो हरेर्नाम रूपापानायुधानि नः ॥

बुद्धीन्द्रिय मनः प्राणान्पान्तु पार्षदभूषणाः ।
यथा हि भगवानेव वस्तुतः सदसन्नयत् ॥ ६०

सत्येनानेन नः सर्वेषां यान्तु नाशमुपद्रवाः ।
यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ॥

भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ।
तेनैव सत्यभावेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥

विदिक्षु दिक्षूर्ध्वमधः समन्ता-
दन्तर्बहिर्भगवान् नारसिह्मः ।
प्रहापयन् लोकभयं स्वनेन
स्वतेजसा ग्रस्तसमस्ततेजाः ॥

ओं त्रयोविंशतिसंख्याकश्लोकात्मकमिदं शुभम् ।
एकविंशति ...मन्त्ररूपं यशस्करम् ॥

नारायणात्मकं वर्म प्रोक्तमेतत्फलप्रदम् ।
समस्तदुरितौघघ्नं सर्वविघ्न विनाशनम् ॥ ६५

समस्तैश्वर्यफलदं सर्वदारिद्र्यभञ्जनम् ।
समस्तापद्गणहरं सर्वविद्याफलप्रदम् ॥

अज्ञानतिमिरौघघ्नं चतुर्वर्ग फलप्रदम् ।
वैष्णवं कवचं दिव्यं सर्वत्र विजयप्रदम् ॥

शुभे मासि शुभे लग्ने दिवसे च शुभे तथा ।
आचार्यचरणद्वन्द्वं प्रणिपातपुरःसरम् ॥

अर्चयित्वाऽखिलैरर्थैर्वस्त्रैराभरणैरपि ।
दासीदासगजाश्वाद्यैर्वैष्णवं कवचं शुभम् ॥

आचार्यानुग्रहात्प्राप्य सततं विजयी भवेत् ।
पूर्वोपदिष्टामपि च श्रीमदष्टाक्षरीं पराम् ॥ ७०

आचार्यवदनाम्भोजाद्गृहीत्वादौ कृताञ्जलिः ।
वासुदेवमहामन्त्रं वैष्णवं च षडक्षरम् ॥

गृहीत्वा तत्परं वर्मगृहीतव्यमिदं परम् ।
देया नारायणी सर्वदेवतारूपिणी परा ॥

कवचाख्या महाविद्या जयलक्ष्मी समृद्धिदा ।
कवचं वैष्णवं दिव्यं वेदवेदान्तसंग्रहम् ॥

श्रेयःकरं शुभकरं नित्यं विजयसिद्धिदम् ।
नारायणो महायोगी धर्मपुत्रो जगत्पतिः ॥

विद्यामेतां पुरा दृष्ट्वा ब्रह्मणे शङ्कराय च ।
विवस्वते दधीचाय दत्तवान् सर्वसिद्धिदाम् ॥ ७५

नारदायाञ्जनेयाया विवस्वानुपदिष्टवान् ।
देवर्षिवर्यो भगवान्नारदो ब्रह्मनन्दनः ॥

जीवन्मुक्तोऽभवज्जप्त्वा विद्यामेनां फलप्रदाम् ।
हिरण्यकसुतायाऽथ प्रह्लादाय स दत्तवान् ॥

अस्या एव प्रभावेण प्रह्लादो भगवत्प्रियः ।
विषशस्त्राग्निकृत्याद्यैरवध्यो वज्रदेहवान् ॥

दैत्यराज्यश्रियं भुक्त्वा परां सिद्धिमवाप्तवान् ।
अञ्जनानन्दनो वायुपुत्रः श्रीरामकिङ्करः ॥

कवचस्यास्य माहात्म्यान्महास्त्रैरपि दारुणैः ।
अवध्यत्वमनुप्राप्य नित्यं विजयमाप्तवान् ॥ ८०

दधीचस्सततं जप्त्वा वर्म नारायणात्मकम् ।
शिष्याय दत्तवान् त्वष्ट्रे त्वष्टा सोऽपि पुरा विभुः ॥

दत्तवान् विश्वरूपाय विश्वरूपो महायशाः ।
प्रार्थितो बहुशः पूर्वं महेन्द्राय प्रदत्तवान् ॥

महेन्द्रोऽस्याः प्रभावेण जित्वाऽसुरगणान् पुरा ।
त्रयाणामपि लोकानां राज्यश्रियमवाप्तवान् ॥

अवाप्य सर्वसाम्राज्यं लक्ष्मीमष्टगुणान्विताम् ।
द्रोहमस्य चकारेन्द्रो मत्तो राज्यश्रिया विभुः ॥

आचार्यद्रोहतो ब्रह्महत्या सहस्रतोऽधिकम् ।
प्राप्तवान् पातकं घोरं भ्रष्टश्रीरभवत्तथा ॥ ८५

वाचस्पति प्रसादेन हयमेधसहस्रकम् ।
संपूर्णदक्षिणायुक्तं चकारामरनायकः ॥

तथापि पातकं नष्टं देवराजस्य नाभवत् ।
भूयोऽपि हयमेधानां सहस्रं गुर्वनुज्ञया ॥

समग्रं दक्षिणायुक्तं चकारामरनायकः ।
जीवस्यानुग्रहाद्वाजिमेधसाहस्र युग्मतः ॥

त्रैलोक्यैश्वर्यमखिलं संप्राप्यापि जगत्पतिः ।
दैत्य दानवरक्षोभिः काले काले तिरस्कृतः ॥

भूयोऽपि भ्रष्टलक्ष्मीको भूयोऽपि श्रियमाप्तवान् ।
स्वायंभुवादिभिः शास्त्रे विप्रहत्यायुतस्य च ॥ ९०

निष्कृतिर्विहिताऽऽचार्य द्रोहकर्तुर्न निष्कृतिः ।
ब्रह्महत्यायुतं वापि सुरापानायुतं तु वा ॥

स्वर्णस्तेयायुतं तु वा परदाररतायुतम् ।
मन्वादिधर्मशास्त्रोक्त प्रायश्चित्तैर्विशुद्ध्यति ॥

आचार्यस्यानृतं वाक्यमुक्त्वा हुङ्कृत्य वासकृत् ।
त्वंकृत्य वा महादानायुतैरपि न सिद्ध्यति ॥

इदं सत्यं इदं सत्यं नाऽत्र संशयकारणम् ।
तस्मादवश्यमाचार्यं प्राणैरर्थैर्धिया गिरा ॥

अर्चयेन्नियतो नित्यसिद्धिमिच्छन् महत्तराम् ।
चतुर्मुखो विधाताऽसौ स्वसुतेभ्यः प्रदत्तवान् ॥ ९५

ब्रह्मपुत्रा महात्मानः सनकाद्या महौजसः ।
जप्त्वा नारायणीं विद्यां प्राप्ताः सिद्धिमनुत्तमाम् ॥

ब्रह्मपुत्रो वसिष्ठोऽसौ पौत्राय कथयिष्यति ।
नारायणो महायोगी तस्य पुत्रो भविष्यति ॥

कृष्णद्वैपायनो नाम्ना वेदव्यासो महातपाः ।
तस्यापि भगवान् शम्भुर्दक्षिणामूर्तिरीश्वरः ॥

भविष्यति शुको नाम्ना सुत आनन्दवर्धनः ।
नैमिषे सुमहारण्ये शौनकादिभ्य आदरात् ॥

विद्यामेतां महायोगी कथयिष्यति तत्वतः ।
तेऽपि सर्वे महाप्राज्ञा विद्यामेतामधीत्य च । १००

जीवन्मुक्ता भविष्यन्ति सर्वयोगविदां वराः ।
शुकाचार्यमुखेनैव भूमौ विद्या प्रकाशिता ॥

विद्यामेतामधीत्येशः शङ्करः परमेश्वरः ।
त्रिपुराद्यरि संहारं कृतवान् भगवान् शिवः ॥

सर्वज्ञत्वमवाप्याथ कुमाराय प्रदत्तवान् ।
त्रैलोक्य जयिनं रौद्रमवश्यमपि दैवतैः ॥

तारकं जितवानस्याः प्रभावादीश्वरात्मजः ।
अस्याः पठनतो भूमौ देशिकांघ्रि प्रसादतः ॥

एकेन जन्मना मुक्तिं प्राप्नुवन्ति द्विजर्षभाः ।
व्यतीपाते महायोगे रविसङ्क्रमणेऽपि वा ॥ १०५

एकादशी दिने यद्वा देशिकाज्ञा पुरस्सरम् ।
श्रीमदष्टाक्षरीं विद्यां जपेत्पञ्चदशाधिकाम् ॥

सहस्रं प्रयतो भूत्वा वासुदेवमहामनुम् ।
जप्त्वा त्रिशतमेकान्ते वैष्णवं च षडक्षरम् ॥

अष्टोत्तरशतं जप्त्वा श्रीविद्यां द्वादशाक्षरीम् ।
जप्त्वा त्रिशतं प्राज्ञो विद्यामष्टादशाक्षरीम् ॥

अष्टोत्तरशतं जप्त्वा राजराजेश्वरीमथ ।
शतमष्टोत्तरं जप्त्वा विद्यामेतामतः परम् ॥

पञ्चाधिकं च चत्वारिंशद्वारं प्रजपेत्सुधीः ।
विधिवत्संस्कृते वह्नौ स्वाचार्याज्ञा पुरस्सरम् ॥ ११०

आज्य पञ्चशतं हुत्वा श्रीमदष्टार्णविद्यया ।
विद्यया वासुदेव य शतमष्टोत्तरं हुनेत् ॥

वैष्णव्या विद्यया पश्चादष्टाविंशतिधाघृतम् ।
एकविंशतिसंख्याकमन्त्रैः श्रीपतिवर्मणः ॥

घृतेन पञ्चधा हुत्वा द्वादशार्णश्रिया घृतम् ।
अष्टोत्तरशतं हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥

देशिकाङ्घ्रियुगं नत्वा साष्टाङ्गं दण्डवत्सुधीः ।
वस्त्रैराभरणैर्होमैर्हेम्नाभ्यर्च्याचार्यमादरात् ॥

वर्षाशनमितद्रव्यमर्पयेच्चरणद्वये ।
तदर्धं वा तदर्धं वा त्रिनिष्कमथवार्पयेत् ॥ ११५

वस्त्रैराभरणैः पत्नीमाचार्यस्याऽथ पूजयेत् ।
सम्यग्भोज्यास्सुवासिन्यो द्वादश ब्राह्मणा अपि ॥

देशिकानुग्रहात्सिद्धिं प्राप्नोत्यत्र न संशयः ।
तदारभ्य जपेन्नित्यं पञ्चधा वा त्रिधैकधा ॥

समस्तदुस्तरव्याधि सङ्घध्वंसपटीयसी ।
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ॥

अरण्ये वानरण्ये वा चोरव्याघ्रसमाकुले ।
महासिह्म महाव्याघ्र सङ्कटे भूतसंकटे ॥

ब्रह्मराक्षसवेतालयक्षकूष्माण्डसङ्कटे ।
सकृदेव जपेदेवं वैष्णवं कवचं शुभम् ॥ १२०

मुक्तः सकलभीतिभ्यो जयं प्राप्नोति शाश्वतम् ।
यत्रैतत्पठ्यते नित्यं वैष्णवं कवचं शुभम् ॥

ग्रहदोषा दशादोषाः पूर्वकर्मानुगास्तथा ।
वातपित्तकफोद्भूतरोगा अपि सुदारुणाः ॥

अरिष्टान्यपि नश्यन्ति कवचस्य जपाद्द्विजाः ।
दुस्तरे जलसंघाते तज्जलं स्थलतां व्रजेत् ॥

सिह्मा अपि मृगायन्ते हारायन्ते फणीश्वराः ।
अरण्य प्रान्तरे वापि दावाग्निपरिवारिते ॥

दस्युभिः पीडितो वाऽपि गृहीतो वाऽपि शत्रुभिः ।
क्रुद्धेन राज्ञा चाज्ञप्तो वधबन्धनतो रणात् ॥ १२५

वातेन घूर्णितो वाऽपि निमग्नश्च महार्णवे ।
नारायणात्मकं वर्म स्मृत्वा सकृदपि द्विजाः ॥

प्राप्नोति विजयं सद्यो मुक्तस्सकलसङ्कटात् ।
सर्वस्वप्राणहरणो क्रुद्धो राजा भवेद्यदि ॥

पञ्चवारमिदं जप्त्वा स्वाचार्यचरणद्वये ।
यत्किञ्चिदपि वा वित्तं दत्वा गच्छेत्ततः परम् ॥

राजा दासो भवेत्तस्य प्राणैरपि धनैरपि ।
नित्यं पञ्चदशावृत्त्या जपन्वर्षमतन्द्रितः ॥

शापानुग्रहसामर्थ्यं प्राप्य नित्यजयं शुभम् । १३०
स्वच्छन्दमरणो भूत्वा प्राप्नोत्येवोत्तमां गतिम् ॥

आयुष्यं महदारोग्यमैश्वर्यमणिमादिकम् ।
स्वच्छन्दमरणं जाति स्मरणं च महत्तरम् ॥

ईषणात्रय निर्मुक्ति स्वाराज्यपदवीमपि ।
कवचस्यास्य माहात्म्यात्प्राप्नोत्यत्र न संशयः ॥

रहस्यमेतत्कवचं वैष्णवं वज्रपञ्जरम् ।
जप्त्वा नित्यं विशुद्धात्मा मृत्युं जयति साधकः ॥

स्थावरं जङ्गमं चापि कृत्रिमं च महद्विषम् ।
हालाहलं महाघोरमपि तस्य शरीरगम् ॥

स एवामृती भूत्वा विनश्यति न संशयः ।
मन्त्रतन्त्र महायंत्र कृत्या अपि सुदारुणाः ॥ १३५

तद्देशेऽपि विनश्यन्ति द्विजाग्र्यैरपि चोदिताः ।
जप्त्वा पञ्चदशावृत्त्या वर्म नारायणात्मकम् ॥

एकाकी पुरतो गच्छेत्संग्रामाभिमुखः शुचिः ।
देवासुरमहासेना समं तत्सैन्यमप्यसौ ॥

नारायणात्मको भूत्वा विजित्यारि निषूदनः ।
यमलोकं प्रापयति पुनरागच्छति ध्रुवम् ॥

न कुर्वन्ति क्षतिं तस्य महास्त्राण्यपि सन्ततम् ।
महादारिद्र्ययुक्तो वा महारोगहतोऽपि वा ॥

जप्त्वेदं वैष्णवं वर्म धनधान्यादिसङ्कुलाम् ।
अचलां श्रियमासाद्य रोगसंघैर्विवर्जितः ॥ १४०

चिरं जातिस्मरो भूत्वा लब्ध्वा सर्वमनोरथान् ।
भुक्त्वेह सकलान् भोगानन्ते हरिपदं लतेत् ॥

तिष्ठन्ति साधनान्यस्य महान्ति ब्रह्मनन्दनाः ।
उत्तरत्र प्रवक्ष्यामि तानि सर्वाणि योगिनः ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे राजराज विद्यामाहात्म्ये उत्तरभागे
सप्तत्रिंशोऽध्यायः ॥

---

# अथ अष्टत्रिंशोऽध्यायः ॥



**श्रीभगवानुवाच —**

राजराज महाविद्या यजनं संप्रवक्ष्यते ।
शृणुध्वं योगिनस्सर्वे ब्रह्मपुत्रा दृढव्रताः ॥

राजराजमहाविद्यां नित्यमष्टोत्तरं शतम् ।
अष्टाविंशतिधा वाऽपि दश द्वादशधाऽपि वा ॥

जप्त्वा प्रत्यहमेकान्ते सहस्रार्ण महामनुम् ।
श्रियःपतेर्भगवतस्सकृज्जप्त्वा ततःपरम् ॥

श्रियो देव्यास्सहस्रार्ण मालामन्त्रमनुस्मरेत् ।
पीठपूजां विधायादावयोध्यापुरनायकम् ॥

श्रियःपतेर्भगवतः सकृज्जप्त्वा ततः परम् ।
ततश्चक्रं प्रतिष्ठाप्य महासिह्मासनात्मकम् ॥ ५

लयाङ्गपूजामात्रं वा कृत्वादौ नियतव्रतः ।
लक्ष्मीनारायणौ पश्चात्सालग्राम शिलान्विते ॥

चक्रराजार्चनं नित्यं सुगन्धिकुसुमैः शुभैः ।
नैवेद्यकाले श्रीदेव्यै नम उच्चार्य यत्नतः ॥

लक्ष्मीनारायणीं विद्यां दशार्णमुच्चरन्नथ ।
नैवेद्यमर्पयेत्पश्चादित्थं कुर्याद्दिने दिने ॥

अथवा श्रीमदष्टार्णमादावुच्चार्य पञ्चधा ।
श्रीषडर्णां रमाविद्यां द्वादशार्णं रमामथ ॥

प्रसन्नलक्ष्मी विद्यां च भूनीलामनुयुग्मकम् ।
वासुदेवमनुं पश्चाद्वैष्णवं च षडक्षरम् ॥ १०

यज्ञनारायणीविद्यां सकृदुच्चार्य यत्नतः ।
राजराजेश्वरीविद्यामुच्चार्य विश आदरात् ॥

ब्रह्मविद्यां समुच्चार्य सालग्राम शिलान्विते ।
चक्रराजे समावाह्य लक्ष्मीनारायणौ विभू ॥

चतुर्विंशतिसंख्यागानुपचारान् समर्पयेत् ।
श्रीश्रीश द्वादशाक्षर्या पञ्चधाऽभ्यर्च्य तत्परम् ॥

केशवादि चतुर्विंशन्नामभिः परिपूजयेत् ।
श्रीदेवीमर्चयेत्पश्चान्नमो मालाख्यविद्यया ॥

श्रीश्रीशद्वादशाक्षर्या नित्यमष्टोत्तरं शतम् ।
अष्टाविंशतिधा वाऽपि पत्रैः पुष्पैः समर्चयेत् ॥ १५

कृत्वेत्थं प्रत्यहं पूजां कृत्वा द्वादशवत्सरम् ।
यत्फलं समवाप्नोति तदेव फलमश्नुते ॥

लयाङ्गपूजां कृत्वादावित्थं चाभ्यर्च्य यत्नतः ।
सहस्रवर्षपूजायाः प्रत्यहं फलमाप्नुयात् ॥

पूर्वोक्तविधिना यद्वा समावाह्य जगत्पते ।
उपचारैः समभ्यर्च्य नामभिः केशवादिभिः ॥

चतुर्विंशति संख्याकैरभ्यर्च्यादौ दृढव्रतः ।
पञ्चाशन्मिथुनैर्नित्यं केशवाद्यैस्समर्चयेत् ॥

श्री श्रीश द्वादशाक्षर्या ततः प्रत्यहमर्चयेत् ।
युग्मैः केशवकीर्त्याद्यैर्यस्सकृत्प्रत्यहं यजेत् ॥ २०

सहस्रवर्षपूजायाः फलं प्रत्यहमाप्नुयात् ।
युग्मैः केशवकीर्त्याद्यै द्वेधा त्रेधापि वार्चयेत् ॥

सर्वतीर्थस्नानफलं सर्वक्रतुषु यत्फलम् ।
सर्वदानेषु यत्पुण्यं सर्वपूजासु यत्फलम् ॥

तत्स सर्वं समाप्नोति प्रत्यहं च दृढव्रतः ।
जातिस्मरत्वमाप्नोति ब्रह्मज्ञानं सनातनम् ॥

देशिकानुग्रहात्साक्षान्नारायणपदं लभेत् ।
देशिकांघ्रियुगारूढ पादुकायुग्ममादरात् ॥

अभ्यर्च्य प्रत्यहं पूर्वं ततः श्रीश्रीपावर्चयेत् ।
तत्पादुकायुगं ब्रह्म बिले संस्थाप्य साधकः ॥ २५

प्रत्यहं सर्वपापौघैर्विमुक्तः कोटिदानजम् ।
फलं संप्राप्य विद्यानां सिद्धिं चाप्नोति शाश्वतीम् ॥

सालग्रामशिलायुक्तं चक्रराजं महत्तरम् ।
उक्तेन विधिनाभ्यर्च्य यन्त्रैः पुष्पैः सुगन्धिभिः ॥

कुल साहस्रसहितो रमते भगवत्पदे ।
बदरीकाननं पुण्यं सुन्दरीवल्लभात्मनः ॥

लक्ष्मीपतेर्भगवतः क्षेत्रमुक्तं महर्षिभिः ।
रङ्गधाम महत्क्षेत्रं सुन्दरीवल्लभात्मनः ॥

क्षेत्रं लक्ष्मीपतेः प्रोक्तं सद्यस्सकलसिद्धिदम् ।
श्रीनिवासाभिधं क्षेत्रमञ्जनावननामकम् ॥ ३०

श्रियःपतेर्भगवतः सुन्दरीवल्लभात्मनः ।
क्षेत्रं सागरतीरेऽपि पुरुषोत्तम नामकम् ॥

सुन्दरीवल्लभस्योक्तमच्युतस्य श्रियःपतेः ।
अयोध्या मथुरा माया काशी कांच्यवन्तिका ॥

द्वारकाख्या पुरी रम्या सप्तैते मुक्तिदाः स्मृताः ।
नारायणस्य श्रीशस्य सुन्दरीवल्लभात्मनः ॥

निवासभूता एताः स्युर्दर्शनान्मुक्ति सिद्धिदाः ।
राजराजेश्वरी विद्यामेषु क्षेत्रेषु साधकः ॥

क्षीराशी वा फलाशी वा पञ्चरात्रं दिने दिने ।
सालग्रामशिलायुक्तं चक्रमभ्यर्च्यसाधकः ॥ ३५

श्रीमदष्टाक्षरीं विद्यां जप्त्वा साहस्रमन्वहम् ।
राजराजेश्वरीं विद्यां प्रजप्त्वा त्रिशतं शुचिः ॥

बहुलां दक्षिणां दत्वा स्वदेशिकपदाम्बुजे ।
लक्ष्मीपतिं महाराजं भगवन्तं जगत्पतिम् ॥

पश्यत्येव स्वचक्षुर्भ्यां वरदं भक्तवत्सलम् ।
देवत्वादि महासिद्धि साधनानि ततःपरम् ॥

प्रवक्ष्यामि समासेन शृणुध्वं ब्रह्मनन्दनाः ।
आचार्यानुग्रहात्प्राप्य श्रीमदष्टाक्षरीं पराम् ॥

यज्ञनारायणीं विद्यां ब्रह्मविद्यां यतव्रतः ।
सम्पूर्णसिद्धिमन्विच्छन् राजराजेश्वरीं जपेत् ॥ ४०

अयं नारायणः साक्षाद्रामो दशरथात्मजः ।
माया मानुषदेहोऽसौ कौसल्यानन्दवर्धनः ॥

अस्यैव कलया पूर्णो जातोऽस्मि जगतीतले ।
अस्यैवानुज्ञया वक्ष्ये शृणुध्वं ब्रह्मनन्दनाः ॥

मधुमाधवमासौ द्वौ वसन्तऋतुरीरितः ।
ऋतुष्वपि समस्तेषु श्रेष्ठोऽसौ ब्रह्मनन्दनाः ॥

तत्र चैत्राभिधे मासि प्रतिपद्दिनमादितः ।
नवम्यन्तं महत्पर्व नवरात्राभिधं स्मृतम् ॥

महापातकराशिघ्नं कलिकल्मषभेदनम् ।
दारिद्र्यदलनं सर्वमहादुःखविनाशनम् ॥ ४५

सर्वसङ्कटभीतिघ्नं सर्वरोगविभञ्जनम् ।
अणिमादि गुणैश्वर्यं प्रदमायुष्यवर्धनम् ॥

सर्वसौभाग्यजननं सर्वविद्याप्रदं तथा ।
अपमृत्युप्रशमनं ब्रह्मसायुज्य सिद्धिदम् ॥

तत्र या नवमी पुण्या पुनर्वसु समन्विता ।
पुष्यनक्षत्रयुक्ता वा जयन्ती जानकीपतेः ॥

तत्र मध्याह्नसमये साक्षान्नारायणो विभुः ।
हिताय सर्वलोकानामाविरासीन्महीतले ॥

रामो दाशरथिर्नाम्ना परब्रह्ममयो विभुः ।
दशम्यां जानकी देवी प्रादुर्भूता सनातनी ॥ ५०

चिच्छक्तिः सुन्दरी साक्षाच्छ्रीरियं परमा कला ।
दिनद्वयं महत्पुण्यं तत्रापि ब्रह्मनन्दनाः ॥

यज्ञदान तपस्तीर्थव्रतकोटिफलप्रदम् ।
श्रीरामजन्मदिवसे सर्वक्रतुफलप्रदम् ॥

जप्तं हुतं प्रदत्तं वा किञ्चिदप्यक्षयं भवेत् ।
तत्राऽऽचार्य पदाम्भोजे यत्किञ्चिदपि दक्षिणाम् ॥

दत्वा समस्तदानानां फलमाप्नोति शाश्वतम् ।
रविपर्वशतं वाऽपि नैतद्दिन समं भवेत् ॥

श्रीरामनवमीं प्राप्य ये आचार्यपदाम्बुजे ।
वित्त शाठ्यं परित्यज्य न ददाति हि दक्षिणाम् ॥ ५५

अयमंधो वराकश्च भवेत्साहस्रजन्मसु ।
वासन्ते नवरात्रे यैः पुरश्चर्या कृता न चेत् ॥

श्रीमदष्टार्णविद्यायास्तेषां श्रेयो न विद्यते ।
यस्य यत्र भवेत्प्रीतिर्विद्यायां ब्रह्मनन्दनाः ॥

वासन्ते नवरात्रे सा जप्तव्या नियतव्रतैः ।
प्रतिपद्दिनमारभ्य नवम्यन्तं महाव्रतम् ॥

कर्तव्यं सर्वफलदं विद्यानां सिद्धिमिच्छता ।
राजराजाख्यविद्यायाः श्रीमदष्टाक्षरस्य च ॥

महतीं सिद्धिमन्विच्छन् कुर्यादत्र व्रतं शुभम् ।
देशिकानुज्ञया तन्त्रव्रतमेतत्समाचरेत् ॥ ६०

मधुमासे शुक्लपक्षे प्रतिपद्दिवसे शुभे ।
ब्राह्मे समय उत्थाय प्रणम्याचार्यपादयोः ॥

ब्रह्मविद्यामनुस्मृत्य रश्मिसूक्तमतःपरम् ।
ततः स्नात्वा विशुद्धात्मा नित्यं सन्ध्यामुपास्य च ॥

नित्यहोमं समाप्याऽथ नत्वा देशिकमादरात् ।
श्रीमदष्टाक्षरीविद्यां न्यासजालपुरःसराम् ॥

त्रिशताधिकसाहस्रं प्रत्यहं प्रजपेच्छुचिः ।
अशक्तः सकलन्यासं कर्तुं वैष्णवमातृकम् ॥

अवश्यमपि विन्यस्य न्यस्य चिद्रूपमातृकम् ।
श्रीमदष्टाक्षरी विद्यां जपेत्पञ्चशताधिकम् ॥ ६५

सहस्रं प्रजपेन्नित्यमथवा त्रिशताधिकम् ।
वासुदेवमहाविद्यां वैष्णवीं च षडक्षरीम् ॥

अष्टोत्तरशतं जप्त्वा द्वादशार्णं श्रियो मनुम् ।
त्रिशतं प्रजपेन्नित्यं राजराजेश्वरीमथ ॥

अष्टोत्तरशतं नित्यमष्टाविंशतिधाऽपि वा ।
प्रजप्त्वा वैष्णवं वर्म प्रत्यहं पञ्चधा जपेत् ॥

पूर्वोक्तविधिनाऽभ्यर्च्य श्रीश्रीश द्वादशार्णया ।
अष्टोत्तरशतं नित्यमर्चयेद्ब्रह्मविद्यया ॥

यज्ञनारायणीं विद्यां नित्यमष्टोत्तरं शतम् ।
अष्टाविंशतिधा वाऽपि सायङ्काले भवेच्छुचिः ॥ ७०

प्रत्यहं निष्कमेकैकं देशिकांघ्रियुगेऽर्पयेत् ।
तदर्धं वा तदर्धं वा वित्तशाठ्यं विवर्जयेत् ॥

श्रीरामजन्मदिवसे प्रातरुत्थाय वाग्यतः ।
श्रीमदष्टाक्षरादीनां पूर्ववज्जपमाचरेत् ॥

पञ्चविंशतिधा वर्म नारायणमयं जपेत् ।
विधिवत्संस्कृते वह्नौ दशम्यां प्रातरुत्थितः ॥

सावित्र्या जुहुयात्पूर्वं अष्टोत्तरशतं घृतम् ।
श्रीमदष्टार्णया पश्चात् सहस्रं त्रिशताधिकम् ॥

कापिलाज्यं हुनेदग्नौ सिद्धिकामस्समाहितः ।
शुद्धगव्याज्यमथवा वासुदेवस्य विद्यया ॥ ७५

अष्टाविंशतिधा हुत्वा वैष्णव्या विद्ययाऽपि च ।
श्रीद्वादशार्णया पश्चात्त्रिशतं जुहुयात् घृतम् ॥

अष्टाविंशतिधा राज्यलक्ष्म्या च जुहुयाद्घृतम् ।
अर्धाङ्गलक्ष्मीपतिना तथैव जुहुयाद्घृतम् ॥

भगवद्रश्मि विद्याभिरेकैकामाहुतिं हुनेत् ।
अष्टाविंशतिधा पश्चात् राजराजाख्यविद्यया ॥

हुत्वैकविंशसंख्याकैः वर्ममन्त्रैरतः परम् ।
पञ्चवारं हुनेदाज्ये कापिलं गोघृतं तु वा ॥

हुत्वा जयादिभिः पश्चात् प्रायश्चित्तैर्हुनेत् ततः ।
ब्रह्मार्पणाहुतिं कृत्वा नत्वा वैश्वानरं ततः ॥ ८०

आचार्यचरणद्वन्द्वं साष्टाङ्गं प्रणिपत्य च ।
स.लग्रामशिलामेकां दत्वा तद्दशमीदिने ॥

वर्षाशनमितं द्रव्यं दक्षिणार्थं समर्पयेत् ।
अवश्यं कुण्डलद्वंद्वं गुरुकर्णयुगेऽर्पयेत् ॥

अन्यैराभरणैर्वस्त्रैः अलङ्कुर्याच्च देशिकम् ।
अशक्तोऽपि चतुर्वर्णान् भिक्षित्वा साधकोत्तमः ॥

प्रत्यहं निष्कमेकं वा तदर्धं वा तदर्धकम् ।
समर्प्याचार्यपादाब्जे श्रीरामनवमीदिने ॥

द्विगुणां दक्षिणां दत्वा हुत्वाऽथ दशमीदिने ।
सालग्रामशिलां दत्वा गुरोः कर्णयुगे शुभे ॥ ८५

यावच्छक्यमलङ्कारं दत्वा वासोऽपि निर्मलम् ।
वर्षाशनमितं द्रव्यं दक्षिणार्थं समर्पयेत् ॥

वित्तलोभं परित्यज्य तदर्धं वा तदर्धकम् ।
निष्कत्रयपवित्रं वाप्यवश्यं गुरवेऽर्पयेत् ॥

साक्षाच्छ्रीजानकी बुद्ध्या वासोलङ्करणादिकम् ।
दद्यादवश्यमाचार्यपत्न्यै पश्चात् द्विजर्षभाः ॥

अथ पञ्चशतं पत्रैः पुष्पैश्च ब्रह्मविद्यया ।
श्रीश्रीपावर्चयेद्धीमान् गन्धाद्यैः सुमनोहरैः ॥

सुवासिनीः पञ्चदश विप्रान् पञ्चदशाप्यथ ।
मृष्टान्नैः दक्षिणाभिश्च ताम्बूलाद्यैश्च तोषयेत् ॥ ९०

देशिकोत्तमपादाब्ज प्रक्षालितजलं शुभम् ।
पीत्वा देशिकपंक्तौ च भुञ्जीयाच्छिष्टमप्यथ ॥

देशिकोभयहस्ताब्जालिङ्गितो भुक्त्यनन्तरम् ।
भगवत्कलयापूर्णां सिद्धिं प्राप्नोति शाश्वतीम् ॥

अष्टाविंशतिधा हुत्वा राजराजाख्यविद्यया ।
कृत्वाऽत्र श्रीमदष्टर्णविद्यया ब्रह्मनन्दनाः ॥

अष्टाविंशति संख्याक पुरश्चर्याफलं शुभम् ।
साङ्गदक्षिणया युक्तं प्राप्नोत्यत्र न संशयः ॥

नारायणोऽसौ भगवान् जानकीपतिरीश्वरः ।
पुरश्चर्या कर्म कर्तुरस्य नित्य प्रसीदति ॥ ९५

श्रीमदष्टार्णविद्याया वासन्ते नवरात्रके ।
पुरश्चर्यामिमां कृत्वा साक्षान्नारायणो भवेत् ॥

होमेन तत्र सावित्री महापापनिवारणम् ।
ब्रह्मर्षित्वं ददात्यस्मै सर्वज्ञत्वं न संशयः ॥

श्रीमदष्टार्णविद्यायाः पुरश्चरण कृत्यतः ।
अयं नारायणः साक्षाद्रामो दाशरथिर्विभुः ॥

तुष्टः प्रसन्नो वरदो भक्तत्राणपरायणः ।
श्रियमष्टगुणोपेतां शङ्खपद्मादि संयुताम् ॥

आयुरारोग्यमतुलं मृत्योरपि भयङ्करम् ।
स्वकिङ्कराग्रगण्यत्वं सकल्पवर्षतां तथा ॥ १००

अक्षयान् सर्वभोगांश्च विमानं च महत्तरम् ।
धर्मार्थकाममोक्षांश्च प्रयच्छति न संशयः ॥

महती या पुरश्चर्या साङ्गदक्षिणयान्विता ।
तत्सहस्रफलं साङ्गं ददात्यस्मै श्रियःपतिः ॥

वासुदेवस्य मन्त्रेण हुत्वा तद्दशमीदिने ।
असौ हिरण्यगर्भात्मा विराट् पुरुषो भविष्यति ॥

वैष्णव्या विद्यया हुत्वा घृतं तद्दशमीदिने ।
भृत्यानामग्रगण्यत्वं प्राप्नोत्येष श्रियःपतेः ॥

श्रीद्वादशार्णया तत्र हुत्वाऽऽज्यं दशमीदिने ।
श्रियं पश्यति चक्षुर्भ्यां सोऽवश्यं जानकीमिमाम् ॥ १०५

सीताप्रसादान्महतीं धनधान्यौघसङ्कुलाम् ।
मुक्तारत्नगणाकीर्णां गजाश्वरथसङ्कुलाम् ॥

प्राप्नोति महतीं लक्ष्मीं तस्मिन् वर्षे न संशयः ।
मातृत्वात्सर्वविद्यानामियं जिद्रूपिणी रमा ॥

विद्यासिद्धिं ददात्यस्मै व्यासवाल्मीकिसन्निभाम् ।
अस्याः सीतामहालक्ष्म्याः शङ्खपद्मादयः शुभाः ॥

तिष्ठन्ति मूर्तिमन्तोऽस्य गृहे रत्नौघवर्षिणः ।
वंशाभिवृद्धिरतुला यावदर्कनिशाकरौ ॥

भवत्यस्य न संदेहः सर्वभाग्यसमाकुला ।
न वियोगो धनेनास्य पुत्रैः पत्न्यापि वा भवेत् ॥ ११०

यस्य हस्ताम्बुजे तिष्ठत्यक्षया मुक्तिरुत्तमा ।
अर्धाङ्गश्रीशमन्त्रेण हुत्वाऽऽज्यं दशमीदिने ॥

अश्वमेधसहस्रस्य वाजपेयायुतस्य च ।
पूर्णदक्षिणया युक्तमवश्यं फलमश्नुते ॥

राजराजाख्यया तत्र दशमीदिवसे शुभे ।
एकामप्याहुतिं कृत्वा गव्येनाज्येन साधकः ॥

आज्येन कोटिशो हुत्वा श्रीमदष्टार्णविद्या ।
अवश्यं तत्फलं तत्र हुत्वा प्राप्नोत्यसंशयम् ॥

अग्निष्टोमायुतं वाऽपि वाजपेयसहस्रकम् ।
एकाहुत्या न तुल्यं स्यात् राजराजाख्यविद्यया ॥ ११५

राजराजेश्वरीविद्या होमेन सदृशं फलम् ।
वक्तुं न शक्यते तत्र दशमीदिवसे द्विजाः ॥

श्रीरामजन्मनवमी परतो दशमीदिने ।
एकामप्याहुतिं कृत्वा राजराजाख्यविद्यया ॥

अणिमादिगुणैश्वर्यं पुत्रपौत्रादिसम्पदम् ।
ब्रह्मानन्दसुखावाप्तिं प्राप्नोत्यत्र न संशयः ॥

भगवद्रश्मिविद्याभिः एकैकाहुतिहोमतः ।
भगवद्रश्मिविद्यानां सर्वासां सिद्धिमश्नुते ॥

हुत्वाऽथ पञ्चधा वर्ममन्त्रैः नारायणोदितैः ।
साध्यनारायणं देवं मां च दाशरथिं विभुम् ॥ १२

नृसिह्ममत्स्यकूर्मादिरूपिणं परमेश्वरम् ।
पश्यत्येव स्वचक्षुर्भ्यां तस्मिन् वर्षे न संशयः ॥

चक्रादीन्यायुधान्यस्य मूर्तिमन्तो दिने दिने ।
भृत्यवत् परिरक्षन्ति प्रयच्छन्त्यखिलेप्सितम् ॥

साध्यनारायणो योगी त्रिजगत्पतिरच्युतः ।
दत्तात्रेयो महायोगी भृग्वाद्या ऋषयोऽपि च ॥

तं रक्षन्त्यन्वहं सिद्धसाध्याश्च समरुद्गणाः ।
अयं दाशरथिः स्वामी जानकीपतिरच्युतः ॥

सखायं कुरुते स्वस्य किङ्करं वायुनन्दनम् ।
अणिमादिगुणैश्वर्यं वाचां सिद्धिमनुत्तमाम् ॥ ११

अष्टाङ्गसहितं योगं जन्मकोटिस्मृतिं शुभाम् ।
विजयं कालमृत्योश्च महेन्द्रसदृशश्रियम् ॥

अक्षयां पुत्रपौत्रादि समृद्धिं च महत्तराम् ।
ब्रह्मानन्दैकविज्ञानं ददात्यस्मै श्रियःपतिः ॥

यद्वा दिनत्रयं कार्यं व्रतं भगवतः प्रियम् ।
नारायणो महायोगी जगतां पतिरच्युतः ॥

हिताय सर्वलोकानां दुष्टानां निग्रहाय च ।
प्रार्थितो ब्रह्मरुद्राद्यैरशेषैः देवतागणैः ॥

चैत्रमासे शुक्लपक्षे मध्याह्ने नवमीदिने ।
अमूर्तो मूर्तिमानासीत् कौसल्यायाः परः पुमान् ॥ १३०

दशम्यां भरतो जातश्शङ्खमूर्तिः जगत्पतिः ।
उभावनन्दचक्रांशावेकादश्यां जगत्पती ॥

जातौ लक्ष्मणशत्रुघ्नौ सुमित्रायां सुरेश्वरौ ।
दशमीदिवसे साक्षाज्जानकी कमलालया ॥

आविरासीन्महालक्ष्मीः भूतलादुत्थिता सती ।
नवमीदिनमारभ्य दिनत्रितयमादरात् ।

पुरश्चर्याव्रतं कार्यं जानकीराघवप्रियम् ॥
दशम्यामेव चैत्रेऽस्मिन् दैवतैश्च महर्षिभिः ॥

कृतो पट्टाभिषेकोऽस्य रामस्य परमात्मनः ।
एकादश्यामहोरात्रं भक्तेभ्यः सकलेप्सितम् ॥ १३५

प्रददौ भगवान् रामः प्रसन्नो भक्तवत्सलः ।
जपेल्लक्ष्मी महायोगं तस्मादेतद्दिनत्रयम् ॥

प्राहुर्ब्रह्मर्षयस्सिद्धा भक्तस्याक्षयकारकम् ।
दिनत्रये व्रतं येन लक्ष्मीनारायणप्रियम् ॥

क्रियते तस्य भक्तस्य साक्षान्नारायणो विभुः ।
ब्रह्मानन्दैक विज्ञानं कैवल्यं च प्रयच्छति ॥

अनाहुरार्या मनुगीतियुक्तां
गाथां पुरा कर्दमगोतिमिश्राम् ।
श्रीरामचन्द्रस्य दिनत्रयेऽस्मिन्
व्रतप्रभावेण युतां द्विजाग्र्याः ॥

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमभवद्यत्किञ्चिदेकं महः ॥ १४०

श्रीरामजन्मनवमी सकलाघहन्त्री
सर्वार्थसाधनकरी सुविमुक्तिदात्री ।
अस्यामुपोषणपरा गुरुपादयुग्मे
दत्वा धनं विधिहरीशपदं लभन्ते ॥

संतर्प्य जह्नुतनयादिसुतीर्थतोयैः
युक्तैस्तिलैः पितृकुलानि च मातृवंश्यान् ।
संप्रापयन्ति हरिलोकमनन्तसौख्यं
दत्वाऽथ देशिकपदाब्जयुगे च वित्तम् ॥

श्रीरामजन्मदिवसे मणिवित्तमुक्ता
वस्त्राणि देशिकपदाब्जयुगे फलानि ।
दत्वा सुमेरुशतदानफलं च लब्ध्वा
वशान्वितो भगवतः पदमेति नित्यम् ॥

श्रीरामजन्मनवमी दशमी परस्तात्
एकादशीति दिवसत्रितये व्रतेऽस्मिन् ।
अष्टाक्षरस्य जपहोमसमर्चनाद्यै
नारायणं सुरगुरुं नयनेन पश्येत् ॥

निकृत्वाऽथ राजमनुनाऽऽहुतिमात्रकर्ता
... ... ... ... ... ।
दत्वाऽथ देशिकपदाब्जयुगेऽथ वित्त
वर्षाशनं पुनरथार्धं तदर्धमानम् ॥ १४५

कर्षत्रयात्मकमथोकनकं द्विकर्षं
कर्षैतमानमथवा तदशक्तशिष्यः ।
आकल्पवस्त्रसहितं च समर्प्य लोके
पत्नीं गुरोरपि समर्च्य च भूषणाद्यैः ॥

हेमाचलायुत समर्पणपुण्यजातं
संप्राप्य वंशसहितो भगवन्मयः स्यात् ॥

"श्रीरामश्रीः"

अस्मन्मातामहेनेत्थं गीतं पित्रा च भूसुराः ।
ताभ्यां दिनत्रये प्रोक्तं व्रतमत्र प्रवक्ष्यते ॥

श्रीरामजन्मनवमी दिवसे सर्वसिद्धिदे ।
ब्राह्मे मुहूर्ते उत्थाय प्रणम्याचार्यपादयोः ॥

ब्रह्मविद्यां प्रजप्त्वाऽथ लक्ष्मीनारायणीं पराम् ।
रश्मिमालामनुस्मृत्य कृतशौचो जितेन्द्रियः ॥ १५०

स्नात्वा सन्ध्यामुपास्याऽथ नित्यहोमं समाप्य च ।
आचार्यचरणद्वंद्वं सादरं प्रणिपत्य च ॥

श्रीमदष्टाक्षरीविद्यां शताधिकसहस्रकम् ।
जप्त्वाऽथ वसुदेवाख्यां वैष्णवीं च शतं जपेत् ॥

चतुःशतं जपेत्पश्चाद्रमाया द्वादशाक्षरम् ।
प्रसन्नलक्ष्मीविद्यां वा श्रीषडर्णमनुं तु वा ॥

राजराजमहाविद्यामष्टाविंशतिधा जपेत् ।
प्रजपेद्वैष्णवं वर्म पञ्चविंशतिधाऽन्वहम् ॥

क्षीराशी वा फलाशी वा पञ्चगव्याशनोऽपि वा ।
जितेन्द्रियो हविष्याशीत्यक्त्वा ताम्बूलभक्षणम् ॥ १५५

एकं कर्षमितं स्वर्णं देशिकाङ्घ्रियुगेऽन्वहम् ।
समर्पयेत्तदर्धं वा तृतीयांशमथापि वा ॥

असान्निध्ये देशिकस्य प्रदत्वाऽच्युतसन्निधौ ।
प्रियायै देशिकस्याऽथ श्रीबुद्ध्याऽऽभरणादिकम् ॥

अर्चयेत्प्रत्यहं धीमान् वित्तलोभविवर्जितः ।
द्वादश्यां प्रातरुत्थाय नित्यकर्म समाप्य च ॥

आचार्यसंनिधावग्नौ विधिसंस्कारसंस्कृते ।
अष्टाविंशतिधा हुत्वा साविन्त्र्यादौ गवां घृतम् ॥

श्रीमदष्टार्णमन्त्रेण कापिलं घृतमादरात् ।
शुद्धगव्याज्यमथवा सहस्रं जुहुयाच्छतम् ॥ १६०

वासुदेवस्य मनुना वैष्णव्या च षडर्णया ।
अष्टाविंशतिधा हुत्वा यज्ञेशमनुना ततः ॥

महाराज्ञ्याऽथ जुहुयादष्टाविंशतिसंख्यया ।
भगवद्रश्मिभिः पूर्वं हुत्वैकैकां घृताहुतिम् ॥

पञ्चवारं वर्ममन्त्रैर्हुत्वा प्रज्वलितेऽनले ।
हुत्वा जयादिभिः पश्चात्कृत्वा ब्रह्मार्पणाहुतिम् ॥

अग्निं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणिपत्य च ।
आचार्यं समलङ्कृत्य गन्धपुष्पैश्च वाससा ॥

कुण्डलद्वितयं रम्यं दद्याद्देशिककर्णयोः । १६५
यावच्छक्यमलङ्कारं देशिकायाऽथवार्पयेत् ॥

आचार्यपत्न्यै श्रीबुद्ध्या सूक्ष्मं वासस्समर्पयेत् ।
अष्टौ विप्राः सुवासिन्यो भोज्यामृष्टैरनेकशः ॥

आचार्यभुक्तशेषं च स्वयमश्नीत वाग्यतः ।
इत्थं दिनत्रये कृत्वा जपहोमादिकं शुभम् ॥

सहस्रशतयागानां फलं सम्पूर्णदक्षिणम् ।
सुवर्णाचलदानानां सहस्रफलमक्षयम् ॥

कोटिकोटिमहाविद्या कोटिसाहस्रहोमजम् ।
भूप्रादक्षिण्यसाहस्रफलदं शुभमक्षयम् ॥

प्राप्य विप्रो विशुद्धात्मा देशिकानुग्रहात्परम् ।
भगवन्तं श्रिया युक्तं नारायणमजं विभुम् ॥ १७०

अवश्यं वत्सरे तस्मिन् पश्यत्येव स्वचक्षुषा ।
साङ्गदक्षिणया युक्त पुरश्चर्या सहस्रतः ॥

श्रीमदष्टार्णविद्याया यादृशी सिद्धिरुच्यते ।
राजराजेश्वरीविद्या प्रभावाद्गुर्वनुग्रहात् ॥

तादृशीं सिद्धिमाप्नोति भक्तोऽत्र दिवसत्रये ।
वैष्णव्या वर्म विद्यायाः पुरश्चर्याशतात्परम् ॥

यादृशी सिद्धिरत्रोक्ता पुराणैः परमर्षिभिः ।
तादृशी महती सिद्धिर्जायतेऽस्य न संशयः ॥

प्रसन्नलक्ष्मीमन्त्रेण द्वादशार्णश्रियाऽपि वा ।
हुत्वा प्राप्नुयात्सिद्धिं पुरश्चर्या शतोद्भवाम् ॥ १७५

धनाढ्यो राजपुत्रश्चेद्दद्याद्ग्रामशतं गुरोः ।
निष्काणां शतसाहस्रमपि धेनुसहस्रकम् ॥

अलङ्कारसहस्रं च दत्वास्याद्भगवन्मयः ।
आचार्यसन्निधौ यद्वा प्रतिज्ञायाऽथ दक्षिणाम् ॥

मासाभ्यन्तरतो देयं तदूर्ध्वं वृद्धिसंयुतम् ।
अशीति भागो वृद्धिः स्याद्द्रव्यस्यात्र सबन्धकम् ॥

मासत्रयात्यन्तरतो देयं वृद्धिसमन्वितम् ।
षण्मासात्प्राक् प्रदातव्यमथवा वृद्धिसंयुतम् ॥

महापातकजालं वा न गोपमनृतं तु वा ।
कल्पान्ते ज्ञानिनः शुद्धयेद्देशिकाय महात्मने ॥ १८०

न नश्यति प्रतिज्ञातमृणं नरकदुःखदम् ।
षण्मासानन्तरं देयं द्विगुणद्रव्यमादरात् ॥

वत्सरान्तं तदूर्ध्वं तदृणं ब्रह्माण्डसंनिभम् ।
महादान सहस्रैर्वा न हि नश्यति दुःखदम् ॥

इत्थं दिनत्रये चैत्रमासि श्रीराघवप्रिये ।
दिवसत्रितये वापि नवरात्रेऽपि वा व्रतम् ॥

यः करोति विशुद्धात्मा देशिकानुग्रहाद्द्विजाः ।
स एव सर्वविप्राणामग्रगण्यो महान् विभुः ॥

वरिष्ठो यज्वनामुक्तः पावनानां च पावनः ।
दिनत्रयव्रतं श्रेष्ठं नवरात्रव्रतादपि ॥ १८५

दिवसत्रितये कृत्वा पुरश्चर्याव्रतं शुभम् ।
विमुक्तः पापराशिभ्यः समग्र सुकृतान्वितः ॥

महाकविर्महावाग्मी जीवभार्गव सन्निभः ।
जडोऽपि भवति क्षिप्रं सीतारामप्रसादतः ॥

मुक्ताफलमहारत्न धनधान्यादि संकुलाम् ।
सन्ततिव्यापिनीं लक्ष्मीं प्राप्नोत्येवाचलां ध्रुवम् ॥

आयुरारोग्यसहिता विद्यैश्वर्यसमन्विताः ।
भवन्ति पुत्राः पौत्राश्च प्रपौत्राश्चापि तादृशाः ॥

जरामरणराहित्यमायुरारोग्यमक्षयम् ।
यक्षराजामराधीश सदृशीं श्रियमूर्जिताम् ॥ १९०

अवाप्य योगमष्टाङ्गं बहुजन्म स्मृतिं शुभाम् ।
दिव्यकन्या सहस्रेण सहितं सर्वभोगयुक् ॥

विमानमधिरुह्यान्ते कुलसाहस्रसंयुतः ।
सर्वदेवप्रियो भूत्वा सर्वर्षिगणसंमतः ॥

यक्षकिन्नरगन्धर्वसिद्धविद्याधरार्चितः ।
तेजोमयतनुर्भूत्वा पञ्चविंशति वार्षिकः ॥

अजरश्चामरो नित्यं दिव्यालङ्कारशोभितः ।
दिव्यवस्त्रधरो भूत्वा दिव्यभोगसुखान्वितः ॥

ब्रह्माण्डपटलं भित्वा याति ब्रह्मसनातनम् ।
दिनत्रये व्रतं कृत्वा साध्यनारायणं विभुम् ॥ १९५

रामं दाशरथिं सीतालक्ष्मणादिभिरन्वितम् ।
वत्सरे वत्सरेऽवश्यं चक्षुर्भ्यां संप्रपश्यति ॥

अनेनैव प्रमाणेन ब्रह्मतादात्म्यमक्षयम् ।
स्वकरस्थमिति ध्यायेदपि स्वस्य कृतार्थताम् ॥

दिनत्रयव्रतस्यास्य माहात्म्याद्ब्रह्मनन्दनाः ।
स्वर्गे मर्त्येऽपि पाताले तस्या साध्यं न विद्यते ॥

गौरी लक्ष्मी महावाणी मुख्यास्सकलशक्तयः ।
ब्रह्मविष्णुमहेशाश्च महेन्द्राद्यादिगीश्वराः ॥

दिनत्रयव्रतस्याऽस्य प्रभावाहृषयोऽप्यमी ।
आलपन्ति दिवारात्र साक्षान्नारायणात्मकम् ॥ २००

अयमेव महायोगो हरिर्नारायणो विभुः ।
इत्थं सुनिश्चितं सर्वं जानीध्वं ब्रह्मनन्दनाः ॥

राजराजमहाविद्या स्मरणादखिलेष्टदा ।
श्रीमदष्टाक्षरीसिद्धिः युष्मभ्यं समुदीरिता ।
इत ऊर्ध्वं द्विजश्रेष्ठाः किं पुनः श्रोतुमिच्छत ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदसारार्थसंग्रहे राजराजविद्या माहात्म्ये उत्तरभागे अष्टत्रिंशोऽध्यायः ॥

## अथ एकोनचत्वारिंशोऽध्यायः ॥

**योगिन ऊचुः—**

भगवन् कपिलाचार्य नारायण जगत्पते ।
सीतापतेर्भगवतः सन्निधौ करुणात्मना ॥

त्वया सुगुप्तमप्येतत्कथितं दिव्यसाधनम् ।
त्वन्मुखाब्जवचः श्रुत्वा नष्टो नस्संशयो महान् ॥

नारायणी महाविद्या सहस्रार्णा त्वयोदिता ।
श्रियो देव्यास्सहस्रार्णा सूचिता न प्रकाशिता ।
तद्विद्या द्वितयं स्वामिन् प्रकाशय महामुने ॥

**श्रीभगवानुवाच –**

नारायणीं सहस्राणीं संपूर्णफलसिद्धिदाम् ।
शृणुध्वं संप्रवक्ष्यामि नियता ब्रह्मनन्दनाः ॥

नारायणो महायोगी मुनिरस्य स्मृतो बुधैः ।
गायत्रं दैवतं छन्दो लक्ष्मीनारायणो विभुः ॥ ५

देवता जगतां नाथः परमात्मा सनातनः ।
त्रयीबीजं नमोन्तेऽथ पदं भगवते ततः ॥

केशवेत्यथ नारायण माधवपदं ततः ।
गोविन्द विष्णो मधुवन्ते सूदनेति त्रिविक्रम ॥

वामन श्रीधरेत्युक्त्वा हृषीकेशपदं ततः ।
पद्मनाभपदं दामोदरसङ्कर्षणेत्यथ ॥

वासुदेवपदं पश्चात् प्रद्युम्नपदमप्यथ ।
अनिरुद्धपदं पश्चात् पुरुषोत्तम नाम च ॥

अधोक्षज नारसिह्माच्युतशब्दं जनार्दन ।
उपेन्द्रेति हरे पश्चात् श्रीकृष्णपदमप्यथ ॥ १०

जयद्वन्द्वं जगन्मूर्ते जगन्नाथपदं ततः ।
जगद्रक्षामणे शब्दं दिव्यमङ्गलविग्रह ॥

देवदेवोत्तमेत्युक्त्वा देवता सार्वभौम च ।
देववन्द्यपदाम्भोज विश्वरूपपदात्परम् ॥

विश्वात्मन् विश्वमन्त्रं च विश्वेश्वरपदं ततः ।
विश्वरूपधरेत्युक्त्वा जययुग्ममतःपरम् ॥

वेदवेद्यपदं वेदान्त संस्तुतपदं ततः ।
ततश्चतुर्वेदमय चतुर्मूर्ते ततःपरम् ॥

चतुर्बाहो चतुर्व्यूह प्रसीदयुगलं ततः ।
पुण्डरीकाक्षबाहुं च पुष्करेक्षण नाम च ॥ १५

प्रणवान्तात्मन् परात्पर परमात्मन्नतःपरम् ।
परब्रह्म च रूपान्ते परमेश्वर नाम च ॥

जययुग्मं हयग्रीव सर्वविद्यानिधे पदम् ।
सर्ववागीश्वरेश्वर भक्तवत्सल नाम च ॥

ततश्च करुणासिन्धो कामपाल कृपानिधे ।
कामान्ते जनकेत्युक्त्वा कामप्रद कृपालय ॥

कृतान्तभयशब्दान्ते नाशनेति पदं ततः ।
कारणात्मन् कृतान्तात्मन् कमनीयाकृते ततः ॥

जयद्वन्द्वं मुकुन्देति मुचुकुन्दस्तुतेत्यथ ।
मुचुकुन्देति वरद जगत्पालक नाम च ॥ ३०

जन्माथ मरणेत्युक्त्वा रहितेति पदात्परम् ।
जलात्मकेति भूवेति भूवन्द्यपदं ततः ॥

भूसुता कुचशब्दान्ते भूषणेति जयद्वयम् ।
ततो महामत्स्यरूपपद कूर्माकृते ततः ॥

यज्ञेत्यथ वराहेति पदं नरहरे ततः ।
वामनान्ते जामदग्न्य रामशब्दमतःपरम् ॥

पदं दाशरथीत्युक्त्वा रामेति बलराम च ।
बुद्धरूपेति कल्क्यन्ते ...यज्ञमयेत्यथ ॥

यज्ञेति फलदेत्युक्त्वा यज्ञेश्वर जयद्वयम् ।
सहस्रास्य सहस्रेति चक्रर्णेति पदं ततः ॥ २५

सहस्रशीर्षशब्दं च सहस्राक्षपदं ततः ।
सहस्रकर सर्वज्ञ सर्वासुर नाम च ॥

संहारकारकेत्युक्त्वा समस्तसुर नाम च ।
संपूज्य सर्वदेवमय सर्वपदं ततः ॥

भूतात्मकपदं स्वामिन् सुशील सुलभेत्यथ ।
पदं सुन्दररूपेति ततः सवितृरूप च ॥

सावित्री प्रतिपाद्येति सर्वलोकगुरो पदम् ।
प्रसीद युगलं पश्चात् त्रयीमूर्ते त्रयीश्वर ॥

त्रिगुणाकार शब्दान्ते पदं त्रैलोक्यनायकम् ।
त्रैलोक्यकामदशब्द नमस्त्रैलोक्यनायक ॥ ३०

जयद्वन्द्वं ततः सीतापते राधापते ततः ।
नीलापते भूपतेऽथ रुक्मिणी सत्यनाम च ॥

भामाद्यष्टपदं पश्चादुच्चरेन्महिषीपते ।
षोडशस्त्री सहस्रेश गोपीजनमनोहर ॥

जययुग्मं दशरथात्मज नाम ततःपरम् ।
कौसल्यागर्भसंभूत श्रीरामशरणागत ॥

वत्सलेति शरण्येति शङ्कराचार्यपदाम्बुज ।
भरतात्मन् लक्ष्मणात्मन् शत्रुघ्नात्मन्नतःपरम् ॥

आञ्जनेय गुरो सर्व वानरेत्यथ वन्दित ।
महाराज महाशब्दं पुरुषेति विभीषण ॥ ३५

वरदेति वरेण्येति विमानारूढ नाम च ।
प्रह्लादवरदेत्युक्त्वा सर्वदुष्टान्तकेत्यथ ॥

जयद्वन्द्वं च ब्रह्मण्यदेव नन्दात्मजेत्यथ ।
वसुदेवात्मजेत्युक्त्वा देवकीतनयेत्यथ ॥

शङ्खचक्रगदापद्मधर श्रीवत्स लांछन ।
गरुडध्वजशब्दान्ते महेन्द्रानुज नाम च ॥

महेन्द्रवन्दितपदं महेशविधिपूजित ।
महोपनिषदाधार महेन्द्राद्यमरप्रभो ॥

जययुग्मं गोकुलेति संरक्षकपदं ततः ।
पार्थसंरक्षकेत्युक्त्वा सत्यानन्दमयेत्यथ ॥ ४०

नित्यानन्दस्वरूपेति चिदीश्वर चिदात्मक ।
चिदाकृते पदं पश्चान्निरञ्जनपदं ततः ॥

परमानन्दरूपेति परमेष्ठिन् ततःपरम् ।
पुराणपुरुषेत्युक्त्वा पुण्यमूर्ते पुरातन ॥

पुरस्तुत्येति भक्तेति पदप्रीतिकरेत्यथ ।
विजितारे पदं पश्चाद्विमलाकार नाम च ॥

वीरराघवशब्दं च वीरेति पुरुषेत्यथ ।
जययुग्ममनन्तात्मन्ननन्तशयनेत्यथ ॥

अनन्तरूपानन्तेति सौख्यदानन्द नाम च ।
महायोगीश्वरपदं योगाचार्यपदं ततः ॥ ४५

दत्तात्रेयेति कपिल द्वैपायनपद ततः ।
सिद्धविद्याधरेत्युक्त्वा यक्षराक्षसकिंनर ॥

सुरासुरमहर्षीति देवर्षिपदमप्यथ ।
ब्रह्मर्षिवन्द्यमानेति पदाम्बुजपदात्परम् ॥

महानुभावशब्दं च जययुग्ममनःपरम् ।
सृष्टिस्थितीति संहार कारकेति ततःपरम् ॥

योगिहृत्पद्मनिलय योगिध्येय पदाम्बुज ।
सर्वसिद्धिप्रदपदं सर्वलोकेश्वरेत्यथ ॥

पृथिव्युदकरूपेति तेजोवायुमयेत्यथ ।
व्योमदिक्कालरूपेति जीवप्राणमयेत्यथ ॥ ५०

सर्वतत्त्वमयेत्युक्त्वा सर्वेन्द्रियमनोमय ।
सर्वसत्वगुणोपेत निष्कलङ्क निरञ्जन ॥

नित्यशाश्वतशुद्धेति जयद्वन्द्वमतःपरम् ।
वह्निरूपेति सूर्येति पदं सोममसीत्यथ ॥

प्रजापतिमयेत्युक्त्वा गन्धर्वाधिपते पदम् ।
जयमुग्मं ततः शेषशयनेति पदात्परम् ॥

साकेत नगराधीश मथुराधिपते पदम् ।
मायापुरी नायकेति ततः काशीपते पदम् ॥

काञ्चीपुरी नायकान्ते ह्यवन्ती नायकेत्यथ ।
द्वारकानायक क्षीराब्धि शायिन्पदमप्यथ ॥ ५५

श्वेतद्वीपादिशब्दान्ते नायकेति पदात्परम् ।
सत्यलोकपते पश्चाद्वैकुण्ठपुर नायक ॥

अयोध्यानगराधीश भक्तत्राणपरायण ।
चतुर्वेदमयान्ते सिंहासनारूढ नाम च ॥

श्रीवत्सकौस्तुभोरस्क वनमालाविभूषित ।
दिव्यभूषणशब्दान्ते भूषितेति पदं ततः ॥

दिव्यमाल्यपदं पश्चाद्विराजितपदं ततः ।
दिव्यचन्दनशब्दं च चर्चितेति जयद्वयम् ॥

सुप्रसन्नपदं पश्चाद्वदनाम्बुज नाम च ।
दिव्यपीताम्बरधर किरीटकनकाङ्गद ॥ ६०

हारनूपुर केयूर कुण्डलद्वय शोभित ।
समस्तलोकनाथान्ते समस्तापन्निवारक ॥

समस्तभक्तसाम्राज्य भोगस्वर्गापवर्गद ।
जानकीवल्लभपदं रुक्मिणीवल्लभेत्यथ ॥

राधावल्लभ भूनीला वल्लभेति जयद्वयम् ।
महामहेश्वरपदं महायुग्ममतःपरम् ॥

पुरुषान्ते महायुग्मं राजनाम महाद्वयम् ।
विभूते देवशब्दान्ते ततश्चूडामणे पदम् ॥

भूतनाथपदं नाथ शब्दमतःपरम् ।
विश्वनाथानन्तकोटि ब्रह्माण्डाधिपते पदम् ॥ ६५

लक्ष्मीपते महालक्ष्मीपते शब्दमतःपरम् ।
राज्यलक्ष्मीपते शब्दं पदं पश्चाच्छ्रियःपते ॥

जययुग्मं समुच्चार्य श्रीनारायण नाम च ।
नमस्ते त्रितयं पश्चाद्विद्यैषा समुदीरिता ॥

राजीवायतलोचनं सुरगुरुं कन्दर्पकान्तिद्युतिम्
विद्युन्मेघ समानकान्तिममलं श्रीवत्सवक्षःस्थलम् ।
केयूराङ्गद हारकुण्डलधर चक्रादिसंशोभितं
लक्ष्म्यालिंगित वामभागमनिशं नारायणं चिन्तये ॥

हस्तैर्बिभ्रदिति श्लोकरूपं च मनुनायकम् ।
आदावन्ते स्मरेद्विद्यां नारायण कृपाप्तये ॥

अष्टाविंशाक्षराधिका त्रिशताक्षरसंयुता ।
नारायणी सहस्रार्णा विद्येयं कथिता मया ॥ ७०

सर्वपातक संहर्त्री रोगशोक निवारिणी ।
साम्राज्यलक्ष्मी फलदा महादारिद्र्य भेदिनी ॥

राजराज महाविद्या जपान्ते यो दिने दिने ।
महानारायणीं विद्यां सहस्रार्णामिमां बुधः ॥

सकृत्स्मरति यो नित्यं तस्य स्युस्सर्वसिद्धयः ।
अदैवं दैवतं कुर्याद्दैवतं चाप्यदैवतम् ॥

सहस्राक्षर विद्यायाः प्रजापी साधकोत्तमः ।
सस्नातः सर्वतीर्थेषु सर्वक्रतुषु दीक्षितः ॥

सहस्रार्ण महाविद्या प्रजापी सततं भवेत् ।
नाभिषेको न संस्कारो न दीक्षा वैदिकी क्रिया ॥ ७५

आचार्यकरुणैवाऽस्य दीक्षोक्ता परमर्षिभिः ।
सप्तद्वीपवतो भूमिर्धनधान्यौघ संकुला ॥

दक्षिणा गुरुपादाब्ज युगले कथिता भुवि ।
अनावृष्टि भये प्राप्ते कटिदघ्नजले स्थितः ॥

प्रजप्य पञ्चधा विद्यामिमां सर्वफलप्रदाम् ।
सृजत्येव महावृष्टिं सद्यः सकलभूतले ॥

अतिवृष्टिभये वह्निसन्निधौ पञ्चधा जपेत् ।
शमयत्येव सद्योऽसावतिवृष्टिं सुदारुणाम् ॥

श्रीमदष्टाक्षरी विद्या राजराजेश्वरी परा ।
नारायणाभिधा वर्म विद्या वेदान्तसंग्रहा ॥ ८०

पुरश्चर्यां विनाप्यस्य सिद्धिं दद्यान्महत्तराम् ।
देशिकस्य कृपा पूर्णा यदि स्याज्जगतीतले ॥

सहस्राक्षरविद्येयं तस्य सिद्धा भविष्यति ।
नासाध्यं तस्य जगतीतलेऽस्मिन् ब्रह्मनन्दनाः ॥

महेन्द्रपुर साम्राज्यलक्ष्मीरपि सरस्वती ।
तन्मन्दिरे वसत्येव यावदाचन्द्रतारकम् ॥

अपमृत्यु प्रशमनी सर्वारिष्टनिवारिणी ।
सर्वसंपत्प्रदात्रीयं भोगस्वर्गापवर्गदा ॥

देशिकांघ्रियुगे वित्तशाठ्यं त्यक्त्वा द्विजोत्तमाः ।
धनधान्यपशुव्रात मुक्तारत्नसमाकुलाम् ॥ ८५

दक्षिणां बहुधा दत्वा सहस्रार्णामिमां शुचिः ।
देशिकस्य मुखाम्भोजाद्गृहीत्वाऽथ दिने दिने ॥

सकृत्स्मरति वा राजराजविद्या जपात्परम् ।
स लब्ध्वा महदैश्वर्यं सर्वविद्यासु पारगः ॥

प्राप्यायुषं महद्भाग्यं पुत्रपौत्रवतीं श्रियम् ।
जातिस्मरश्चिरं भूत्वा ब्रह्म दृष्ट्वा सनातनम् ॥

तेजोमयतनुर्भूत्वा प्राप्नोत्यन्ते परं पदम् ।
नारायणी सहस्रार्णा मयेयं समुदीरिता ।
श्रियो देव्याः सहस्रार्णां प्रवक्ष्यामि ततःपरम् ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदसारार्थसंग्रहे उत्तरभागे राजराज विद्यामाहात्म्ये एकोनचत्वारिंशोऽध्यायः ॥

## अथ चत्वारिंशोऽध्यायः ॥

हस्तैर्बिभ्रत्सरसिजगदाशङ्खचक्राणि विद्या
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरताकल्प्यमाश्लेषलोभा-
देकीभूतं वपुरवतु नः पुण्डरीकाक्षलक्ष्म्याः ॥

**श्रीभगवानुवाच —**

सहस्राणां श्रियो देव्या वक्ष्यामि ब्रह्मनन्दनाः ।
यस्य विज्ञानतोऽपीह पूज्यते त्रिजगत्स्वपि ॥

त्रितारी प्रणवान्तेऽथ नमस्त्रिपुरसुन्दरि ।
पदं हृदयदेवीति शिरो देविपदं ततः ॥

शिखादेविपदं पश्चात् पदं कवचदेव्यथ ।
नेत्रदेव्यस्त्रदेवीति कामेश्वरिपदं ततः ॥ ५

भगमालिनि शब्दान्ते नित्यक्लिन्नपदे ततः ।
भेरुण्डे वह्निशब्दान्ते वासिनीति महापदम् ॥

वज्रेश्वरि शिवे दूति त्वरिते कुलसुन्दरि ।
नित्यनीलपताकेऽथ विजये सर्वमङ्गले ॥

ज्वाला मालिनि चित्रेऽथ महानित्ये पदं ततः ।
परमेश्वरशब्दान्ते परमेश्वरि शब्दतः ॥

मित्रेशमपि षष्ठीशमथोड्डीशमप्यथ ।
चर्यानाथमपि प्रोच्य लोपामुद्रामयीत्यथ ॥

अगस्त्यमपि कालान्ते तापसाद्यमयीत्यथ ।
धर्माचार्यमपि प्रोच्य मुक्तकेशीश्वरेत्यथ ॥ १०

मयि दीपकलानाथ मयि विष्णुपदात्परम् ।
पदं देवमयीत्युक्त्वा प्रभाकरपदं ततः ॥

पददेवमयीत्युक्त्वा तेजोदेवमयीत्यथ ।
मनोजदेवशब्दान्ते मयि कल्याणशब्दतः ॥

पदं देवमयीत्युक्त्वा रत्नदेवमयीत्यथ ।
श्रीवासुदेवमयि श्रीरामानन्दमयीत्यथ ॥

तत्पश्चादणिमासिद्धे लघिमासिद्ध इत्यपि ।
महिमासिद्ध ईशित्व सिद्धे पदमतःपरम् ॥

वशित्वसिद्धे प्राकाम्यसिद्धे पदमतःपरम् ।
भुक्तिसिद्धे पदं चेच्छासिद्धे प्राप्तिपदात्परम् ॥ १५

सिद्धे च सर्वकामान्ते सिद्धे ब्राह्मीत्यतःपरम् ।
माहेश्वरी च कौमारी वैष्णवीति पदात्परम् ॥

वाराह्यथ माहेन्द्रि चामुण्डे शब्दमप्यथ ।
महालक्ष्मीपदं सर्वसंक्षोभिणि पदात्परम् ॥

सर्वविद्राविणीत्युक्त्वा सर्वाकर्षणि शब्दतः ।
परं सर्ववशीत्युक्त्वा करणीति पदात्परम् ॥

सर्वोन्मादिनि शब्दान्ते पदं सर्वमहांकुशे ।
सर्वखेचरि सर्वबीजे सर्वयोने पदं ततः ॥

सर्वत्रिखण्डे त्यैलोक्यमोहनेति पदं ततः ।
चक्रस्वामिनि शब्दान्ते प्रकटेत्यथ योगिनि ॥ २०

कामाकर्षिणि बुद्ध्या कर्षिण्यहङ्कार शब्दतः ।
आकर्षणी पदं शब्दा कर्षिणीति पदं ततः ॥

स्पर्शाकर्षिणि शब्दान्ते रूपाकर्षिण्यतःपरम् ।
रसा कर्षिणि शब्दान्ते गन्धाकर्षिण्यतःपरम् ॥

चित्ताकर्षिणि शब्दान्ते धैर्याकर्षिण्यत.परम् ।
स्मृत्याकर्षिणि शब्दान्ते नामाकर्षिण्यतःपरम् ॥

बीजाकर्षिणि शब्दान्ते चात्मकर्षिण्यथोच्चरेत् ।
अमृताकर्षिणीत्युक्त्वा शरीराकर्षिणीत्यथ ॥

सर्वाशा परिपूराद्यक चक्रस्वामिनीत्यथ ।
गुप्तयोगिन्यनङ्गाद्य कुसुमेऽनङ्ग मेखले ॥ २५

अनङ्गमदने पश्चादनङ्गमदनातुरे ।
अनङ्गरेखेऽनङ्गाद्य वेगिनीति पदं ततः ॥

अनङ्गाकुश इत्युक्त्वा पदं चानन्तमालिनी ।
सर्वसंक्षोभणेत्युक्त्वा चक्रस्वामिन्यथोच्चरेत् ॥

पदं गुप्ततरेत्युक्त्वा योगिनीति पदं ततः ।
सर्वसंक्षोभिणीत्युक्त्वा सर्वविद्राविणीत्यथ ॥

सर्वाकर्षिणि शब्दान्ते सर्वाह्लादिन्यथोच्चरेत् ।
सर्वसंमोहिनीत्युक्त्वा सर्वस्तम्भित्यतःपरम् ॥

सर्वजृम्भिणि शब्दान्ते पद सर्ववशङ्करि ।
सर्वरंजनि शब्दान्ते सर्वोन्मादिन्यथोच्चरेत् ॥ ३०

सर्वार्थसाधके शब्दं सर्वसम्पत्तिपूरणि ।
सर्वमन्त्रमयीत्युक्त्वा सर्वद्वन्द्वक्षयङ्करि ॥

सर्वसौभाग्य शब्दान्ते दायकेति पदात्परम् ।
चक्रस्वामिनि शब्दश्च सम्प्रदायाद्य योगिनि ॥

सर्वसिद्धिप्रदे पश्चात् सर्वसम्पत्प्रदे पदम् ।
सर्वप्रियङ्करीत्युक्त्वा सर्वमङ्गलकारिणि ॥

सर्वकामप्रदे पश्चात् सर्वदुःखविमोचनि ।
सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि ॥

सर्वाङ्गसुन्दरिपदं सर्वसौभाग्यदायिनि ।
सर्वार्थसाधकेत्युक्त्वा चक्रस्वामिन्यथोच्चरेत् ॥ ३५

कुलोत्तीर्णपदं पश्चाद्योगिनीति पदं तत ।
सर्वज्ञे सर्वशक्तेऽथ सर्वैश्वर्यप्रदायिनि ॥

सर्वज्ञानमयीत्युक्त्वा सर्वव्याधिविनाशिनि ।
सर्वाधारस्वरूपेऽथ सर्वपापहरे पदम् ॥

सर्वानन्दमयीत्युक्त्वा सर्वरक्षास्वरूपिणि ।
सर्वेप्सितफलेत्युक्त्वा प्रदे सर्वपदं ततः ॥

रक्षाकरपदं चक्रस्वामिनीति पदं ततः ।
निगर्भयोगिनि पदं वशिनीति पदात्परम् ॥

कामेश्वरीपदं पश्चान्मेदिनीति पदं ततः ।
विमले शब्दमरुणे जयिनीति पदात्परम् ॥ ४०

सर्वेश्वरिपदं पश्चात् कौलिनीति पदं ततः ।
सर्वरोगहरेत्युक्त्वा चक्रस्वामिन्यथोच्चरेत् ॥

रहस्ययोगिनिपदं ततो बाणिनि चापिनि ।
पाशिन्यङ्कुशिनीत्युक्त्वा महाकामेश्वरीत्यथ ॥

महावज्रेश्वरीत्युक्त्वा महाश्री भगमालिनि ।
महाश्री सुन्दरीत्युक्त्वा सर्वसिद्धिप्रदेत्यथ ॥

चक्रस्वामिनि रहस्य योगिनीति पदं ततः ।
श्रीश्रीमहाशब्द पदं भट्टारिके पदमतःपरम् ॥

सर्वानन्दमयेत्युक्त्वा चक्रस्वामिन्यथोच्चरेत् ।
परापर रहस्याद्य योगिनीति पदं ततः ॥ ४५

त्रिपुरे त्रिपुरेशीति पदं त्रिपुरसुन्दरि ।
त्रिपुरान्तेवासिनीति त्रिपुरा श्रीःपदं ततः ॥

त्रिपुरान्ते मालिनि त्रिपुरसिद्धे पदं ततः ।
त्रिपुराम्बपदं पश्चान्महात्रिपुरसुन्दरि ॥

महामहेश्वरि महा महाराज्ञी पदात्परम् ।
महा महापूर्वशक्ते पदं पश्चान्महापदम् ॥

महागुप्ते महाशब्दं महाज्ञप्ते पदात्परम् ।
महा महानन्द इति महाशब्दमतःपरम् ॥

महास्पदे महामूर्ते महामाय इतीरयेत् ।
महाश्रीचक्रनगर सम्राज्ञीति पदं ततः ॥ ५०

नमस्ते त्रितयं वह्नि दयिना च धितारि च ।
अयं मनुः श्रियो देव्या युष्मभ्यं कथितो मया ॥

एकत्रिंशत्सहस्रार्ण स्त्रिलोकी मोहन क्षमः ।
दक्षिणामूर्तिरस्योक्त ऋषिः सर्वज्ञ ईश्वरः ।
पङ्क्तिश्छन्दस्समुद्दिष्टं श्रीदेवी देवता स्मृता ॥

पाशं चाङ्कुशमैक्षवं धनुरथाशोकादि पुष्पात्मकान्
बाणान् पञ्च दधानमुद्यदरुणानेक प्रभाभासुरम् ।
दिव्याकल्पशतान्वितं समुकुट ब्रह्मेशविष्ण्वर्चित
चिद्रूपं महदाश्रयामि परमं साम्राज्यलक्ष्मीमिमाम् ॥

"त्रिपुरसुन्दर्यै नमः"

महाश्रो सुन्दरीं देवीं श्रियं तेजोमयीं पराम् ॥

ध्यात्वा हृत्कमले नित्यं सहस्रार्णमनुं जपेत् ।
नवावरण देवीनां श्रियो देव्या स्त्रयीमयी ॥ ५५

एकत्र गणनारूपा वेदवेदान्त गोचरा ।
इयं विद्या महाराज्ञो स्मरणात्पापनाशिनो ॥

सर्वागम रहस्यार्था सर्वपुण्यफलप्रदा ।
श्रीचक्रपूजां सततं विस्तरात्कर्तुमक्षमः ॥

सकृन्नित्यं पठित्वेतां साङ्गपूजाफलं लभेत् ।
अन्तःपुरे महाराज्याः श्रीदेव्याश्शक्तयोऽखिलाः ॥

प्रकाशिताः सुगुप्ताश्च स्मरणात्पापभञ्जनाः ।
आसां स्मरणमात्रेण कल्याणानि पदे पदे ॥

भवन्ति सर्वभक्तानां सम्पदश्च पदे पदे ।
नरवश्यं नरेन्द्राणां वश्यं नारीवशङ्करम् ॥ ६०

अणिमादिगुणैश्वर्यंरञ्जनं पापभञ्जनम् ।
सहस्राक्षरविद्यायाः स्मरणाल्लभ्यतेऽन्वहम् ॥

सहस्रार्णमिदं गुह्यं परं धाम प्रशस्यते ।
श्रियो देव्या महाराज्या मालामनुत्यं परः ॥

गोप्तव्यः सततं यत्नात्प्राणैः कण्ठगतैरपि ।
राजराजेश्वरीविद्या जपान्तेऽन्वहमादरात् ॥

नारायणो सहस्राणां सहस्राणां श्रियोऽपि च ।
सकृद्विद्याद्वयं जप्त्वा कृतार्थः स्यान्न संशयः ॥

न शिष्याय प्रदातव्या तनयायापि बन्धवे ।
सहस्राक्षरी विद्येयं श्रियो देव्या गरीयसी ॥ ६५

आयुरारोग्यजननी सर्वोपद्रव नाशिनी ।
सर्वरोगहरी सर्व भयशोक निवारिणी ॥

अयोध्यापुरचक्रस्य सर्वशक्तिमयी परा ।
स्मरणात्सर्वपापघ्नी सर्वक्रतुफलप्रदा ॥

धर्मार्थकाममोक्षाख्य पुरुषार्थफलप्रदा ।
पञ्चैवोक्ताः श्रियो देव्याः पञ्चोक्ताः पुरुषस्य च ॥

द्वन्द्वविद्याश्च पञ्चोक्ता इतीयं पञ्चदशक्रमात् ।
शुद्धा नमोन्तास्स्वाहान्तास्तर्पणान्ता जयान्तिकाः ॥

शुद्धसम्बुद्धिशब्दान्ता प्रथमो मनुरुच्यते ।
चतुर्थ्यन्ते नमःस्वाहाशब्दौ विद्याद्वये तथा ॥ ७०

द्वितीयान्ते तर्पयामीत्येवं मन्त्रश्चतुर्थकः ।
सम्बुद्ध्यन्ते जयद्वन्द्व स्तुतिरुक्ता तु पञ्चमी ॥

इत्थं पञ्चदश प्रोक्ता मालामन्त्राः फलप्रदाः ।
लक्ष्मीनारायणौ यद्वा भवानीशङ्करावुभौ ॥

उपास्यौ चक्रराजेऽत्वे मालामन्त्रैर्विचक्षणैः ।
सर्वदेवमयं यस्मात् सर्वविद्यामयं तथा ॥

सर्वधर्ममयं यस्मात् सर्वसिद्धिमयं यतः ।
तस्मादयोध्यानगर चक्रे श्रीचित्कलागृहे ॥

लक्ष्मीनारायणौ पूज्यौ राजराजाख्यविद्यया ।
भवानीशङ्करौ यद्वा समभ्यर्च्यौ दशार्णया ॥ ७५

दशपञ्चस्रजो विद्याः पक्षे पक्षेऽथ मासि वा ।
षण्मासे वत्सरे वापि सकृद्यः संस्मरेच्छुचिः ॥

स तद्दिने महाराजं भगवन्तं श्रियान्वितम् ।
नारायणं दाशरथिं शरणागतवत्सलम् ॥

रामं पश्यत्यसौ स्वप्ने सत्यमेव न संशयः ।
दश पञ्चस्रजो विद्या मासषट्कमनन्यधीः ॥

जप्त्वा प्रत्यहमेकान्ते निर्विघ्न विजतेन्द्रियः ।
श्रीदेवीसहितं साक्षाद् दृष्ट्वा नारायणं विभुम् ॥

देवत्वममरत्वं वा गन्धर्वत्वमथापि वा ।
यक्षत्वं वा किन्नरत्वं वा देवर्षित्वमथापि वा ॥ ८०

खेचरत्वं महर्षित्वं ब्रह्मर्षित्वमथापि वा ।
प्राप्नोत्यत्र न सन्देहः प्रसादादिन्दिरापतेः ॥

खड्गश्च पादुकासिद्धिरञ्जनं बिलसिद्धियुक् ।
वाग्देहलोहाः सिद्ध्यन्ति चाणिमाद्यष्टसिद्धयः ॥

वश्याकर्षण संमोहस्तम्भनानि च सर्वतः ।
अथ सर्वपुमर्थाश्च नित्यानन्दश्च मुक्तता ॥

एताः पञ्चदश प्रोक्ता विद्यानां सिद्धयः क्रमात् ।
स्पृष्ट्वा पूर्णघटं तोयैः सुगन्धिभिरथादरात् ॥

सप्ताष्टमालाजपनं सकृत्कृत्वा दिने दिने ।
सप्ताहं सेचनं कुर्याद्वन्ध्या पुत्रवती भवेत् ॥ ८५

सप्ताष्ट मालिकाजापी षण्मासं वत्सरं तु वा ।
भगवत्कलया पूर्णस्तेजसा भास्करप्रभः ॥

इन्द्रादीनष्टदिक्पालानपि दासान् करोत्यसौ ।
सप्ताष्टविद्या जपिनं प्रत्यहं कमर्तुक्षमः ॥

श्रियो देव्या महाविद्यां शुद्धामेव त्रिशो जपेत् ।
सप्ताष्टविद्यायायुतफलं प्रत्यहमश्नुते ॥

श्रियो देव्याः सहस्राणि वेदवेदान्त संग्रहम् ।
चक्रावरणदेवीनां गुप्त नाममयं परम् ॥

अस्मिन् प्रजप्तेऽपि सकृत्सर्वाः सिद्ध्यन्ति सिद्धयः ॥
नाभिषेको न संस्कारो न दीक्षा हवनादिकम् ॥ ९०

सहस्रार्णोपदेशार्थ माचार्यकरुणा परा ।
सर्वस्वं दक्षिणा द्रव्यं देशिकाङ्घ्रियुगे स्मृतम् ॥

वर्षाशनमितं द्रव्यमथवा दक्षिणा स्मृता ।
अयोध्यापुरचक्रेऽस्मिन् लक्ष्मीनारायणेशितुः ॥

शालग्रामशिलायुक्ते या पूजा पूर्वमीरिता ।
अस्याः स्मरणमात्रेण तत्साङ्गार्चनजं फलम् ॥

सिद्ध्यत्यस्य न संदेहः किञ्च ब्रह्ममयो भवेत् ।
अङ्गावरणदेवीनां श्रीदेव्या ब्रह्मनन्दनाः ॥

स्मरणादत्र विद्यायां तासां पुत्रसमो भवेत् ।
पालयन्ति यथा पुत्रान् मातरः सुतवत्सलाः ॥ ९५

विद्यायास्स्मरणेनैताः पालयन्ति स्वपुत्रवत् ।
श्रीदेवी सर्वसाम्राज्ञी नित्यं भगवतन्विता ॥

मातृवन्मन्दिरे तस्य रक्षत्याचन्द्रतारकम् ।
पूजां कर्तुमशक्तश्च हवनं तर्पणं स्तुतिम् ॥

सहस्रार्णां महाविद्यां श्रियो देव्याः सकृज्जपेत् ।
समस्तविद्यासंसिद्धि इच्छता नियतात्मना ॥

सहस्रार्णा प्रजप्तव्या श्रियः सर्वफलप्रदा ।
श्रियःपतेः श्रियो देव्याः सहस्रार्णमनुद्वयम् ।
इतीदं कथितं विप्राः किं भूयः श्रोतुमिच्छत ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदसारार्थसंग्रहे राजराजविद्या माहात्म्ये उत्तरभागे चत्वारिंशोऽध्यायः ॥

---

## अथैकचत्वारिंशोऽध्यायः ॥

**योगिन ऊचुः –**

नारायणी सहस्रार्णा सहस्रार्णांश्रियः पराम् ।
श्रुत्वा तव मुखाम्भोजात् सुगुप्तापि प्रकाशिता ॥

अनुत्तर ब्रह्मविद्या माहात्म्य मखिलेष्टदम् ।
भूयोऽपि श्रोतुमिच्छामः कृपया वक्तुमर्हसि ॥

**श्रीभगवानुवाच –**

शृणुध्वं ब्रह्मपुत्राग्र्याः सनकाद्या दृढव्रताः ।
राजराजेश्वरी विद्या साधनं महदिष्टदम् ॥

योऽसौ नारायणो योगी जानकीपतिरीश्वरः ।
पुरा वैकुण्ठनगरे प्राह देव्यै श्रियै हरिः ॥

कथयामास सा देवी कर्दमाय महात्मने ।
सोऽप्यस्मज्जनको योगी कर्दमो भगवानृषिः ॥ ५

शृण्वतो मम शिष्येभ्यो महायोगिभ्य उक्तवान् ।
लक्ष्मीपती रघुपतिर्यो देवानांपतिर्हरिः ॥

नारायणस्त्रिजगतां पतिरानन्दचिन्मयः ।
असौ दाशरथी रामो दण्डकारण्यपावनः ॥

राजराजमहाविद्या साधनं भवभेषजम् ।
कथयामास सौमित्रि भरतादिभ्य आदरात् ॥

एकान्ते तदहं वक्ष्ये सुगुप्तमपि साधनम् ।
देशं कालं च वीक्ष्यादौ भवसागरतारणम् ॥

ब्रह्मानन्दैक विज्ञानं राजराजेश्वरी फलम् ।
यो ददाति स्वशिष्याय देशिकः स उदाहृतः ॥ १०

अन्तेवासिनामाचारमुक्तं स्वायंभुवादिभिः ।
यः शिक्षयति तं प्राहुर्येनाचार्यमीश्वरम् ॥

श्रीमदष्टार्णविद्याया विधानं साङ्गमादरात् ।
यः शिक्षयति शिष्येभ्यस्तमाचार्यं विदुर्बुधाः ॥

भगवद्रश्मिसूक्तं यो ब्रह्मविद्यां सनातनीम् ।
श्रीमदष्टाक्षरीं विद्यां यः शिष्येभ्यः प्रकाशयेत् ॥

तमाचार्यं महाप्राज्ञं कथयन्ति हरिं विभुम् ।
समस्तरश्मिसहितां श्रियः पञ्चदशाक्षरीम् ॥

कथयिष्यति शिष्येभ्यो यत्तन्नारायणात्मकम् ।
वदन्ति परमाचार्यं ब्रह्माणं शङ्करं विभुम् ॥ १५

राजराजेश्वरीं विद्यां लक्ष्मीनारायणीं शुभाम् ।
गुप्तां सकलवेदेषु पुराणेष्वागमेष्वपि ॥

कथयिष्यति यः कर्णे शिष्यस्य विमलात्मना ।
तं देशिकोत्तमं प्राहुस्साक्षाद् भगवदाकृतिम् ॥

सर्वेशं सर्वकर्तारं शङ्करं परमेश्वरम् ।
तमेवोत्तममाचार्यं विदुर्नारायणं विभुम् ॥

सर्वत्र गौरवार्हत्वाद् गुरुरुक्तो महर्षिभिः ।
गरीयान् ब्रह्मरुद्रादि देवेभ्योऽभ्यर्चनादिषु ॥

गुरुरित्युच्यते सद्भिर्भुक्ति मुक्ति फलप्रदः ।
अविज्ञाय शुभं कालं सुदेशमनवेक्ष्य च ॥ २०

यो ददाति महाविद्यां न स सद्गुरुरुच्यते ।
मधुमासे भवेद्दुःखं माधवे रत्नसम्पदः ॥

ज्येष्ठे तु मरणं प्रोक्तमाषाढे बन्धुसंक्षयः ।
समस्ताभीष्टसिद्धिः स्याच्छ्रावणेमासि सन्ततम् ॥

शरीरपीडा महती मासि भाद्रपदे भवेत् ।
आश्विने धनधान्यादि संपदः स्युः पदे पदे ॥

ब्रह्मानन्दैक विज्ञानं कार्तिकेमासि जायते ।
जयलक्ष्मीर्मार्गशीर्षे भवत्यस्य न संशयः ॥

ज्ञानक्षयो भवेत्पुष्ये विद्या प्रारम्भकर्मसु ।
माघमासे भवेत्साक्षाद्भगवद्दर्शनं बुधाः ॥ २५

समस्तकार्य संसिद्धिः फाल्गुनेमासि जायते ।
द्वितीया च तृतीया च पञ्चम्येकादशी तथा ॥

दशमी पञ्चमीपूर्णा द्वादशी च त्रयोदशी ।
दशमी च महापुण्या एताःस्युस्तिथयश्शुभाः ॥

न वारमासदोषः स्याद् ग्रहणे चन्द्रसूर्ययोः ।
देशं कालं परीक्ष्येत्थं शिष्यस्य गुरुणा गुणान् ॥

विद्यां प्रकाशयेद्धीमान् गुरुः कारुणिको विभुः ।
कलेबरमपि प्राणान् सर्वस्वं राज्यसम्पदम् ॥

समर्प्याचार्यपादाब्जे पत्नीपुत्रादिकानपि ।
आचार्यपत्नी पुत्राणां कैङ्कर्यं प्रत्यहं शुचिः ॥ ३०

यः करोति महाप्राज्ञं तं विदुः शिष्यमुत्तमम् ।
यदा सन्तर्पितो वापि हस्ताभ्यां ताडितोऽपि वा ॥

बहुसन्ताडितो वाऽथ कशाघातैस्सुदारुणैः ।
पूर्णानुग्रह एवायमिति यो मन्यते भृशम् ॥

निष्कल्मषेन मनसा स शिष्यो मुक्त उच्यते ।
तथाविधस्य शिष्यस्य भवसागरतारिणः ॥

मुक्तिलक्ष्मीः करतले तिष्ठत्येव न संशयः ।
इत्थमाचार्य पादाब्ज किङ्करो यतमानसः ॥

श्रीमदष्टाक्षरीविद्यां जप्त्वा प्रत्यह मादरात् ।
राजराजेश्वरी विद्यां मनसि प्रत्यहं जपेत् ॥ ३५

साधनानि प्रवक्ष्यामि श्रृणुध्वं ब्रह्मनन्दनाः ।
येषां श्रवणतोवाऽपि भवेत्सिद्धि रनुत्तमा ॥

वासन्तनवरात्रादि व्रतस्यरूपमुत्तमम् ।
तदेव भूयो वक्ष्यामि श्रृण्वन्तु परमर्षयः ॥

यदुक्तं नवरात्रे च दिवसत्रितयं व्रतम् ।
वासन्त मधुमासे तदुक्तं सकलसिद्धिदम् ॥

वासन्तं नवरात्रं तु दिवसत्रितयं तु वा ।
वत्सरे वत्सरे वाऽत्र कृत्वा नियतमानसः ॥

परब्रह्ममया भूत्वा तेजोमयतनुःस्वयम् ।
स्वचक्षुषैव भगवद्रूपधारिणमीश्वरम् ॥ ४०

पश्यत्येवाऽऽत्मनाऽऽत्मानं ब्रह्मानन्दरसाश्रयम् ।
अथवा मधुमासेऽत्र प्रतिपद्दिनमादितः ॥

आचार्यानुज्ञया भक्त्या सहस्रत्रिशतं बुधः ।
वेदमातरमभ्यस्य नित्यहोमं समाप्य च ॥

सूर्यमण्डलमध्यस्थं नारायणमजं विभुम् ।
कृताञ्जलिरुपासीत सूक्तं नारायणं जपन् ॥

श्रीमदष्टाक्षरीं विद्यां शताधिक सहस्रकम् ।
जप्त्वा प्रत्यहमेकान्ते वासुदेव महामनुम् ॥

त्रिशतं प्रजपेत्पश्चाद्वैष्णवं च षडक्षरम् ।
अष्टोत्तरशतं जप्त्वा द्वादशार्णरमामनुम् ॥ ४५

जप्त्वा पञ्चशतं नित्यं राजराजेश्वरीमयम् ।
अष्टाविंशतिधा जप्त्वा सहस्रार्णद्वयं सकृत् ॥

जप्त्वाऽथ वैष्णवं वर्म प्रत्यहं पञ्चधा जपेत् ।
आचार्य चरणद्वन्द्वे प्रत्यहं कर्षसाम्मितम् ॥

सुवर्णमर्पयेद्धीमान् निष्कमेकमथापि वा ।
तदर्धं वाऽन्वहं भक्त्या वित्तलोभं परित्यजेत् ॥

अधःशायी जितक्रोधः फलाशी वा हविष्यभुक् ।
एक भक्ताशनो वाऽपि नवम्यादि दिनत्रये ॥

क्षीराशी वा फलाशी वा सावित्रीं पूर्ववज्जपेत् ।
श्रीमदष्टाक्षरीं विद्यां वासुदेवादिकामपि ॥ ५०

प्रजप्य पूर्ववद्धर्म वैष्णवं वज्रपञ्जरम् ।
पञ्चविंशतिधा नित्यं दिवसत्रितये जपेत् ॥

आचार्यचरणद्वन्द्वे सुवर्णं कर्ष सम्मितम् ।
निष्कमेकैकमथवा दिवसत्रिति सिद्धयः ॥

सर्वो असाध्या अपि भूतले ... ... ... ।
स्वर्गे मर्त्येऽपि पाताले तपेर्पर्षतृ ... ... ... ॥

महालक्ष्मीधियाऽऽचार्यपत्न्या अपि च सादरम् ।
कर्षमानमलङ्कारमेकैक दिवसेऽर्पयेत् ॥

एकैक निष्कमथवा तदर्धं वा समर्पयेत् ।
श्रीरामजन्मदिवसे यद्वालङ्कारमुत्तमम् ॥ ५५

दिवसद्वितये निष्कं तदर्धं वा समर्पयेत् ।
श्रीरामजन्मदिवस मर्धोदयशतप्रभम् ॥

महादानमुखं प्रोक्तं वेदवेदान्तवेदिभिः ।
दशम्येकादशी वापि तत्समेवोच्यते बुधैः ॥

एकैकं च दिनं तत्र द्वादश्यन्तं द्विजर्षभाः ।
अर्कपर्वोदयं प्राहुर्महासिद्धि प्रदायकम् ॥

द्वादश्यामुदिते भानौ देशिकोत्तमसन्निधौ ।
संस्कृत्य विधिवद्वाह्नि सावित्र्या गोघृतं शुभम् ॥

अष्टोत्तरशतं हुत्वा श्रीमदष्टार्णविद्यया ।
कापिलाज्यं हुनेदग्नौ शताधिक सहस्रकम् ॥ ६०

अथवा शुद्धगव्याज्यं हुनेदष्टार्णविद्यया ।
वासुदेवस्य मनुना वैष्णव्या च षडर्णया ॥

अष्टाविंशतिधा हुत्वा द्वादशार्णश्रिया ततः ।
हुत्वा पञ्चशतं वह्नौ शुद्ध गव्याज्यमादरात् ॥

अष्टाविंशतिधा हुत्वा राजराजाख्य विद्यया ।
पञ्चधा जुहुयाद्धर्ममन्त्रै राज्यमतः परम् ॥

हुत्वा जयादिभिः पश्चात्कृत्वा ब्रह्मार्पणाहुतिम् ।
प्रणिपत्य च साष्टाङ्गं होमान्ते जातवेदसि ॥

आचार्यचरणद्वन्द्वं प्रणिपत्य च सादरम् ।
मृदुवासः समर्प्यादौ कुण्डलद्वितयं शुभम् ।
आचार्य कर्णयोर्दद्यादन्यालङ्करणं तु वा ॥ ६५

रुद्राक्षाभरणं वापि मुक्तालङ्करणं तु वा ।
रत्नाभरणमन्यद्वा दत्वाऽऽचार्यस्य कर्णयोः ॥

शालग्राम शिलां दद्याद्दक्षिणा सहितां गुरोः ।
इक्षुराशि पानसानि फलानि सुबहून्यपि ॥

कदलीफलराशिं च शर्करां च गुडं तथा ।
देशिकांध्रियुगे दद्याद्धरिचन्दनमुत्तमम् ॥

द्वादशाऽथ सुवासिन्यो द्वादश ब्राह्मणा अपि ।
मिष्टान्नैः पोषणीयाश्च ताम्बूलैर्दक्षिणादिभिः ॥

आचार्यशेषं भुञ्जीत स्वयं बन्धुभिरन्वितः ।
रहस्य मन्यद्वक्ष्यामि शृणुध्वं ब्रह्मनन्दनाः ॥ ७०

यस्य विज्ञानतो वाऽपि पूज्यते सचराचरैः ।
पक्षे पक्षेऽथवा मासि षण्मासे वत्सरेऽपि वा ॥

विशेषदिवसे वाऽपि ज्वलिते जातवेदसि ।
केशवादि चतुर्विंशन्मिथुनैर्गोघृतं शुभम् ॥

हुत्वाऽऽदौ श्रीमदष्टार्णं विद्ययाऽऽहुतिमाचरेत् ।
पञ्चाशत्कोटि विस्तीर्णं भूतले साधकोत्तमः ॥

अव्याहतगतिः सिद्धः सर्वभाग्य निधिर्भवेत् ।
आश्रयस्सर्वभाग्यानामाधारस्सर्वसम्पदाम् ॥

भूत्वेह कृतकृत्योऽथ साक्षान्नारायणो भवेत् ।
मधुमासे महादीक्षां दिन द्वादशके शुभाम् ॥ ७५

कृत्वा ब्रह्ममयः साक्षाद्विमुक्तः पापराशिभिः ।
महाकविर्महावाग्मी मन्दबुद्धिर्जडोऽपि वा ॥

निधिः सकलविद्याना मनधीतोऽपि साधकः ।
देशिकानुग्रहाद्भूत्वा सर्वारिष्ट विवर्जितः ॥

मुक्तारत्न गजाश्वादि सङ्कुलां धनसङ्कुलाम् ।
सम्प्राप्य महतीं लक्ष्मीं पुत्रपौत्रादि संयुताम् ॥

दीर्घमायुष्य मासाद्य विमुक्तस्सकलैर्गदैः ।
भुक्त्वेह सकलान् भोगान् दिव्यानपि च मानुषान् ॥

परमं पदमाप्नोति कुलसाहस्र संयुतः ।
मधुमासे विशुद्धात्मा दिनद्वादशके व्रती ॥ ८०

पुरश्चर्यामिमां कृत्वा सिद्धो भवति साधकः ।
वर्षाभ्यन्तरतः साक्षादवश्यं जानकीपतिम् ॥

नारायणं महात्मानं भरतादिभिरन्वितम् ।
पश्यत्येव स्वचक्षुर्भ्यां दृढभक्तो गुरौ यदि ॥

तद्दर्शनेन लभते महासामर्थ्यमुत्तमम् ।
अणिमादि गुणैश्वर्यं वाचां सिद्धिमनुत्तमाम् ॥

आरोग्यं दीर्घमायुष्यं शङ्खादींश्च निधीन्नव ।
धनराशिं च रत्नानां राशिं दिव्याश्च कन्यकाः ॥

संप्राप्य तत्परं धाम देहान्ते विशति स्वयम् ।
वर्षे वर्षे च यः कुर्याद्व्रतमेतदनुत्तमम् ॥ ८५

तस्य पुण्यफलं वक्तुं नाहं शक्तोऽस्मि भूसुराः ।
द्विवारं यः करोतीदं व्रतं परमपावनम् ॥

नारायणो महात्माऽसौ रामो दाशरथिर्विभुः ।
जानकी सहितः स्वामी लक्ष्मणादिभिरन्वितः ॥

ब्रह्मर्षिभिर्वसिष्ठाद्यैः सहितः कपिभिर्वृतः ।
त्रिवारमस्य चक्षुर्भ्यां दृष्टाऽसौ भवति ध्रुवम् ॥

साक्षात्कृते जगन्नाथे श्रीरामे परमात्मनि ।
भवन्ति सिद्धयस्सर्वा असाध्या अपि भूतले ॥

स्वर्गे मर्त्येऽपि पाताले साक्षान्नारायणात्मनः ।
किमसाध्यं भवेल्लोके प्रसन्ने श्रीनिकेतने ॥ ९०

ब्रह्मानन्दैक विज्ञानं जातिस्मरणमुत्तमम् ।
परदेहप्रवेशादि सामर्थ्यं चाणिमादिकम् ॥

दुर्लभं देवसंघैश्च दुर्लभं परमर्षिभिः ।
नासाध्यं विद्यते तस्य स्वर्गे मर्त्ये रसातले ॥

त्रिवारं यः करोतीदं व्रतं परमपावनम् ।
मासि मासि जगन्नाथं जानकीपतिमच्युतम् ॥

नारायणं महात्मानं पश्यत्येव स्वचक्षुषा ।
अष्टाङ्गयोगमासाद्य खेचरत्वमनुत्तमम् ॥

प्रार्थ्यते दिव्यकन्याभिः कन्दर्पसदृशः श्रिया ।
पञ्चधा यः करोतीदं व्रतं परमपावनम् ॥ ९५

अनेनैव शरीरेण जरामरणवर्जितः ।
तेजसाऽऽदित्य सङ्काशः पञ्चविंशतिवार्षिकः ।

सिद्धगन्धर्वयक्षैश्च देवदानव किन्नरैः ।
संस्तुतः प्रत्यहं साक्षाल्लक्ष्मीनारायणेशितुः ॥

प्रसादान्महतीं सिद्धिं प्राप्य देवैश्च दुर्लभाम् ।
विमानवरमारुह्य दिव्यकन्या शतान्वितम् ॥

तेजोमय तनुर्भूत्वा दिव्यभोग समन्वितः ।
सप्तलोकादि लोकेषु रमते कालमक्षयम् ॥

कल्पान्ते हरि सायुज्यं कुलकोटि समन्वितः ।
प्राप्नोत्यत्र न सन्देहः सत्यं सत्यं द्विजोत्तमाः ॥ १००

न संशयोऽत्र विश्वासं कुरुध्वं ब्रह्मनन्दनाः ।
अत्राथर्वात्मनि गीता गाथा संप्रति वक्ष्यते ॥

वासन्तचैत्रार्क दिनेषु शुद्धो
गुरोः प्रसादेन महीन्दिरापतेः ।
अष्टार्णविद्यां श्रुति सारसंग्रहां
जप्त्वा सहस्रं त्रिशतं दिनेषु ॥

शताधिकं वा प्रथमं प्रजप्त्वा
श्रीवत्सदेवं त्रिशतं जपेच्च ।
श्रीविष्णुविद्यां शतमादरेण
जप्त्वार्कवर्णं मनुमिन्दिरायाः ॥

शतत्रयं प्रत्यहमादरेण
राजाधिराजं मनुमष्टधाऽपि ।
स्मृत्वाऽथ वर्म प्रजपेच्चपञ्च
नारायणस्याखिललोक साक्षिणः ॥

श्रीरामजन्मादि दिनत्रयेऽथ
पञ्चाधिकं विंशतिवारमत्र ।
जप्त्वा महद्वर्म दिने दिनेऽत्र
स्वदेशिकस्यांघ्रियुगे समर्प्य ॥ १०५

कर्षप्रमाणं प्रणिपत्य दद्या-
न्निष्कं तदर्धं तदशक्तिमांश्च ।
श्रीरामजन्मादि दिनत्रये तु
कर्षं प्रदद्यादथ निष्कमेकम् ॥

न्यूनं न दद्यादखिलार्थसिद्धि-
मिच्छन्सुवर्णाभरणैः सवस्त्रैः ।
आचार्यपत्नीं कमलाधियार्चये-
दवश्यमत्राऽपि दिनत्रयेऽस्मिन् ॥

हरेर्दिने प्रज्वलिते च वह्नौ
हुत्वा सहस्रं घृतमादरेण ।
अष्टाक्षरेणाऽथ मनुद्वयेन
शतं तथाष्टाधिकमत्र हुत्वा ॥

श्रियाऽथ हुत्वा त्रिशतं तथाज्यं
राजाधिराजेन तु पञ्चधापि ।
तद्धर्ममन्त्रैरपि पञ्च हुत्वा
नत्वाग्निमभ्यर्च्य गुरुं प्रणम्य ॥

सन्तप्त सौवर्ण सुरत्नयुक्तं
दद्यादवश्यं नवकुण्डलद्वयम् ।
वासोभिराकल्प गणैरथार्चये-
दशक्त एकेन विभूषणेन ॥ ११०

समर्पयेदिक्षु गणान् फलानि
दत्वाऽथ गन्धं वरधेनुमेकाम् ।
क्षीरप्रदां वत्सयुतां प्रदद्या-
दवश्य माचार्यपदारविन्दे ॥

इदं व्रतं पापदवानलाख्यं
नारायणस्याखिल लोकहेतोः ।
तुष्टि करं भुक्तिकरं प्रशस्तं
स्वर्गापवर्ग प्रदमादरेण ॥

कृत्वाऽत्र भक्ता अणिमादियुक्ताः
श्रियं परां प्राप्य महानुभावाः ।
पितुश्च मातुः कुलजैस्समेता
आरुह्य यानं सकलार्थयुक्तम् ॥

संप्राप्य जातिस्मृतिमर्थसिद्धिं
प्रयान्ति लक्ष्मीपतिधाम शुद्धम् ।

श्रीरामचन्द्राय नमः श्रीः श्रीः

इत्थमाथर्वणे गीतं व्रतं द्वादशरात्रकम् ।
वासन्ते मधुमासेऽस्मिन् ब्रह्मानन्दरसप्रदे ॥

व्रतं दिन द्वादशकं जयलक्ष्मी व्रताभिधम् ।
कृत्वा नारायणात्माऽसौ भवत्यत्र न संशयः ॥ ११९

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे उत्तरभागे राजराज विद्यामाहात्म्ये
एकचत्वारिंशोऽध्यायः ॥

## अथ द्विचत्वारिंशोऽध्यायः ॥

**श्री भगवानुवाच –**

राजराजमहाविद्या माहात्म्यमखिलप्रदम् ।
भूयोऽपि संप्रवक्ष्यामि शृणुध्वं ब्रह्मनन्दनाः ॥

वैशाखमासस्य च या तृतीया
सौम्येन युक्ता भृगुनेन्दुना वा ।
त्रेतायुगाद्या बलरामजन्म
तिथिर्भवानी तिथिरिष्टदात्री ॥

अक्षय्य संपूर्ण फलप्रदात्री
तामक्षयाख्यां तिथिमाहुरीशाः ।
स्वर्गीय वर्गाक्षय भोगदात्री
समस्त पापौघ विनाशकर्त्री ॥

यत्किञ्चिदत्रापि जपादि कर्म
दत्वा गुरोर्निष्क मपीह वित्तम् ।
फलं लभन्तेऽक्षय भोगसौख्य
प्रदं परब्रह्मणि लीनतां च ॥

अष्टाक्षरेणाऽथ मनूत्तमेन
वह्नौ विशुद्धे विधिमन्त्रपूते ।
हुत्वा सहस्रं पनसैरबीजैः
मधुत्रयाक्तैर्घृतमिश्रितैश्च ॥ ५

तत्र प्रभाते सुमना विशुद्धः
स्नात्वा सदाचार्यपदाब्ज युग्मम् ।
नत्वा तदाशीश्शिरसा प्रगृह्य
सन्ध्यामुपास्याथ विशुद्धचेताः ॥

मधुत्रयाक्तैर्जुहुयात्तिलैर्वा
घृतप्लुतैः साग्रशतं सहस्रम् ।
शतं ततो गव्यघृतेन हुत्वा
श्रीवासुदेवेन च वैष्णवेन ॥

श्रीद्वादशार्णेन मनूत्तमेन
शतत्रयं गव्यघृतेन हुत्वा ।
राजाधिराजेन च मानसेश
मनूत्तमेनाथ घृतं सुगव्यम् ॥

शतं पुरोरश्मिभिरादरेण
हुत्वा सकृत्तत्र हुनेद्द्विजागः ।
पश्चाथ हुत्वा हरिवर्ममन्त्रैः
जयादिभिर्गव्यघृतेन हुत्वा ॥

प्रदक्षिणीकृत्य समिद्धमग्नि
आचार्यवर्यं प्रणिपत्य पश्चात् ।
हैमं सुरम्यं गुरुकर्णयुग्मे
सुकुण्डलालङ्करणं प्रदद्यात् ॥ १०

तत्राप्यशक्तः प्रसमर्प्य वास
आचार्यपत्न्यै च गुरोः पदाब्जे ।
वर्षाशनं द्रव्यमथ प्रदद्यात्
शतं सहस्रं धनवान् प्रदद्यात् ॥

यद्वा तदर्धं गुरुपादयुग्मे
यद्वा त्रिनिष्कं धनमर्पयेच्च ।
तन्न्यूनवित्तं नहि देशिकस्य
दद्यात्पदाब्जे मनुसिद्धिकामः ॥

इत्थं गुरुं दक्षिणया प्रपूज्य
समाप्य होमादिकमादरेण ।
फलद्वयं वा फलपञ्चकं वा
रम्यं बहुराफलमति प्रसिद्धम् ॥

समर्पयेत्पानसमादरेण
रम्याणि पश्चात्कदलीफलानि ।
उपानहौ छत्रवराणि दद्यात्
विभात पारंगतसाधकेभ्यः ॥

श्रीचन्दनं षष्टिपलं प्रशस्तं
विंशत्पलं वा गुरवे प्रदत्वा ।
मृष्टान्नताम्बूल सदक्षिणाद्यैः
सन्तोष्य विप्रांश्च सुवासिनीश्च ॥ १५

सिद्धिं परां प्राप्य महर्द्धिमस्यां
श्रियः प्रसादाद्भवतीह मुक्तः ।
महेन्द्रविश्वस्य समानलक्ष्मी-
माकल्पमक्षय्यसमृद्धियुक्ताम् ॥

चिरायुरारोग्यमवाप्य विद्या-
मीशानवाचस्पति सन्निभः स्यात् ।
कन्दर्पसाहस्रसमानकान्ति-
मवाप्य पुत्रान् सुगुणाभिरामान् ॥

भुक्त्वेह भोगान् भुवि दुर्लभांश्च
शतं कुलानां नरके निमग्नम् ।
उद्धृत्य दिव्यं वररत्नभूषणं
विमानमारुह्य रविप्रकाशः ॥

तेजोमयो दिव्यविभूषणाढ्यो
समन्वितोऽसौ वरकन्यकाभिः ।
सुदुर्लभं योगिवरैरवाप्यं
प्राप्नोति लक्ष्मीपति धाम पश्चात् ॥

तृतीयायामक्षया प्रोक्ता वैशाखे मासि सिद्धिदा ।
वत्सरे वत्सरेऽवश्यं जपहोमादिकाः क्रियाः ॥ २०

उक्तेन विधिना कृत्वा दत्वाचार्यस्य दक्षिणाम् ।
कृत्वा फलप्रदानं च दत्वा च हरिचन्दनम् ॥

अक्षयां सिद्धिमाप्नोति भोगस्वर्गापवर्गदाम् ।
अक्षयं चिरमायुष्य मक्षयारोग्यमुत्तमम् ॥

अक्षयां महतीं लक्ष्मीमिन्द्रवित्तेश सन्निभाम् ।
अक्षयां महतीं विद्यां गङ्गाकल्लोल सन्निभाम् ॥

अक्षयां पुत्रपौत्रादि समृद्धिं च महत्तराम् ।
अक्षयान् दिव्यभोगांश्च मानुषानपि दुर्लभान् ॥

भुक्त्वेहान्ते महद्धाम प्राप्नोत्यक्षय मूर्जितम् ।
अक्षयाभीष्ट दातृत्वा दक्षय्यदिवसं विदुः ॥ २५

अक्षय श्रीप्राप्तिकरीं तृतीयामाहुरक्षयाम् ।
षष्टित्रिशत संख्याक तिथिष्वियमनुत्तमा ॥

शुक्लपक्षे तृतीयेयं वैशाखेऽक्षय सिद्धिदा ।
राजराजेश्वरी विद्या होम संमिश्रितां शुभाम् ॥

श्रीमदष्टार्ण विद्यायाः पुरश्चर्यामिमां शुचिः ।
अक्षयायां तृतीयायां देशिकानुज्ञया द्विजाः ॥

एकेन दिवसेनैव महतीं सिद्धिमाप्नुयात् ।
पुरश्चरणमेतद्यः करोति प्रतिवत्सरम् ॥

शुभान्येव लभेन्नित्यमसंख्याः संपदोऽपि च ।
पितॄन् सन्तारयत्येव निमग्नान्नरकेष्वपि ॥ ३०

एतत्कलेबरस्यान्ते योगिनामपि दुर्लभम् ।
प्रयाति तत्परं धाम कुल साहस्र संयुतः ॥

एकेन दिवसेनैव पुरश्चर्या शतोद्भवा ।
लक्ष्मीपति कृपा पूर्णा महती सिद्धिरीरिता ॥

अथैकस्मिन् दिवसे सिद्धि रन्याप्यत्र प्रवक्ष्यते ।
शुक्लपक्षे नभस्याख्ये वैष्णवर्क्ष समन्विता ॥

अपि गण्डेन योगेन युक्ता यद्वा सुकर्मणा ।
सौम्येन वेन्दुना युक्ता तिथिरेकादशी यदि ॥

प्रभाते वा प्रदोषे वा मध्याह्ने वाऽथ सन्ध्ययोः ।
ब्राह्मे काले निशीथे वा महायोगमिमं शुभम् ॥ ३५

लक्ष्मीनारायणं नाम्ना योगराजं वदन्ति हि ।
मुहूर्त त्रितयं वापि होरा (योग) षट्क समन्वितम् ॥

लक्ष्मीनारायणं योगं वदन्ति परमर्षयः ।
यत्किञ्चिज्जपहोमादि कर्तुरप्यस्य भूतले ॥

महालक्ष्मीपतिः साक्षात्प्रसीदति दयानिधिः ।
तप्त्वानशनमत्युग्रं वत्सरायुतमादरात् ॥

नित्यं पञ्चाग्नि मध्यस्थो यां सिद्धि महतीं लभेत् ।
ततोऽपि द्विगुणां सिद्धिमत्राचार्य पदाम्बुजे ॥

यत्किञ्चिदपि दत्वाऽसौ प्राप्नोत्येव न संशयः ।
श्रीमदष्टाक्षरीं विद्यां वर्ष साहस्रकं शुचिः ॥ ४०

अयुतं प्रत्यहं जप्त्वा हुत्वा साहस्रमन्वहम् ।
यत्फलं समवाप्नोति राजराजाख्य विद्यया ॥

एकामप्याहुतिं कृत्वा ततोऽपि द्विगुणं फलम् ।
लक्ष्मीनारायणे योगे प्राप्नोत्यत्र न संशयः ॥

लक्ष्मीनारायणो नित्यं सहस्रं ब्रह्मविद्यया ।
अभ्यर्च्य तुलसीमिश्रैः प्रत्यहं कमलोत्पलैः ॥

दत्वाऽत्र कुसुमं चैकं ततोऽपि द्विगुणं फलम् ।
प्राप्नोत्यवश्यं मतिमान् सत्यमेव द्विजर्षभाः ॥

तुलापुरुषमुख्यानि महादानानि षोडश ।
यो ददाति द्विजाग्र्येभ्यो वर्षं साहस्रमन्वहम् ॥ ४५

अत्राचार्यं पदाम्भोजे निष्कमात्रं च काञ्चनम् ।
दत्वा ततोऽपि द्विगुणमवश्यं फलमश्नुते ॥

लभ्यतेऽसौ महायोगो महाभाग्येन नान्यथा ।
व्रतक्रतुफलस्तीर्थदानकोटि फलप्रदः ॥

योगेऽस्मिन् समनुप्राप्ते निशायामह्नि वा शुचिः ।
प्रणम्याचार्यं पादाब्ज युगलं भुक्तिमुक्तिदम् ॥

देशिकानुज्ञया स्नात्वा तीर्थे सरसि वा शुचिः ।
आचार्यं चरणाम्भोज प्रक्षालित जलं पिबेत् ॥

अयोध्यानगरे चक्रे सलग्राम शिलान्विने ।
पूर्वोक्तविधिनाऽभ्यर्च्य लक्ष्मी लक्ष्मीपती विभू ॥ ५०

त्रिशताधिक साहस्रमर्चयेद्ब्रह्म विद्यया ।
अभ्यर्च्याचार्यं पादाब्ज युगलं भुक्तिमुक्तिदम् ॥

वर्षायुतं प्रतिदिनं कुसुमैर्हेमनिर्मितैः ।
त्रिशताधिक साहस्रमर्चयन् ब्रह्मविद्यया ॥

सुकृतं यदवाप्नोति तदस्मिन् योगनायके ।
एकैक पुष्पदानेन ब्रह्मविद्यां समुच्चरन् ॥

वर्षायुतार्चनफलं लभते नाऽत्र संशयः ।
तत आचार्य सान्निध्ये विधिवत्संस्कृतेऽनले ॥

तिलैर्गव्यघृताभ्यक्तैर्मधुत्रितयमिश्रितैः ।
सावित्र्या जुहुयादादावष्टोत्तरशतं बुधैः ॥ ५

श्रीमदष्टाक्षरेणाऽथ तिलैर्गव्यघृतप्लुतैः ।
सहस्रं जुहुयादग्नौ शताधिकमतःपरम् ॥

वासुदेवस्य मनुना वैष्णव्या च षडर्णया ।
अष्टोत्तरशतं हुत्वा प्रत्येकं जातवेदसि ॥

द्वादशार्णं महालक्ष्म्या शुद्धाज्येनततःपरम् ।
हुत्वा पञ्चशतं वह्नौ रश्मिभिर्जुहुयात् सकृत् ॥

राजाधिराजलक्ष्मीश विद्यया तत्परं शुचिः ।
अष्टाविंशतिधा गव्यं जुहुयाच्छतमादरात् ॥

एकविंशति संख्याक वर्ममन्त्रैरतःपरम् ।
पञ्चधा जुहुयादग्नौ शुद्धेनाज्येन साधकः ॥ ६०

हुत्वा जयादिभिः पश्चात् कृत्वा ब्रह्मार्पणाहुतिम् ।
आचार्य चरणद्वन्द्वं प्रणिपत्याऽथ सादरम् ॥

षष्टिचिह्नुक सौवर्णं पद्मरागसमन्वितम् ।
आचार्यकर्णयुगले प्रदद्यात्कुण्डलद्वयम् ।।

वस्त्रद्वयं समर्प्याथ सुसूक्ष्मं मृदुनिर्मलम् ।।
सालग्रामशिलां शुद्धां तस्य हस्ते समर्पयेत् ।

सर्वस्वं दक्षिणां दद्याद्वर्षाशिनधनं तु वा ।।
चतुर्विंशति निष्कं वा निष्क द्वादशकं तु वा ।।

अवश्यं दक्षिणां दद्यात्तन्न्यूनं न समर्पयेत् ।
एका धेनुर्बहुक्षीरा प्रदातव्या सवत्सका ।। ६५

दक्षिणा सहिता पश्चाच्चतुराढक संमिताः ।
प्रेषणीयास्तिलास्तस्य मन्दिरं सिद्धिमिच्छता ।।

इदमावश्यकं दानं कर्तव्यं भूतिमिच्छता ।
दातुं तिलानशक्तानां अन्यद्दानं तु वक्ष्यते ।।

खारीद्वयमितां भूमिं सस्यवृद्धिसमन्विताम् ।
बहुदक्षिणया युक्तां देशिकाय समर्पयेत् ।।

कुण्डलद्वितयं देयमवश्यं ब्रह्मनन्दनाः ।
मुद्रिकोदर बन्धादीनलङ्कारान् समर्पयेत् ।।

धेनुद्वादशकं दद्यात्सवत्सं दक्षिणान्वितम् ।
शालग्रामशिलां निष्क शतसाहस्र दक्षिणाम् ।। ७०

दत्वा समर्पयेत्पश्चात्तिलराशिं सदक्षिणम् ।
महादानानि चान्यानि दद्याद्राजा धनी तु वा ।।

अशक्तेनापि दातव्यं पूर्वोक्तं दानमुत्तमम् ।
योगराजे महत्यत्र लक्ष्मीनारायणाभिधे ।।

एकामप्याहुतिं कृत्वा तिलैर्मधुघृतप्लुतैः ।
कोटिशस्तिलहोमस्य फलं द्विगुणमश्नुते ।।

निष्कमात्रं सुवर्णं वा दत्वा देशिकपादयोः ।
सुवर्णमेरुदानस्य फलं प्राप्नोति शाश्वतम् ।।

अष्टाविंशतिधा हुत्वा राजराजेन गोघृतम् ।
गायत्र्या कोटि होमस्य सुकृतं साङ्गमक्षयम् ।। ७५

कोटि द्वादश संख्याक श्रीमदष्टार्ण होमतः ।
अक्षयं यत्फलं प्रोक्तं पुराणैः परमर्षिभिः ।।

रमया द्वादशार्णेन कोटि होमेन यत्फलम् ।
संपूर्णदक्षिणयायुक्त वाजिमेधायुतेन च ।।

यत्फलं वेदविहितं ततोऽपि द्विगुणं फलम् ।
लक्ष्मीनारायणे योगे प्राप्नोत्येव न संशयः ।।

ब्रह्महत्या शतेनाऽपि सुरापानायुतेन वा ।
स्वर्णस्तेय शतेनाऽपि गुरुतल्पशतेन वा ।।

अनेकजन्मसाहस्र कृतेनाऽपि विमुच्यते ।
संप्राप्यात्यन्त सौभाग्यं कन्दर्पसदृशप्रभम् ॥ ८०

शाश्वतं महदैश्वर्यं धनधान्यादि संकुलम् ।
रत्नराशि समाकीर्णमवाप्य जगतीतले ॥

भूत्वा पारङ्गतः सर्वविद्यानां जीवसन्निभः ।
विमुक्तः सकलापद्भ्यः सर्वरोगविवर्जितः ॥

दीर्घायुः सकलान् भोगान् दिव्यानपि च मानुषान् ।
कुलकोटिं समुद्धृत्य ब्रह्मानन्दरसास्पदम् ॥

शाश्वतं पदमाप्नोति साक्षान्नारायणात्मकः ।
राजराज महाविद्या साधनं सकलेष्टदम् ।
किञ्चिदुक्तमिदं विप्रा भूयोऽप्यत्र प्रवक्ष्यते ॥

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे वेदसारार्थसंग्रहे राजराजविद्या माहात्म्ये उत्तरभागे द्विचत्वारिंशोऽध्यायः ॥

---

# अथ त्रिचत्वारिंशोऽध्यायः ॥



**श्रीभगवानुवाच-**

शृणुध्वं योगिनां श्रेष्ठा ब्रह्मपुत्रा दृढव्रताः ।
राजराज महाविद्या शेष माहात्म्यमुत्तमम् ॥

आचार्यानुस्मृतिः पूर्वं ब्राह्मे काले दिने दिने ।
ब्रह्मविद्यानुसन्धानं यथाशक्त्या ततःपरम् ॥

भगवद्रश्मिमालाया अनुस्मरणमप्यथ ।
श्रीदेवी रश्मिविद्यानां स्मरणं च ततःपरम् ॥

ललितानुस्मृतिः पश्चादष्टाविंशतिधाऽपि वा ।
गायत्र्युपासना पश्चान्नित्यहोमस्ततःपरम् ॥

श्रीमदष्टाक्षरोपास्ति रङ्गविद्या समन्विता ।
श्रियःपञ्चदशार्णाया उपास्तिश्च दिने दिने ॥ ५

राजराजमहाविद्योपासना प्रत्यहं ततः ।
सहस्रार्णमहाविद्या द्वयोपास्तिस्ततःपरम् ॥

ब्राह्मे कालेऽथवा प्रातर्मध्याह्ने वाऽपि सन्ध्ययोः ।
वर्मणो वैष्णवस्याथ पठनं प्रत्यहं तथा ॥

यज्ञेश्वर महाविद्योपास्तिस्सायमतःपरम् ।
संपूर्णोपास्तिरित्युक्ता सर्वसिद्धिकरी शुभा ॥

ब्रह्मविद्या जपो ब्राह्मे काले श्रीपादुकास्मृतिः ।
भगवद्रश्मिसूक्तस्य स्मरणं च ततःपरम् ॥

सन्ध्योपास्तिरथ प्रोक्ता नित्यहोमस्ततःपरम् ।
श्रीमदष्टाक्षरी विद्या जपो नित्यं सहस्रशः ॥ १०

अथ पञ्चशतं वाऽपि शतत्रयमथाऽपि वा ।
वासुदेवादि विद्यानां यथाशक्त्योत्तमो जपः ॥

श्रीद्वादशार्णविद्याया राज्यलक्ष्म्या जपोऽथवा ।
चतुःशतं पञ्चशतं त्रिशतं वा शतं तु वा ॥

श्रियःपञ्चदशाक्षर्या शतत्रय जपोन्वहम् ।
अष्टोत्तरशतं नित्यमष्टाविंशतिधाऽपि वा ॥

अनुत्तर ब्रह्मविद्या स्मरणं च ततःपरम् ।
यज्ञेश्वर महाविद्या स्मरणं सायमप्यथ ॥

पक्षान्तरमिदं प्रोक्तं सम्पूर्णफलसिद्धिदम् ।
ब्रह्मविद्या जपो नित्यं सन्ध्योपास्तिरतःपरम् ॥ १५

नित्यहोमस्ततः श्रीमदष्टार्णोपासना तथा ।
वासुदेवस्य वैष्णव्या यथाशक्त्या जपोऽन्वहम् ॥

प्रसन्नलक्ष्म्याः कमला द्वादशार्णस्यान्वहम् ।
अष्टोत्तरशतं वाऽपि यावच्छक्य जपोऽथवा ॥

अष्टाविंशतिधा राजराजविद्या जपस्ततः ।
सहस्रार्णं महाविद्या द्वयस्यापि सकृज्जपः ॥

वर्मणो वैष्णवस्याऽथ जपस्त्वेधैकधाऽपि वा ।
सायमष्टादशक्षर्या यावच्छक्य जपोऽन्वहम् ॥

अशक्तानामियमपि पूर्वोपास्तिरुदीरिता ।
राजराज महाविद्या स्मरणं येन सन्ततम् ॥ २०

अष्टाविंशतिधा वाऽपि दश द्वादशधाऽपि वा ।
क्रियते येन संपूर्णोपासना जनितं फलम् ॥

लभ्यते नाऽत्र सन्देहस्सत्यमेव मयोच्यते ।
अनधीत श्रुतिरपि यागहीनोपि वान्वहम् ॥

श्रौताग्निहोत्रहीनोऽपि राजराजेश्वरीं पराम् ।
लक्ष्मीनारायणीं विद्यां जप्त्वा सर्वश्रुतिष्वपि ॥

प्रजप्त्वाऽथ यथाशक्त्या गुरुभक्तो दृढव्रतः ।
पारायणफलं नित्यं वेदानां साङ्गमादरात् ।
अनधीतोऽपि वाऽऽप्नोति प्रत्यहं नात्र संशयः ॥

एकामप्याहुतिं कृत्वा राजराजाख्य विद्यया ।
वाजपेयफलं नित्यं लभते पूर्णदक्षिणम् ॥ २५

राजराजमहाविद्या स्मृतेरन्वहमादरात् ।
सप्तकोटिमहामन्त्र जपहोमादिभिर्विना ॥

पुरश्चरण संसिद्धा भवन्त्यस्य न संशयः ।
एकादशी शुक्लपक्षे व्यतीपातसमन्विता ॥

भृगुवासर संयुक्ता चित्रानक्षत्र संयुता ।
प्रसन्नलक्ष्मीयोगोऽयं दुर्लभो जगतीतले ॥

वर्षैर्द्वादशभिर्योगः प्राप्यतेऽयं सनातनः ।
योगेषु च व्यतीपातः श्रेष्ठः सकलसिद्धिदः ॥

वारेषु भार्गवो वारस्तिथिष्वेकादशी शुभा ।
सर्वतारेषु चित्राख्यो योगोऽयं दुर्लभो भुवि ॥ ३०

ब्रह्मतादात्म्य संसिद्धिप्रदोऽयमखिलेष्टदः ।
अत्र होमजपादीनि यः करोति जितेन्द्रियः ॥

तस्य नारायणः स्वामी राज्यलक्ष्मीसमन्वितः ।
प्रसीदति न संदेहस्सत्यं सत्यं मयोच्यते ॥

लक्ष्मीः सकलभक्तानां प्रसन्ना कमलालया ।
इष्टार्थदा भवत्येव व्रतकर्तुर्हरिप्रिया ॥

समस्तजगतां नाथः साक्षी नारायणः स्वयम् ।
वदत्यसकृदेवेष्ट भक्तान् वैकुण्ठमन्दिरे ॥

प्रसन्नकमलायोगे संप्राप्ते योगनायके ।
यो ममाष्टार्णया राजराजमन्त्रेण वाद्भुतम् ॥ ३५

जुहोति सुसमिद्धेऽग्नौ यत्किञ्चिदपि काञ्चनम् ।
देशिकांघ्रियुगे दद्यात्सिद्धानामधिपो भवेत् ॥

भृत्यानामग्रगण्यत्वं महद्दास्यामि मत्पदे ।
चिच्छक्तिर्मदभिन्नेयं महालक्ष्मीस्त्रयीमयी ॥

प्रसीदत्यस्य भक्तस्य सत्यमेव न संशयः ।
प्रसन्नलक्ष्मी योगोऽत्र संप्राप्ते सर्वसिद्धिदे ॥

देशिकानुज्ञया स्नात्वा नित्यकर्म समाप्य च ।
संस्कृते पावके पश्चात् श्रीमदष्टार्णविद्यया ॥

त्रिशताधिक साहस्रं जुहुयात्कापिलं घृतम् ।
नीलधेन्वाज्यमथवा शुद्धं गव्यघृतं तु वा ॥ ४०

हुत्वाऽथ वासुदेवस्य मनुनाष्टोत्तरं शतम् ।
हुत्वाऽथ विष्णुमन्त्रेण शतमष्टोत्तरं हुनेत् ॥

द्वादशार्णश्रिया पश्चाद्राज्यलक्ष्म्याऽथवा ततः ।
हुत्वा पञ्चशतं वह्नौ राजराजाख्यविद्यया ॥

हुनेदष्टोत्तरशतमष्टाविंशतिधाऽपि वा ।
भगवद्धर्ममन्त्रैश्च पञ्चधा जुहुयाद्घृतम् ॥

ततो जयादिभिर्हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
अग्निं प्रदक्षिणीकृत्य नत्वा देशिकपादयोः ॥

गन्धपुष्पैरलंकृत्य धेनुद्वितयमादरात् ।
बहुक्षीरसमायुक्तं सवत्सदक्षिणान्वितम् ॥ ४५

अर्पयेद्दक्षिणा तत्र वर्षाशनमितं धनम् ।
तदर्धं वा तदर्धं वा सुवर्णद्वितयं तु वा ॥

आचार्यदयितां वस्त्रैरलङ्कारैः समर्चयेत् ।
महतीं सिद्धिमाप्नोति किमन्यैर्बहुभाषणैः ॥

पुष्यमासे पौर्णमास्या मर्कवारो भवेद्यदि ।
नक्षत्रं यदि पुष्याख्यं स योगो राजनामकः ॥

अमृतेश्वर नामाऽयं महालक्ष्मीपतिप्रियः ।
सोमस्याग्रहणं तत्र यदि स्याद् ब्रह्मनन्दनाः ॥

महाचिन्तामणिर्नाम्ना योगोऽयं दुर्लभो भुवि ।
दिवसत्रितयं तस्मात्पूर्वं नित्यं जितेन्द्रियः ॥ ५०

अधःशायी हविष्याशी श्रीमदष्टाक्षरं मनुम् ।
सहस्रं प्रजपेत्तत्र नित्यं पञ्चशताधिकम् ॥

वासुदेवमहाविद्यां वैष्णवीं च षडक्षरीम् ।
अष्टोत्तरशतं जप्त्वा द्वादशार्णं महामनुम् ॥

प्रसन्नलक्ष्मीमथवा नित्यं पञ्चशतं जपेत् ।
राजराज महाविद्यामष्टोत्तरशतं जपेत् ॥

अष्टाविंशतिधा यद्वा संप्राप्ते चन्द्रपर्वणि ।
स्नात्वा तत्र विशुद्धात्मा नत्वा देशिकपादयोः ॥

संस्कृत्य विधिवद्वह्निं तत्रावाह्य श्रियःपतिम् ।
अष्टाविंशतिधा वेदमात्राऽऽदौ गोघृतं हुनेत् ॥

घृतमिश्रैस्तिलैः पश्चाच्छताधिकसहस्रकम् ।
श्रीमदष्टार्णया हुत्वा वासुदेवस्य विद्यया ॥

हुत्वा द्वादशधा वह्नौ वैष्णव्या विद्ययाऽप्यथ ।
द्वादशाक्षर लक्ष्म्या वा राजलक्ष्म्याऽथवा ततः ॥

त्रिशतं जुहुयादाज्यं शुद्धमेव शतं तु वा ।
अष्टाविंशतिधा हुत्वा सुन्दरीवल्लभाख्यया ॥

जयादिभिस्ततो हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
नमस्कृत्य च साष्टाङ्गं प्रदक्षिणपुरस्सरम् ॥

अग्निं प्रज्वलितं पश्चान्नत्वाऽऽचार्यपदद्वयम् ।
संतप्तहेमरचितं षष्टिचिह्नकमानकम् ॥

अवश्यं कुण्डलद्वन्द्वं देशिकाय समर्पयेत् ।
दिव्यालङ्करणैर्वस्त्रैरप्यभ्यर्च्याथ देशिकम् ॥

सर्वस्वमर्पयेद्धीमान् यच्च यावद्गृहे स्थितम् ।
वर्षाशनमितं द्रव्यमथवा गुरवेऽर्पयेत् ॥

चतुर्विंशतिनिष्कं वा तदर्धं वा समर्पयेत् ।
अवश्यं वसुधां दद्यात् बहुसस्य समाकुलाम् ॥

सालग्रामशिला दद्याद्यावच्छक्य सदक्षिणाम् ।
धेन्वादिदशदानानि श्रोत्रियेभ्यस्समर्पयेत् ॥

तुला हिरण्यगर्भादिदानं दद्यान्महीपतिः ।
चिन्तामण्यभिधे योगे त्रैलोक्येनापि दुर्लभे ॥ ६५

यद्यत्करोति तत्सर्वमनन्तफलदं स्मृतम् ।
महालक्ष्मीधिया साक्षाद्देशिकस्य प्रियामथ ॥

वासोभिरप्यलङ्कारैरर्चयेत्साधकोत्तमः ।
अशक्तो मन्दभाग्योऽपि भिक्षित्वाशूद्रकानपि ॥

यावच्छक्यमलङ्कारं दत्वा देशिककर्णयोः ।
एकं वासस्समर्प्याथ नवं सूक्ष्मं मृदुस्फुटम् ॥

निष्कद्वादशकं दद्यात् षण्णिष्कमथवाऽर्पयेत् ।
साक्षाल्लक्ष्मीधिया चार्यपत्न्यै वासः सुनिर्मलम् ॥

दत्वाऽलङ्करणं यावच्छक्यं दद्याद्द्विजोत्तमाः ।
आचार्यपुत्रपौत्रादीनपि संपूजयेत्तदा ॥ ७०

प्रसर्पकेभ्यो विप्रेभ्यः प्रदद्याद्दक्षिणामथ ।
चन्द्रं राहुमुखान्मुक्तं दृष्ट्वा स्नायात् ततःपरम् ॥

परेद्युर्ब्राह्मणा भोज्यास्सुवासिन्योऽर्कसंख्यया ।
चन्द्रपर्वणि वा भानुग्रहणे वा द्विजोत्तमैः ॥

सालग्रामशिलाऽवश्यं दातव्या दक्षिणान्विता ।
इत्थं कृत्वा नरश्चन्द्रग्रहणे वार्कपर्वणि ॥

अनेककोटिब्रह्माण्ड साङ्गदानफलं लभेत् ।
संपूर्णदक्षिणायुक्त पुरश्चर्या शतस्य च ॥

श्रीमदष्टाक्षरीसिद्धिं प्राप्नोत्येव महत्तराम् ।
असाध्यमपि देवानां महर्षीणां च दुर्लभम् ॥ ७५

प्राप्नोति सकलाभीष्टमैश्वर्यं चाणिमादिकम् ।
अव्याहताज्ञः सर्वत्र सिद्धो भवति साधकः ॥

तं मानयन्ति शक्राद्या दिक्पालाश्च महर्षयः ।
कन्दर्पसदृशी कान्ती राजराजसमः श्रियम् ॥

गङ्गातरङ्गसदृशीं विद्यां च धिषणोपमाम् ।
स्वच्छन्दमरणं जातिस्मरणं चापुरुत्तमाम् ॥

पुत्रपौत्रादिसंपत्ति भोगानष्टविधानपि ।
दत्वा नारायणं साक्षाद्यावज्जीवं जगत्पतिः ॥ ८०

देहान्ते स्वपदं तस्मै प्रयच्छत्यचलं शुभम् ।
अमावास्या पुष्यमासे सोमवासरसंयुता ॥

व्यतीपातसमायुक्तं वैष्णवर्क्षसमन्विता ।
नाम्ना महोदयः प्रोक्तो योगोऽयं भगवत्प्रियः ॥

यद्यर्कवासरोऽत्र स्यादर्धोदय इति स्मृतिः ।
योगद्वयमिदं पुण्यं दुर्लभं भुवनत्रये ॥

चतुर्विंशतिभिर्वर्षैः वर्षद्वादशकेन वा ।
लभ्यते योगराजोयमर्कपर्वशतप्रभः ॥

एतत्पर्वसमं नास्ति पाताले दिवि वा भुवि ।
अत्र यद्यच्छुभं कर्म क्रियते साधकोत्तमैः ॥ ८५

रविपर्वसहस्रेऽपि कृतं तत्सदृशं न हि ।
अर्धोदये महायोगे योगेवाऽपि महोदये ।
फलं न शक्यते वक्तुं कृतस्य शुभकर्मणः ॥

अर्धोदये वापि महोदये वा
जपस्य होमस्य गुरोः पदाब्जे ।
दानस्य कर्तुः सुकृतं हि वक्तु-
मनन्तदेवेन न शक्यतेऽपि ॥

सहस्रशीर्षा भगवाननन्तः
पञ्चाननो वा जगतामधीशः ।
चतुर्मुखो जलजातजन्मा
षडाननो वा गिरिशस्य पुत्रः ॥

महोदये पुण्यफलं प्रवक्तुं
शक्ता न सर्वेऽपि भवन्ति देवाः ।
महोदये योगवरेऽत्र सम्यक्
स्नात्वा सदाऽऽचार्यपदं प्रणम्य ॥

श्रीविष्णुवर्मापि सकृज्जपित्वा
नारायणं पश्यति सार्वभौमम् ॥

महोदयाभिधे योगे योगे वार्धोदयाभिधे ।
यत्किञ्चिदपि वा कृत्वा होमदानादिकं शुभम् ॥ १०

कोटि कोटि पुरश्चर्या फलं प्राप्नोति शाश्वतम् ।
अत्रावश्यं देशिकांघ्रियुगे निष्कं समर्प्य वा ॥

मेरुसहस्रदानस्य फलं प्राप्नोत्यसंशयम् ।
महोदय समो योगो नास्ति नास्ति महीतले ॥

एकाहुत्याऽपि सदृशं पुण्यं नास्त्यत्र भूसुराः ।
मेरुदानं च निष्कस्य दानेनाऽत्र समं न हि ॥

तद्विधानं प्रवक्ष्यामि शृणुध्वं ब्रह्मनन्दनाः ।
महोदयाभिधे योगे संप्राप्तेऽर्धोदयेऽपि वा ॥

सामुद्रेणाम्भसा स्नानं तत्र कर्तव्यमादरात् ।
अथ भागीरथी गोदा यमुनाद्युदकेन वा ॥ १५

स्नातव्यं सर्वपापानां निवृत्त्यर्थं समाहितैः ।
तत्र प्रातः समुत्थाय नत्वा देशिकपादयोः ॥

प्रातःस्नात्वा विशुद्धात्मा नित्यं सन्ध्यामुपास्य च ।
ततः स्वगृहमागत्य संप्रतिष्ठाप्य पावकम् ॥

कापिलाज्यं समादाय शुद्धगव्याज्यमेव वा ।
अष्टाविंशतिधा हुत्वा सावित्र्यादौ घृतं गवाम् ॥

अष्टाविंशतिधा ब्रह्मविद्ययाऽपि घृतं हुनेत् ।
लक्ष्मीपतिं जगन्नाथं नारायणमनामयम् ॥

तत्रावाह्य समिद्धेऽग्नौ शताधिकसहस्रकम् ।
गव्यमाज्यं हुनेत्पश्चाच्छ्रीमदष्टार्णविद्यया ॥ १००

वासुदेवेन मनुना विष्णोरथ षडर्णया ।
अष्टाविंशतिधा हुत्वा प्रत्येकं जातवेदसि ॥

श्रीद्वादशार्णमन्त्रेण राज्यलक्ष्म्याऽथवा ततः ।
त्रिशतं जुहुयादाज्यं राजराजाख्यविद्यया ॥

अष्टाविंशतिधा हुत्वा वर्ममन्त्रैरतःपरम् ।
पञ्चधा जुहुयादग्नौ हुत्वा तत्र जयादिभिः ॥

प्रायश्चित्ताहुतीः कृत्वा कृत्वा ब्रह्मार्पणाहुतिम् ।
अग्निं प्रदक्षिणीकृत्य नत्वा देशिकमादरात् ॥

सर्वस्वमर्पयेद्धीमानलङ्कृत्य ततःपरम् ।
वासोभिः भूषणैः पश्चात् बहुक्षीरां सवत्सकाम् ॥ १०५

अवश्यमर्पयेद्धेनुं बहुसस्य समन्विताम् ।
दद्यादवश्यं वसुधां दशदानान्यतःपरम् ॥

दत्वा द्विजातिवर्येभ्यो देशिकस्य प्रियामथ ।
अलङ्कुर्यात्तप्तहैमैः भूषणैः वस्त्रसंचयैः ॥

समर्पयेन्महादानान्यथ भूपो यदि स्वयम् ।
अथवा देशिकं नत्वा यथाशक्त्या च भूषणम् ॥

दत्वा सुसूक्ष्मं वासोऽपि वर्षाशनमितं धनम् ।
चतुर्विंशति निष्कं वा तदर्धं वा तदर्धकम् ॥

वित्तलोभं परित्यज्य दद्याद्देशिकपादयोः ।
गुरुपत्न्यै रमाबुद्ध्या चतुःषष्टिफलं शुभम् ॥ ११०

कांस्यपात्रं तदर्धं वा फलराशिसमन्वितम् ।
स्वर्णालङ्करणोपेतं सूक्ष्मवस्त्रसमन्वितम् ॥

दक्षिणासहितं दद्यादवश्यं साधकोत्तमः ।
प्रसर्पकेभ्यो विप्रेभ्यो यथाशक्त्या च दक्षिणाम् ॥

दत्वा सुवासिनीरेकविंशत्संख्या मनोहराः ।
भोजयेद्विप्रवर्यांश्च ततः पञ्चदशापि वा ॥

दक्षिणाभिश्च ताम्बूलैस्तोषयित्वा ततःपरम् ।
गुरुपुत्रप्रपौत्रादीन् मिष्टैरन्नैश्च तोषयेत् ॥

देशिकानुज्ञया पश्चाद्भुञ्जीयाद्बन्धुभिस्सह ।
इत्थं महोदये कृत्वा पुरश्चरणमादरात् ॥ ११५

अर्धोदये वा कृत्वेत्थं सिद्धिं प्राप्नोति शाश्वतीम् ।
जन्मकोटि सहस्रोत्थैरपि पातकराशिभिः ॥

सद्यो विमुच्यतेऽवश्यं पुण्यराशियुतो भवेत् ।
तन्मासे जगतां नाथं ब्रह्मेशानादिभिर्वृतम् ॥

पश्यत्येव स्वचक्षुर्भ्यां लक्ष्मीसहितमच्युतम् ।
भगवत्कलयापूर्णः समग्रसुकृतान्वितः ॥

असाध्यमपि देवानामसाध्यं योगिनामपि ।
समस्ताभीष्टमासाद्य श्रियं चापि महत्तराम् ॥

धनधान्यपशुव्रातसंकुलां धनदोपमाम् ।
अचलां समनुप्राप्य सन्तति व्यापिनीमपि ॥ १२०

पारङ्गतोऽसौ विद्यानां शास्त्राणामपि पारगाः ।
अवाप्य दीर्घमायुष्यं भोगानपि सुदुर्लभान् ॥

चिरं जातिस्मरो भूत्वा ब्रह्म दृष्ट्वा सनातनम् ।
स्वच्छन्दमृत्युर्देहान्ते दिव्यकन्याशतान्वितः ॥

कुलकोटिं समुद्धृत्य प्रयाति परमं पदम् ।
राजाधिराजविद्यायाः श्रीमदष्टाक्षरस्य च ॥

साधनानि न शक्यन्ते मया वक्तुं द्विजर्षभाः ।
श्रीरामानुज्ञया सर्वे योगिनोऽपि महर्षयः ॥

तत्तच्छास्त्रेषु वक्ष्यन्ति स्वप्रबुद्ध्या द्विजर्षभाः ।
सुगुप्तमपि युष्मभ्यं मयैतत्कथितं द्विजाः ।
राजाधिराजविद्यायाः श्रीमदष्टाक्षरस्य च १२५

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे कापिल तन्त्रे उत्तरभागे
त्रिचत्वारिंशोऽध्यायः ॥

---

## अथ चतुश्चत्वारिंशोऽध्यायः ॥

श्रीभगवानुवाच —

सुगुप्तमपि वक्ष्यामि साधनं ब्रह्मनन्दनाः ।
यत् श्रुत्वाऽपि द्विजो भूमौ जीवन्मुक्तः सुखी भवेत् ॥

योऽसौ बदरिकारण्ये धर्मपुत्रो महातपाः ।
ऋषिर्नारायणो योगी शाश्वतः शङ्करोऽच्युतः ॥

नरेण सहितः सर्वलोकानां हितकाम्यया ।
स एव विन्ध्यदेशस्थ जनानामपि भूतले ॥

आविरासीन्महायोगी क्षेत्रे श्रीपुरुषोत्तमे ।
मुक्तिदो दर्शनादेव नराणामत्र सन्ततम् ॥

स एव मथुरायां च द्वारकायामभूद्धरिः ।
मुक्तिदः सर्वमर्त्यानां भूतले दर्शनादपि ॥ ५

नरनारायणी विद्या समस्ताघविभेदिनी ।
अस्मिन् तन्त्रे पुरा प्रोक्ता सद्यः प्रत्ययकारिणी ॥

पुण्ये बदरिकारण्ये मथुरायामथापि वा ।
द्वारकानगरे वाऽपि क्षेत्रे वा पुरुषोत्तमे ॥

एवमेव प्रवक्ष्यामि साधनं सर्वसिद्धिदम् ।
एतेष्वन्यतमं क्षेत्रमागत्य नियतव्रतः ॥

आचार्यं सन्निधीकृत्य तदनुज्ञापुरःसरम् ।
स्नात्वा प्रातर्विशुद्धात्मा नित्यं सन्ध्यामुपास्य च ॥

गायत्रीं बहुशो जप्त्वा सहस्रं त्रिशतं तु वा ।
नित्यहोमं समाप्याऽथ श्रीमदष्टाक्षरीं शुभाम् ॥ १०

सहस्रं प्रजपेद्धीमान् शताधिकमथादरात् ।
वासुदेव महाविद्यां वैष्णवीं त्रिशतं जपेत् ॥

जपेत्पञ्चशतं नित्यं प्रसन्न कमलामनुम् ।
द्वादशार्णं श्रियं वापि राजराजेश्वरीमथ ॥

अष्टाविंशतिधा जप्त्वा वर्म नारायणात्मकम् ।
पञ्चविंशतिधा नित्यं जपेत्पश्चाहमादरात् ॥

भगवद्दर्शनं कृत्वा भगवन्मन्दिरे ततः ।
नरनारायणीं विद्यां जपेदष्टोत्तरं शतम् ॥

उत्सवं प्रत्यहं कुर्याद् भगवन्मन्दिरे ततः ।
एकभुक्ताशनो नित्यं फलाशी वा हविष्यभुक् ॥ १५

इत्थं पञ्चदिनं कृत्वा प्रातः षष्ठेह्नि सुव्रतः ।
स्नात्वा देशिक पादाब्ज प्रक्षालितजलं पिबेत् ॥

सन्ध्यां समाप्य विधिवन्नित्यहोममतः परम् ।
आचार्यसन्निधावग्निं प्रतिष्ठाप्य समाहितः ॥

कापिलाज्यं समादाय गव्याज्यं वाऽथ निर्मलम् ।
अष्टाविंशतिधा पूर्वं सावित्र्या ज्वलितेऽनले ॥

हुत्वाऽथ द्वादशाक्षर्या तथैव जुहुयाद् घृतम् ।
श्रियं नारायणं पश्चात्समावाह्य यतव्रतः ॥

उपचारैस्समभ्यर्च्य पञ्चाशन्मिथुनैः शुभैः ।
एकैकामाहुतिं कृत्वा श्रीमदष्टार्णविद्यया ।
सहस्रं जुहुयादाज्यं शताधिकमतः परम् ॥ २

वासुदेवस्य मनुना वैष्णव्या च षडर्णया ।
अष्टोत्तरशतं हुत्वा प्रत्येकं जातवेदसि ॥

श्रीद्वादशार्णया पश्चात्प्रसन्नरमयाऽपि वा ।
त्रिशतं जुहुयादाज्यमष्टाविंशाधिकं ततः ॥

भगवद्रश्मि विद्याभिर्घृतमेकैकशो हुनेत् ।
राजाधिराज मनुनाप्यष्टाविंशतिधा घृतम् ॥

हुत्वाऽथ वर्ममन्त्रैश्च पञ्चधा जुहुयाद् घृतम् ।
नरनारायणमहा विद्यया च ततः परम् ॥

अष्टोत्तरशतं हुत्वा कृत्वा होमं जयादिभिः ।
प्रायश्चित्तायाथ हुत्वा कृत्वा ब्रह्मार्पणाहुतिम् ॥ २५

पावकं प्रणिपत्याऽथ स्वाचार्यं चरणद्वयम् ।
एकान्ते प्रणिपत्याऽथ साष्टाङ्गं दण्डवच्छुचिः ॥

अलंकृत्य यथान्यायं कुण्डलाद्यैः सुवाससा ।
अर्पयेदक्षयं वित्तराशिं तत्पादपङ्कजे ॥

रत्नराशिं च दत्वाऽथ समर्प्य च वसुन्धराम् ।
महालक्ष्मीधिया तस्य पत्न्या अपि च भूषणम् ॥

असान्निध्येऽपि संकल्प्य सूक्ष्मं वासोऽपि निर्मलम् ।
दासीदासगजाश्वादीन्यपि गुरवेऽर्पयेत् ॥

अशक्तश्चाप्ययथाचार्यं पादाब्जं प्रणिपत्य च ।
यावच्छक्यमलङ्कारं हुत्वा तत्कर्णयोः शुभम् ॥ ३०

परिधानोत्तरीयार्थं वासो युग्मं समर्प्य च ।
शतनिष्कमितद्रव्यं दद्याद्देशिकपादयोः ॥

तदर्धं वा तदर्धं वा वित्तशाठ्य विवर्जितः ।
तन्न्यूनदक्षिणां दत्वा सिद्धिं नाप्नोति शाश्वतीम् ॥

कन्दुकनकचिन्ताक ताटङ्कं कनकं तु वा ।
यथाशक्त्याऽथवा दद्यात्तत्पत्न्यै भूषणं शुभम् ॥

प्रत्याम्नाय सुवर्णं वा वस्त्रयुक्तं समर्पयेत् ।
प्रसर्पकेभ्यः दद्याच्च यावच्छक्त्याऽथ दक्षिणाम् ॥

पञ्चविंशति संख्याका अथ पञ्चदशापि वा ।
सुवासिन्यो द्विजाग्र्याश्च भोजनीयास्ततःपरम् ॥ ३५

कृत्वा महोत्मवं तत्र स्वाचार्यानुज्ञया हरेः ।
भोक्तव्यं देशिकानुज्ञा पुरःसरमतःपरम् ॥

इत्थं बदरिकारण्ये मथुरायामथापि वा ।
द्वारका नगरे वापि क्षेत्रे वा पुरुषोत्तमे ॥

षडहाख्यं व्रतं पुण्यं सद्यः प्रत्ययकारकम् ।
दिनत्रितयमध्येऽसौ साक्षात्स्वप्नेऽपि वा हरिम् ॥

नरेण सहितं साक्षान्नारायणात्मजं विभुम् ।
लक्ष्मीसहायं वसुधा नीलादेवी समन्वितम् ॥

सुन्दरीवल्लभं ब्रह्मरुद्रशक्रादिभिः वृतम् ।
विनतातनयारूढं शङ्खचक्रादिचिह्नितम् ॥ ४०

पश्यत्येव न संदेहस्तदारभ्य जगत्पतेः ।
कलेबरे विशत्यस्य दिव्या भगवतः कला ॥

अणिमादिगुणैश्वर्यं पूर्वजातिस्मृतिः शुभा ।
धनधान्ययुता लक्ष्मीः सन्तति व्यापिनी शुभा ॥

विशत्यस्य शरीरेऽपि सत्यं सत्यं न संशयः ।
वत्सरे वत्सरे तस्य दत्तात्रेयादि योगिनः ॥

साक्षाद् दृष्टा भविष्यन्ति वरदाः स्युर्न संशयः ।
अयं दाशरथिः साक्षाद् भगवान् पुरुषो विभुः ॥

शब्दब्रह्ममयो विष्णुर्लक्ष्मीपतिरधोक्षजः ।
अनुग्रहाय लोकानां सुवर्णमुखरी तटे ॥ ४५

ऋषिभिर्देवतासंघैः प्रार्थितस्सर्वधातृभिः ।
अनन्तशयनो योगी शेषाद्रावञ्जनाजले ॥

आविरासीज्जगत्कर्ता जानकी सहितः पुमान् ।
तमेनं वायुपुत्राद्या अञ्जनाचलनायकम् ॥

वेङ्कटेशमिति ख्यातं सेवन्ते जगतां पतिम् ।
अयोध्यानगरे पीठं तस्याभूदञ्जनाचले ॥

श्रीरङ्गधाम यत्प्रोक्तं तत्रापि भगवानसौ ।
रामो दाशरथिः स्वामी रङ्गनाथ इति स्मृतः ॥

तत्राप्ययोध्यानगरं चक्रं सिम्हासनं शुभम् ।
तत्र तिष्ठति विश्वेशो रामोऽसौ रङ्गनायकः ॥ ५०

पुरमेतदयोध्याख्यं दर्शनान्मुक्तिदायकम् ।
द्वितीयं नैमिशारण्यं सद्यो मुक्तिफलप्रदम् ॥

तृतीयं श्रीनिवासाख्यं भवबन्धविमोचनम् ।
चतुर्थं रङ्गधामाख्यं मुक्तिक्षेत्रमुदीरितम् ॥

श्रीनिवासाभिधा विद्या तिष्ठत्येका त्रयीमयी ।
सर्वपीठमयी सर्वविद्याधर्मं तपोमयी ॥

श्रीमदष्टार्णविद्यान्ते श्रीनिवासाभिधं मनुम् ।
यत्र कुत्रापि यो नित्यं प्रजपेन्नियतव्रतः ॥

स कीकटेष्वपि मृतो मृतोऽयोध्यापुरे भवेत् ।
श्रीनिवासमहाविद्यां क्षेत्रेष्वेतेषु यः शुचिः ॥ ५५

प्रजपत्येकरात्रं वा स सिद्धो भवति ध्रुवम् ।
श्रीनिवासमहाविद्या सद्यः प्रत्ययकारिणी ॥

सर्वसिद्धिकरी ज्ञेया पातकौघविभेदिनी ।
श्रीनिवास महाविद्यामाचार्यवदनाम्बुजात् ॥

गृहीत्वा प्रजपेद्यस्तु ससिद्धाधिपतिर्भवेत् ।
श्रीनिवास महाविद्या भवबन्ध विमोचनी ॥

आयुरारोग्यजननी समस्तैश्वर्यसिद्धिदा ।
श्रीनिवासेति यो नाममात्रं वा प्रत्यहं स्मरेत् ॥

तस्य स्युः सिद्धयः सर्वा जपहोमादिभिर्विना ।
श्रीनिवासाभिधं क्षेत्रं श्रीनिवासो जगत्पतिः ॥ ६०

श्रीनिवास महाविद्या त्रयमेतत्सुदुर्लभम् ।
स्मरणाच्छ्रीनिवासस्य यत्र कुत्रापि सन्ततम् ॥

विमुक्तः पापराशिभ्यः ब्रह्म पश्यति तत्परम् ।
अर्चनाच्छ्रीनिवासस्य त्रिदिनं वा द्विजोत्तमाः ॥

ब्रह्मरुद्र महेन्द्राद्यैरप्यत्र स पूज्यते ।
दर्शनाच्छ्रीनिवासस्य विमुक्तः पापराशिभिः ॥

साक्षात्पश्यति चक्षुर्भ्यां आत्मानं ब्रह्मरूपिणम् ।
श्रीनिवास महाविद्या जपतः प्रत्यहं शुचिः ॥

इहाप्यैन्द्रीं श्रियं भुक्त्वा परमे धाम्नि मोदते ।
अस्मिन्नयोध्या नगरे नैमिषेऽपि महावने ॥ ६५

क्षेत्रे श्रीरङ्गधामाख्ये शेषाद्रावप्यसौ द्विजाः ।
रामो दाशरथिः श्रीमान् परब्रह्ममयो विभुः ॥

नारायणो जगत्स्वामी श्रीनिवासाभिधान्वितः ।
क्षेत्रेष्वेतेषु सततं सर्वसिद्धिकरो शुभा ॥

श्रीनिवास महाविद्या जप्तव्यावश्यमिष्टदा ।
आदौ त्रयीमयीबीजं प्रणवाख्यं महत्तरम् ॥

वान्तं वह्निसमारूढं बिन्दुवामाक्षिसंयुतम् ।
श्रियोऽपि तन्महाबीजं तदनन्तरमुच्चरेत् ॥

स दीर्घं शिवबीजं च वह्निबिन्दुसमन्वितम् ।
मायाबीजमिदं पश्चाच्चतुर्थं मन्मथाक्षरम् ॥ ७०

बिन्दुहीनं श्रियो बीजं निवासाय हृदान्वितम् ।
त्रयोदशार्णविद्येय वह्निपत्नी समन्विता ॥

सर्वविद्या महाराज्ञी समस्तफलदायिनी ।
अणिमादिगुणैश्वर्यं प्रदाऽऽयुष्यविवर्धनी ॥

विद्यामेतां पुरा साक्षादनन्तवदनाम्बुजात् ।
नारदो भगवान् प्राप्य ब्रह्मपुत्रो महत्तपाः ॥

जप्त्वा सर्वज्ञतां प्राप्य देवतैरपि पूजितः ।
अणिमादिगुणान् प्राप्य त्रैलोक्ये सञ्चरत्यसौ ॥

तस्मादस्या ऋषिर्योगी नारदो भगवानभूत् ।
अविनाभाव सम्बन्धात् श्रीदेव्या जगतीपतिः ॥ ७५

श्रीनिवास इति प्रोक्तो रामोऽसौ परमेश्वरः ।
मुक्तिलक्ष्मीनिवासोऽयं श्रीनिवासः परात्परः ॥

स्वाराज्यश्रीनिवासोऽयं श्रीनिवासो जगत्पतिः ।
महालक्ष्मीनिवासोयं श्रीनिवास इति स्मृतः ॥

राज्यलक्ष्मी निवासोऽयं श्रीनिवास इतीरितः ।
श्रीनिवास महामन्त्रं त्रयीसारं महोदयम् ॥

यो जपेन्नित्यमेकाग्रः श्रीनिवासः स उच्यते ।
श्रीनिवासाश्रयत्वेन श्रीनिवासोऽद्रिरुच्यते ॥

क्षेत्रेष्वेतेषु च त्रिषु शरीरं यः परित्यजेत् ।
श्रीनिवासो महायोगी स भवेत्परमे पदे ॥ ८०

श्रीनिवास महाविद्या प्रत्यक्षफलदायिनी ।
गोप्तव्या सर्वफलदा प्राणैः कण्ठगतैरपि ॥

श्रीनिवास महाविद्यां यत्र कुत्रापि वा जपन् ।
श्रीनिवासस्य लभते पूर्णायुग्रहमिष्टदम् ॥

ऋषिरस्य महायोगी नारदो ब्रह्मनन्दनः ।
छन्दो जागतमित्युक्तं गायत्रमथवा स्मृतम् ॥

श्रीनिवासस्त्रिजगतां नायकः परमेश्वरः ।
नारायणो महालक्ष्मीपतिर्दैवतमुच्यते ॥

श्रीबीजं बीजमित्युक्तं शक्तिर्भुवनमातृका ।
कीलकं कामराजं स्यादिष्टार्थे विनियुज्यते ॥ ८५

षडङ्गं प्रणवोपेत श्रिया षड्वर्णयुक्तया ।
कुर्याल्लक्ष्म्यादिबीजैर्वा द्विरावृत्या षडङ्गकम् ॥

वामाङ्कारूढलक्ष्मी सहितमरिगदा खड्गशंखाम्बुजाढ्यं
भूनीलासेवितांघ्रि विमलमणिलसद्भूषणं सुप्रसन्नम् ।
ब्रह्मेशानेन्द्रमुख्यैः स्तुतिपदमनिशं योगिहृत्पद्मनिष्ठं
वन्दे लक्ष्मीनिवासं जगदभयकरं विश्ववन्द्यं मुकुन्दम् ॥

श्रीनिवास महाविद्यां ध्यात्वेत्थं प्रत्यहं जपेत् ।
पुरश्चर्यादीनि कर्माणि नास्य सन्ति महामनोः ॥

सिद्धविद्यामिमां ब्रह्मविदः प्राहुर्महर्षयः ।
विनियोगं प्रवक्ष्यामि शृणुध्वं ब्रह्मनन्दनाः ॥

चतुर्ष्वन्यतमे क्षेत्रे सावधानमनाः शुचिः ।
धृत्वा मूर्ध्नि गुरोराज्ञां प्रातः स्नात्वा समाहितः ॥ ९०

पश्चाहं नियताहारः श्रीमदष्टाक्षरं मनुम् ।
त्रिशताधिकसाहस्रं प्रजप्य नियतव्रतः ॥

वासुदेवमनुं पश्चाद्वैष्णवं च षडक्षरम् ।
अष्टोत्तरशतं जप्त्वा मन्त्रं श्रीहृदयाभिधम् ॥

द्वादशार्णंश्रियं वापि नित्यं पञ्चशतं जपेत् ।
राजराजेश्वरो विद्यामष्टाविंशतिधा जपेत् ॥

पञ्चविंशतिधा नित्यं जपेद्वर्माऽथ वैष्णवम् ।
श्रीनिवासमनुं रात्रौ सहस्रं त्रिशताधिकम् ॥

जपेत्पञ्चदिनं कृत्वा व्रतमेतत्सुपासनम् ।
षष्ठेऽह्नि प्रातरुत्थाय प्रातः स्नात्वा समाहितः ॥ ९५

देशिकं सन्निधीकृत्य सहस्रं त्रिशताधिकम् ।
कापिलाज्यं हुनेदग्नौ श्रीमदष्टार्णविद्यया ॥

अथवा शुद्धगव्याज्यं वासुदेवेन विष्णुना ।
अष्टाविंशतिधा हुत्वा श्रीमन्त्रेण ततःपरम् ॥

हुत्वा पञ्चशतं वह्नौ राजराजाख्यविद्यया ।
अष्टात्रिंशतिधा हुत्वा वर्मविद्याभिरप्यथ ॥

पञ्चधा जुहुयाद्वह्नौ श्रीनिवासस्य विद्यया ।
त्रिशतं जुहुयादाज्यं जयादिभिरथो हुनेत् ॥

ब्रह्मार्पणाहुतिं कृत्वा प्रणिपत्य च पावकम् ।
देशिकाङ्घ्रियुगं पश्चात्साष्टाङ्गं दण्डवन्नमेत् ॥ १००

अलङ्कारैरलंकृत्य वासोभिश्च ततःपरम् ।
प्रदद्यान्निष्कसाहस्र माचार्यचरणद्वये ॥

निष्काणां त्रिशतं वाऽपि शतनिष्कमथापि वा ।
तदर्धं वा तदर्धं वा वित्तशाठ्यविवर्जितः ॥

आचार्यपत्न्यै वस्त्राणि हेमालङ्करणादिकम् ।
दत्वा पञ्चदशाभ्यर्च्यं ब्राह्मणाश्च सुवासिनीः ॥

अन्यैर्भक्ष्यैश्च ताम्बूलैर्दक्षिणाभिश्च तोषयेत् ।
भुञ्जीत गुरुभुक्तान्नं शेषं बन्धुभिरन्वितः ॥

देशिकस्य मुखाम्भोजादाशिषः प्राप्य सिद्धिदाः ।
निशि तस्मिन् दिने स्वप्ने भरतादिभिरन्वितम् ॥ १०५

श्रीनिवासं महात्मानं जानकीसहितं विभुम् ।
नारायणं जगन्नाथमाञ्जनेयादिभिर्वृतम् ॥

अवश्यमेनं ब्रह्मेश शक्राद्यैरपि पूजितम् ।
पश्यत्येव स्वचक्षुर्भ्यां सुप्रसन्नमुखाम्बुजम् ॥

तदाऽऽरभ्य हरिं मासि मासि स्वप्ने जगत्पतिम् ।
जानकीरमणं साक्षात्पश्यत्यखिलकामदम् ॥

जडोऽपि मन्दभाग्योऽसौ तदारभ्य दिने दिने ।
भूत्वा पारंगतः सर्वविद्यानां मन्दधीरपि ।
महाकविर्महावाग्मी भूत्वा धिषणसन्निभः ॥

राजराज महेन्द्राभ्यां सदृशीं श्रियमक्षयाम् ।
धनधान्य पशुव्रात मुक्तारत्नादि संकुलाम् ॥ ११०

सम्प्राप्याष्टगुणैश्वर्यं मायुरारोग्यमुत्तमम् ।
योगमष्टाङ्गसहितं पूर्वजन्म स्मृतिं शुभाम् ॥

दृष्ट्वा नारायणात्मानं स्वयमेव स्वचक्षुषा ।
कुलसाहस्रमुद्धृत्य निमग्नं निरयेऽपि ॥

दिव्यभोगयुतो दिव्यकन्याशत समन्वितः ।
कन्दर्पशतसङ्काशो भूत्वा दिव्यवपुर्धरः ॥

मोदते परमे धाम्नि सन्निधाविन्दिरापतेः ।
श्रीनिवास व्रतमिदं क्षेत्रेष्वेतेषु पावनम् ॥

एकस्मिन्नपि वा क्षेत्रे यः करोति जितेन्द्रियः ।
तं साक्षाज्जानकी लक्ष्मीरन्वहं पाति पुत्रवत् ॥ ११५

विभीषणाञ्जनेयाद्याः सुहृत्त्वं प्राप्नुवन्त्यपि ।
चिन्तामण्यादि रत्नानि प्रयच्छन्ति दिगीश्वराः ॥

मानयन्ति वसिष्ठाद्यास्तं भक्तं जानकीपतौ ।
नारदाद्या महाभागा ब्रह्मपुत्रास्तपस्विनः ॥

तस्याभीष्टफलं नित्यं प्रयच्छन्ति न संशयः ।
गोदावरी भीमरथी कृष्णवेणी च नर्मदा ॥

सरस्वती च यमुना कावेरी सरितां वरा ।
जाह्नवी चन्द्रभागा च गण्डकी च महानदी ॥

आग्रामन्यतमस्थाने यत्र कुत्राऽपि वा शुचिः ।
श्रीनिवासव्रतमिदं यः करोति विधानतः ॥ १२०

स मेधावी महावाग्मी विद्याभिर्धिषणप्रभः ।
धनदेन समो लक्ष्म्या कान्त्या कन्दर्पसन्निभः ॥

दीर्घमायुष्यमासाद्य योगं चाष्टाङ्गसम्युतम् ।
एकेन जन्मनैवासौ योगिनामपि दुर्लभाम् ॥

परांगतिमवाप्नोति पुनरावृत्तिवर्जिताम् ।
येन केनाप्युपायेन देशिकानुज्ञया द्विजाः ॥

पुरश्चर्या सहस्रं वा पुरश्चर्याशतं तु वा ।
पुरश्चर्यां त्रयं वापि कृत्वा सम्पूर्णदक्षिणाम् ॥

भगवद्दर्शनार्थाय सततं यत्नवान् भवेत् ।
सम्पूर्णदक्षिणाऽयुक्तो दद्यान्मध्यमदक्षिणाम् ॥ १२१

तत्राप्यशक्त आचार्यपादाब्जेऽधमदक्षिणाम् ।
वित्तशाठ्यं परित्यज्य प्रदद्यादिष्टसिद्धये ॥

पौरश्चरणिकं कर्म विधानेन विवर्जितः ।
यः करोति व्रतं तस्य हानिरेव प्रजायते ॥

दक्षिणा रहितं कर्म पुरश्चर्याभिधं शुभम् ।
सहस्रशोऽपि कृत्वाऽसौ न सिद्धिं लभते क्वचित् ॥

वित्तशाठ्यं परित्यज्य भिक्षित्वाऽपि महीतले ।
देशिकाङ्घ्रियुगे दत्त्वा दक्षिणां शास्त्रचोदिताम् ॥

पुरश्चर्यां विनापीह विद्यासिद्धिं तु विन्दति ।
अनेक भाग्यसम्पत्तिर्भवेत्तस्य पदे पदे ॥ १३०

कोटिसहस्रसंख्याकमपि दत्वा महद्धनम् ।
आचार्यचरणद्वन्द्व कैङ्कर्यनिरतो भवेत् ॥

सिद्धयत्येव महद्भाग्यं सार्वभौमत्वमक्षयम् ।
सिद्धयत्यस्य महाविद्या देवत्वमपि सिद्धयति ॥

ब्रह्म तादात्म्य संसिद्धिरपि पुण्यसहस्रकैः ।
न सिद्धयत्येव सम्पूर्ण दक्षिणैः क्रतुभिस्तु वा ॥

देशिकाज्ञामनुल्लङ्घ्य तत्पाद म्बुजकिङ्करः ।
तमेव नित्यमभ्यर्थ्य ब्रह्मतादात्म्यसिद्धिभाक् ॥

श्रीमदष्टाक्षरीविद्यां देशिकाज्ञापुरस्सरम् ।
उपास्य प्रत्यहं शुद्धो ब्रह्मतादात्म्यसिद्धिभाक् ॥ १३५

सर्वविद्यामयीं काद्यां श्रियःपञ्चदशाक्षरीम् ।
यथाशक्त्याप्यनुस्मृत्य देशिकानुज्ञयाऽन्वहम् ॥

षड्गुणैश्वर्यसहितो ब्रह्मतादात्म्यसिद्धिभाक् ।
ब्रह्मविद्यामनुस्मृत्य श्रीश्रीश द्वादशाक्षरीम् ॥

ब्राह्मे काले यथाशक्त्या ब्रह्म तादात्म्यसिद्धिभाक् ।
राजराजेश्वरीविद्यामवश्यं प्रत्यहं शुचिः ॥

आचार्यानुज्ञया स्मृत्वा ब्रह्मतादात्म्यसिद्धिभाक् ।
ब्रह्मतादात्म्य ससिद्धि हेतुभूतानि भूतले ॥

पञ्चैवोक्तानि मुनिभिः ब्रह्मविद्भिः पुरातनैः ।
अन्यान्यपि महाविद्यारत्नानि जगतीतले ॥ १४०

देवत्वादि प्रदान्येव पुनरावर्तकानि हि ।
श्रीमदष्टार्णविद्यायादातैव परमेश्वरः ॥

श्रियः पञ्चदशार्णाया दातापि हरिरुच्यते ।
राजराज महाविद्या प्रदाताऽपि महेश्वरः ॥

सर्वज्ञ उक्तो लोकेषु महर्षिब्रह्मवित्तमैः ।
ब्रह्मविद्या प्रदाताऽपि साक्षान्नारायणः स्मृतः ॥

नारायणात्मका एते देशिका भूसुरोत्तमाः ।
समस्तविद्या साम्राज्ञी ब्रह्मविद्येति कथ्यते ॥

ततोऽपि विद्या साम्राज्ञी श्रियः पञ्चदशाक्षरी ।
ततोऽपि श्रीमदष्टार्णा साम्राज्ञी सर्वसिद्धिदा ॥ १४५

राजराजमहाविद्या ततोऽपि च महत्तरा ।
एकाप्यत्र महाविद्या लभ्यते यन्मुखाम्बुजात् ॥

तं देशिकोत्तमं प्राज्ञाः प्राहुर्नारायणात्मकम् ।
तत्पदद्वन्द्व पूजैव ब्रह्म तादात्म्यसिद्धिदा ॥

विद्या द्वितयमप्यत्र विद्यात्रयमथापि वा ।
लभ्यते हि मुखाम्भोजाद्यस्य विप्रस्य साधकैः ॥

तस्याचार्यस्य कैङ्कर्यं को वा वर्णयितुं क्षमः ।
विद्या चतुष्टयं यस्य वदनाल्लभते भुवि ॥

ब्रह्मविष्णु महेशाद्या अपि देवा महर्षयः ।
तत्पदद्वन्द्वशुश्रूषां न हि वर्णयितुं क्षमाः ॥ १५०

यस्यास्ति देवताबुद्धिर्देशिके भगवन्मये ।
भाषा रचित मन्त्रोऽपि तस्य सिद्धो भवत्यपि ॥

श्रीनिवासादिका मन्त्रा कोटि कोटि गुणोत्तराः ।
येषां स्मरणतः सिद्ध्यन्त्यखिला अपि सिद्धयः ॥

श्रीनिवासमहाविद्या यत्र कुत्रापि साधकैः ।
देशिकानुज्ञया जप्ता सद्यः प्रत्ययकारिणी ॥

श्रीनिवासमहाविद्यामेकामपि महीतले ।
आचार्यानुज्ञया नित्यं जप्त्वा नियतमानसः ॥

स सिद्धिं प्राप्य महतीं पश्यत्येव श्रियःपतिम् ।
सत्यं वच्मि हितं वच्मि नित्यं वच्मि पुनःपुनः ॥ १५५

आचार्यचरणद्वन्द्वमवश्यं सेव्यमन्वहम् ।
श्रीमदष्टाक्षरी विद्या जप्या सकलसिद्धिदा ॥

प्रजप्तव्या ततो विद्या श्रियः पञ्चदशाक्षरी ।
स्मर्तव्या प्रत्यहं विद्या राजराजेश्वरी शुभा ॥

चतुष्टयमिदं मुक्ति लक्ष्मी साधनमीरितम् ।
अन्यदायास फलदमुक्तं सर्वमहर्षिभिः ॥

सत्यमेतत्परब्रह्म तादात्म्य फलदायकम् ।
देवत्वादि महासिद्धिकरमेतच्चतुष्टयम् ॥

अयं दाशरथी रामो भगवान् परमेश्वरः ।
नारायणो जगत्कर्ता सत्यानन्द चिदात्मकः ॥ १६०

एतत्कैङ्कर्यसिद्ध्यर्थं नित्यदर्शनसिद्धये ।
साधनानि मयोक्तानि चत्वारि जगतीतले ॥

विचार्य सकलान् वेदान् विचार्य च पुनःपुनः ।
आचार्यचरणद्वन्द्वसेवा दृष्टादितः परा ॥

द्वितीया ब्रह्मविद्याऽथ श्रीमदष्टाक्षरो ततः ।
श्रियः पञ्चदशार्णाथ राजराजेश्वरी शुभा ॥

अनायासेन सकलमहासिद्धि प्रदायकम् ।
दृष्टमेतन्मया पूर्वं मुक्तिसाधनपञ्चकम् ॥

एकमप्यत्र फलदं मुक्ति श्रीबीजमीरितम् ।
सुक्तिश्रीहेतवः पञ्च येन नित्यमुपासिताः ॥ १६५

नारायणं विजानीध्वं नराकृतिमच्युतम् ।
इत्युक्त्वा भगवान् योगी कपिलः कर्दमात्मजः ॥

श्रीरामानुज्ञया तत्र स्वाश्रमं प्रययौ विभुः ।
श्रुत्वैतत्कापिलं शास्त्रं ब्रह्मपुत्रास्तपोधनाः ॥

ब्रह्म तादात्म्यसहिता राममापृच्छ्य जगतीपतिम् ।
सर्वसंशयनिर्मुक्ताः सत्यलोकमथो गताः ॥

वसिष्ठवामदेवाद्या मुनयः शंसितव्रताः ।
श्रुत्वा सकलवेदान्तसारं शास्त्रमनुत्तमम् ।
हृष्टाः प्रमुदिता जग्मुः स्वाश्रमं रामपूजिताः ॥

श्रीदक्षिणामूर्तिरुवाच–

राजराजेश्वरी विद्या माहात्म्यमघनाशनम् ।
श्रुत्वा कपिलवक्त्राब्जाद्वसिष्ठाद्या महर्षयः ॥ १७०

सनत्कुमार प्रमुखा योगिनश्च यतव्रताः ।
भगवन्तं समाराध्य तत्कृपालब्धवैभवाः ॥

दृष्ट्वा साक्षाज्जगन्नाथं जीवन्मुक्तास्ततोऽभवन् ।
राजराजमहाविद्या माहात्म्यमघनाशनम् ।
किञ्चिदुक्तं मया तुभ्यं देवि पर्वतकन्यके ॥

इति चतुश्चत्वारिंशोऽध्यायः ॥

# अथ पञ्चचत्वारिंशोऽध्यायः ॥

श्रीदक्षिणामूर्तिरुवाच—

अयोध्यानगरे पूर्वं साक्षान्नारायणो विभुः ।
रामो दाशरथिर्भूत्वा कौसल्या गर्भसंभवः ॥

कन्दर्पायुत सङ्काशो जानकी सहितोऽन्वहम् ।
आञ्जनेयादिभिर्नित्यं सेवितो भरतादिभिः ॥

ब्रह्मर्षिभिर्वसिष्ठाद्यैः सुमन्त्राद्यष्टमन्त्रिभिः ।
सेवितः सततं साक्षाद्विष्णुर्मानुष रूपधृक् ॥

दुष्टानां निग्रहं कुर्वन् शिष्टानां परिपालनम् ।
उपादिदेश सकलान् धर्मानखिलसिद्धिदान् ॥

ब्रह्मज्ञान महद्बीजं शास्त्रं वेदान्त संग्रहम् ।
इदं दाशरथीयाख्यं कथयामास भूपतिः ॥ ५

अत्र प्राधान्यतः प्रोक्ता गायत्र्यादौ सनातनी ।
ब्रह्मविद्या ततः प्रोक्ता श्रीश्रीश द्वादशाक्षरी ॥

श्रीमदष्टाक्षरी विद्या सरहस्या सनातनी ।
उक्ताऽथ बहुधा मुक्तिहेतुकी सर्वसिद्धिदा ॥

सैव वेदेषु शास्त्रेषु पुराणेष्वागमेष्वपि ।
मुक्ति साम्राज्य कमला हेतुकी नापरा स्मृता ॥

श्री द्वादशार्णविद्याऽथ प्रोक्ता प्राधान्यतः प्रिये ।
प्रसन्नविद्याऽथ कथिता सर्वसिद्धिदा ॥

परा नारायणी विद्या प्राधान्येन तथेरिता ।
श्रीदेव्या अथ संप्रोक्ता विद्यापञ्चदशाक्षरी ॥ १०

भूयोऽपि कथिता राज्यलक्ष्मीस्सकलसिद्धिदा ।
राजराजेश्वरी विद्या ततो बहुश ईरिता ॥

अन्या अपि महाविद्या तन्त्रेऽस्मिन् समुदीरिताः ।
अष्टाक्षराङ्ग भूतत्वात्तन्माहात्म्यमघापहम् ॥

तन्त्रेदाशरथीयेऽस्मिन् किञ्चिदेव समीरितम् ।
दत्तात्रेयो महायोगी साक्षाद्भगवदंशजः ॥

श्रुत्वैतत्परमं तन्त्रं संहितां श्रुतिसम्मिताम् ।
अनुग्रहाय जगतां चकार जगतीपतिः ॥

सनत्कुमारो भगवान् सर्वज्ञतपसां निधिः ।
चकार सुमहत्तन्त्रं स्वनाम्ना सर्वसिद्धिदम् १५

नारायणांशजः साक्षाद्रेणुकातनयो विभुः ।
ब्रह्मविद्यापरं सांख्यं तन्त्रं वेदान्तसम्मितम् ॥

चकार सुमहच्छास्त्रं सर्वलोकोपकारकम् ।
ब्रह्मपुत्रो महातेजा वसिष्ठोऽरुन्धतीपतिः ॥

ऋषिभ्यः कथयामास शास्त्रं वेदार्थसंग्रहम् ।
द्वैपायनात्मजः साक्षाच्छंकरांश समुद्भवः ॥

सारस्वताभिधं तन्त्रं कथयामास सादरम् ।
मूलं दाशरथीयाख्यं शास्त्रं वेदान्तसंग्रहम् ॥

संहितापञ्चकं पश्चादृषिभिः समुदीरितम् ।
अञ्जना तनयः पश्चात्किंकरो जानकीपतेः ॥ २०

संहितां कथयामास मुनिभ्यः श्रुति सम्मिताम् ।
छन्दोमयोऽथ भगवान् विनता तनयो विभुः ॥

उपादिदेश योगिभ्यः शास्त्रं गुप्तमपीष्टदम् ।
सर्वेषामपि शास्त्राणां मूलशास्त्रमिदं परम् ॥

अस्मिन् तन्त्रे यद्यदुक्तं तत्तदेव समं स्मृतम् ।
नाविश्वासो न कर्तव्यो मुक्तिलक्ष्मीमभीप्सता ॥

आचार्य चरणद्वन्द्वमवश्यं सेव्यमन्वहम् ।
श्रीमदष्टाक्षरी विद्या जप्या शुद्धैव सिद्धिदा ॥

**श्रीदक्षिणामूर्तिरुवाच –**

इदं गुह्यतमं शास्त्रं वेदवेदान्त सम्मितम् ।
पुरा नारायणेनोक्तं जनकाय महात्मने ॥ २५

अथ नारायणः साक्षाज्जानकीपतिरीश्वरः ।
वसिष्ठादि महर्षीणां सन्निधौ पृच्छतो मम ॥

कथयामास भगवान् शास्त्रं गुप्ततरं शुभम् ।
तस्यांशेनावतीर्णोऽस्मि रुद्रो मृत्युञ्जयः शिवः ॥

श्रीदेव्यंश समुद्भूता त्वं देवि गिरिकन्यके ।
मम श्रीरामचन्द्रस्य यः करोति भिदां भुवि ॥

स रौरवे महाघोरे वसत्याचन्द्रतारकम् ।
राम एव परं ब्रह्म रुद्रो विष्णुः प्रजापतिः ॥

साक्षान्नारायणोऽनन्तो वामनो नरकेसरी ।
तदुक्तमेतत्परमं तन्त्रं गुप्ततमं शुभम् ३०

श्राव्यमाचार्यवक्त्राब्जाच्छिष्येण नियतात्मना ।
श्रुत्वा गुप्ततमं शास्त्रमिदं दाशरथीरितम् ॥

देशिकं पूजयेदर्थैर्वस्त्रैराभरणैरपि ।
देशिकं शास्त्रवक्तारमसम्पूज्य विमूढधीः ॥

क्रियाहानिमवाप्नोति कार्यसिद्धिं न विन्दति ।
यः पूजयति वक्तारं शास्त्रस्यास्य महात्मनाः ।
शाश्वतं यदवाप्नोति पुनरावृत्तिवर्जितम् ॥

कुटुम्बवृद्धिं धनधान्यवृद्धिं
सौभाग्यवृद्धिं च शुभानि नित्यम् ।
अवाप्य शास्त्रश्रवणेन पश्चात्
परं पदं याति रमाधिवासम् ॥

**ऋष्यश्रृङ्ग उवाच –**

इत्युक्तं गिरिजादेव्यै शिवेन परमात्मना ।
चित्कलामनुमाहात्म्यमारभ्यैतद्रहस्यकम् ॥ ३५

पूर्वं नारायणेनोक्तमुत्तरं शङ्करेरितम् ।
तन्त्रं दाशरथीयाख्यं वेदसारार्थ संग्रहम् ॥

अत्रैकमपि वाऽध्यायमर्थज्ञान पुरस्सरम् ।
पठेद्यः श्रृणुयाद्वापि विमुक्तः पापराशिभिः ॥

प्रयाति परमं धाम सनातनमनुत्तमम् ।
ऋष्यश्रृङ्गमुखाम्भोजात् श्रुत्वैतत्परमर्षयः ॥

मत्वाऽऽत्मानं परं ब्रह्म रामं नारायणं विभुम् ।
ऋष्यश्रृङ्गं समाभाष्य ज्ञात्वा धर्मरहस्यकम् ॥

कृतकृत्यास्ततो जग्मुः स्वाश्रमान् मुदिताननाः ।
इदं तन्त्रं महद्गुप्तं तारक ब्रह्मरूपिणा ।
जानकी पतिना प्रोक्तं जगदानन्दहेतुकम् ॥ ४०

इति श्रीमदनुत्तर ब्रह्मतत्वरहस्ये दाशरथीये तन्त्रे
वेदसारार्थसंग्रहे सौभाग्यविद्योदये राजराजविद्या
माहात्म्ये उत्तरभागे शास्त्ररहस्यकथनं नाम
पञ्चचत्वारिंशोऽध्यायः समाप्तः ॥

श्रीगोविन्दाय नमः । श्रीरामचन्द्राय नमः ।

---

Tanjore Sarasvati Mahal Series No. 189.

# Rishyasringa Samhita



Edited with Introduction

*By*

Vedartha Ratnakara, Veda Vachaspati,
Srutismrti, Itihasa, Mimamsadvaya Kalpasutra Visarada,

AGNIHOTRAM

RĀMĀNUJA TĀTĀCHĀRYA

(Receipient of President Award for Sanskrit)





TANJORE MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY, THANJAVUR.



1983] [Rs. 42—50.

सरस्वतीमहाल ग्रंथमालयाः पुष्पम् - १८९.

ऋश्यशृङ्गमहर्षिणोपदिष्टा

# ॥ ऋश्यशृङ्गसंहिता ॥

*

संपादकः

भारतीयराष्ट्रपतिना सम्मानिताः

वेदार्थरत्नाकरः, वेदवाचस्पतिः, श्रुतिस्मृत्यैतिहासमीमंसाद्वय

कल्पसूत्र विशारद

श्री अग्निहोत्रं रामानुजताताचार्याः



*

तंजापुरी महाराजा शरभोजी सरस्वतीमहालग्रंथालय निर्वाहकसमितिः ।

तंजापुरी ॥

*

१९८३]

[रु. ४२—५०.

Tanjore Sarasvati Mahal Series No. 267

# Rishyasringa Samhita

## PART—II

Edited with introduction

*By*


Vedartha Ratnakara, Veda Vachaspati,
Srutismrti, Itihasa, Mimamsadvaya, Kalpasutra Visarada,

AGNIHOTRAM

RĀMĀNUJA TĀTĀCHĀRYA

(Receipient of President Award for Sanskrit)






THANJAVUR MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY SOCIETY

1988 ] [ Rs. 45-00

सरस्वतीमहाल ग्रन्थमालया: पुष्पम् — २६७

ऋश्यशृङ्गमहर्षिणोपदिष्टा

# ॥ ऋश्यशृङ्गसंहिता ॥

## द्वितीय भागः

संपादकः

भारतीयराष्ट्रपतिना सम्मानिताः

वेदार्थरत्नाकरः, वेदवाचस्पतिः, श्रुतिस्मृत्यैतिहासमीमंसाद्वय

कल्पसूत्र विशारद

श्री अग्निहोत्रं रामानुजताताचार्याः




तजापुरो महाराजा शरभोजी सरस्वतीमहाल्ग्रन्थालय निर्वाहकसमितिः

तंजापुरो ॥

१९८८ ]

[ रु. ४५-००